श्री काशी संस्कृत ग्रन्थमाला १८७

श्रीमदन्नम्भट्टविरचितः

# तर्क-संग्रहः

गोवर्धनमिश्रकृत-न्यायबोधिन्या, मेरुशास्त्रिकृतवाक्यवृत्त्या, जगन्नाथ-
शास्त्रिकृतनिरुक्त्या, पट्टाभिरामशास्त्रिकृतटिप्पण्या
तथा
रामरुद्रकृतरामरुद्रीय-रायनरसिंहशास्त्रिकृतनृसिंहप्रकाशिका
नीलकण्ठशास्त्रिकृत-नीलकण्ठप्रकाशिका-पट्टाभिरामशास्त्रि-
कृतपट्टाभिरामप्रकाशिकेतिव्याख्याचतुष्टयसमुपेत-
स्वोपज्ञ-तर्कसंग्रहदीपिकया च समुपबृंहितः ।



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

॥ श्रीः ॥

काशी संस्कृत ग्रन्थमाला

१८७



श्रीमदन्नम्भट्टविरचितः

# तर्क-संग्रहः

गोवर्धनमिश्रकृत-न्यायबोधिन्या, मेरुशास्त्रिकृतवाक्यवृत्त्या, जगन्नाथ-शास्त्रिकृतनिरुक्त्या, पट्टाभिरामशास्त्रिकृतटिप्पण्या

तथा

रामरुद्रकृतरामरुद्रीय-रायनरसिंहशास्त्रिकृतनृसिंहप्रकाशिका-नीलकण्ठशास्त्रिकृत-नीलकण्ठप्रकाशिका-पट्टाभिरामशास्त्रि-कृतपट्टाभिरामप्रकाशिकेतिव्याख्याचतुष्टयसमुपेत-स्वोपज्ञ-तर्कसंग्रहदीपिकया च समुपबृंहितः

श्रीसत्कारिशर्मणा वङ्गीयेन

सम्पादितः ।

चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

१९६९

THE
KASHI SANSKRIT SERIES
187
*****

# TARKASAMGRAHA

OF

ANNAMBHAṬṬA

WITH

*Nyāyabodhinī of Govardhana Miśra, Vākyavṛtti of Meru Śāstrī, Nirukti of Jagannātha Śāstrī, Paṭṭābhirāmaṭippaṇī of Paṭṭābhirāma Śāstrī*

AND

TARKASAMGRAHADĪPIKA

OF

THE AUTHOR

WITH

*Rāmarudrīya of Rāmarudra, Nṛsiṃhaprakāśikā of Rāya Narasiṃha Śāstrī, Nīlakaṇṭhaprakāśikā of Nīlakaṇṭha Śāstrī and Paṭṭābhirāmaprakāśikā of Paṭṭābhirāma Śāstrī*

Edited by
ŚRĪ SATKĀRIŚARMĀ VAṄGĪYA

THE
CHOWKHAMBA SANSKRIT SERIES OFFICE
VARANASI-1
1969

## सम्पादकीयम्

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता ॥

( कौ० अ० १।२।१ )

सर्वेषामेव शास्त्राणामुपकारतयाऽऽन्वीक्षिकीत्यपराभिधस्य न्यायशास्त्रस्य प्रसिद्धिः सुतरां सुप्राचीनैव प्रतिभाति स्मृतिपुराणादिषु तस्य चतुर्दशविद्यास्थानानामेकतमत्वेनोक्तत्वात्[1]। अक्षपादापरनामा भगवान् गौतमो मोक्षोपयोगितया 'प्रमाणप्रमेये'त्यादीनि न्यायसूत्राणि निरमात्, व्यरचयच्च महर्षिः कणादः, 'अथातो धर्मं व्याख्यास्यामः' इत्यादीनि वैशेषिकसूत्राणि। तदुभयं गच्छति काले नास्तिककुतर्कनिराकरणपटुभिर्व्याख्यातृभिः भाष्यवार्तिकटीकाभिः सम्यक् प्रपञ्चितमतो गहनतरं च समजनि। न्यायशास्त्रीयसिद्धान्तस्य तदाश्रितविचारपरिपाट्याश्च विवर्तनमपि शनैः शनैर्न्यायनये लब्धास्पदमदृश्यत। षोडशपदार्थानां विचारापेक्षया प्रत्यक्षानुमानोपमानशाब्देति प्रमाणचतुष्टयस्य विचार एवोत्तरकालीनन्यायशास्त्रपरिशीलयितॄणां समधिकावधानभाजनं समपद्यत। वैशेषिकतन्त्रं द्रव्यगुणकर्मसामान्यविशेषसमवायेतिपदार्थषट्कस्य, अनन्तरं चाङ्गीकृतस्य अभावनाम्नः सप्तमस्य सूक्ष्मातिसूक्ष्मं विमर्शमादधद् भारतीयदार्शनिकानां विचारशैलीं

---

१. 'पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥'

—याज्ञवल्क्यस्मृतिः, आचाराध्यायः, ३ ।

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥'

—विष्णुपुराणम्, ३।६।२८

धर्मज्ञानार्थं तर्कशास्त्रस्योपयोगित्वं स्वयं भगवान् मनुरपि व्याचख्यौ—
'आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥ —मनुस्मृतिः, १२।१०६

सुतरां पर्यष्कार्षीत्। अनयोः पुनः शास्त्रयोरन्योन्योपकारकतया सम्मेलनेन नव्य-न्यायशास्त्रस्य समुत्पत्तिरभूद् यत् खल्विदानीं लोके तर्कशास्त्राभिधया व्यपदिश्यते। तत्तु शास्त्रं गङ्गेश-रघुनाथ-जगदीश-गदाधरादिभिः कुशाग्रधीषणैर्विचारवैदग्ध्याः परां काष्ठां प्रापितम्। क्रमेण तर्कशास्त्रसम्मता विचारशैलीशास्त्रान्तरव्याख्यातृभिरपि ग्रन्थकृद्भिरङ्गीकृता स्वसिद्धान्तस्थापनाय परपक्षनिरसनाय च। अतोऽद्यत्वे यत्किमपि शास्त्रं पिपठिषुभिरध्येतृभिस्तर्कशास्त्रे श्रमः क्रियत इत्यत्र न किमप्याश्चर्यम्। किन्तु तत्त्वचिन्तामणिदीधितिगादाधर्यादिनव्यन्यायशास्त्रीयग्रन्थाः प्रविविक्षूणां कृते सुतरां दुरवगाहा एवेत्यालोच्य सर्वशास्त्रपारावारपारीणः सुगृहीतनामधेयः श्रीमदन्नम्भट्टस्तर्कसंग्रहाख्यं न्यायवैशेषिकशास्त्रीयपदार्थनिचयपरिचायकं ग्रन्थरत्नमिदं निर्माय स्वोपज्ञया तर्कसंग्रहदीपिकाख्यया व्याख्यया तद् विशदीचकार।

अयं तर्कसंग्रहकारः श्रीमदन्नम्भट्ट आन्ध्रदेशाभिजन ईशवीयपञ्चदशशताब्द्यां स्वविलासेन गरिकपाटनामानं ग्रामं भूषयामासेति श्रीगोडबोलेमहोदयविरचित-'भारतखण्डा चा ऐतिहासिक कोष' इत्याख्यमहाराष्ट्रीभाषानिबद्धग्रन्थादवगम्यते। किन्तु तस्य पञ्चदशशताब्दीभवत्वे श्रीमहादेवराजारामबोडसमहोदया विप्रतिपद्यन्ते,[1] तस्य गदाधरविश्वनाथयोरुत्तरकालीनत्वात्, गदाधरभट्टाचार्यस्य षोडशशताब्दीभवत्वात्, विश्वनाथस्य च पुनस्ततोऽप्यर्वाचीनत्वात्। अस्तु, श्रीमदन्नभट्टस्यान्ध्राभिजनत्वे न किमपि बाधकं पश्यामः, अद्यापि तस्मिन् प्रान्ते कृष्णनदीतटोपान्तवर्तिनि जनपदे अन्नम्भट्टोपनामकानामृग्वेदिब्राह्मणानां सत्त्वात्। स तु राघवसोमयाजिनाम्नः कस्यचित्प्रसिद्धविदुषः कुले समुत्पन्नस्य श्रीतिरुमलाचार्यस्यात्मज आसीदिति तत्कृतभाष्यप्रदीपव्याख्यानभूतोद्यतनपुष्पिकायाम् 'इति श्रीमहामहोपाध्यायाद्वैतविद्याचार्यराघवसोमयाजिकुलावतंसश्रीतिरुमलाचार्यवर्यस्य सूनोरन्नम्भट्टस्य कृतिषु भाष्यप्रदीपोद्यतने' इत्यादिपरिचयदर्शनाज् जानीमः। तस्य स्थितिकालस्तु ईशवीयाष्टादशशताब्द्याः प्रथमः पाद इति बहुप्रमाणपर्यालोचनेन निपुणं निरूपयन्ति श्रीमन्तो बोडसमहोदयाः[2]।

श्रीमदन्नम्भट्टस्यानेकशास्त्रनैपुण्यं तदीयकृतीनां पर्यवेक्षणेनानुमीयते। तेन १. तर्कसंग्रहः, २. तर्कसंग्रहदीपिका, ३. मिताक्षरा (ब्रह्मसूत्रस्य स्वल्पाक्षरा वृत्तिः[3]),

---

१. Tarkasaṃgraha, Bombay Sanskrit Series, No. LV, p. LIII.

२. तत्रैव, p. LVI.

३. केषाञ्चिन्मतेन काशिकानुसारिणी पाणिनीयसूत्रवृत्तिः।

४. तत्त्वबोधिनीटीका, ५. न्यायपरिशिष्टप्रकाशः, ६. सुबोधिनीसुधासारः, ७. राणकोज्जीविनी, ६. भाष्यप्रदीपोद्योतनम् इतीमे ग्रन्था निरमायिषत। अन्नम्भट्टस्य ज्यायान् भ्राता श्रीरामकृष्णभट्टनामाऽऽसीद् येन सिद्धान्तकौमुद्याः सिद्धान्तरत्नं नाम टीकाऽकारि।

प्रागुक्तासु अन्नम्भट्टकृतिषु दीपिकासहितस्तर्कसंग्रह एव परिमिताक्षरताऽऽवश्यकार्थप्रतिपादकताविषयविवेचनतत्त्वनिरूपणादिगुणैर्विद्वद्गोष्ठीषु विद्यार्थिसंसत्सु च सुमहतीम् प्रसिद्धिमभजत।

सोऽयं तर्कसंग्रहोऽद्यावधि आसमुद्रहिमाचलं सर्वैरध्येतृभिरनायासेन तर्कशास्त्रप्रविविक्षुभिः सानन्दमधीयते। ग्रन्थस्यास्य समादर-बाहुल्यं टीकाबाहुल्यदर्शनेनैव ज्ञायते। सन्ति खलु तर्कसंग्रहग्रन्थस्योपरि छात्रोपकारिण्य आलोचकशेमुषीपरिष्कारिण्यश्च पञ्चविंशतिसंख्याकाष्टीकाः, दीपिकायाश्चोपरि दशसंख्याकाः। प्रस्तुतसंस्करणे तर्कसंग्रहस्य दीपिका, न्यायबोधिनी, निरुक्तिः, वाक्यवृत्तिः, पट्टाभिरामटिप्पणी इति पञ्च, दीपिकायाश्च रामरुद्रीया, नीलकण्ठप्रकाशिका, नृसिंहप्रकाशिका, पट्टाभिरामप्रकाशिका इति चतस्रः, साकल्येन नव टीका उपन्यस्ताः।

न्यायबोधिनीकर्ता गोवर्धनमिश्रः कदा कं देशं जन्मनाऽलंचकारेति निश्चयेन वक्तुमसमर्था वयम्। किन्तु मिश्रेत्युपनामदर्शनादयं मैथिल इति प्रतीमः। तेन केशवमिश्रकृततर्कभाषायास्तर्कभाषाप्रकाशनाम्नी टीकाऽपि व्यरचि[1]। तट्टीकाप्रारम्भपरिसमाप्तिश्लोकावलोकनादयं बलभद्रविजयश्रीदेव्योः सूनुर्विश्वनाथपद्मनाभयोरनुज आसीदित्यप्याकलयामः[2]।

वाक्यवृत्तिकारो मेरुशास्त्रिगोडबोलेनामा कश्चिन्महाराष्ट्रदेशीयो नवीनो विद्वान् न्यायशास्त्रप्रवीण इति प्रतिभाति। तद्विषये किमपि विस्तरेण वक्तुं न प्रभवामः।

पट्टाभिरामटिप्पणीकर्ता श्रीमान् पट्टाभिरामशास्त्री दाक्षिणात्यो विद्वान् श्रीरायनरसिंहशास्त्रिणोऽन्तेवासी न्यायशास्त्रेऽप्रतिहतेन च पाण्डित्यप्रकर्षेण परां प्रसिद्धिं

---

१. मतमेतत् म० म० उमेशमिश्रमहोदयानाम्। श्रीमन्तो बोडसमहाशयास्त्वत्र विप्रतिपद्यन्ते।

२. विजयश्रीतनुजन्मा गोवर्धन इति श्रुतः।
तर्कभाषां वितनुते विविच्य गुरुनिर्मितिम्॥
श्रीविश्वनाथानुजपद्मनाभा-नुजोग्रीयाद् बलभद्रजन्मा।
तनोति तर्कानधिगत्य सर्वान् श्रीपद्मनाभाद्विदुषो विनोदम्॥

प्रापत्। स एव दीपिकाटीकायाः पट्टाभिरामप्रकाशिकाया अपि रचयितेति वक्तुं शक्नुमः।

नीलकण्ठप्रकाशिकाया रचयिता सुगृहीतनामधेयो नीलकण्ठभट्टः पाण्योपनामककौण्डिन्यवंशसमुद्भूत आन्ध्रदेशीयो रामभट्टसुनुः वाराणसीवास्तव्यश्चासीदिति तत्कृतटीकायाः समाप्तिश्लोकपुष्पिकादर्शनेनैव[१] विज्ञायते। स तु षोडशाधिकाष्टादशशततम ईशवीयसंवत्सरे पाण्यग्रामे जनिमासाद्य श्रीकाशीधामैवाध्युवास तत्रैव तर्कसंग्रहदीपिकाटीकां दीधितिव्याख्यां मणिप्रभानाम्नीं च न्यभान्त्सीदिति म० म० श्रीमुकुन्दझाशर्ममहोदया विज्ञापयन्ति। नीलकण्ठप्रकाशिकायाः टीका भास्करोदयानाम्नी तस्यैवात्मजेन श्रीलक्ष्मीनृसिंहभट्टेन निरमायि।

रामरुद्रीयव्याख्यानस्य कर्ता पण्डितोत्तंसो रामरुद्रभट्टो वङ्गीय ईशवीयाष्टादशशताब्दीभवश्च, दिनकरीटीकायास्तरङ्गिण्या निर्माणेन सर्वेषामेव न्यायशास्त्रानुरागिणां परमादरभाजनमिति तद्विषये न विशेषेण वक्तव्यमवशिष्यते। स तु रामेश्वरभट्टाभिधस्य न्यायशास्त्रपारङ्गमस्य विदुषः पुत्र इति तरङ्गिणीमङ्गलाचरणश्लोकाज्जानीमः[२]।

नृसिंहप्रकाशिकानिर्माता श्रीरायनरसिंहशास्त्र्यपि दाक्षिणात्यभूखण्डाभिजनस्तत्रातिमहतीं विख्यातिमुपारूढ आसीत्।

उपर्युक्तनवभिष्टीकाभिः समुपेतस्य तर्कसंग्रहस्यैकमतिशोभनं संस्करणम् ई० १९१६ तमेऽब्दे मद्रासनगरात् प्राकाश्यं प्रापितमभूत्, यदिदानीं पुनर्मुद्रणाभावात् लोकलोचनपदवीं न भजते। तल्लाभाय विद्यार्थिनामाग्रहं दर्शं दर्शं तस्य पुनःप्रकाशनायानेकदुर्लभसंस्कृतग्रन्थप्रकाशनलब्धयशसां चौखम्बा-संस्कृत-ग्रन्थमाला-कार्यालयाधिकारिणामयं प्रबन्धो भारतीयाधिशासनान्तर्गतशिक्षामन्त्रकस्याधिकारिभिः सानुग्रहं प्रदत्तेन द्रव्यानुकूल्येन साफल्यमुपगतोऽतस्ते महात्मनः सर्वथाऽ-

---

१. कौण्डिन्यवंशसंभूतो नीलकण्ठाख्यपण्डितः।
कृतिमार्पिपदेतस्मै चन्द्रचूडावमङ्गलम्॥
इति श्रीमत्पाण्योपनामककौण्डिन्यवंशपयःपारावारराकाचन्द्रायमाणपदवाक्यप्रमाणपारावारीणश्रीरामभट्टतनूजश्रीनीलकण्ठभट्टविदुषा, विरचितः तर्कसंग्रहदीपिकाप्रकाशः समाप्तः।

२. तातस्य तर्कसरसीरुहकाननेषु रामेश्वरस्य तरणेश्चरणौ प्रणम्य।
श्रीरामरुद्रसुकृती कृतिनां हिताय लीलावशात्कमपि कौतुकमातनोति॥

स्माकं प्रकाशकानाञ्च धन्यवादार्हाः। प्रागुक्तमद्राससंस्करणस्यान्ते श्रीवङ्गीपुर-सरस्वतीविग्रहदेशिकाचार्यविरचितोऽर्थसमाजग्रस्तपदार्थविचारः, म० म० श्रीकृष्ण-तातयार्यमहादेशिकविरचितोऽन्वयव्यभिचारः, श्रीरामसूरिविरचितोऽयुतसिद्ध-विचारश्चेतिविचारत्रयमुपन्यस्तमासीत्। विचारत्रयस्याशेषावश्यकविषयगर्भितत्वं विशेषतो नवीनेष्वपि विद्वत्सु प्राचीनपरिपाट्यविच्छेदेन शास्त्रार्थनैपुण्यस्य प्रतिपाद-कत्वमवलोक्य विद्यार्थिजनहिताय ते त्रयो निबन्धा यथानुपूर्व्यं ग्रन्थान्ते मुद्रापिताः। अतोऽस्माभिः साकमेतत्संस्करणप्रकाशकास्तत्तन्निबन्धनिर्मातॄन् पण्डितप्रकाण्डान् प्रति सुमहान्तं कृतवेदिताभारमावहन्ति।

इदानीं नवटीकोपेतस्य तर्कसंग्रहस्येदं नवीनं संस्करणं विदुषां करसरोरुहेपू-पायनीकुर्वतामस्माकं चेतांसि परमानन्दसन्दोहमेव गाहन्ते। गुणैकपक्षपातिनो विपश्चितो विद्यार्थिनश्च स्वकृपाकटाक्षेण प्रयासमिमं कृतार्थीकरिष्यन्तीति च बाढ-माशास्महे।

कृतमतिप्रपञ्चितेन वाचामिति—

श्रीवाराणस्याम्<br>वसन्तपञ्चमी

निवेदयति<br>विदुषामाश्रवः<br>सत्कारिशर्मा वङ्गीयः

# विषयसूची

| विषयः | | | पृष्ठम् |
|---|---|---|---|


**तर्कसंग्रहः**

| | | | |
|---|---|---|---|
| प्रत्यक्षपरिच्छेदः | ... | ... | १ |
| अनुमानपरिच्छेदः | ... | ... | ४७ |
| उपमानपरिच्छेदः | ... | ... | ६३ |
| शब्दपरिच्छेदः | ... | ... | ६५ |

**तर्कसंग्रहदीपिका**

| | | | |
|---|---|---|---|
| मङ्गलवादः | ... | ... | ८१ |
| प्रत्यक्षपरिच्छेदः | ... | ... | ९६ |
| अनुमानपरिच्छेदः | ... | ... | २४९ |
| उपमानपरिच्छेदः | ... | ... | ३०९ |
| शब्दपरिच्छेदः | ... | ... | ३१२ |
| प्रामाण्यवादः | ... | ... | ३५८ |
| अन्यथाख्यातिवादः | ... | ... | ३७२ |
| अयथार्थानुभवनिरूपणम् | ... | ... | ३७५ |
| अभावनिरूपणम् | ... | ... | ३८७ |
| षोडशपदार्थान्तर्भावः | ... | ... | ३९६ |
| विधिनिरूपणम् | ... | ... | ४१३ |
| आख्यातार्थनिरूपणम् | ... | ... | ४२० |
| मोक्षनिरूपणम् | ... | ... | ४२४ |




# शुद्धिपत्रम्

| पृष्ठं | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १०२ | २९ | सप्त | सप्ता |
| ११२ | २१ | विशेषस्वा | विशेषः स्वा |
| ११६ | २५ | व्याप्तिरिति न | व्याप्तिः । न |
| १२८ | २५ | गिताव | गितानव |
| १४८ | २४ | भावात्मक | भावत्वात्मक |
| १५९ | ५ | देरेव काले | देरभावकालेऽपि |
| २०४ | १० | कावयवकपा | ककपा |
| २२१ | ५ | योरपे | योरनपे |
| २२९ | ७ | करण | न करण |
| २२९ | ९ | योगिक | योगादिक |
| २४२ | २५ | विध्या | द्वितीया |
| २५८ | २५ | भावतत् | भावस्तत् |
| २७५ | १० | कानन्त | कान्त |
| २७६ | ५ | साध्यप | साध्याभावप |
| २८३ | २२ | वह्न्यादिव्या | साध्यवद्व्या |
| २८४ | १९ | त्वमङ्गी | त्वसनङ्गी |
| २९१ | ११ | विषये | विषये नाव्याप्तिः |
| २९९ | ३२ | प्यासी | प्यत्वासि |
| ३११ | ६ | भयजन्य | भयाजन्यत्व |
| ३२५ | ९ | जह | जहदजह |



॥ श्रीः ॥

श्रीगुरुचरणारविन्दाभ्यां नमः ।

# तर्कसंग्रहः ।

न्यायबोधिनी-वाक्यवृत्ति-निरुक्ति-पट्टाभिरामटिप्पणीसमन्वितः ।

**निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।**
***बालानां सुखबोधाय क्रियते तर्कसंग्रहः ॥**

---

## न्यायबोधिनी ।

अखिलागमसंचारि श्रीकृष्णाख्यं परं महः ।
ध्यात्वा गोवर्धनसुधीस्तनुते न्यायबोधिनीम् ॥

## वाक्यवृत्तिः ।

शिवया सहितं नत्वा शिवमम्बां गुरूनपि ।
वाक्यवृत्तिं सङ्ग्रहस्य कुरुते बालसिद्धये ॥

ग्रन्थस्य निर्विघ्नपरिसमाप्तये कृतं मङ्गलं शिष्यशिक्षायै निबध्नन् शिष्यप्रवृत्तये प्रयोजनाभिधेयौ च श्लोकेनाह । **निधायेति** । हृदि मनसि । निधानं स्ववि-

## निरुक्तिः ।

प्रणम्य दक्षिणामूर्तिमक्षीणगुणलक्षणम् ।
तर्कसङ्ग्रहवाक्यार्थनिरुक्तिः क्रियते मया ॥

## पट्टाभिरामटिप्पणी ।

**निधायेति** । हृत्पदं मनःपरम् । जन्यत्वं सप्तम्यर्थः । अन्वयश्चास्य

---

***बालेति** । अधीतव्याकरणकाव्यकोशत्वे सति अनधीतन्यायशास्त्रत्वं बालत्वम् । विशेष्यानुपादाने व्यासादौ, विशेषणानुपादाने स्तनंधयादौ चातिव्याप्तिरिति पदकृत्ये ।

न्या॰ चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थमिष्टदेवतानमस्कारात्मकं मङ्गलं शिष्यशिक्षायै ग्रन्थतो निबध्नाति । **निधायेति** । पदार्थान्विभजते ।

वा॰ षयकज्ञानजनकत्वसंबन्धेन स्थापनम् । मनसा विश्वेशं ध्यात्वेति भावः । बालानां ग्रहणपूर्वकधारणयोग्यानां । सुखेन अनायासेन । **तर्कसंग्रह इति** । तर्क्यन्ते प्रतिपाद्यन्त इति तर्काः द्रव्यादिपदार्थाः । तेषां संग्रहः लक्षणस्वरूपविभागप्रकारकज्ञानानुकूलः संक्षिप्तो व्यापारः । **क्रियत इति** । मयेति शेषः । तथा च मत्समवेतकृतिविषयस्तर्कसङ्ग्रह इति वाक्यार्थः । अत्राभिधेयत्वरूपपदार्थत्वं पदार्थ-

नि॰ इह खलु प्रारिप्सितप्रकरणपरिसमाप्तिप्रत्यर्थिप्रत्यूहव्यूहविध्वंसनाय ग्रन्थारम्भे मङ्गलमनुतिष्ठन्ति शिष्टाः । प्रतिपित्सूनां प्रतिपत्तये द्रव्यादिपदार्थान् प्रतिपिपादयिषुरन्नम्भट्टः स्वानुष्ठितं मङ्गलमुपनिबध्नाति । **निधायेति** । ननु शिष्टसंप्रदायादनुष्ठीयतां नाम मङ्गलं तदुपनिबन्धनं तु निरर्थकमिति चेन्न । उपनिबन्धनस्य शिष्यशिक्षार्थतामन्नम्भट्टो मनुते । तर्कसङ्ग्रहमात्राध्ययनेन बालानां ग्रन्थकरणसामर्थ्यस्य शशविषाणसोदरतया न वयं तदर्थतां मन्महे । किन्तु मङ्गलोपनिबन्धनस्यापि मङ्गलार्थतां प्रतिपद्यामहे ॥ ननु किमर्थमयं ग्रन्थः क्रियत इत्यत आह । **सुखबोधायेति** । सुखं दुःखध्वंसः मोक्ष इति यावत् । सुखाय बोधः सुखबोधः । प्रयोजकत्वं चतुर्थ्यर्थः । तथा च मोक्षप्रयोजकं ज्ञानमिति फलितम् । तच्च ज्ञानं पदार्थविषयकमेव । तर्कसङ्ग्रह इति संज्ञाबलात् । सम्यक् गृह्यन्ते बोध्यन्ते अनेनेति सङ्ग्रहः । बोधकः ज्ञानजनकः । तर्काणां द्रव्यादिपदार्थानां सङ्ग्रहः तर्कसङ्ग्रहः इति तदर्थत्वात् । तथा च मोक्षप्रयोजकीभूतपदार्थविषयकतत्त्वज्ञानसंपादनाय अयं ग्रन्थः क्रियत इति भावः । ननु मोक्षे न पदार्थविषयकतत्त्वज्ञानमुपयुज्यते । आत्मविषयकज्ञानस्यैव मोक्षोपयोगितायाः श्रुतिसिद्धत्वादिति चेन्न । आत्मा इतरभिन्नः इत्याकारकात्मविषयकतत्त्वज्ञाने द्रव्यादिपदार्थविषयकतत्त्वज्ञानस्यैवोपयोगित्वात् । श्रूयते चायमर्थः ईशावास्योपनिषदि । 'स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् । कविर्मनीषी परिभूः स्वयम्भूर्याथार्थ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यस्समाभ्यः ॥' इति । अयमर्थः । शुक्रं शुद्धमात्मानं परमात्मानम् । स एव पुमान् । पर्यगात् परिगतवान् भवेत् ज्ञातवान् भवेत् । कीदृशमात्मानं अकायं शरीररहितम् । अव्रणं दुःखरहितम् ।

प॰ निधाने । निधानं ज्ञानविशेषः । 'विश्वेशम्' इति द्वितीयार्थो विषयत्वम् । तथा,च विश्वेशविषयकमनोजन्यज्ञानविशेषोत्तरकालीना या कृतिरिति केचित् । तन्न । ज्ञानमात्रस्य मनोजन्यत्वेन मनोजन्यत्वार्थकस्य हृदीत्यस्याव्यावर्तकतापत्तेः । किंतु हृत्पदं हृदयरूपशरीरावयवपरम् । निधानं धात्वर्थः । तच्च अवस्थापनमवस्थितत्वारोपणम् । तथा च 'अवस्थितत्वप्रकारकाहार्यज्ञानोत्तरकालीना या कृतिः' इत्यन्वयबोधः । हृदीत्यत्र सप्तम्यर्थो निरूपितत्वम् । तस्यावस्थितत्वेऽन्वयः । 'विश्वेशम्' इत्यत्र

## द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्त पदार्थाः ।

न्या. **द्रव्येति** । अत्र सप्तग्रहणं पदार्थत्वं द्रव्यादिसप्तान्यतमत्वव्याप्यमिति व्याप्तिलाभाय । ननु शक्तिपदार्थस्याष्टमस्य सत्त्वात्कथं सप्तैवेति । तथा हि मण्यादिसंयुक्ते

वा. सामान्यलक्षणं विभागवाक्यघटकीभूतपदार्थशब्दाद्बोध्यम् । वैशेषिकानुसारेण पदार्थान्विभजते । **द्रव्येति** । न्यूनातिरिक्तसंख्याव्यवच्छेदाय सप्तपदम् । एवमग्रेऽपि ।

नि. अस्थाविरं स्थविरत्वादिरहितम् । शुद्धं रागद्वेषमोहरहितम् । अपापविद्धं धर्माधर्मसंबन्धशून्यम् । अथ वा । आत्मानं स्वात्मानं अकायादिरूपम् । स एव पर्यगात् प्राप्तवान् भवेत् मुक्तो भवेदित्यर्थः । यः पुमान् अर्थान् द्रव्यादिपदार्थान् । व्यदधात् विवेचितवान् । कीदृशस्सन् परिभूः इतरमतान् परिभविष्णुः । वक्तृत्वादिशून्यस्य परिभवनसामर्थ्यं न संभवतीत्यत आह कविरिति । कविः कवयिता कल्पकः वक्तेति यावत् । ज्ञानरहितस्य वक्तृता काननकौमुदी इत्यत आह मनीषीति । मनीषी बुद्धिमान् । अत एव स्वयम्भूः स्वयं भवति प्रभवति समर्थो भवतीति । यथाकथंचित्पदार्थविवेचनं न फलाय कल्पते । तदाह याथार्थ्यतः यथार्थत्वेन । सकृत् पदार्थविवेचनं नार्थाय संपद्यते । तदाह शाश्वतीभ्यस्समाभ्यः अनेकसंवत्सरानित्यर्थः । एवं च मोक्षप्रयोजकीभूतं यत्पदार्थतत्त्वज्ञानं तस्मै तर्कसङ्ग्रहः क्रियत इति नानुपपत्तिः ॥ अन्नम्भट्टस्तु—सुखेन अनायासेन बोधः सुखबोध इति व्याचष्ट । नच किञ्चिदपकर्षमालम्ब्यते । स्वतः परमपुरुषार्थभूतमोक्षं प्रति स्वग्रन्थस्योपयोगित्तामप्रत्याय्य ग्रन्थादौ बालकस्य प्रवर्तयितुमशक्यत्वात् ॥ अथ पदार्थान् विभजते । **द्रव्येति** । नन्वयं विभागोऽनुपपन्नः सामान्यलक्षणकथनानन्तरमेव विभागस्य कर्तव्यत्वात् । यथा तत्र गन्धवती पृथिवी इत्यनेन पृथिवीसामान्यलक्षणमुक्त्वा सा द्विविधेति तद्विभागः श्रूयते, तथा न चेह पदार्थसामान्यलक्षणमुक्तम् । अतस्त-

प. द्वितीयार्थो विशेष्यत्वम । तथा च 'विश्वेशविशेष्यकहृदयनिरूपितवृत्तित्वप्रकारकाहार्यज्ञानोत्तरकालीना या कृतिः' इत्यन्वयः । **द्रव्येत्यादि** । सप्त सप्तविधाः सप्तप्रकारवन्त इति यावत् । द्रव्यादिपदं द्रव्यत्वादिपरम् । तस्याभेदसम्बन्धेन प्रकारेऽन्वयः । न च सप्तप्रकारवत्त्वं कुत्रेति वाच्यम् । सप्तपदे सप्तप्रकारान्यतमवति लक्षणास्वीकारात् । ननु तथापि द्रव्यत्वाद्यभेदः कस्मिन्प्रकारे । न च द्रव्यादिपदे द्रव्यत्वाद्यन्यतमे लक्षणास्वीकारान्नानुपपत्तिरिति वाच्यम् । विनिगमनाविरहेण द्रव्यादिपदानां लक्षणाकल्पनापत्त्या द्रव्यत्वाद्यन्यतमत्वावच्छिन्नस्य समवायं भानापत्तेरिति चेन्न । समासघटकपूर्वपदार्थस्य समासाघटकपदार्थेनान्वयासम्भवेनाभावपदस्यैव द्रव्यत्वाद्यन्यतमत्वावच्छिन्ने लक्षणास्वीकारात् । इत्थं च सप्तपदलक्ष्यार्थे नान्यतमगर्भता प्रयोजनाभावात् । न च सप्तप्रकारवत्त्वं कुत्रेति वाच्यम् । सप्तत्वपर्याप्त्यधिकरणप्रकारवत्त्वस्याविवक्षितत्वात् । सप्तत्वाश्रयप्रकारस्यैव

**तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि *नवैव ।**

---

न्या.इन्धनादौ सत्यपि वह्निसंयोगे दाहो न जायते । तच्छून्ये तु जायते। अतो मणि-समवधाने दाहानुकूला शक्तिर्नश्यति । मण्यभावदशायां दाहानुकूला शक्ति-रुत्पद्यते। तस्माच्छक्तिरतिरिक्तः पदार्थ इति चेन्न । मणेः प्रतिबन्धकत्वेन तदभावस्य कारणत्वेनैव निर्वाहे मण्यसमवधानसमवधानाभ्यामनन्तशक्तितत्प्रा-गभावतद्ध्वंसकल्पनाया अन्याय्यत्वात् । तस्मात्सप्तैव पदार्था इति सिद्धम् । द्रव्याणि विभजते । **पृथिव्यप्तेज इति ।** नन्वन्धकारस्य दशमद्रव्यस्य सत्त्वात्कथं नवै-

वा- द्रव्यसामान्यलक्षणं तु गुणवत्त्वं बोध्यम् । द्रव्याणि विभजते। **पृथिवीति ।**

नि- द्विभागोऽनुपपन्नः इति चेन्न । तर्कसङ्ग्रह इति वाक्यघटकीभूततर्कपदेन तल्लक्षणस्योक्त-प्रायत्वात् । तथा हि । तर्क्यन्ते ज्ञायन्ते इति व्युत्पत्त्या तर्कपदेन द्रव्यादिपदार्थाः उच्यन्ते। तेन ज्ञेयत्वं पदार्थसामान्यलक्षणं इति लभ्यते ॥ अन्नम्भट्टस्तु पद-स्यार्थः पदार्थः इति व्युत्पत्त्या अभिधेयत्वं पदार्थसामान्यलक्षणं इति लभ्यते इत्यनेन विभागवाक्यघटकपदार्थपदेनैव सामान्यलक्षणलाभं मन्यते । सामान्यलक्षणकथनानन्तरमेव ते कतिविधाः इत्याकाङ्क्षायां विभागवाक्यस्यावतरणी-

प- विवक्षणात् । सप्तत्वं च प्रातीतिकस्वरूपसम्बन्धविशेषोऽपेक्षाबुद्धिविशेषविषयत्वं वा। अन्यत्सर्वं 'सा द्विविधा' इत्यत्र वक्ष्यमाणरीत्या वक्तव्यमिति सुन्दरः पन्थाः । अन्ये तु अभावपदं द्रव्याद्यन्यतमपरम् । तस्याभेदेन पदार्थेऽन्वयः । द्रव्याद्यन्यतमत्वं च द्रव्याद्यवृत्तिपदार्थशून्यत्वं नातोऽप्रसिद्धिः । सप्तत्वं च पदार्थत्वव्यापकद्रव्याद्यन्य-तमत्वकत्वम् । अत एव तदुद्देश्यविधेयभावमहिम्नैव लभ्यमिति सप्तपदं व्यर्थमिति आम-नन्ति ग्रन्थकृतः । परन्तूद्देश्यविधेयभावमहिम्ना व्याप्यव्यापकभावस्यौत्सर्गिकतया न पौनरुक्त्यं स्पष्टार्थमेव तस्येति च बहवः । तथा च 'द्रव्याद्यन्यतमाभिन्नाः पदार्थाः यथोक्तसप्तत्ववन्त' इत्यन्वयबोध इत्याहुः । अपरे तु अभावपदं द्रव्यत्वाद्यन्यत-मवत्परम् । अन्यतमत्वावच्छिन्ने सप्तपदार्थस्याभेदसम्बन्धेनान्वयो व्युत्पत्तिवै-चित्र्यात् । तथा च पदार्थाः सप्तत्वाश्रययथोक्तान्यतमवन्त इत्यन्वयः । पदार्थेषु सप्तत्वस्यान्वयो न सम्भवति । कोटिकोटिपदार्थानां सत्त्वात् । न च पर्या-प्तिसम्बन्धेन सप्तत्वविशिष्टं यदन्यतमं तद्वत्त्वं कुत्रापि पदार्थे न सम्भवतीति सप्त-

---

***नवैवेति** । नवत्वेन न्यूनसंख्याव्यवच्छेदः । एवकारेणाधिकसंख्याव्यवच्छेदः । विशेष्य-विशेषण-क्रियागतस्यैवकारस्य क्रमेणान्ययोग-अयोग-अत्यन्तायोगव्यवच्छेदबोधकत्वम् । पार्थ एव धनुर्धरः, शङ्खः पाण्डुर एव, नीलं सरोजं भवत्येवेति क्रमेणोदाहरणानि । यथा प्रथमोदाहरणे पार्थान्यस्मिन् धनुर्धरत्वव्यवच्छेदो बुध्यते तथेहापि नवातिरिक्ते द्रव्यत्वव्यवच्छेदबोध इति मुकुन्दभट्टीये ।

न्या.नेति । तथा हि नीलं तमश्चलतीति प्रतीत्या नीलरूपाश्रयत्वेन क्रियाश्रयत्वेन च तमसो द्रव्यत्वं सिद्धम् । न च क्लृप्तद्रव्येष्वन्तर्भावात्कुतो दशमद्रव्यत्वमिति वाच्यम् । तमसो रूपवत्त्वात् आकाशादिपञ्चकस्य नीरूपत्वात् वायोश्च नीरूपत्वान्न तेष्वन्तर्भावः । तमसो निर्गन्धत्वात् पृथिव्या गन्धवत्त्वात् न तत्रान्तर्भावः । तमसो निस्स्पर्शत्वात् जलतेजसोः शीतोष्णस्पर्शवत्त्वान्न तयोरन्तर्भावः । तस्मात्तमसो दशमद्रव्यत्वं सिद्धमिति चेन्न । तमसस्तेजोऽभावत्वेनैवोपपत्तावतिरिक्तत्वकल्पनायां मानाभावात् । न च विनिगमनाविरहात्तेज एव अन्धकाराभावस्वरूपः इति वाच्यम् । तेजसोऽभावरूपत्वे सर्वानुभूतोष्णस्पर्शाश्रयद्रव्यान्तरकल्पने गौरवात् । तस्मादुष्णस्पर्शगुणाश्रयतया तेजसो द्रव्यत्वं सिद्धम् ॥ तमसि नीलप्रतीतिस्तु भ्रान्तिरेव, एवं कर्म-

वा. द्रव्यसामान्यमात्रवृत्तित्वम् गुणसामान्यलक्षणम् । तच्च द्रव्येतरवृत्तितानवच्छेदकद्रव्यसामान्यवृत्तितावच्छेदकपदार्थविभाजकोपाधिमत्त्वं बोध्यम् । गुणान्विभजते ।

नि. यत्वेन न वयं तत्पक्षमाद्रियामहे ॥ पदार्थेषु प्रथमोद्दिष्टानि द्रव्याणि । तेषु प्रथमोद्दिष्टां

प. त्वाश्रयस्यैव सप्तपदार्थतायां वाच्यतया तस्य पदार्थेऽन्वयः संभवतीति वाच्यम् । सप्तत्वाश्रयस्य पदार्थेऽन्वये उद्देश्यासिद्धेरव्यावर्तकत्वात् । न चान्यतमे सप्तत्वाश्रयस्यान्वयेऽपि तद्दोषतादवस्थ्यमिति वाच्यम् । अन्यतमत्वावच्छिन्ने सप्तत्वपर्याप्त्यधिकरणस्यैवान्वयात् । न च सप्तत्वपर्याप्त्यधिकरणत्वविशिष्टान्यतमाधिकरणत्वं न कुत्राप्युक्तमिति वाच्यम् । सप्तत्वपर्याप्त्यधिकरणस्यान्यतमे विशेषणत्वेनान्वयास्वीकारात् । किन्तूपलक्षणतया । तथा च 'वस्तुगत्या सप्तत्वपर्याप्त्याधिकरणं यदन्यतमं तद्वन्त' इत्यर्थः । विशेषणपुच्छलग्नस्याप्युपलक्षणत्वस्वीकारात् । किन्तूपलक्षणपुच्छलग्नस्य विशेषणत्वं न स्वीक्रियत इत्याहुः । तत्रेति । यथोक्तवाक्यप्रतिपाद्यानामित्यर्थः । तत्पदस्य यथोक्तवाक्यपरत्वात् । प्रत्ययस्य प्रतिपाद्यपरत्वादिति केचित् । तदसत् । तत्पदस्य पूर्वोपस्थितार्थपरामर्शकत्वेनानुपस्थितयथोक्तवाक्यपरामर्शकत्वायोगात् । न च तादृशवाक्यस्य श्रोत्रोपस्थितत्वात्तत्परामर्शकत्वं सम्भवतीति वाच्यम् । तर्हि 'रूपं जातिमत्तच्चाकाशाश्रयम्' इति वाक्यस्य प्रामाण्यापत्तेः । तत्पदेन श्रोत्रोपस्थितस्य 'रूपं जातिमत्' इति वाक्यस्य परामर्शसम्भवात् । तस्मात्पदजन्यपदार्थोपस्थितिरेव पूर्वमपेक्षितेति । किन्तु द्रव्यादिसमुदायघटकानामित्यर्थः । न च द्रव्यादिसमुदायघटकत्वेनापि पदात्पूर्वमनुपस्थितत्वात्कथमेतद्वा सम्भवतीति वाच्यम् । तत्पदेन द्रव्यादीनामेव परामर्शात् । सप्तम्यर्थः समुदायघटकत्वं तदेव त्रलर्थः । अत एव तत्र 'द्रव्यादीनां मध्ये' इति ग्रन्थकृतां विवरणं सङ्गच्छते । तत्र समुदायघटकत्वं मध्यशब्दार्थः । द्रव्यादीनामित्यत्र षष्ठ्यर्थो निरूपितत्वं समुदायेऽन्वेति । आश्रयत्वं सप्तम्यर्थः । **नवैवेति ।** पृथिवीत्वाद्यन्यतमाभिन्ननवत्वाश्रयप्रकारवन्तीत्यस्मदुक्तपक्षे नवत्वसंख्यापर्याप्त्यधि-

**रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्व-गुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराश्चतुर्विंशतिर्गुणाः*। उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्च कर्माणि। सामान्यं द्विविधं परमपरं चेति। नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव। समवायस्त्वेक एव। अभावश्चतुर्विधः। प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति। तत्र गन्धवती**

---

न्या. वत्ताप्रतीतिरपि, दीपापसरणक्रियाया एव तत्र भानात्॥ पृथिवीं लक्षयति।

वा. **रूपेति**। कर्मादिसामान्यलक्षणं त्वग्रे दर्शयिष्यते। कर्माणि विभजते। **उत्क्षेपणेति**। सामान्यं विभजते। **परमिति**। अत्रेतिशब्दस्य स्वसमभिव्याहृतपदार्थतावच्छेदक-परत्वापरत्वरूपद्विप्रकारवत्सामान्यमिति वाक्यार्थः। परमपरं चेति पदे तात्पर्य-ग्राहके। विशेषाणां विभागाभावात् तान् दर्शयति। **नित्येति**। नित्यद्रव्याणि पृथिव्यादिचतुर्णां परमाणवः आकाशादिपञ्च तेषामनन्तत्वाद्विशेषाणां अनन्तत्वम्बोध्यम्। समवायस्य विभागाभावं द्योतयितुं तस्यैकत्वमाह। **समवायस्त्वेक इति**। विभागो हि सामान्यधर्मस्य साक्षात् न्यूनवृत्तियावद्धर्मप्रकारकज्ञानानुकूलो व्यापारः। पृथ्वीत्वादीनां साक्षान्न्यूनवृत्तित्वाभावात् द्रव्येत्यादेर्विभागत्वसिद्धिः। सामान्यधर्मस्य न्यूनवृत्तिश्च वैशेषिकाणां विभाजकोपाधिर्बोध्यः। तेन द्रव्यत्वादेर्भावत्वादि-न्यूनवृत्तित्वेऽपि न क्षतिः। इत्थं च समवायत्वन्यूनवृत्तिधर्माभावान्न तद्विभाग इति। अभावसामान्यलक्षणं तु भावभिन्नत्वम्। तच्चाभावपदेनैव सिद्धं इति तान्विभजते। **अभाव इति**। चतस्रो विधा यस्येति व्युत्पत्त्या चतुष्प्रकार-वानभाव इत्यर्थः। **प्रागभाव इति**। प्रागभावत्वादिरूपचतुष्प्रकारवानिति समुदितार्थः। द्रव्याणि क्रमेण निरूपयति। **गन्धवतीति**। अत्र पृथिवीत्वं

नि. पृथिवीं लक्षयति। **तत्रेति**। तत्र द्रव्यादिपदार्थसमुदाये। सप्तम्यास्त्वल्। तदर्थश्च घटकत्वम्। तथा च द्रव्यादिपदार्थसमुदायघटकीभूतद्रव्यघटकीभूता पृथिवी गन्धवती-

प. करणत्वोपलक्षितपृथिवीत्वाद्यन्यतमवन्तीति चरमपक्षे च उद्देश्यविधेयभावमहि-मलभ्यव्याप्यव्यापकभावस्फुटीकरणाय एवकारः। द्वितीयपक्षे तु तद्वैयर्थ्यम्। नवपदस्यैव द्रव्यत्वव्यापकपृथिव्याद्यन्यतमत्ववदर्थकत्वादित्यवधेयम्। **एक एवेति**। एकत्वं स्वरूपसम्बन्धविशेषः। न तु समवायत्वव्याप्ययत्किंचिद्धर्मविरुद्धधर्मा-व्यापकसमवायत्वकत्वम्। एवकारवैयर्थ्यापत्तेः। तुशब्दः पूर्वस्माद्वैषम्यं द्योतयति॥ **तत्र गन्धवतीति**। पृथिव्यादिसमुदायघटकीभूता पृथिवी गन्धवतीत्यन्वयः।

---

***चतुर्विंशतिरिति**। गुणेषु चतुर्विंशतिसंख्या एकार्थसमवायादिना, अपेक्षाबुद्धिविशेषविषयत्वं वा चतुर्विंशतित्वं बोध्यमिति मुकुन्दभट्टीये।

**पृथिवी। सा द्विविधा नित्यानित्या चेति। नित्या परमाणुरूपा।**

---

न्या. **गन्धवतीति** । गन्धवत्त्वं पृथिव्या लक्षणम् । लक्ष्या पृथिवी । पृथिवीत्वं

वा. जातिः लक्ष्यतावच्छेदकं, लक्षणं गन्धः । अत्र पाषाणादौ गन्धानुपलब्धिः क्वचिज्जलादौ तदुपलब्धिश्चानुत्कटत्वोपाधिभ्यामुपपादनीया । व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम् । तत्र व्यावृत्तिरितरभेदानुमितिः । इतरे जलादिचतुर्दश । तथा हि गन्धाभावे इतरत्वव्यापकत्वग्रहे सति गन्धवती पृथिवीति पक्षधर्मताग्रहे पृथिवीतरेभ्यो भिद्यते इत्यनुमितिरुत्पद्यते सैव व्यावृत्तिः । व्यवहारस्तु गन्धज्ञानेन पृथिवीत्वव्यञ्जने सति इयं पृथ्वीति शब्दप्रयोगरूपः। लक्षणमुक्त्वा विभागमाह । **सेति** । अत्र नित्यानित्या पृथिवी द्विविधेति वाक्यार्थः । तथा चोद्देश्यविधेयभावस्थले उद्देश्यतावच्छेदकसम्बन्धो विधेये भासत इति नियमाद्धनवान्सुखीति प्रत्ययवद्विधेयरूपद्विप्रकारयोरुद्देश्यतावच्छेदककोटिप्रविष्टनित्यत्वानित्यत्वयोरभेदो भासत इति नित्यानित्या पृथ्वी नित्यत्वानित्यत्वाभिन्नद्विप्रकारवतीति लभ्यत इति । **नित्यानित्येति** । नित्यत्वं प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वम् । अनित्यत्वं प्रागभावप्रतियोगित्वध्वंसप्रतियोगित्वान्यतरवत्त्वं बोध्यम । **परमाणुरूपेति** । स च 'जालसूर्यमरीचिस्थं यत्सूक्ष्मं दृश्यते रजः । तस्य षष्ठस्तु यो

नि. त्यन्वयबोधः। अत्र लक्ष्या पृथिवी। पृथिवीत्वं लक्ष्यतावच्छेदकम् । लक्ष्यवाचकपदात् यद्धर्मविशिष्टं प्रत्याय्यते स धर्मो लक्ष्यतावच्छेदकः। यो धर्मो यस्यामवच्छेदकः सा तद्धर्मावच्छिन्ना। प्रकृते लक्ष्यवाचकं पृथिवीपदम्। तेन पृथिवीत्वविशिष्टं प्रत्याय्यते। अतः पृथिवीत्वं लक्ष्यतावच्छेदकं, पृथिवीत्वावच्छिन्ना लक्ष्यता । पृथिवीत्वं यस्मिन् अवच्छेदकं तत्पृथिवीत्वावच्छिन्नम् । लक्ष्यतायां हि पृथिवीत्वमवच्छेदकं, अतः पृथिवीत्वावच्छिन्ना लक्ष्यता । पृथिवीत्वावच्छिन्नं लक्ष्यमित्युक्तौ चावच्छिन्नपदं विशिष्टार्थकं प्रत्येतव्यम्। अत्र गन्धवत्त्वं लक्षणम्। गन्धवत्त्वं च समवायसंबन्धेन गन्धाधिकरणत्वं, गुणगुणिनोः समवायात। गन्धस्य गुणत्वात्, पृथिव्या गुणित्वात्। पृथिवीं विभजते । **सेति**। सा पृथिवी । **द्विविधेति**। विधीयते विभज्यते आभ्यामिति व्युत्पत्त्या विधाशब्दो विभाजकधर्मपरः । द्वे विधे विभाजकधर्मौ यस्याःसा द्विविधा। विभाजकधर्मद्वयविशिष्टेत्यर्थः। तद्द्वयमेव स्पष्टयति। **नित्याऽनित्या चेति**। नित्यपदं नित्यत्वपरम् । अनित्यपदमनित्यत्वपरम् । तयोरभेदसंबन्धेन विभाजकधर्मद्वयेऽन्वयः। तथा च पृथिवी नित्यत्वानित्यत्वाभिन्नविभाजकधर्मद्वयविशिष्टा इत्यन्वयबोधः। नित्यपृथिवीं दर्शयति। **नित्या परमाणुरूपेति**।

प. **सेति** । पृथिवीत्यर्थः । **द्विविधेति** । द्वे विधे यस्याः सा द्विविधा । विधीयते व्यावर्त्यते इतरभेदप्रकारकानुमितिविशेष्यीक्रियते अर्थो अनयेति विधा व्यावर्तकधर्मः।

**अनित्या कार्यरूपा। पुनस्त्रिविधा शरीरेन्द्रियविषयभेदात्। शरी-**

---

न्या.-लक्ष्यतावच्छेदकम्। पृथिवीत्वावच्छिन्ना लक्ष्यता। यद्धर्मावच्छिन्नं लक्ष्यं स

वा. भागः परमाणुः स उच्यते' इति वाक्यप्रसिद्धः। **कार्येति**। जन्येत्यर्थः।

नि. पृथिवीत्यनुषज्यते। तथा च परमाणुरूपा या पृथिवी सा नित्या नित्यपृथिवीत्यर्थः। अनित्यपृथिवीं दर्शयति। **अनित्येति**। अत्रापि पृथिवीत्यनुषज्यते। कार्यरूपा उत्पादविनाशशालिनी द्व्यणुकादिरूपा या पृथिवी सा अनित्या अनित्यपृथिवीत्यर्थः। **पुनस्त्रिविधेति**। नन्वत्र किं पृथिवीत्वावच्छिन्नस्य विभागः। आहोस्वित् अनि-

प. विभाजकोपाधिरिति यावत्। तथा च विभाजकधर्मद्वयवतीत्यर्थः बहुव्रीहावुत्तरपदलक्षणया विधाशब्दस्य विभाजकधर्मद्वयविशिष्टपरत्वात्। धर्मद्वयमाह। **नित्यानित्या चेति**। तत्र भावप्रधानो निर्देशः। 'भावप्रधानो निर्देश' इत्युक्ते कोऽर्थ इति चेत् श्रूयतामवधानेन। भाव्यतेऽवच्छिद्यते विशेष्यतानेनेति भावः। स्वारसिकतत्पदजन्यशाब्दबोधविशेष्यतावच्छेदकधर्म इत्यर्थः। स प्रधानं स्वजन्यशाब्दबोधविशेष्यीभूतो यस्य स भावप्रधानः। निर्दिश्यते बोध्यतेऽनेनेति निर्देशः पदम्। प्रकृते नित्यपदमनित्यपदं च तद्भावप्रधानं स्वारसिकतत्पदजन्यशाब्दबोधविशेष्यतावच्छेदकीभूतनित्यत्वानित्यत्वरूपधर्मविशेष्यकशाब्दबोधजनकम्। एवं च नित्यपदस्य नित्यत्वमनित्यपदस्य अनित्यत्वं लक्षणयार्थ इति फलितम्। इतिपदार्थश्चभेदः विभाजकधर्मद्वयेऽन्वेति। अथवा इतिपदं तादृशलक्षणातात्पर्यग्राहकम्। अभेदसम्बन्धेन नित्यत्वादेर्विभाजकधर्मेऽन्वयः। तथा च नित्यत्वानित्यत्वाभिन्नविभा धर्मद्वयवती पृथिवीत्यन्वयबोधः। ननु यादृशार्थस्य लक्षणया यत्किंचित्पदाद्बोधः तादृशार्थस्य शक्तादपि पदाद्बोधोऽनुभवसिद्धः। 'गङ्गायां घोष' इत्यत्र गङ्गापदबोध्यस्य 'तीरे घोष' इति शक्तात्तीरपदादपि बोधस्यानुभवसिद्धत्वात्। तथा च 'पृथिवी द्विविधा नित्यत्वमनित्यत्वं च' इत्यस्य प्रामाण्यापत्तिः। शक्त्यैवेदानीं नित्यत्वानित्यत्वयोर्बोधसम्भवात्। न च 'तदानीं नित्यत्वत्वादेरेव बोधो लक्षणया वक्तव्य' इति वाच्यम्। तथा बोधनियामकस्यानिरूपणादिति चेदत्र केचित् 'विधापदार्थतावच्छेदकविभाजकधर्मनिष्ठविशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्नप्रकारतासम्बन्धेन शाब्दबोधं प्रति विधापदसमभिव्याहृतेतिपदसमभिव्याहृतयत्किंचित्पदनिरूपितशक्तिज्ञानजन्योपस्थितेर्विशेष्यतासम्बन्धेन प्रतिबन्धकत्वं' स्वीकृत्य प्रकृतानुपपत्तिं वारयन्ति। तत्र 'नित्यत्वमनित्यत्वमिति द्वे विधे पृथिव्याः' इत्यत्र व्यभिचारवारणाय प्रतिबद्धयतावच्छेदकसम्बन्धे विधापदार्थत्वमपहाय विधापदार्थतावच्छेदकत्वं निविष्टमित्यादिपदप्रयोजनं स्वयमूह्यम्। केचित्तु विधापदार्थतावच्छेदकधर्मनिष्ठविशेष्यतानिरूपिताभेदसंबन्धावच्छि-

न्या. धर्मो लक्ष्यतावच्छेदकः। यो धर्मो यस्यामवच्छेदकः सा तद्धर्मावच्छिन्नेति

वा. भेदादिति । भेदपदार्थः स्वसमभिव्याहृतपदार्थतावच्छेदकधर्मः, पञ्चम्यर्थः

नि. त्यपृथिवीत्वावच्छिन्नस्य वा। नाद्यः—पृथिवीत्वावच्छिन्नस्यैव यद्ययं विभागः स्यात् तर्हि नित्यपृथिव्या अपि शरीरेन्द्रियविषयेषु क्वचिदन्तर्भावो वाच्यः। स च न संभवति। तथा हि। न तावन्नित्यपृथिव्याः शरीरेऽन्तर्भावः संभवति। नापीन्द्रिये। तयोरुभयोरप्यनित्यत्वात्। नापि विषये, मृत्पाषाणादिरूपस्य विषयस्य नित्यत्वा-

प. न्नप्रकारतासम्बन्धेन शाब्दबोधं प्रति विधापदसमभिव्याहृतेतिपदसमभिव्याहृतय-त्किंचित्पदनिरूपितशक्त्यवच्छेदकधर्मनिष्ठलक्षणाज्ञानस्य हेतुतां कल्पयित्वोक्तानुपपत्तिं परिहरन्ति। नन्वत्र नित्यपदस्यानित्यपदस्य च स्त्रीलिङ्गत्वं कुतः। न च पृथिवी-पदस्य स्त्रीलिङ्गत्वात्तस्यापि स्त्रीलिङ्गत्वमिति वाच्यम्। पृष्ठताडने दन्तभङ्गापत्तेः। यत्पदार्थस्य यत्पदार्थे अभेदसम्बन्धेनान्वयः तस्यैव खलु विशेष्यनिघ्नत्वेन वि-शेष्यवाचकपदसमानलिङ्गकत्वमिति नियमः। प्रकृते नित्यपदार्थस्यानित्यपदार्थस्य च अभेदसम्बन्धेन पृथिव्यामन्वयासम्भवेन स्त्रीलिङ्गत्वानुपपत्तेर्दुर्वारकत्वात्। न च तर्हि किं लिङ्गमापाद्यत इति वाच्यम्। 'सामान्यतो नपुंसकम्' इति नपुंसकत्वस्यै-वापादनीयत्वात्। एवम् 'आपो द्विविधाः। नित्या अनित्याश्च' इत्यत्र नित्यो-दिपदोत्तरबहुवचनानुपपत्तिः। तदर्थयोर्नित्यत्वानित्यत्वयोर्बहुत्वाभावात्। तर्हि किमापाद्यत इति चेत्प्राथमिकत्वादेकवचनमेवेति गृहाण। तस्मादयं शाब्दबोधोऽ-नुपपन्न इति चेदत्र केचित्। विशेष्यनिघ्नपदार्थतावच्छेदकनिष्ठतन्निरूपितलक्षणाज्ञा-नप्रयोज्यप्रकारतानिरूपिताभेदनिष्ठविषयतानिरूपितविधापदार्थतावच्छेदकविभाजकध-र्मनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तादृशविशे-ष्यवाचकपदसमानलिङ्गवचनकपदसमभिव्याहृतेतिपदसमभिव्याहृतसंख्यावाचकपदस-मभिव्याहृतविधापदसमभिव्याहृतयत्किञ्चित्पदनिरूपितशक्तिज्ञानजन्योपस्थितेर्विशेष्य-तासम्बन्धेन कारणताया अनुभवानुरोधात्कल्पनीयतया नोक्तानुपपत्तिरित्याहुः। अथात्र नित्यत्वानित्यत्वात्मकविभाजकधर्मद्वयस्य क्वापि पृथिव्यामसत्त्वादयोग्यत्वं स्यादस्य वाक्यस्य। न च पृथिवीत्वावच्छिन्ने द्वयमपि शक्यम्। न हि पृथिवी-त्वावच्छिन्नं नाम परमाणुद्व्यणुकादेर्व्यतिरिक्तं किंचिन्नित्यत्वानित्यत्वोभयवदिति निरूपयितुं शक्यते येन एवमुपपाद्यत इति चेन्न। अनायत्या द्विपदसमभिव्याहृत-विधापदस्य विभाजकधर्मद्वयान्यतरवल्लाक्षणिकत्वस्वीकारेणानुपपत्त्यभावात्। न चैवं सति परमाणुर्द्विविधो नित्योऽनित्यश्चेति घटो द्विविधो नित्योऽनित्यश्च इत्यादि-वाक्यानां प्रामाण्यापत्तिः, तत्राप्यन्यतरस्य विद्यमानत्वात्। न च परमाणावनि-त्यत्वस्य घटे नित्यत्वस्य चाभावान्न तथा प्रयोग इति वाच्यम्। 'मम दारिद्र्यास-हिष्णुतया राज्येन भवितव्यम्।' उच्यते। पृथिवी द्विविधेति वाक्यात्तादृशधर्म-

न्या.-न्यायात् । तथा च लक्ष्यतावच्छेदकं पृथिवीत्वं, पृथिवीत्वावच्छिन्ना लक्ष्यता ।

वा. प्रयुक्तत्वं, तस्य च धर्मत्रयसम्बन्धित्वेऽन्वयः । भोगायतनं शरीरम् । भोगश्च

नि. भावात् । न च मृत्पाषाणादिरित्यादिपदसङ्ग्राह्यासु परमाणुरूपपृथिवीषु अन्तर्भवती-

प. द्वयान्यतरवत्त्वे पृथिवीत्वादिव्याप्यत्वं भासते । तेन नित्यत्वानित्यत्वान्यतरवत्त्वे परमाणुत्वादिव्याप्यत्वाभावान्न तथा प्रयोगः । न च अक्षिणी निर्मील्य भासते इत्युक्ते कथं संगच्छते । न च विधापदस्य पृथिवीत्वादिव्याप्यतादृशान्यतरवल्लाक्षणिकत्वस्वीकारात् पृथिवीविशेषणतापन्नस्य पृथिवीत्वस्य व्याप्यतासम्बन्धेन तादृशान्यतरांशे व्युत्पत्तिवैचित्र्यादन्वयस्वीकाराद्वा नानुपपत्तिरिति वाच्यम् । उद्देश्यतावच्छेदकव्यापकताया एव विधेयांशे भानस्य सिद्धान्तितत्वेन तद्व्याप्यताभाने प्रमाणाभावात् उच्यते । नित्यानित्या चेति द्विविधा पृथिवीति तादृशान्यतरवत्वस्योद्देश्यतावच्छेकत्वस्वीकारेण तद्व्यापकतायाः पृथिवीत्वरूपविधेये भानसम्भवादनुपपत्त्यभावात् । स्यादेतत् । तादृशान्यतरव्यापकत्वं पृथिवीत्वस्य न सम्भवति । नित्यत्वानित्यत्वयोः पृथिवीत्वादिशून्यजलादिसाधारण्येन व्याप्यत्वासम्भवान्नैष दोषः। नित्यपदस्य नित्यपृथिवीत्वेऽनित्यपदस्य अनित्यपृथिवीत्वे लक्षणास्वीकारेण अनुपपत्त्यभावात् । अथ यद्येवमुद्देश्यविधेयभाववैपरीत्यस्वीकारस्तदा द्रव्यं द्विविधं पृथिवी जलं च इति वाक्यस्य प्रामाण्यापत्तिरिति चेन्न । विभागवाक्यस्थले परस्परोद्देश्यविधेयभावः स्वीक्रियते तेन परस्परव्याप्यव्यापकभावो बोध्यते । तेन द्रव्यत्वस्य । पृथिवीत्वजलत्वान्यतरव्याप्यत्वाभावान्न तथा प्रयोगः । अत्रोद्देश्यताभेदे विधेयताभेदेन वाक्यभेदनियमात्पृथिवी द्विविधेत्यादौ वाक्यभेदापत्तेः । स च नानुभाविक इति चेन्न । इतरविषयत्वानवच्छिन्नोद्देश्यताद्वयं तथाविधविधेयताद्वयं वा यत्र तत्रैव वाक्यभेदः । प्रकृते पृथिवीत्वावच्छिन्नोद्देश्यतानिरूपितविधेयत्वावच्छिन्ना यान्यतरवन्निष्ठोद्देश्यता तन्निरूपितविधेयत्वावच्छिन्नैव पृथिवीत्वावच्छिन्नोद्देश्यतेति न दोषः । अथैवमपि नित्यत्वस्यानित्यत्वस्य चाभेदसम्बन्धेन विभाजकधर्मेऽन्वयो न सम्भवति नित्यत्वाभिन्नस्यानित्यत्वाभिन्नस्य चैकस्य विभाजकधर्मस्याप्रसिद्धेरिति चेन्न । विधा च विधा चेति द्वन्द्वे सरूपैकशेषे बहुव्रीहौ च द्विविधशब्दो जातः । द्वन्द्वघटकीभूतविधाशब्दद्वयेन विभाजकधर्मस्य वारद्वयं बोधः स्वतःसिद्धः । तदनन्तरमेकविधाशब्दो लुप्यते, अन्यः शिष्यते । 'शिष्यमाणं लुप्यमानार्थबोधकम्' इति न्यायेन अत्रत्यविधाशब्देनापि वारद्वयं विभाजकधर्मस्यानायत्या भानं स्वीक्रियते । नित्यत्वविशेष्यतया सकृदनित्यत्वविशेष्यतया च सकृत् । तथा च 'नित्यत्वाभिन्नविभाजकधर्मानित्यत्वाभिन्नविभाजकधर्मान्यतरवती' इत्यर्थे कानुपपत्तिः । अथ किञ्चिदिह कलङ्कितम्, नित्यानित्या च इत्यत्र चकारः किं शुनो वालतीति चेदत्र

**न्या.** एवं शीतस्पर्शवत्त्वादिलक्षणेषु जलादीनां लक्ष्यता, जलत्वादीनां लक्ष्यतावच्छेदकत्वं

**वा.** सुखदुःखान्यंतरसाक्षात्कारः । आयतनमवच्छेदकतासम्बन्धेनाश्रयः । तथा च

**नि.** ति वाच्यम् । एवमपि तेजोविषये नित्यतेजसोऽन्तर्भावासंभवात् । तत्र विषयश्चतु-

**प.** वदन्ति । चकारो विभज्यमानयोः प्रत्येकं भेदमाहेति । नित्यत्वेन विभज्यमानाया नित्यपृथिव्या अनित्यत्वेन विभज्यमानाया अनित्यपृथिव्याः परस्परं भेदबोधकश्चकार इत्यर्थः । अयमाशयः । विभागवाक्यस्य फलत्रयं विशेषधर्मानवच्छिन्नसामान्यधर्मावच्छिन्नव्यवच्छेदः सामान्यधर्मानवछिन्नविशेषधर्मावच्छिन्नव्यवच्छेदः विशेषधर्माणां परस्परसामानाधिकरण्यव्यवच्छेदश्चेति । अत्राद्यद्वयं समव्याप्यव्यापकभावलाभार्थम् । तृतीयं तु चकाराद्बोधनीयम् । यत्र समभिव्याहृतपदार्थतवच्छेदकयोः सामानाधिकरण्यं नास्ति तत्रैव प्रायशश्चकारप्रयोगादिति । प्रकृते चकारस्य न भेदोऽर्थः । अनन्वयापत्तेः । किंतु सामानाधिकरण्याभाव एव । तत्र नित्यत्वानित्यत्वयोः परस्परं विशेषणविशेष्यतया अन्वयः । तथा च नित्यत्वासमानाधिकरणमनित्यत्वमनित्यत्वासमानाधिकरणं नित्यत्वं च लभ्यते इति नानुपपत्तिरिति केचिदाहुस्तन्न । चादीनामवाचकत्वात् । किंतु नित्यपदमनित्यत्वविरुद्धनित्यत्वलाक्षणिकम् । अनित्यपदं नित्यत्वविरुद्धानित्यत्वलाक्षणिकम् । चकारस्तात्पर्यग्राहकः । अत एव चकारं विनाकृत्यैव यत्र नित्यानित्येत्येतावन्मात्रं प्रयुज्यते तत्रापि या वत्पदप्रोजननिर्वाहः परं तु चकारसमवधाने सति तादृशलक्षणातात्पर्यग्रहात्स्पष्टतयार्थो भवतीत्येतावन्मात्रमेव चकारप्रयोजनम् । यत्र च 'नित्या चानित्या च' इति उभयत्रापि चकारप्रयोगस्तत्र नित्यपदे लक्षणातात्पर्यग्राहकः प्रथमचकारः । अनित्यपदे लक्षणातात्पर्यग्राहको द्वितीयश्चकार इति वक्तव्यम् । तथा च स्वव्यापकपृथिवीत्वव्यापकानित्यत्वविरुद्धनित्यत्वाभिन्नविभाजकधर्मनित्यत्वविरुद्धानित्यत्वाभिन्नविभाजकधर्मान्यतरवती पृथिवीत्यन्वयबोधः पर्यवसन्नः । यथोक्तविरोधभानास्वीकारे 'पृथिवी त्रिविधा नित्यानित्या घटश्च' इत्यादिवाक्यस्य प्रामाण्यापत्तेः इति दिक् । **नित्येति** । पृथिवीत्यनुषज्यते । नित्यपदं नित्यपृथिवीपरम् । परमाणुरूपा पृथिवी नित्येत्यन्वयः । अतो नानुपपत्तिः । एवमग्रेऽपि । **पुनरिति** । पृथिवीत्यनुषज्यते । न तु कार्यरूपेति, पुनःपदस्वारस्यात् । अन्यथा 'सा च' इत्येव वदेत् । न च 'विषयो द्व्यणुकादिः' इत्यत्र द्व्यणुकादेरेव विषयत्वाभिधानात् कार्यरूपा इत्यनुवर्तनमावश्यकमिति वाच्यम् । 'नित्यस्य विषयत्वमेव' इत्येतद्ग्रन्थकारस्याभिप्रायात् । अत एव शरीरेन्द्रियभिन्नमात्रस्य विषयत्वमुपपादितं दीपिकायाम् । पुनरित्यस्य पूर्वोक्तविभाजकधर्मभेदोऽर्थः । तस्य त्रिविधेत्यत्र विभाजकधर्मेऽन्वयः । तथा च 'पूर्वोक्तविभाजकधर्मभिन्नविभाजकधर्मत्रयान्यतमवती पृथिवीति' अन्वयबोधः । के त इत्यत आह । **शरीरेति** । भेदः परस्परभिन्नार्थकशब्दसमुदायः । तादृशशब्द-

न्या-च बोध्यम् । एवं पृथिव्यादित्रिकं निरूप्य वायुं निरूपयति । रूपरहितेति ।

वा- अवच्छेदकतया भोगाश्रयत्वं शरीरत्वम् । इन्द्रियत्वं शब्देतरोद्भूतविशेषगुणानाश्रयत्वे

नि- विधः—भौमंदिव्यौदर्याकरजभेदात् इति लिखितम् । भौमं भूमिजन्यम् । दिव्यं

प- स्वरूपमाह । शरीरेन्द्रियविषयेति । अस्यानुपूर्वीविशेषविशिष्टपदत्रयमर्थः । तस्य च अभेदसंबन्धेन भेदपदार्थेऽन्वयः । तादृशाभेदद्योतनायैव 'शरीरेन्द्रियविषया इति भेद' इति विग्रहे इतिशब्दः । अथ वात्र परस्परभिन्नार्थकशब्दसमुदायो नाम 'इन्द्रियपदार्थभिन्नविषयपदार्थभिन्नार्थकशरीरपदशरीरपदार्थभिन्नविषयपदार्थभिन्नार्थकेन्द्रियपदशरीरपदार्थभिन्नेन्द्रियपदार्थभिन्नार्थकविषयपदैतत्त्रयसमुदायः।' तथा च शरीरेन्द्रियविषयपदं तात्पर्यग्राहकम् । ज्ञानज्ञाप्यत्वं पञ्चम्यर्थः । तच्च ज्ञानजन्यशाब्दबोधविषयत्वं विभाजकधर्मेऽन्वेति । तथा च परस्परभिन्नार्थकतादृशपदत्रयजन्यशाब्दबोधविषयविभाजकधर्मत्रयान्यतमवत्वं विधेयम् । तत्र पृथिवीत्वादिव्यापकताबोधस्तु पूर्ववत् । पृथिवी चतुर्विधा । शरीरेन्द्रियविषयघटभेदादिति वाक्यस्य प्रामाण्यापत्तिवारणाय परस्परभिन्नार्थकत्वं पदविशेषणम् । नन्वेवमपि शरीरेन्द्रिययोरपि विषयत्वेन परस्परभिन्नार्थकत्वं न संभवतीति चेन्न । अत्रत्यविषयपदेन शरीरेन्द्रियभिन्नविषयस्यैव बोधनात् । अत एव 'शरीरेन्द्रियभिन्नो विषय' इति दीपिकायां स्थितम् । तयोरपि विषयपदवाच्यत्वमिति वदतां का गतिरिति चेदधो गतिरेव । यथाकथंचित्समर्थने 'पृथिवी चतुर्विधा शरीरेन्द्रियविषयघटभेदात्' इति वाक्येन किमपराद्धम् । तदेव विश्वनाथपञ्चाननेनापि सूचितं 'शरीरेन्द्रिययोर्विषयत्वेऽपि शिष्यबुद्धिवैशद्याय भेदेनोत्कीर्तनम्' इति वदता । तथा हि । शरीरेन्द्रिययोः प्रागुक्तोपभोगसाधनत्वरूपलक्षणाक्रान्तत्वेऽपि शरीरेन्द्रियभिन्नविषयत्वेन रूपेण तस्य विभागः किमर्थं कृत इत्याशङ्कायामेव तादृशग्रन्थावतरणेनोपभोगसाधनत्वरूपविषयलक्षणं शरीरेन्द्रियसाधारणमेव । परन्तु 'सा च त्रिधा भवेद्देहमिन्द्रियं विषयस्तथा' इत्यत्र विषयपदं शरीरेन्द्रियभिन्नविषयपरमित्यर्थो लभ्यते इति । तथा च स्वव्यापकपृथिवीत्वव्यापकेन्द्रियपदार्थभिन्नविषयपदार्थभिन्नार्थकशरीरपदशरीरपदार्थभिन्नविषयपदार्थभिन्नार्थकेन्द्रियपदशरीरपदार्थभिन्नेन्द्रियपदार्थभिन्नार्थकविषयपदसमुदायज्ञानजन्यशाब्दबोधविषयपूर्वोक्तविभाजकधर्मभिन्नविभाजकधर्मत्रयान्यतमवतीति परमार्थः । परं त्वत्रत्यशरीरादिपदजन्यशाब्दबोधविषयतावच्छेदकं पार्थिवशरीरत्वं पार्थिवेन्द्रियत्वं पार्थिवविषयत्वं चेत्याशय इति सर्वं समञ्जसम् । अत्र बहवो बहुधा वर्णयन्ति । तथा हि । शरीरेन्द्रियविषयाणां भेदः । भिद्यते व्यावर्त्यते इति व्युत्पत्त्या व्यावर्तकः शरीरेन्द्रियविषयविशेष्यकेतरभेदप्रकारकानुमितिजनक इति यावत् । न च शरीरेन्द्रियविषयविशेष्यकानुमितिजनकत्वं शरीरत्वस्येन्द्रियत्वस्य विषयत्वस्य वा न संभवतीति वाच्यम् । शरीरेन्द्रियविषयविशेष्यकसमूहालम्बनात्म-

न्या. रूपरहितत्वे सति स्पर्शवत्त्वं वायोर्लक्षणम्। सामानाधिकरण्यसंबन्धेन रूपत्वावच्छिन्नप्रतियोगिताकाभावविशिष्टस्पर्शवत्त्वं लक्षणमिति फलितार्थः। विशेषणानुपादाने पृथिव्यादित्रिकेऽतिव्याप्ति, तत्रापि स्पर्शवत्त्वसत्त्वात्। अतस्तद्वारणाय विशेषणोपादानम्। तावन्मात्रोपादाने आकाशादावतिव्याप्तिः, तत्रापि रूपरहितत्वसत्त्वात्।

वा. सति ज्ञानकारणमनःसंयोगाश्रयत्वम्। आत्मचर्मपुरीतन्मुखानां व्यावृत्तये सत्यन्तम्। अत एव आत्मभिन्नत्वेन सत्यन्तवैयर्थ्यशङ्का केषांचिदपास्ता। तथापि चर्मादावतिव्याप्तिः। श्रोत्रे अव्याप्तिवारणाय शब्देतरेति। मनःश्रोत्रान्यतरसंग्रहायोद्भूतेति। उद्भूतत्वं अनुद्भूतत्वाभावकूटः। अनुद्भूतत्वानि शुक्लत्वादिव्याप्यानि नाना। अत एव संख्यादिकमादायासंभववारणाय विशेषेति। विशेषगुणास्तु बुद्ध्यादयः षट्, रूपा-

नि. युजन्यम्। औदर्यं उदरजन्यम्। आकरजं आकरजन्यम्। न ह्येषु जन्यरूपविषयेषु नित्यतेजोऽन्तर्भवितुमीष्टे। अतो नाद्यः पक्षस्समीचीनः। नापि द्वितीयः। **पुनस्त्रिविधेति।** पुनश्शब्देन पूर्वं विभक्तस्यैव विभागान्तरं क्रियत इति सूचनात्। न च पुनश्शब्दो वाक्यालङ्कार इति वाच्यम्। वाक्यादावस्य पुनश्शब्दस्य वाक्यालङ्कारतायाः कुत्राप्यदृष्टचरत्वात्। यत्किञ्चित्पदोत्तरं प्रयुज्यमानस्यैव पुनःशब्दस्य वाक्यालङ्कारतायास्तत्र तत्र दृष्टत्वात्। अन्नम्भट्टस्याप्ययं पक्षोऽसंमत इति प्रतिभाति। शरीरेन्द्रियभिन्नो विषय इति तेन लिखितत्वात्। पुनस्त्रिविधेति वाक्यस्य प्रकारान्तरेण विभजत इत्यवतरणिकादानाच्च। तेन हि प्रागेकेन प्रकारेण विभक्तस्यैवेदानीं प्रकारान्तरेण विभागः क्रियत इत्यवगम्यते। अतो महदसमञ्जसमिति चेन्न। पृथि-

प. कानुमितिजनकत्वस्य त्रयेऽपि संभवात्। न चैवं भेदशब्दोत्तरं बहुवचनापत्तिरिति वाच्यम्। व्युत्पत्तिवैचित्र्याद्व्यावर्तकत्वेन व्यावर्तकस्य बोधने बहुत्वस्याविवक्षितत्वात्। अभेदः पञ्चम्यर्थो विभाजकधर्मेऽन्वेति। शरीरेन्द्रियविषयविशेष्यकेतरभेदप्रकारकानुमितिजनकत्वं नाम इन्द्रियविषयभिन्नत्वनिष्ठप्रकारतानिरूपितशरीरनिष्ठविशेष्यताशालिशरीरविषयभिन्नत्वनिष्ठप्रकारतानिरूपितेन्द्रियनिष्ठविशेष्यताशालिशरीरेन्द्रियभिन्नत्वनिष्ठप्रकारतानिरूपितविषयनिष्ठविशेष्यताशाल्यनुमितिजनकत्वम्। अयमर्थोऽस्माद्वाक्यात्कथमुपपादनीय इति चेत् भेदपदस्य तादृशार्थे लक्षणया शरीरेत्यादिकं तात्पर्यग्राहकमिति। अथवा भेदपदस्य प्रातिस्विकरूपेण त्रिविधप्रकारताशालिज्ञानमर्थः। शरीरेन्द्रियविषयेषु भेद इति व्युत्पत्त्या शरीरपदार्थनिष्ठविषयतानिरूपितस्याभेदसम्बन्धेनैकप्रकारतायामन्वयः। अन्यत्सर्वं पूर्ववदिति। अस्मदुक्तवाक्यार्थेऽप्येषा रीतिः संभवतीति बोध्यम्। शरीरपदं शरीरत्वपरमिन्द्रियपदमिन्द्रियत्वपरं विषयपदं विषयत्वपरम्। भेदः समुदायः अभेदः पञ्चम्यर्थः। यद्वा घटकत्वं पञ्चम्यर्थः। शेषं पूर्ववदित्यप्याहुः। अपरे तु शरीरेन्द्रियविषयाणां यो भेदः परस्परवृत्तिभेदप्रतियोगित्वं तज्ज्ञानज्ञाप्यत्वं पञ्चम्यर्थ इत्याहुः। अत्रोक्तपक्षे तु बहु-

**रमस्मदादीनाम् । इन्द्रियं गन्धग्राहकं घ्राणम् । तच्च नासाग्रवर्ति ।**

---

**न्या.** अत उक्तं स्पर्शवत्त्वमिति । अतिव्याप्तिर्नाम अलक्ष्ये लक्षणस्य सत्त्वम् । यथा गोः

**वा.** दिक्चतुष्टयं, स्नेहसांसिद्धिकद्रवत्वादृष्टभावनाशब्दा इति । कालादिवारणाय विशेष्यदलम् । अत एव ज्ञानकारणेति । कालादौ रूपाभावप्रत्यक्षे संनिकर्षघटकतया चक्षुःकालसंयोगस्यापि कारणत्वात्तदाश्रयकालादिवारणाय मन इति । विषयत्वं च शरीरेन्द्रियभिन्नत्वे सति भोगसाधनत्वम् । अत एव तस्य विभाजकत्वमप्युपपद्यते। अत एव च तेजोविषयेषु शरीरेन्द्रिययोरपरिकथनं भाष्यकाराणामपि सङ्गच्छते । भोगसाधनत्वं चादृष्टजन्यत्वात्साक्षात्परम्परया द्व्यणुकप्रभृतीनां सर्वेषामेव । यच्च कार्यं यददृष्टाधीनं तत्तदुपभोगं साक्षात्परम्परया वा जनयतीति नियमात् । **अस्मदादीनामिति** । यद्यपि सर्वाणि शरीराणि पाञ्चभौतिकानि तथापि तत्र पार्थिवभागाः समवायिकारणमन्ये निमित्तकारणमिति तस्य पार्थिवत्वं बोध्यम् । एवं जलीयादावपि । **इन्द्रियं गन्धग्राहकमिति** । इदं च सावधारणं घ्राणस्य पार्थिवत्वे

**नि.** वीत्वावच्छिन्नस्यैव विभजनात् । नित्यपृथिव्याश्च मृत्पाषाणादिरित्यादिपदग्राह्येष्वन्तर्भावान्नानुपपत्तिः ॥ न च पृथिवीजलतेजोवायुष्वेकरीत्या पुनस्त्रिविधा पुनस्त्रिविधाः पुनस्त्रिविधं पुनस्त्रिविधः इति वाक्यानां दर्शनात् तेष्वर्थरीतिरप्येकैव वाच्या । तच्च न संभवति । नित्यपृथिव्या नित्यजलस्य नित्यवायोश्च विषयेऽन्तर्भावसंभवेऽपि नित्यतेजसो विषयेऽन्तर्भावो न संभवति । भौमादीनां जन्यत्वात् इति पूर्वमवोक्तत्वादिति वाच्यम् । तत्र भौमं भूमिसंबन्धि । दिव्यं द्युसंबन्धि । औदर्यं उदरसंबन्धि । आकरजं आकरसंबन्धि इति व्याख्यानात् ॥ एवं सति नित्यतेजसो विषये अन्तर्भावः संभवति । भूम्यादिसंबन्धित्वस्य नित्यतेजस्यपि संभवादित्यास्तां विस्तरः ॥ पार्थिवशरीरं दर्शयति । **अस्मदादीनामिति** । अत्रावच्छेदकत्वं षष्ठ्यर्थः । तथा च अस्मदादिरूपात्मावच्छेदकीभूतं यच्छरीरं तत् पार्थिवशरीरमित्यर्थः । आत्मा हि शरीरावच्छिन्नः तदवच्छेदकं शरीरमिति न वाक्यार्थानुपपत्तिः । पार्थिवेन्द्रियं दर्शयति । **इन्द्रियमिति** । घ्राणमिन्द्रियं पार्थिवेन्द्रियमित्यर्थः । कीदृशं तदित्यत आह । **गन्धग्राहकमिति** । गन्धस्य ग्राहकं गन्धग्राहकं विषयत्वं षष्ठ्यर्थः । ग्रहधातोर्ज्ञानमर्थः । ण्वुल्प्रत्ययस्य जनकत्वमर्थः । तथा च गन्धविषयकज्ञानजनकमित्यर्थः । गन्धविषयकं यत् ज्ञानं, अयं गन्ध इत्याकारकं ज्ञानं, तज्जनकं घ्राणेन्द्रियं भवतीति न वाक्यार्थानुपपत्तिः । **नासाग्रवर्तीति** । न तु नासाग्रमेव

**प.** विचारणीयमस्ति । तत्तु मुक्तावलीवाक्यार्थनिश्चये विचारयिष्यते । **शरीरमिति** । एतत्पदमावर्ततेऽनुवर्तते च पृथिवीति । अवच्छेदकत्वं षष्ठ्यर्थः । अस्मदाद्यवच्छेदकं शरीरं पृथिवीशरीरमित्यन्वयः । इन्द्रियं पार्थिवेन्द्रियम् । विषयः पार्थिवविषयः ।

विषयो मृत्पाषाणादिः । शीतस्पर्शवत्य आपः । ताश्च द्विविधाः । नित्या अनित्याश्चेति । नित्याः परमाणुरूपाः । अनित्याः कार्यरूपाः । पुनास्त्रिविधाः शरीरेन्द्रियविषयभेदात् । शरीरं वरुणलोके । इन्द्रियं रसग्राहकं रसनम् । तच्च जिह्वाग्रवर्ति । विषयः सरित्समु-

---

न्या. शृङ्गित्वं लक्षणं उक्तं चेदलक्ष्यभूतगोभिन्नमहिषादावतिव्याप्तिस्तत्रापि शृङ्गित्वस्य

वा. मानम् । तथा हि । घ्राणं पार्थिवम् । रूपादिचतुष्टयाग्राहकत्वे सति गन्धग्राहकत्वात् । आत्मादौ व्यभिचारवारणाय सत्यन्तम् । स्वरूपासिद्धिवारणाय गन्धेतरसामान्याग्राहकत्वं विहाय रूपादिचतुष्टयेत्युक्तम् । एवं रसनेन्द्रियादावपि बोध्यम् । जलं निरूपयति । **शीतेति** । क्वचिज्जले कदाचिच्छीतस्पर्शस्यानुपलब्धिः क्वचि-

नि. घ्राणम् । किंतु नासाग्रे वर्तत इत्यर्थः । पार्थिवविषयं दर्शयति । **विषय इति** । पार्थिवविषय इत्यर्थः । जलीयशरीरं दर्शयति । **शरीरं वरुणलोके इति** ।

प. **मृत्पाषाणेति** । मृच्च पाषाणश्च मृत्पाषाणौ तावादी यस्य यन्निरूपितादित्वाश्रयौ मृत्पाषाणौ मृत्पाषाणनिष्ठादित्वनिरूपको य इति यावत् । तथा च अत्र आदिपदस्य मृत्पाषाणनिष्ठादित्वनिरूपके लक्षणेति फलितम् । ननु किं नामादित्वं न तावत्प्रथमोत्पन्नत्वमसम्भवात् । नापि प्रथमवेद्यत्वं तस्य दुर्वचत्वात् । न च पार्थिवविषयविषयकज्ञानध्वंसासमानकालीनज्ञानविषयत्वं तत् । पार्थिवविषयकज्ञाने प्रथमतो मृत्पाषाणावेव विषयावित्यत्र गुर्वाज्ञादेरभावादिति चेदत्र केचित् । औत्सर्गिकीं रीतिमनुरुध्येदमुक्तमित्याहुः । वस्तुतस्तु स्वविषयकज्ञानविषयसमुदायघटकत्वमादित्वम् । स्वं पार्थिवविषयः । तथा च मृत्पाषाणनिष्ठस्वविषयकज्ञानविषयसमुदायघटकतानिरूपकः मृत्पाषाणघटितसमुदायविषयकज्ञानविषयः पार्थिवविषय इत्यर्थः । नन्वेवं पार्थिवविषयो मृत्पाषाणजलादिरिति वाक्यस्य प्रामाण्यापत्तिः । मृत्पाषाणजलघटितसमुदायविषयकज्ञानविषयत्वस्यापि पार्थिवविषये सत्वात् । न चोद्देश्यतावच्छेदकशून्याघटितत्वं समुदायविशेषणं वक्तव्यम् । तथा च मृत्पाषाणजलघटितसमुदायस्योद्देश्यतावच्छेदकीभूतपार्थिवविषयत्वशून्यजलघटितत्वात् न तथा प्रयोग इति वाच्यम् । तथा सति 'प्रमेयं पृथिव्यादिः' इति वाक्यस्याप्रामाण्यापत्तेः । उद्देश्यतावच्छेदकशून्याप्रसिद्धेः । न चोद्देश्यतावच्छेदकाश्रयत्वस्य समुदायघटकतया प्रतिपाद्यमानपदार्थेषु विशेषणत्वान्नायं दोषः । निरुक्तसमुदायघटकतया प्रतिपाद्यमानस्य जलस्य पृथिवीत्वानाश्रयत्वादिति वाच्यम् । तथापि 'पृथिवी द्रव्यादिः' इति वाक्यस्य प्रामाण्यापत्तेः । पृथिवीत्वाश्रयद्रव्यघटितसमुदायविषयकज्ञानविषयत्वस्य पृथिव्यां सत्वात् उच्यते । उद्देश्यतावच्छेदकव्याप्यत्वं घटकतावच्छेदकतया प्रतिपाद्यमानधर्मविशेषणं कर्तव्यम् । तथा च जलत्वस्य द्रव्यत्वस्य च पृथिवीत्वाव्याप्यत्वान्नोक्तदोषः ।

द्रादिः। उष्णस्पर्शवत्तेजः। तद्द्विविधम्। नित्यमनित्यं चेति। नित्यं परमाणुरूपम्। अनित्यं कार्यरूपम्। पुनस्त्रिविधम्। शरीरेन्द्रियविषयभेदात्। शरीरमादित्यलोके। इन्द्रियं रूपग्राहकं चक्षुः। तच्च कृष्णताराग्रवर्ति। विषयश्चतुर्विधः। भौमदिव्यौदर्याकरजभेदात्। भौमं वह्न्यादि। दिव्यमविन्धनं विद्युदादि। भुक्तस्य परिणामहेतुरौदर्यम्। आकरजं सुवर्णादि। रूपरहितस्पर्शवान् वायुः। स द्विविधः। नित्योऽनित्यश्चेति। नित्यः परमाणुरूपः। अनित्यः कार्यरूपः। पुनस्त्रिविधः। शरीरेन्द्रियविषयभेदात्।

---

न्या. सत्त्वात्। अव्याप्तिर्नाम लक्ष्यैकदेशावृत्तित्वम्। लक्ष्यतावच्छेदकाश्रये क्वचिल्लक्ष्ये लक्षणासत्त्वमेवाव्याप्तिरित्यर्थः। यथा गोर्नीलरूपवत्त्वं लक्षणमुक्तं चेत् श्वेतगवि नीलरूपाभावात् अव्याप्तिः। असंभवो नाम लक्ष्यमात्रे कुत्रापि लक्षणासत्त्वम्।

वा. द्राव्यादौ कदाचिच्छीतस्पर्शस्योपलब्धिश्चौपाधिकीति नाव्याप्त्यतिव्याप्ती। तेजो निरूपयति। **उष्णेति**। स्वर्णचन्द्रकिरणादौ तूष्णस्पर्शः पार्थिवादिस्पर्शेनाभिभूतो, मण्यादिना वह्न्यादाविव। तेन न तत्राव्याप्तिः। वायुं निरूपयति। **रूपरहि-**

नि. वृत्तित्वं सप्तम्यर्थः। तथा च जलीयशरीरं वरुणलोकवृत्तीत्यर्थः। दिव्यं तैजसविषयं दर्शयति। **अविन्धनमिति**। विद्युदादिरूपं यत्तेजस्तद्दिव्यतेज इत्यर्थः। कीदृशं तद्विद्युदादीत्यत आह। **अविन्धनमिति**। आपः इन्धनानि यस्य तदबिन्धनम्। नन्विदमनुपपन्नं अप्सु इन्धनत्वासंभवात्। इन्धनत्वं काष्ठत्वम्। न हि अप्सु काष्ठत्वं संभवतीति चेन्न। इन्धी दीप्तौ इति धातोः 'करणाधिकरणयोश्च' इति करणे ल्युटि 'युवोरनाकौ' इत्यनादेशे च सति निष्पन्न इन्धनशब्दो दीप्तिसाधनपरो न तु काष्ठत्वविशिष्टपरः॥ एवं च आप इन्धनानि दीप्तिसाधनानि यस्य तत् अविन्धनमित्यस्य व्युत्पत्तिः। अथवा—अद्भिः इन्धनं दीपनं यस्य तदबिन्धनम्। इदानीमिन्धनशब्दो भावे ल्युडन्तः। पूर्वं तु करणे ल्युडन्त इति विशेषः। वायुं लक्षयति। **रूपरहितेति**। रूपेण रहितः रूपरहितः इत्यत्र तृतीयार्थः प्रतियोगित्वम्। रहधातोरभावः, क्तप्रत्ययस्य आश्रयः। तथा च रूपप्रतियोगिकाभावाश्रयत्वे सति स्पर्शवत्त्वं वायोर्लक्षणमित्यर्थः। अत्र स्पर्शवत्त्वमात्रोक्तौ पृथिव्यादावतिव्याप्तिः। अतो विशेषणदलमुपात्तम्।

प. उद्देश्यतावच्छेदकव्याप्यत्वं च उद्देश्यतावच्छेदकसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वे सत्युद्देश्यतावच्छेदकसामानाधिकरण्यम्। तेन 'पृथिवी पृथिव्यादिः, गन्धवदादिः' इत्यादिवाक्यस्य न प्रामाण्यापत्तिः। इत्यलं विस्तरेण। **अविन्धनमिति**। अविन्धनमब्निष्ठेन्धनतानिरूपकमिन्धनत्वं च प्रदीपकत्वम्। प्रदीपकत्वं च दहना-

शरीरं वायुलोके । इन्द्रियं स्पर्शग्राहकं त्वक् । सर्वशरीरवृत्तिः । विषयो वृक्षादिकम्पनहेतुर्वायुः । शरीरान्तस्संचारी वायुः प्राणः । स चैकोऽप्युपाधिभेदात्प्राणापानादिसंज्ञां लभते । शब्दगुणकमा-

---

न्या. यथा गोरेकशफवत्त्वम् लक्षणमुक्तं चेत् गोसामान्यस्य द्विशफवत्त्वेन एकशफवत्त्वस्य कुत्राप्यसत्त्वादसंभवः । अतिव्याप्त्यव्याप्त्यसंभवानां निष्कृष्टलक्षणन्तु— लक्ष्यतावच्छेदकसमानाधिकरणत्वे सति लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यमतिव्याप्तिः । लक्ष्यतावच्छेदकसमानाधिकरणत्वे सति लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वमव्याप्तिः । लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वम् असंभव इति ॥ आकाशं लक्षयति । **शब्दगुणकमिति** । अत्र गुणपदमाकाशे शब्द एव विशेषगुण इति द्योतनाय न त्वति-

वा. **तेति** । रूपाभावे सति स्पर्शवत्त्वं वायोर्लक्षणम् । पृथ्व्यादित्रयवारणाय सत्यन्तम् । आकाशादिवारणाय विशेष्यदलम् । **उपाधिभेदादिति** । ते च हृदादिदेशाः । आकाशं लक्षयति । **शब्देति** । शब्दस्य द्रव्यत्ववादिनं मीमांसकं पराभावयितुं

नि. तावन्मात्रोक्तौ गगनादावतिव्याप्तिः । अत एव विशेष्योपादानम् । ननु प्राणापानाद्यतिरिक्तद्रव्यसत्त्वात्कथं नवद्रव्याणि इत्युक्तं इत्याशङ्कां प्रसङ्गादिदानीं परिहरति । **शरीरान्तस्सञ्चारीति** । तथा च शरीरान्तस्संचारी यो वायुः स एव प्राणः । नातिरिक्त इति भावः । ननु तथापि अपानादीनां क्वान्तर्भावः । तदाह । **स चेति** । शरीरान्तस्संचारी वायुश्चेत्यर्थः । उपाधिभेदादाश्रयभेदात् । वस्तुतस्तु प्राणस्य विषयत्वात् तद्भेदेन यो विभागो भाष्ये दर्शितः सोऽनुपपन्न इत्याह । **शरीरान्तस्सञ्चारीति** । विषय इत्यनुषज्यते । तथा च शरीरान्तस्संचारी वायुरूपो यः प्राणः स विषय एवेत्यर्थः इति रीत्या व्याख्येयम् । आकाशं लक्षयति । **शब्दगुणकमिति** । शब्दो गुणो यस्येति तत्तथा । तच्च आकाशं च एकं

प. वयवैर्महादहनोत्पादने सहकारित्वम् । **सर्वशरीरवृत्तिरिति** । सर्वावयवावच्छेदेन शरीरवृत्तिरित्यर्थः । शरीरपदं शरीरावयवपरम् । वृत्तित्वं च अवच्छेदवृत्तिकत्वम् । **शरीरान्तरिति** । सञ्चारित्वं संयोगवत्त्वम् । **स चैकोऽपीति** । **संज्ञामिति** । सामान्यत एकवचनम् । प्राणपदं प्राणशब्दपरम् । अपानपदमपानशब्दपरम् । तदादित्वं तद्घटितसमुदायविषयकज्ञानविषयत्वम् । संज्ञामित्यत्र द्वितीयार्थो निरूपितत्वम् । लाभः सम्बन्धः । तच्च वाच्यत्वम् । आश्रयत्वमाख्यातार्थः । एकपदं संज्ञाभेदसमानाधिकरणत्वेन संज्ञाभेदप्रयोजकत्वेन वा प्रतिसन्धीयमानैकत्वपरम् । अविरोधित्वमपिशब्दार्थः । तच्च तद्व्यापकीभूताभावप्रतियोगित्वाभावः । अविरोधित्वपर्यन्तमेव चैकशब्दार्थः । अपिशब्दस्तात्पर्यग्राहकः । अन्वयश्चास्य संज्ञायां लाभे वा । व्युत्प-

**काशम् । तच्चैकं विभु नित्यं च । अतीतादिव्यवहारहेतुः कालः ।**

न्या. व्याप्तिवारणाय । समवायेन शब्दवत्त्वमात्रस्य सम्यक्त्वात् । तदुक्तं—'रूपं गन्धो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः । बुद्ध्यादिभावनान्ताश्च शब्दो वैशेषिका गुणाः ॥' इति । **तच्चैकमिति** । अनेकत्वे मानाभावादिति भावः । **विभ्विति** । सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वम् । मूर्तत्वं च क्रियाश्रयत्वम् । पृथिव्यप्तेजोवायुमनांसि मूर्तानि । पृथिव्यप्तेजोवाय्वाकाशपञ्चकं भूतपदवाच्यम् । भूतत्वं नाम बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम् । कालं लक्षयति । **अतीतेति** । व्यवहारहेतुत्वस्य लक्षणत्वे घट इति व्यवहारहेतुभूतघटादावतिव्याप्तिः । तद्वारणाय अतीतादीति । दिशो

वा. गुणेति । न तु गुणवत्त्वं लक्षणघटकं प्रयोजनाभावात् । विभागाभावं द्योतयितुं तस्यैकत्वमाह । **एकमिति । विभ्विति** । विभुत्वं सर्वमूर्तद्रव्यसंयोगित्वम् । मूर्तानि पृथिव्यप्तेजोवायुमनांसि । मूर्तत्वं वेगवत्त्वम् । कालं लक्षयति । **अतीतेति** । व्यवहारश्चातीतः कालः अनागतः काल इत्यादिवाक्यप्रयोगरूपः । तज्जनकत्वं च वाक्यप्रयोगे ज्ञायमानवाक्यार्थस्य कारणत्वात् वाक्यार्थघटकतया । तथा च तादृशव्यवहारजनकतावच्छेदकमुख्यविशेष्यत्वं कालत्वम् । मुख्यत्वनिवेशादतीतत्वादौ

नि. विभाजकधर्मद्वयशून्यम् । विभु सर्वमूर्तद्रव्यसंयोगीत्यर्थः । पृथिव्यप्तेजोवायुमनांसि मूर्तद्रव्याणि । नित्यं ध्वंसाप्रतियोगि । कालं लक्षयति । **अतीतादीति** । अतीतः आदिर्येषां ते अतीतादयः । तेषां व्यवहारः शब्दप्रयोगः । तस्य हेतुः कारणमित्यर्थः । अतीतः वर्तमानः भविष्यतीति शब्दप्रयोगे कालः कारणम् । व्यवहारे व्यवहर्तव्यतावच्छेदकस्य कारणत्वात् । यथा—घट इति शब्दप्रयोगे घटो व्यवहर्तव्यः, घटत्वं व्यवहर्तव्यतावच्छेदकम्, तस्य घटशब्दप्रयोगे कारणत्वम् । प्रकृते च अतीतः अतीतकालवान्, वर्तमानः वर्तमानकालवान्, भविष्यन् भविष्यत्कालवान् इत्यर्थः । तथा च अतीतशब्दे अतीतकालवान् व्यवहर्तव्यः । अतीतकालवत्त्वं व्यवहर्तव्यतावच्छेदकम् । अतीतकालवत्त्वं च अतीतकाल एव । एवं वर्तमानस्थलेऽपि बोध्यम् । एवं च अतीतशब्दप्रयोगेऽतीतकालः कारणं, वर्तमानशब्दप्रयोगे वर्तमानकालः कारणं, भविष्यच्छब्दप्रयोगे भविष्यत्कालः कारणमित्यतीतादिव्यव-

प. तिवैचित्र्यात्र विशेष्यनिघ्नत्वम् । अथ वा अपिशब्दसमभिव्याहृतैकशब्दः संज्ञाभेदप्रयोजकत्वेन प्रतिसन्धीयमानवस्तुतः संज्ञाभेदप्रयोजकैकत्वाश्रयपरः । अन्वयश्चास्य तच्छब्दार्थे प्राणवायौ । उपाधिपदं प्राणनहेतुत्वादिरूपप्रवृत्तिनिमित्तपरम् । प्रयोज्यभेदाश्रयत्वं पञ्चम्यर्थः । अथ वा प्रयोज्यत्वं पञ्चम्यर्थः । संज्ञापदं भिन्नसंज्ञापरम् । भेदे प्रयोज्यत्वमन्वेति । चकारो वाक्यालङ्काराय । **तच्चेति** । चकारस्त्वर्थः । पूर्वोक्तवैलक्षण्यं तच्च विभाजकधर्मशून्यत्वम् । तच्चाकाशत्वव्याप्यधर्मविरुद्धधर्माव्यापकाकाशत्वकत्वम् । विभु नित्यं च चेत्यत्र चकारो वाक्यभेदस्थिरीकरणाय । **अतीतेति** । अतीतपद-

**स चैको विभुर्नित्यश्च । प्राच्यादिव्यवहारहेतुर्दिक् । सा चैका विभ्वी नित्या च । ज्ञानाधिकरणमात्मा । स द्विविधः । जीवात्मा परमात्मा चेति । तत्रेश्वरः सर्वज्ञः परमात्मा एक एव । जीवस्तु**

---

न्या. लक्षणमाह । **प्राच्येति** । उदयाचलसन्निहिता या दिक् सा प्राची । अस्ताचलसन्निहिता या दिक्सा प्रतीची । मेरोः सन्निहिता या दिक् सोदीची । मेरोर्व्यवहिता या दिक् सावाची । आत्मानं निरूपयति । **ज्ञानाधिकरणमिति** ।

वा. नातिव्याप्तिः । अतीतत्वं वर्तमानकालवृत्तिध्वंसप्रतियोगित्वम् । अनागतत्वं वर्तमानकालवृत्तिप्रागभावप्रतियोगित्वम् । वर्तमानत्वं प्रयोगाधिकरणत्वम् । माससंवत्सरादिव्यवहाराणामौपाधिकत्वादाह । **एक इति** । **प्राच्यादीति** । लक्षणं पूर्ववद्बोध्यम् । उदयाचलसंनिहितदेशावच्छिन्ना दिक् प्राची । अस्ताचलसंनिहितदेशावच्छिन्ना प्रतीची । मेरुसन्निहितदेशावच्छिन्नोदीची । मेरुव्यवहितदेशावच्छिन्ना दक्षिणा । एवमन्यदिशो बोध्याः । आत्मानं निरूपयति । **ज्ञानेति** । अधिकरणपदं समवायेन ज्ञानस्य लक्षणतालाभाय । ज्ञानमात्रं लक्षणम् । **परमात्मेति** । नित्यज्ञानामोघेच्छावान्स्वतन्त्रो निर्दुःख इत्यर्थः । **ईश्वर इति** । जगदुत्पत्तिस्थितिसंहारकर्तेत्यर्थः । **एक इति** । अद्वितीय इत्यर्थः । क्षित्यङ्कुरादिकं

नि. हारकारणत्वस्य लक्ष्ये सत्त्वाल्लक्षणसङ्गतिः । अत्र यद्यपि बहु वक्तव्यमस्ति, तथापि ग्रन्थगौरवभिया बालानां दुरवगाहतया च विरम्यते । एतत्प्रपञ्चस्त्वन्यत्र सम्यग्दर्शितोऽस्माभिः । दिशो लक्षणमाह । **प्राच्यादीति** । प्राच्यः आदिः येषां ते प्राच्यादयः । तेषां व्यवहारः शब्दप्रयोगः, तस्य हेतुः कारणमित्यर्थः । अयं प्राच्यः, अयमवाच्यः, अयं प्रतीच्यः, अयमुदीच्यः, इत्यादिशब्दप्रयोगे दिक् कारणम् । व्यवहारे व्यवहर्तव्यतावच्छेदकस्य कारणत्वात् । यथा घटशब्दप्रयोगे घटो व्यवहर्तव्यः, घटत्वं व्यवहर्तव्यतावच्छेदकं, तस्य घटशब्दप्रयोगे कारणत्वम् । प्रकृते च प्राच्यः प्राग्दिग्वान्, अवाच्यः अवाग्दिग्वान्, प्रतीच्यः प्रत्यग्दिग्वान्, उदीच्यः उदग्दिग्वान् इत्यर्थः । तथा च प्राच्यशब्दप्रयोगे प्राग्दिग्वान् व्यवहर्तव्यः, प्राग्दिग्वत्त्वं व्यवहर्तव्यतावच्छेदकं, प्राग्दिग्वत्त्वं च प्राग्दिगेव । एवमवाच्यस्थले प्रतीच्यस्थले उदीच्यस्थले च बोध्यम् । एवञ्च प्राच्यशब्दप्रयोगे प्राची दिक्कारणं, अवाच्यशब्दप्रयोगे अवाची दिक्कारणं, प्रतीच्यशब्दप्रयोगे प्रतीची दिक्कारणं, उदीच्यशब्दप्रयोगे उदीची दिक्कारणमिति प्राच्यादिशब्दप्रयोगे कारणत्वस्य दिशि सत्त्वाल्लक्षणसमन्वयः । अत्र यद्यपीत्यादि पूर्वमुक्तत्वेन विरम्यते । आत्मनो लक्षणमाह । **ज्ञानाधिकरणमिति** । ज्ञानस्याधिकरणं ज्ञानाधिकरणं, निरूपितत्वं षष्ठ्यर्थः,

प. मतीतशब्दपरम् । हेतुपदं जनकज्ञानविषयपरं, न तु जनकपरम् । व्यवहारे व्यवहर्त-

**प्रतिशरीरं भिन्नः। विभुर्नित्यश्च । सुखाद्युपलब्धिसाधनमिन्द्रियं**

---

न्या. अधिकरणपदं समवायेन ज्ञानाश्रयत्वलाभार्थम्। मनो निरूपयति । **सुखादीति**। उपलब्धिर्नाम साक्षात्कारः । तथा च सुखदुःखसाक्षात्कारकारणत्वे सति इन्द्रियत्वं मनसो लक्षणम् । इन्द्रियत्वमात्रोक्तौ चक्षुरादावतिव्याप्तिः। अतः सुखेत्यादि विशेष्यानुपादाने आत्मन्यतिव्याप्तिः। आत्मनः ज्ञानादिकं प्रति समवायिकारणत्वात्।

वा. कर्तृजन्यं कार्यत्वात् इत्यनुमानेन लाघवादेक एव सिद्धयतीति भावः । **प्रतिशरीरमिति** । अत्र भोगवत्त्वे सति अनवच्छिन्नभोगवद्भिन्नो भिन्नशब्दार्थः । द्वितीयार्थोऽवच्छेद्यत्वं । व्युत्पत्तिवैचित्र्याद्भोगेऽनवच्छेद्यत्वे चान्वेति । शरीरपदं तु प्रयोज्यतासंबन्धेन तत्तन्मनोविशिष्टपरम्। तेनैकात्मनो जन्मभेदेनावस्थाभेदेन कायव्यूहस्थले च नानाशरीरसत्त्वेऽपि न क्षतिः। एकस्यैव मनसः पूर्वपूर्वजन्मार्जितधर्माधर्मद्वारा सकलशरीरप्रयोजकत्वात्। तथा चैकैकात्मा यत्किंचिन्मनोविशिष्टशरीरावच्छिन्नभागवेत्त्वे सति तादृशशरीरानवच्छिन्नभोगवद्भिन्न इति वाक्यार्थः । वीप्सावशात्तत्तन्मनोविशिष्टत्वेन सकलशरीराणां बोधः। **विभुरिति** । परमाणुरूपत्वे तद्गतज्ञानादिप्रत्यक्षानुपपत्तेः । अपकृष्टपरिमाणत्वे सादित्वेन प्राथमिकप्रवृत्त्यनुपपत्तेः । अत एव नित्य इति। मनो निरूपयति। **सुखादीति**। सुखादिशब्द आत्मसमवेतपरः । उपलब्धिसाधनत्वं च मानसत्वावच्छिन्नकार्यतानिरूपितकारणत्वम् । तेन सुखाद्युपनीतजनके कालविधया तज्जनके चक्षुरादौ नातिव्याप्तिः। तथा च मानसत्वावच्छिन्नकार्यतानिरूपितकारणत्वे सतीन्द्रियत्वं लक्षणम् । संनिकर्षवारणाय

नि. अधिकरणत्वं आश्रयत्वं, तथा च ज्ञाननिरूपिताश्रयत्वमात्मनो लक्षणम्। स आत्मा द्विविधः विभाजकधर्मद्वयविशिष्ट इत्यर्थः। तत्र तयोर्मध्ये, सर्वज्ञः ईश्वरः। स एव परमात्मा। सर्वं जानातीति सर्वज्ञः, सर्वविषयकज्ञानवानित्यर्थः । स च एक एव, विभाजकधर्मद्वयशून्य एव। जीवः जीवात्मा । मनो लक्षयति । **सुखादीति**। सुखादेरुपलब्धिः सुखाद्युपलब्धिः, विषयत्वं षष्ठ्यर्थः, उपलब्धिः ज्ञानं, सुखादिविषयकज्ञानमित्यर्थः। सुखाद्युपलब्धेः साधनम् सुखाद्युपलब्धिनिरूपितकारणतावत् । तथा च सुखादिविषयकज्ञाननिरूपितकारणताश्रयत्वं मनसो लक्षणम्। सुखादि-

प. व्यस्य स्वरूपतो हेतुत्वे मानाभावात्। **प्रतिशरीरं भिन्न इति**। ननु प्रतिशरीरं भिन्न इति वाक्यात्प्रतिद्रव्यं सत्तेत्यत्रेव प्रतिपदसमभिव्याहृतशरीरपदस्य शरीरत्वव्यापकत्वार्थकतया शरीरत्वव्यापकभेदप्रतियोगीत्यर्थो लभ्यते। तच्च न घटते । जीवात्मन एकत्वेऽपि ईदृशार्थनिर्वाहादात्मभेदस्य शरीरत्वव्यापकताया अक्षतेः। अत्राहुः शरीरं स्वावच्छेदकशरीरम्। तथा च प्रतिपदसमभिव्याहृतशरीरपदस्य स्वावच्छेदकयत्किञ्चिच्छरीरभेदव्यापकत्वमर्थः। तस्य भेदेऽन्वयः। तथा च स्वावच्छेदकयत्किञ्चिच्छरीरभेदव्यापकभेदप्रतियोगीत्यर्थः। अत्र स्वाश्रयशरीरत्वं व्याप्यतावच्छेदकसम्बन्धः।

मनः। तच्च प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यं च। चक्षुर्मा-

---

न्या. अत इन्द्रियत्वोपादानम्। रूपं लक्षयति। **चक्षुर्मात्रेति**। चक्षुर्मात्रग्राह्यत्वविशि-

वा. विशेष्यदलम्। मातसत्वं जातिविशेषः। **नियतत्वादिति**। अत्र समवेतभोगकारणत्वे सत्यसमवेतभोगाकारणत्वं नियतत्वशब्दार्थः। द्वितीयार्थो निरूपितत्वम्। तस्य च समवेतद्रव्येऽन्वयः। पञ्चम्यर्थः प्रयुक्तत्वम्। तस्य चानन्तत्वेऽन्वयः। तथा च तत्तदात्मसमवेतभोगजनकत्वविशिष्टतत्तदात्मासमवेतभोगाजनकत्वप्रयुक्तानन्तत्ववन्मन इति वाक्यार्थः। द्रव्याणि निरूप्य गुणान्निरूपयन् क्रमप्राप्तं रूपं निरूपयति। **चक्षुर्मात्रेति**। इतरेन्द्रियाग्राह्यत्वं मात्रपदार्थः। चक्षुषश्चेतरत्वे ग्रहे चान्वयः। अथवा

नि. विषयकं यत् ज्ञानं, अहं सुखी अहं दुःखीत्याकारकं ज्ञानं, तन्निरूपितकारणत्वस्य मनसि सत्त्वाल्लक्षणसङ्गतिः। तच्च मनश्च, अनन्तम्। तत्र हेतुः। **प्रत्यात्मनियतत्वादिति**। एकैकस्यात्मनः एकैकं मन आवश्यकमिति आत्मनामनन्तत्वात् मनसामप्यनन्तत्वमित्यर्थः। द्रव्यं निरूपितम्। इदानीं गुणा निरूपणीयाः। तत्र प्रथमोद्दिष्टं रूपं लक्षयति। **चक्षुर्मात्रग्राह्य इति**। चक्षुर्मात्रग्राह्यत्वे सति

प. स्वाश्रयावच्छेदकत्वं व्यापकतावच्छेदकसम्बन्ध इति। **प्रत्यात्मनियतत्वादिति**। प्रतिपदसमभिव्याहृतात्मपदं सकलात्मपरम्। नियतपदं व्यापकपरम्। अवच्छेदकत्वं व्याप्यतावच्छेदकसम्बन्धः। व्यापकतावच्छेदकसम्बन्धः संयोग इति केचित्तन्न। प्रतिपदवैयर्थ्यापत्तेः। अन्ये तु प्रतिपदसार्थक्याय नियतपदं सम्बद्धपरमिति व्याचक्षते। तदपि न। आत्मनो विभुत्वेन मनस एकत्वेऽपि सकलात्मसम्बन्धित्वसंभवेन तस्यानन्तत्वासाधकत्वात्। आत्मपदं शरीरपरम्। नियतपदं सम्बद्धपरम्। न चाकाशस्यापि सर्वशरीरसम्बद्धत्वादानन्त्यव्यभिचार इति वाच्यम्। सर्वशरीरानुयोगिकसंयोगप्रतियोगित्वस्य विवक्षितत्वात्। कथमिति चेत्, निपूर्वकयमधातोः संयोगोऽर्थः। क्तप्रत्ययार्थः प्रतियोगित्वम्। आत्मपदार्थस्य शरीरस्य स्वानुयोगित्वसम्बन्धेन संयोगेऽन्वय इत्यपरे। तदपि सर्वशरीरानुयोगिकसयोगव्यक्तेरप्रसिद्धेश्चिन्त्यम्। अन्ये तु प्रतिपदसमभिव्याहृतात्मपदं शरीरत्वपरं। नियतत्वं व्यापकत्वम्। तथा च शरीरत्वव्यापकत्वमित्यप्याहुः। तदप्यसत्। कस्यापि मनसः शरीरत्वव्यापकत्वाभावात् अप्रसिद्धेः। केनचिद्रूपेण व्यापकत्वोक्तावतिप्रसक्तेः। इतरे तु प्रतिपदसमभिव्याहृतात्मपदं शरीरत्वपरं, नियतपदं व्यापकतावच्छेदकमनस्त्वाश्रयपरमित्याहुः। तदसत्। प्रतिपदानर्थक्यापत्तेः। आत्मपदस्य शरीरत्वे लक्षणातात्पर्यग्राहकतायाः प्रतिपदेऽसिद्धेः। वयं तु ब्रूमः। यावन्त आत्मानस्तावतां मनसां वाच्यत्वादनन्तत्वमिति विशिष्टार्थः। तल्लाभः कथमिति चेदित्थम्। प्रतिपदसमभिव्याहृतात्मपदं प्रातिस्विकतत्तद्व्यक्तित्वावच्छिन्नात्मव्यक्तिपरम्। तन्नियतत्वं

न्या छ्गुणत्वं रूपस्य लक्षणम्। विशेष्यमात्रोपादाने रसादावतिव्याप्तिः। अतश्चक्षुर्मा-

वा. चित्रगुरित्यादौ गोपदस्येव ग्राह्यपदस्यैव चक्षुरितरेन्द्रियाग्राह्यत्वविशिष्टचक्षुर्ग्राह्यत्व-

नि. गुणत्वं रूपस्य लक्षणम्। रूपं हि चक्षुर्मात्रेण गृह्यते,गुणश्च भवतीति लक्षणसमन्वयः।

प. तदन्यासम्बन्धित्वम्। तच्च तदन्यसमवेतज्ञानाजनकत्वम्। तथा च स्वजन्यज्ञानाश्रय-यत्किंचिदात्मभिन्नसमवेतज्ञानाजनकत्वादित्यर्थः। एकैकस्य मनस इति शेषः। ज्ञान-ज्ञाप्यत्वं पञ्चम्यर्थोऽनन्तत्वेऽन्वेति। यद्वा प्रतिपदसमभिव्याहृतात्मपदस्य स्वजन्यज्ञा-नसमवायियत्किंचिदात्मभेदव्यापकत्वमर्थः। नियतत्वं भिन्नत्वं भेदप्रतियोगित्वम्। अत्र व्याप्यतावच्छेदकसम्बन्धः स्वाश्रयात्मत्वं, व्यापकतावच्छेदकसम्बन्धः स्वाश्रय-जन्यज्ञानसमवायित्वम्। तथा च स्वजन्यज्ञानसमवायियत्किंचिदात्मभेदव्यापकभे-दप्रतियोगित्वादिति पर्यवसितोऽर्थ इति। केचित्तु प्रतिपदसमभिव्याहृतात्मपदस्य आ-त्मवृत्तिसंख्यासजातीयमर्थः। नियतत्वं संख्यावत्त्वम्। तथा चात्मवृत्तिसंख्यासजाती-यसंख्यावत्त्वादित्यर्थः। ननु मनसोऽनन्तत्वाभावेऽपि संख्यात्वेन रूपेण आत्मवृत्ति-संख्यासजातीयसंख्यावत्त्वं मनस्यक्षतम्। न च संख्यात्वव्याप्यजात्या साजात्यं विव-क्षितमिति वाच्यम्। आत्मन्येकत्वस्यापि सत्त्वेन मनस एकत्वेऽपि संख्यात्वव्याप्य-जात्यैकत्वत्वेनात्मनिष्ठसंख्यासजातीयसंख्यावत्त्वस्य सम्भवात्। अथ बहुत्वत्वेन रूपेण साजात्यं विवक्षितम्। न च मनसः त्रिजतुष्ट्वेऽपि आत्मनिष्ठसंख्यासाजात्यं सम्भवति। त्रित्वादिसकलसंख्यासाधारणबहुत्वत्वस्यैकत्वादिति नास्यानन्त्य-साधकत्वमिति वाच्यम्। बहुत्वत्वव्याप्यजात्या साजात्यस्य विवक्षितत्वादिति चेदात्मनि त्रित्वस्यापि सत्त्वेन बहुत्वत्वव्याप्यजात्या त्रित्वत्वेन आत्मवृत्तिसंख्यासा-जात्यसम्भवेन तस्य मनोऽनन्तत्वासाधकत्वात्। उच्यते। प्रतिपदसमभिव्याहृता-त्मपदस्यात्मत्वव्यापकसंख्यासजातीयमर्थः। साजात्यं च बहुत्वत्वव्याप्यजात्येति नानुपपत्तिः। न च मनस एकत्वेऽप्यात्ममनःसाधारणसंख्यामादाय निरुक्तहेतोः सम्भव इति वाच्यम्। तादृशसंख्यासजातीयसंख्यापर्याप्त्यधिकरणत्वस्य विवक्षि-तत्वादिति वदन्ति। **अनन्तमिति**। पदार्थत्वसंख्यापर्याप्त्यधिकरणमिति केचित्। अक्षिणी निमील्य श्रोत्रे निरुध्य वाचं यच्छन्ति। न विद्यते अन्तो यस्येति बहुव्रीहिविरोधात्। न च बहुव्रीहावुत्तरपदलक्षणायास्त्वयापि वाच्यतया ममापि लक्षणास्त्विति वाच्यम्। विग्रहवाक्याद्यादृशार्थस्य यादृशविशेषणविशेष्यभा-वापन्नस्य बोधः, बहुव्रीहावुत्तरपदात्तादृशविशेषणविशेष्यभावविपरीतविशेषणविशेष्य-भावापन्नस्य तादृशार्थस्यैव लक्षणया बोधस्य व्युत्पत्तिसिद्धत्वात्। अत्र केचित् अन्तः परार्धत्वन्यूनसंख्या। तच्छून्यत्वमनन्तत्वम्। ननु किमिदं परार्धत्वसंख्यान्यूनत्वम्। न तावत्परार्धत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वे सति परार्धत्वसंख्यासमा–

न्या.-ग्राह्यत्वविशेषणम्। तावन्मात्रोपादाने रूपत्वनीलत्वादावतिव्याप्तिः। यो गुणो यदिन्द्रियग्राह्यस्तन्निष्ठा जातिरपि तदिन्द्रियग्राह्येति न्यायात्। अतस्तद्वारणाय विशेष्योपादानम्। चक्षुर्मात्रग्राह्यत्वं नाम चक्षुर्भिन्नाग्राह्यत्वे सति चक्षुर्ग्राह्यत्वम्। मात्रपदानुपादाने संख्यादावतिव्याप्तिः, संख्यादावपि चक्षुर्ग्राह्यत्वविशिष्टगुणत्वस्य सत्त्वात्। अतस्तद्वारणाय मात्रपदम्। संख्यादेस्तु चक्षुर्भिन्नत्वगिन्द्रियग्राह्यत्वाच्चक्षुर्मात्रग्राह्यत्वं नास्ति। अतीन्द्रिये गुरुत्वादावतिव्याप्तिवारणाय चक्षुर्ग्राह्येति। अत्र ग्राह्यत्वं प्रत्यक्षविषयत्वम्। तथा च त्वाचसाक्षात्काराविषयत्वे सति चाक्षुषप्रत्यक्षविषयत्वमिति फलितोऽर्थः। ननु प्रभाघटसंयोगेऽतिव्याप्तिरतस्य चक्षुर्मात्रग्राह्यगुणत्वादिति चेन्न। गुणपदस्य विशेषगुणपरत्वात्। न चैवं विशेषगुणत्वघटितलक्षणे संख्यादावतिव्याप्त्यभावान्मात्रपदवैयर्थ्यमिति वाच्यम्। सांसिद्धिकद्रवत्वेऽतिव्याप्तिवारणाय तदुपादानात्। अथ वा चक्षुर्मात्रग्राह्यजातिमद्गुणत्वस्य लक्षणत्वान्न प्रभाघटसंयोगादावतिव्याप्तिः। संयोगत्वजातेश्चक्षुर्मात्रग्राह्यत्वाभावात्। घटपटसंयोगस्य त्वगिन्द्रियग्राह्यत्वेन तद्गतजातेरपि त्वगिन्द्रियग्राह्यत्वात्। अत्र जातिघटितलक्षणे गुणत्वानुपादाने चक्षुर्मात्रग्राह्यजातिमति सुवर्णादावतिव्याप्ति-

वा.-विशिष्टे लक्षणा। अवशिष्टपदे तात्पर्यग्राहके। उभयत्र ग्राह्यत्वं लौकिकविषयताश्रयत्वम्। तेन गुरुत्वादीनां चक्षुषा लौकिकग्रहेऽपि नातिव्याप्तिः। न वा रूपस्येतरेन्द्रियेणालौकिकग्रहेऽप्यसंभवः। जन्यत्वं चेतरनिरूपितमसाधारणं ग्राह्यम्। तथा च चक्षुरितरेन्द्रियजन्यग्रहीयलौकिकविषयताशून्यत्वे सति चक्षुर्जन्यग्रहीयलौकिकविषयताशालित्वे सति गुणत्वं समुदितलक्षणार्थः। अत्र संयोगादिवारणाय प्रथमसत्यन्तम्। गुरुत्वादिवारणाय द्वितीयम्। रूपत्वादिवारणाय गुणत्वम्। गुणपदं विशेषगुणपरम्। तेन प्रभाभित्तिसंयोगादौ नातिव्याप्तिः। वस्तुतस्त्वगग्राह्यचक्षुर्ग्राह्यगुणविभाजकधर्मवत्त्वं

नि.-चक्षुर्मात्रेण ग्राह्यः चक्षुर्मात्रग्राह्यः, जन्यत्वं तृतीयार्थः, ग्रहधातोः ज्ञानमर्थः, ण्यत्प्रत्ययस्य विषयोऽर्थः, तथा च चक्षुर्मात्रजन्यज्ञानविषयत्वे सति गुणत्वं रूपस्य लक्षणम्। चक्षुर्मात्रजन्यं यत् ज्ञानं इदं रूपमित्याकारकं ज्ञानं तद्विषयस्य रूपे सत्त्वाल्लक्षणसमन्वयः। तत्र पृथिवीजलतेजस्समुदाये। घटकत्वं सप्तम्यर्थः, पृथिव्यामित्यत्र वृत्तित्वं सप्तम्यर्थः, सप्तविधमपि रूपं पृथिवीजलतेजस्समुदायघटकी-

प.-नाधिकरणत्वं, परार्धत्वसंख्याया अपि परार्धत्वसमानाधिकरणप्रत्येकवृत्तिभेदप्रातियोगितावच्छेदकत्वेन बाधापत्तेः। न च परार्धत्वसंख्यापर्याप्त्यधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वं विवक्षितम्। परार्धत्वसंख्यापर्याप्त्यधिकरणे परार्धत्वसंख्यावद्भेदस्यासत्त्वान्न दोष इति वाच्यम्। तर्हि तादृशसंख्याया अप्रसिद्ध्यापत्तेः। द्वित्वादिसंख्यावद्भेदस्यापि परार्धत्वपर्याप्त्यधिकरणेऽसत्त्वात् एकदेशवृत्तेर्व्यासज्यवृत्तिधर्मावच्छेदेन वर्तमानभेदप्रतियोगितावच्छेदकताया भट्टाचार्यस्यासंमतत्वात्। यदि चोभयं नैक-

त्रग्राह्यो गुणो रूपम्। तच्च शुक्लनीलपीतरक्तहरितकपिशचित्रभेदात्सप्तविधम् । पृथिवीजलतेजोवृत्ति । तत्र पृथिव्यां सप्तविधम् । अभास्वरशुक्लं जले। भास्वरशुक्लं तेजसि । रसनग्राह्यो गुणो रसः। स च मधुराम्ललवणकटुकषायतिक्तभेदात्षड्विधः। पृथिवीजलवृत्तिः।

---

न्या. रतस्तद्वारणाय तदुपादानम् । एवं रसादिलक्षण विशेषणानुपादाने लक्ष्यभिन्नगुणेऽतिव्याप्तिः । विशेष्यानुपादाने लक्ष्यवृत्तिरसत्वादावतिव्याप्तिः । अतो विशेषणविशे-

वा. लक्षणम् । तेन न परमाणुरूपेऽव्याप्तिः । **अभास्वरशुक्लमिति** । क्वचिन्नीलादिग्रहस्त्वौपाधिक इति भावः । **भास्वरशुक्लमिति** । सुवर्णादौ शुक्लभास्वररूपमभिभूतमिति भावः । रसं निरूपयति । **रसनेति** । रसनग्राह्यगुणविभाजकधर्मवत्त्वमर्थः । प्रयो-

नि. भूतपृथिवीवृत्तीत्यन्वयबोधः । **अभास्वरशुक्लं जले इति** । वृत्तित्वं सप्तम्यर्थः । तथा च अभास्वरशुक्लरूपं जलवृत्तीत्यन्वयबोधः । ननु "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति" इति कोशात् गुणवाचकशुक्लादिशब्दानां पुंलिङ्गत्वाभिधानात् रूपात्मकगुणवाचकशुक्लशब्दस्य कथमत्र नपुंसकत्वमिति चेन्न । अस्त्रीनियतलिङ्गानां योगे तल्लिङ्गतापि चेति विशेषवचनबलेन प्रकृते रूपमिति केवलनपुंसक लिङ्गं विशेष्यवाचकपदमनुषज्य शुक्लपदस्य नपुंसकलिङ्गताया उपपादयितुं शक्यत्वात् ।

प. मिति प्रतीतेः सर्वजनसिद्धत्वादिति मतमाश्रित्य समर्थ्यते तथापीदृशद्वित्वादिसंख्याशून्यत्वस्य मनस्यभावेन बाधो दुर्निवार इति चेन्न । तादृशसंख्यापर्याप्त्यनधिकरणत्वस्य विवक्षितत्वात् । आत्ममनस्तु परार्धत्वन्यूनसंख्यायाः कस्या अपि पर्याप्त्यधिकरणत्वाभावेन बाधाभावादिति वदन्ति । अन्ये तु अन्तः संख्यात्वव्याप्यधर्मावच्छिन्नप्रकारतानिरूपितास्मदादिनिश्चयविशेष्यत्वं, तच्छून्यत्वमानन्त्यमिति प्राहुः। **अभास्वरेति** । रूपमित्यनुषज्यते । वृत्तिः सप्तम्यर्थः । जलवृत्तिरूपमभास्वरशुक्लमित्यन्वयः। ननु 'गुणे शुक्लादयः पुंसि' इति गुणवाचकशुक्लशब्दस्य पुंलिङ्गत्वात् शुक्लम् इति नपुंसकनिर्देशोऽनुचित इति चेन्न । तादृशनियमस्य नियतस्त्रीलिङ्गभिन्नलिङ्गकविशेष्यवाचकपदासमभिव्याहाराविषयत्वात् । नन्वत्र किं पित्रादीनामाज्ञा नियामिका न किंचित्प्रमाणमिति चेन्न । आरोपितनीलरूपस्य कन्दलीकारमते तमस्त्वापादिकाया नीलं तमश्चलतीति प्रतीतेः का गतिरित्याशङ्क्य तमःशब्दस्य नपुंसकत्वादिति शशधरसमाधानस्यैव प्रमाणत्वात् । नन्वेवं तुल्ययुक्त्या 'शीतं गुण' इति गुणवाचकशीतशब्दस्य नपुंसकलिङ्गस्यापि नियतस्त्रीलिङ्गभिन्नलिङ्गकविशेष्यवाचकपदासमभिव्याहारविषयतया 'शीतं जलम्' इत्यत्राप्युक्तरीत्या शाब्दबोधोपपत्तये स्पर्शशब्दस्यानुवर्तनीयतया 'शीतो जल' इत्येव प्रयोगः स्यादिति चेन्न । तत्र 'स्पर्शशब्दोऽ-

तत्र पृथिव्यां षड्विधः। जले मधुर एव। घ्राणग्राह्यो गुणो गन्धः। स द्विविधः। सुरभिरसुरभिश्चेति। पृथिवीमात्रवृत्तिः। त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः। स त्रिविधः। शीतोष्णानुष्णाशीतभेदात्। पृथिव्यप्तेजोवायुवृत्तिः। तत्र शीतं जले। उष्णस्तेजसि। अनुष्णाशीतः पृथिवीवाय्वोः। रूपादिचतुष्टयं पृथिव्यां पाकजम-

---

न्या. ष्ययोरुभयोरुपादानम्। स्पर्शं लक्षयति। **त्वगिन्द्रियमात्रेति**। अत्रापि मात्रपदं संख्यादावतिव्याप्तिवारणाय। अन्यत्सर्वं पूर्ववद्बोध्यम्। **रूपादिचतुष्टयं पृथिव्यां पाकजमिति**। एतत्तत्त्वनिर्णयश्चेत्थम्। पाको नाम विजातीयतेजःसंयोगः। स च नानाजातीयः। रूपजनको विजातीयतेजःसंयोगः। तदपेक्षया रसजनको विजातीयतेजस्संयोगः। एवं गन्धजनको विजातीयतेजस्संयोगः। एवं स्पर्शजनकोऽपि

वा. जनं पूर्ववत्। **मधुर एवेति**। जम्बीररसादावाम्लत्वप्रहस्त्वौपाधिक इति भावः। गन्धं निरूपयति। **घ्राणेति**। अर्थः पूर्ववत्। स्पर्शं निरूपयति। **त्वगिति**। अत्रापि चक्षुरग्राह्यत्वग्ग्राह्यगुणविभाजकधर्मवत्त्वं पर्यवसितं बोध्यम्। संयोगत्वादिकमादायातिव्याप्तिवारणायाग्राह्यत्वान्तम्। गुरुत्वादिकमादाय तद्दोषवारणाय ग्राह्यत्वान्तम्। **शीतं जल इत्यादि**। तप्तजलादावुष्णत्वस्य सुवर्णादावनुष्णाशीतत्वस्य

नि. रसं लक्षयति। **रसनेति**। गन्धं लक्षयति। **घ्राणेति**। स्पर्शं लक्षयति। **त्वगिन्द्रियेति**। पृथिवीप्रभृतीनां नवानां द्रव्याणां नित्यानित्यविवेको दर्शितः। रूपरसगन्धस्पर्शानान्तु न दर्शितः। अतश्चतुर्णां तेषामेकोक्त्या नित्यानित्यविवेकं दर्शयति। **रूपादिचतुष्टयमिति**। पृथिव्यामित्यत्र वृत्तित्वं सप्तम्यर्थः, तथा च पृथिवीवृत्तिरूपादिचतुष्टयं अनित्यमित्यर्थः। पाकजमिति हेतुगर्भाविशेषणं, तथा च पृथिव्यां वर्तमानरूपादिचतुष्टयं यतः पाकजं अतो नित्यपृथिव्याम-

प. नुवर्तनीय एव' इत्यत्र श्राद्धनियमाभावात्। **रूपादिचतुष्टयमिति**। ननु कथमत्रार्थः। अत्र केचित्। रूपमादिर्यस्य तत्। आदित्वं च घटकत्वं, तथा च रूपपदसमभिव्याहृतादिपदस्य रूपघटिते लक्षणा। चतुःपदं चतुष्ट्वपरम्। तयपः समुदायोऽर्थः आदिपदार्थस्य समुदायेऽभेदेनान्वयः। चतुष्ट्वमपेक्षाबुद्धिविशेषविषयत्वम्। तथा च रूपघटितं चतुष्टयमित्याहुस्तन्न। रूपमादिर्येषां ते रूपादयः रूपादीनां चतुष्टयमिति विग्रहविरोधात्। व्यस्तेन सता यत्पदेन यादृशानुपूर्वीविशेषविशिष्टेन यादृशविशिष्टार्थस्य बोधः तत्पुरुषघटकपूर्वपदेन सता तत्पदेन तादृशानुपूर्वीविशेषविशिष्टेन लक्षणया तादृशविशिष्टसम्बन्धिबोधस्यैव प्रामाणिकत्वात्। परन्तु रूपपदसमभिव्याहृतादिपदस्य रूपघटितसमुदायविषयकज्ञानविषये लक्षणा। प्रकृते च तत्सम्बन्धिनि लक्षणा। तस्याभेदेन चतुष्टयेऽन्वय इति युक्तम्। **पृथिव्यामिति**। वृत्तित्वं सप्त-

**नित्यम् । अन्यत्रापाकजं नित्यमनित्यं च । नित्यगतं नित्यम् । अनित्यगतमनित्यम् । एकत्वादिव्यवहारहेतुः संख्या । नवद्रव्य-**

---

न्या. तथैव । एवंप्रकारेण भिन्नभिन्नजातीयाः पाकाः कार्यवैलक्षण्येन कल्पनीयाः । तथा हि । तृणपुञ्जनिक्षिप्त आम्रादौ ऊष्मलक्षणविजातीयतेजःसंयोगात्पूर्वहरितरूपनाशे रूपान्तरस्य पीतरूपादेरेवोत्पत्तिः । पूर्वरसस्याम्लरसस्यैवानुभवात् ।

वा. वह्निजलागतवाय्वोरुष्णशीतत्वस्य च प्रत्ययस्यौपाधिकत्वादिति भावः । **अन्यत्रापाकजमिति** । रूपादीति शेषः । संख्यां निरूपयति । **एकत्वादीति** । आदिना

नि. नित्यपृथिव्याञ्च वर्तमानं सर्वमप्यनित्यमित्यर्थः । अन्यत्र जलादौ, वृत्तित्वं सप्तम्यर्थः जलादिवृत्तिरूपादिचतुष्टयं नित्यमनित्यं चेत्यर्थः । अनित्यमेवेत्यत्र हेतुभूतस्य पाकजत्वस्याभावादित्याह । **अपाकजमिति** । इदमपि हेतुगर्भविशेषणम् । तथा च यतः अपाकजं पाकजं न भवति । अतो नित्यमनित्यञ्च भवतीत्यर्थः । नन्वत्र जलादौ वर्तमानं रूपादिचतुष्टयमित्यसंगतम् । गन्धस्य जलाद्यवृत्तित्वेन तद्घटितचतुष्टयस्य जलाद्यवृत्तित्वादिति चेन्न रूपादिचतुष्टयमित्यस्य रूपादिचतुष्टयमध्यप्रविष्टमित्यर्थात् । तथा च रूपादिचतुष्टयमध्यप्रविष्टानां एषां जलादिवृत्तित्वं संभवति । तान्येव रूपादिचतुष्टयघटकपदेन ग्राह्याणीति न वाक्यार्थानुपपत्तिः । संख्यां लक्षयति । **एकेति** । एकः आदिर्येषां ते एकादयः । एकादीनां व्यवहारः एकादिव्यवहारः, एकद्वित्र्यादिशब्दप्रयोग

प. म्यर्थः । पृथिवीवृत्तिरूपादिचतुष्टयं पाकजमित्यन्वयः । पाकपदं पाकावयवगुणान्यतरपरम् । अनित्यमित्यतः प्राक् अत इत्यध्याहारः । पाकजत्वादित्यर्थः । प्रयोज्यत्वं पञ्चम्यर्थः नित्यत्वाभावेऽन्वेति । **अन्यत्रेति** । पृथिवीभिन्न इत्यर्थः । वृत्तित्वं त्रलर्थः अनुवृत्तरूपादिचतुष्टयपदार्थेऽन्वेति । न च रूपादिचतुष्ट्वत्समुदायस्य पृथिवीभिन्नवृत्तित्वाभावादसङ्गतिरिति वाच्यम् । अनुवृत्तचतुष्टयपदस्य चतुष्टयघटकपरत्वात् । तथा च रूपादिचतुष्टयघटकं पाकजभिन्नमित्यर्थः । नित्यमनित्यं चेत्यतः प्रागत इत्यध्याहारः । अपाकजत्वादित्यर्थः । ननु नित्यस्यानित्यस्य चाभेदेन एकत्र द्वयमिति रीत्या रूपादिचतुष्टयेऽन्वयो न सम्भवति । उभयाभिन्नस्याप्रसिद्धेः । नित्यपदस्यानित्यपदस्य वान्यतरत्वावच्छिन्ने लक्षणायामुद्देश्यासिद्धेः । विनिगमनाविरहेण नित्यपदस्यानित्यपदस्य च लक्षणाकल्पनापत्त्या नित्यानित्यान्यतरत्वावच्छिन्नस्य वारद्वयं भानापत्तेश्चेति चेदत्र केचित् । चकारो वाक्यभेदद्योतकः । तथा च 'पृथिवीभिन्नवृत्तिरूपादिकं नित्यम्' इत्येकं वाक्यम् । पृथिवीभिन्नवृत्तिरूपादिकमनित्यम्' इत्येकं वाक्यम् । अत इत्यस्य वाक्यद्वयेऽप्यध्याहारः । प्रयोज्यत्वं तसेरर्थः । तच्चाविरोधित्वं ज्ञाप्यत्वं वा । यत्किञ्चिदिति वाक्यद्वयेऽप्यध्याहार्यम् । तच्चोद्देश्यतावच्छेदकव्यापकत्वस्य विधेये भानाभावसूचनाय । नातो बाधः । यत्किंचित्त्वविशेषितमेव वोद्देश्यतावच्छेदकम् । यत्किञ्चित्त्वं प्रातीतिकस्वरूपसम्बन्धविशेष इत्याहुः । वयं तु नित्यानित्या च

**वृत्तिः । एकत्वादिपरार्धपर्यन्ता । एकत्वं नित्यगतं नित्यम् । अ-**

---

**न्या.** क्वचित्पूर्वरूपसत्त्वेऽपि रसपरावृत्तिर्दृश्यते । विजातीयतेजःसंयोगेन पूर्वतनाम्लनाशे मधुररसस्यानुभवात् । तस्माद्रूपजनकापेक्षया रसजनको विलक्षण एव । एवं

**वा.** द्वित्वादिपरिग्रहः । व्यवहारश्च एकत्वादिर्गुण इति शेषः । तथा चैकत्वादिव्यवहारजन-

**नि.** इत्यर्थः । व्यवहारे व्यवहर्तव्यतावच्छेदकस्य कारणतया एकत्वद्वित्वादिसंख्यायां एकः द्वौ इत्यादिशब्दप्रयोगे कारणत्वस्य विद्यमानत्वात् लक्षणसंगतिः । **नित्यगतं नित्य-मिति** । एकत्वनाशं प्रत्याश्रयनाशः कारणम् । अतः परमाणूनां नाशाभावेन तद्गत-मेकत्वमपि न नश्यति । नित्यगतमेकत्वं नित्यम् । अनित्यगतं द्व्यणुकादिकं यदा नश्यति

**प.** इत्यत्रैवोपपादयामः । **एकत्वादिपरार्धपर्यन्तेति** । एकत्वमादिर्यस्याः सा परार्धं पर्यन्तो यस्याः सा तथा । अत्रादित्वं न स्वविषयकज्ञानविषय-समुदायघटकत्वविशिष्टसंख्यात्वाश्रयत्वमात्रं 'परार्धादिः' इति प्रयोगापत्तेः । न च प्रथमोपस्थितत्वविशेषितं तदेवादित्वं, एवं चरमोपस्थितविशेषितं तदेव पर्यन्तत्वमिति वाच्यम् । 'प्रथममेकत्वमेव ज्ञायते । चरमं परार्धत्वमेव' इत्यत्र श्राद्धनियमाभावात् । न च प्रथमत्वेनोपस्थितत्वं चरमत्वेनोपस्थितत्वमेव विशेषणमिति वाच्यम् । तादृशप्रथमत्वचरमत्वयोर्दुर्ज्ञेयत्वात् । सुज्ञेयत्वे तयोरेवादित्व-पर्यन्तत्वरूपतासंभवेनोपस्थितत्वरूपविशेषणवैयर्थ्यादिति चेदत्र केचित् । प्रथमोप-स्थितत्वमेवादित्वं चरमोपस्थितत्वमेव पर्यन्तत्वमिदं चौत्सर्गिकीं रीतिमनुसृत्येत्याहुः । अन्ये तु स्वविषयकज्ञानविषयसमुदायघटकसंख्यात्वाश्रयव्यापकत्वाभावविशिष्टस्व-विषयकज्ञानविषयसमुदायघटकत्वविशिष्टसंख्यात्वाश्रयत्वमादित्वम् । व्यापकत्वाभावे-त्यत्राभावं विहायैतदेव पर्यन्तत्वम् । न चात्र व्यापकत्वं यदि तादृशसमुदायघटकय-त्किञ्चिन्निरूपितं विवक्षितं तदैकत्वस्यापि पर्यन्तत्वापत्तिः । तस्यापि स्वात्मकयत्किञ्चि-द्व्यापकत्वात् । स्वभिन्नत्वस्य व्यापकतानिरूपकविशेषणत्वेन तद्वारणेऽपि द्वित्वादेरेक-त्वादिरूपयत्किंचित्तादृशव्यापकत्वात् । यदि च तादृशसमुदायघटकयावन्निरूपितं विव-क्षितं तदा परार्धस्यापि तदनुपपत्तिः, अपेक्षाबुद्धिजन्यस्य परार्धस्य तदसमानकाली-नयत्किंचिद्घटाद्युत्पन्नद्वित्वाद्यव्यापकत्वादिति वाच्यम् । एकत्वमेकत्वत्वं तत्रादित्वमा-दितावच्छेदकत्वं तच्च निरुक्तव्यापकतानवच्छेदकत्वे सति तादृशसमुदायघटकतावच्छे-दकत्वे सति सङ्ख्यावृत्तित्वम् । एवं परार्धं परार्धत्वं तत्र पर्यन्तत्वं पर्यन्ततावच्छेकत्वं तच्च व्यापकतावच्छेदकत्वघटितमुक्तमेव । व्याप्यतावच्छेदकसम्बन्धः पर्याप्तिः । व्यापकतावच्छेदकसम्बन्धः समवायः । द्वित्वादिपर्याप्त्यधिकरणे समवायेनैकत्वाभा-वादेकत्वत्वस्य आदितावच्छेदकत्वमीश्वरापेक्षाबुद्धिवशाद्धारावाहिपरार्धस्य जगत्युत्प-त्त्या परार्धत्वस्य सकलसङ्ख्याव्यापकतावच्छेदकत्वम् । सकलानां सङ्ख्यानां प्रत्येका-धिकरणवृत्तितावच्छेदकत्वाभावः व्यापकतानवच्छेदकत्वस्थाने निवेश्यः । तादृशवृत्ति-

**नित्यगतमनित्यम्। द्वित्वादिकं तु सर्वत्रानित्यमेव। मानव्यवहारका-**

न्या. गन्धजनकोऽपि विलक्षण एवेत्यङ्गीकार्यः । रूपरसयोरपरावृत्तावपि पूर्वगन्धनाशे विजातीयतेजस्संयोगेन सुरभिगन्धोपलब्धेः । एवं स्पर्शजनकोऽपि पाकवशात्कठिनस्पर्शनाशे मृदुस्पर्शानुभवात् । तस्माद्रूपादिजनका विजातीया एव पाका यथाकार्यमुन्नेयाः । अत एव पार्थिवपरमाणूनामेकजातित्वेऽपि पाकमहिम्ना विजातीयद्रव्यान्तरानुभवः । यथा गोभुक्ततृणादीनामापरमाण्वन्तं भङ्गे तृणारम्भकपरमाणुषु विजातीयतेजःसंयोगात्पूर्वरूपादिचतुष्टयनाशे तदनन्तरं दुग्धे यादृशं रूपादिकं वर्तते तादृशरूपरसगन्धस्पर्शजनकास्तेजःसंयोगा जायन्ते । तदनन्तरं तैरेव तादृशरूपरसादय उत्पद्यन्ते । तादृशरूपादिविशिष्टपरमाणुभिर्दुग्धद्व्यणुकमारभ्यते । ततस्त्र्यणुकादिक्रमेण महादुग्धारम्भः । एवं दुग्धारम्भकैः परमाणुभिरेव दध्यारभ्यते पाकमहिम्ना।

वा. कतावच्छेदकमुख्यविशेष्यतावत्त्वमर्थः। **द्वित्वादिकं त्विति । सर्वत्रानित्यमिति।** तस्यापेक्षाबुद्धिजन्यत्वादिति शेषः । तथा हि प्रथमे क्षणे अयमेकः अयमेक इति एकत्वद्वयावगाहिन्यपेक्षाबुद्धिः । द्वितीये द्वित्वोत्पत्तिः । तृतीये द्वित्वनिर्विकल्पकम् । चतुर्थे तत्सविकल्पकापेक्षाबुद्धिनाशौ । अपेक्षाबुद्धिः क्षणत्रयं तिष्ठतीति नियमात् । पञ्चमे द्वित्वनाश इति । एवं त्रित्वादावपि बोध्यम् । परिमाणं निरूपयति । **मानेति ।** व्यवहारश्चाणुत्वादिर्गुण इति । लक्षणपरिष्कारः संख्याया इव ज्ञेयः ।

नि. तदा तद्गतमेकत्वमपि नश्यतीत्यनित्यगतमेकत्वमनित्यम्। **द्वित्वादिकन्तु सर्वत्रेति।** सर्वत्र नित्येऽनित्ये च। वर्तमानत्वं त्रत्यर्थः। नित्यवर्तमानमनित्यवर्तमानञ्च द्वित्वादिकमनित्यमेव। द्वित्वादिकं हि अपेक्षाबुद्धया उत्पद्यते । अपेक्षाबुद्धिनाशे नश्यति । अयमेकः इमौ द्वौ द्वौ चेमावित्याकारकापेक्षाबुद्धिर्यदा जायते तदानीं द्वित्वोत्पादात् तादृशापेक्षाबुद्धिनाशे च तन्नाश इत्यादिरीत्या द्वित्वादिकं सर्वत्रानित्यमेवेत्यर्थः । परिमाणं लक्षयति । **मानव्यवहारेति ।** मानव्यवहारः अयमेतावत्परिमाणवान् इत्यादिशब्दप्रयोगः । तादृशव्यवहारासाधारणकारणत्वं लक्षणम् । अयमेतावत्परिमाणवानिति

प. तावच्छेदकत्वं व्यापकतावच्छेदकत्वस्थाने निवेश्यमिति तु न । अनन्तानां तासां तत्तद्व्यक्तित्वेन दुर्ज्ञेयत्वादित्याहुः । तादृशसमुदायघटकतावच्छेदकानि यावन्ति द्वित्वत्वादीनि प्रत्येकं तदवच्छिन्नाधिकरणवृत्तितावच्छेदकत्वं निवेश्यात्यन्तम् दुर्ज्ञेयतां निरस्यन्ति केचित् । **द्वित्वादिकं तु सर्वत्रानित्यमिति** । सर्वत्र सर्ववृत्तिद्वित्वादिकमित्यन्वयः। सर्वपदं सर्वद्रव्यपरं नातो द्वित्वादेर्गुणवृत्तित्वाभावाद्बाध इत्याहुः। कस्यापि द्वित्वादेः सर्वद्रव्यवृत्तित्वाभावात् । द्वित्वादिपदान्नित्यगतद्वित्वादित्वेनानित्यगतद्वित्वादित्वेन च वारद्वयं भानम् । सर्वत्रपदं तात्पर्यग्राहकमित्यपरे तन्न। उभयत्वावच्छिन्ने सकृदनित्यत्वान्वये बाधात् । असकृदन्वये वाक्यभेदापत्तेः । अनित्यपदं द्वित्वादित्वव्यापकानित्यत्वावच्छिन्नपरम् । सर्वत्रपदं तात्पर्यग्राहकमित्यन्ये । तन्न एवकारवैयर्थ्या-

**रणं परिमाणम् । नवद्रव्यवृत्ति। तच्चतुर्विधम् । अणु महद्दीर्घं ह्रस्वं चेति। पृथग्व्यवहारकारणं पृथक्त्वम्। सर्वद्रव्यवृत्ति। संयुक्तव्यवहारहेतुः संयोगः। सर्वद्रव्यवृत्तिः। संयोगनाशको गुणो विभागः। सर्व-**

---

न्या. द्व्यारम्भकैः परमाणुभिरेव नवनीतादिकमिति दिक्। विभागं लक्षयति। **संयोगनाशक इति।** संयोगनाशकत्वविशिष्टगुणत्वं विभागस्य लक्षणम्। विशेषणमात्रोपादाने क्रियायामतिव्याप्तिः, तस्या अपि संयोगनाशकत्वात्। अतस्तद्वारणाय

वा. परिमाणं नित्यगतं नित्यम्। अनित्यगतमनित्यम्। तत्र द्व्यणुकत्रसरेण्वोः संख्याजन्यम्। तूलकादौ प्रचयजन्यम्। अन्यत्परिमाणजन्यं बोध्यम्। पृथक्त्वं निरूपयति। **पृथगिति**। अत्रासाधारणकारणत्वं तादृशव्यवहारजनकतावच्छेदकमुख्यप्रकारतावत्त्वम्। तेन पृथक्त्ववति अवधित्वे च नातिप्रसङ्गः। संयोगादिलक्षणेऽप्येवं बोध्यम्। तत्रैकपृथक्त्वं द्विविधम्। आश्रययोर्नित्यानित्यभेदात्। द्विपृथक्त्वादिकं तु द्वित्वादिवत्सर्वमनित्यम्। पृथक्त्वं च अन्योन्याभावविलक्षणम्। विलक्षणप्रतीतेः। संयोगं निरूपयति। **संयुक्तेति**। अत्र जनकत्वं जनकतावच्छेदकमुख्यविशेष्यतानिरूपितप्रकारतावत्त्वं बोध्यम्। संयोगः सर्वोऽप्यव्याप्यवृत्तिरनित्यश्च। अजसंयोगानङ्गीकारात्। विभागं निरूपयति। **संयोगनाशक इति**। नाशजनकत्वं च प्रतियोगित्वसंबन्धानवच्छिन्नकार्यतानिरूपितं ग्राह्यम्। तेन संयोगे नातिव्याप्तिः। आश्रयादिवारणाय गुणेति। विभागस्य संयोगनाशकत्वं कथमिति चेदित्थम्। प्रथममिषौ क्रिया, ततो धनुषा सह विभागः। ततः पूर्वसंयोगनाशः। तत उत्तरसंयोगोत्पत्तिः। ततः कर्मनाश इति। विभागः सर्वोऽप्यव्याप्यवृत्तिरनित्यश्च। परापरत्वे युगपन्निरूपयति।

नि. व्यवहारे एतावत्परिमाणवत्त्वं व्यवहर्तव्यतावच्छेदकम्। एतत्परिमाणवत्त्वञ्च एतत्परिमाणमेवेति तादृशव्यवहारकारणत्वस्य परिमाणे विद्यमानत्वात् लक्षणसङ्गतिः। अणु अणुत्वं, महत् महत्वं, दीर्घं दीर्घत्वं, ह्रस्वं ह्रस्वत्वम्। पृथक्त्वं लक्षयति। **पृथगिति**। व्यवहारे व्यवहर्तव्यतावच्छेदकीभूतपृथक्त्वस्य कारणत्वस्य सत्त्वाल्लक्षणसमन्वयः। संयोगं लक्षयति। **संयुक्तेति**। इमौ संयुक्ताविति व्यवहारे संयुक्तत्वं व्यवहर्तव्यतावच्छेदकम्। संयुक्तत्वञ्च संयोगवत्त्वं। तच्च संयोग एव। तथा च संयोगे संयुक्तव्यवहारकारणत्वस्य विद्यमानत्वाल्लक्षणसङ्गतिः। विभागं लक्षयति। **संयोगनाशक इति**। संयोगस्य नाशकः संयोगनाशकः। षष्ठ्यर्थः प्रतियोगित्वम्। नशधातुर्ध्वंसार्थकः। ण्वुल्प्रत्ययस्य जनकत्वमर्थः। तथा च संयोगप्रतियोगिकध्वंसजनकत्वे सति गुणत्वं विभागस्य लक्षणम्। कार्यमात्रं प्रति कालस्य कारणत्वात् संयोगप्रतियोगिकध्वंसस्यापि कार्यत्वेन तं प्रत्यपि कालस्य कारणत्वात्। तत्रातिव्याप्तिवारणाय गुणपदम्। रूपादावतिव्याप्तिवारणाय विशेषणदळम्। एकोक्त्या परत्वापरत्वे लक्ष-

प. पत्तेः। तस्योद्देश्यतावच्छेदकव्यापकत्वार्थकत्वात्। वयं तु ब्रूमः। सर्वपदं नित्यानि-

द्रव्यवृत्तिः । परापरव्यवहारासाधारणकारणे परत्वापरत्वे । ते द्विविधे । दिक्कृते कालकृते चेति । दूरस्थे दिक्कृतं परत्वम् । समीपस्थे दिक्कृतमपरत्वम् । ज्येष्ठे कालकृतं परत्वम् । कनिष्ठे कालकृतमपरत्वम् । आद्यपतनासमवायिकारणं गुरुत्वम् । पृथि-

---

न्या. विशेष्यम् । गुरुत्वं लक्षयति । **आद्येति** । द्वितीयपतनक्रियायां वेगस्यासमवायिकारणत्वात्तत्रातिव्याप्तिः स्यादित्यत आद्येति । उतरत्र स्यन्दने आद्यत्ववि-

वा. **परापरेति** । परव्यवहारजनकतावच्छेदकतादृशप्रकारताश्रयत्वं परत्वलक्षणम् । एवमपरत्वस्यापि बोध्यम् । परव्यवहारो द्विविधः । अयं ज्येष्ठोऽयं दूर इति । अपरव्यवहारो द्विविधः । अयं कनिष्ठोऽयं समीप इति । तयोर्दिक्कालभेदेन भेदमाह । **ते द्विविधे इति । दिक्कृते कालकृते इति** । दिक्कृतं तु ज्ञायमानदिग्जन्यम् । तथा हि वैराजात् वेणासङ्गमापेक्षया कर्हाटकं स्वसमवायिसंयुक्तसंयोगेन बहुतरदेशसंयोगवदिति ज्ञाने दैशिकपरत्वमुत्पद्यते । तत्र च संबन्धघटकतया दिशः प्रवेशात्तज्जन्यत्वम् बोध्यम् । एवमपरत्वस्यापि निरुक्तसंबन्धेनाल्पतरसंयोगज्ञानविषयदिग्जन्यत्वात्तत्त्वं बोध्यम् । अथ वा परापरत्वयोराश्रयदिक्संयोगस्यासमवायिहेतुत्वात्तत्प्रयोज्यत्वरूपं तत्त्वं बोध्यम् । कालकृतत्वं च निरुक्तसंबन्धेन बहुतरविक्रियाप्रकारकज्ञानविषयकालजन्यत्वात्तत्संबन्धघटककालजन्यत्वरूपं स्वसंयोगजन्यत्वरूपं वा बोध्यम् । तान्युदाहरणमुखेनाह । **ज्येष्ठ इति** । एतानि च बुद्धिजन्यत्वात्सर्वाण्यनित्यानीति बोध्यम् । गुरुत्वं निरूपयति । **आद्येति** । पतनं नाम वृक्षविभागजनकव्यापारमारभ्य भूमिसंयोगजनकव्यापारपर्यन्तं सर्वाः क्रियाः । तत्र प्राथमिकव्यापारो गुरुत्वजन्यः । द्वितीयादिस्तु वेगजन्य इति । वेगवारणायाद्येति । तदपि पूर्ववत् द्विविधम् । द्रवत्वं

नि. यति । **परापरव्यवहारकारणे इति** । परव्यवहारकारणत्वं परत्वस्य लक्षणम् । अपरव्यवहारकारणत्वमपरत्वस्य लक्षणमित्यर्थः । परव्यवहारे व्यवहर्तव्यतावच्छेदकं परत्वम् । अपरव्यवहारे व्यवहर्तव्यतावच्छेदकमपरत्वं इति लक्षणसमन्वयः । ते परत्वापरत्वे । गुरुत्वं लक्षयति । **आद्येति** । आद्यं यत्पतनं तस्यासमवायिकारणं गुरुत्वमित्यर्थः । ताळफले हि प्रथमं पतनक्रियोत्पद्यते । तां प्रति गुरुत्वमसमवायिकारणम् । कार्येण सहैकस्मिन्नर्थे समवेतत्वे सति कारणत्वात् । कार्यं पतनम् । तच्च फले समवेतम् । क्रियाक्रियावतोस्समवायात् । कारणं गुरुत्वम् । तदपि फले समवेतम् । गुणगुणिनोस्समवायात् । तथा च कार्येण पतनेन सहैकस्मिन्नर्थे फलरूपार्थे समवेतत्वे सति कारणत्वात् गुरुत्वमाद्यपतनासमवायिकारणमेवेति लक्षणसमन्वयः । द्रवत्वं

प. त्वान्यतरपरम् । वृत्तित्वं त्वलर्थः । तथा च नित्यानित्यान्यतरवृत्ति द्वित्वादित्वव्याप-

**वीजलवृत्ति । आद्यस्यन्दनासमवायिकारणं द्रवत्वम् । पृथिवी-जलतेजोवृत्ति । तद्द्विविधम् । सांसिद्धिकं नैमित्तिकं चेति । सांसिद्धिकं जले । नैमित्तिकं पृथिवीतेजसोः । पृथिव्यां घृतादावग्निसंयोगजं द्रवत्वम् । तेजसि सुवर्णादौ । चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः । जलमात्रवृत्तिः । श्रोत्रग्राह्यो गुणः शब्दः ।**

---

न्या. शेषणमप्येवं योजनीयम् ॥ स्नेहं लक्षयति । **चूर्णादीति** । चर्णादिपिण्डीभावहेतुत्वे सति गुणत्वं स्नेहस्य लक्षणम् । पिण्डीभावो नाम धारणाकर्षणहेतुभूतो विलक्षणसंयोगः । तादृशसंयोगे स्नेहस्यैवासाधारणकारणत्वं न तु जलादिगतद्रवत्वस्य । तथा सति द्रुतसुवर्णादिसंयोगेन चूर्णादेः पिण्डीभावापत्तेः । अतः स्नेह एव तत्रासाधारणकारणम् । विशेषणमात्रोपादाने कालादावतिव्याप्तिरतस्तद्वारणाय विशेष्योपादानम् । वस्तुतस्तु द्रुतजलसंयोगस्यैव चूर्णादिपिण्डीभावहेतुत्वं स्नेहस्यापिण्डीभावहेतुत्वे मानाभावात् । जले द्रुतत्वविशेषणात्करकादिव्यावृत्तिः । शब्दं लक्षयति । **श्रोत्रेति** । शब्दत्वेऽतिव्याप्तिवारणाय गुणपदम् । रूपादावतिव्याप्ति-

वा. निरूपयति । **आद्येति** । स्यन्दनं प्रस्रवणम् । तच्च सन्निकृष्टदेशस्य द्रवद्रव्यसंयोगानुकूलो व्यापारः । तत्र द्वितीयादिव्यापारजनकवेगवारणायाद्येति । **सांसिद्धिकमिति ।** अग्न्यादिसंयोगाजन्यमित्यर्थः । हिमकरकयोरौपाधिकद्रवत्वनिरोधात्सूर्यकिरणभूमिसंयोगादिनोपाधिनिवृत्तिमात्रम् । न तु द्रवत्वोत्पत्तिरिति । सांसिद्धिकं पूर्ववत् द्विविधम् । नैमित्तिकं त्वनित्यमेव । स्नेहं निरूपयति । **चूर्णादीति** । पिण्डीभावः फूत्कारादिना देशान्तरनिर्गमनप्रतिबन्धकोऽवयवानां संयोगविशेषः । तद्धेतुत्वं चूर्णस्यापीति तद्वारणाय गुणेति । दुग्धादौ तु तदन्तर्गतजलभागस्यैव स्नेह उपलभ्यते । स च पूर्ववत् द्विविधः । शब्दं निरूपयति । **श्रोत्रेति** । श्रोत्रग्राह्यगुणविभाजकधर्मवत्त्वमर्थः ।

नि. लक्षयति । **आद्येति** । आद्यं यत्स्यन्दनं तस्यासमवायिकारणम् द्रवत्वमित्यर्थः । प्रथमं जलादौ स्यन्दनक्रियोत्पद्यते । तां प्रति द्रवत्वमसमवायिकारणम् । कार्येण सहैकस्मिन्नर्थे समवेतत्वादित्यादि पूर्ववत् । द्रवत्वं घृतादाविति घृतादिरूपा या पृथिवी तस्यामग्निसंयोगरूपनिमित्तजन्यं द्रवत्वमित्यर्थः । **तेजसीति** । सुवर्णादिरूपं यत्तेजः तस्मिन्नग्निसंयोगरूपनिमित्तजन्यं द्रवत्वमित्यर्थः । स्नेहं लक्षयति । **चूर्णादीति ।** चूर्णादीनां यः पिण्डीभावः विलक्षणसंयोगः तस्य हेतुरित्यर्थः । जलसंयोगे चूर्णादीनां पिण्डीभावो जायते । तं प्रति जलनिष्ठस्नेहः कारणमिति लक्षणसमन्वयः । शब्दं लक्षयति । **श्रोत्रेति** । श्रोत्रेण ग्राह्यः श्रोत्रग्राह्यः । तृतीयार्थो जन्यत्वम् । ग्रहधातोः

प. कानित्यत्ववदभिन्नं नित्यानित्यान्यतरवृत्तिद्वित्वादिकं इति अन्वयबोध इति ।

**आकाशमात्रवृत्तिः । स द्विविधः । ध्वन्यात्मको वर्णात्मकश्चेति । ध्वन्यात्मको भेर्यादौ । वर्णात्मकः संस्कृतभाषादिरूपः । सर्वव्यवहारहेतुर्ज्ञानं बुद्धिः । सा द्विविधा । स्मृतिरनुभवश्चेति । संस्कारमात्रजन्यं ज्ञानं स्मृतिः । तद्भिन्नं ज्ञानमनुभवः । स द्विविधः ।**

---

न्या. वारणाय श्रोत्रेति । स त्रिविधः संयोगजो विभागजः शब्दजश्चेति । यथा भेरीदण्डसंयोगजन्यो भांकारादिः । हस्ताभिघातसंयोगजन्यो मृदङ्गादिशब्दः । वंशे पाट्यमाने दलद्वयविभागजन्यः पटपटशब्दः । शब्दोत्पत्तिदेशमारभ्य कर्णपर्यन्तं निमित्तपवनेन शब्दधारा जायन्ते । तत्र उत्तरशब्दे पूर्वशब्दः कारणम् । बुद्धेर्लक्षणमाह । **सर्वव्यवहारेति** । व्यवहारः शब्दप्रयोगः । ज्ञानं विना शब्दप्रयोगासंभवाच्छब्दप्रयोगरूपव्यवहारहेतुत्वं ज्ञानस्य लक्षणम् । बुद्धिं विभजते । **स्मृतिरनुभवश्चेति** । स्मृतिं लक्षयति । **संस्कारेति** । बहिरिन्द्रियाजन्यत्वविशिष्टसं-

वा. तेनाद्यन्तशब्दादौ नाव्याप्तिः । प्रयोजनं पूर्ववत् । **आकाशमात्रेति** । मात्रपदं वेदान्तिशङ्कानिरासार्थम् । **भेर्यादाविति** । अवच्छेदकतयेत्यादिः । शब्दः सर्वोऽप्यव्याप्यवृत्तिरनित्यश्च । बुद्धिं निरूपयाति । **सर्वेति** । व्यवहारश्च बुबोधयिषापूर्वकवाक्यप्रयोगः । तथा च तादृशव्यवहारजनकतावच्छेदकजातिमत्त्वमर्थः । तेन निर्विकल्पकादौ नातिव्याप्तिः । बुबोधयिषापूर्वकवाक्यप्रयोगे वाक्यार्थज्ञानत्वेन कारणत्वात्कारणतावच्छेदकज्ञानत्वमादाय सर्वत्र लक्षणसमन्वयः । बुद्धिरिति लक्ष्यनिर्देशः । ज्ञानमिति ज्ञानपदार्थस्य गुणान्तरत्वनिरासाय । स्मृतिं लक्षयति । **संस्कारेति** । ध्वंसवारणाय ज्ञानत्वनिवेशः । अनुभववारणाय सत्यन्तम् । अनुभवं निरूपयति । **तद्भिन्न-**

नि. ज्ञानमर्थः । ण्यत्प्रत्ययस्य विषयत्वमर्थः । तथा च श्रोत्रेन्द्रियजन्यज्ञानविषयत्वे सति गुणत्वं शब्दस्य लक्षणम् । श्रोत्रेन्द्रियजन्यं यत् ज्ञानं अयं शब्द इत्याकारकं ज्ञानं तद्विषयत्वस्य शब्दे विद्यमानत्वात् लक्षणसमन्वयः । **ध्वन्यात्मको भेर्यादाविति** । अवच्छेद्यत्वं सप्तम्यर्थः । तथा च भेर्याद्यवच्छेद्यशब्दो ध्वन्यात्मक इत्यर्थः । शब्दो हि भेर्याद्यवच्छेदक आकाशे उत्पद्यते । भेर्यादिः शब्दे अवच्छेदकः । शब्दस्तु भेर्याद्यवच्छेद्यः । अतो न वाक्यार्थानुपपत्तिः । बुद्धिं लक्षयति । **सर्वव्यवहारेति** । सर्वे व्यवहाराः शब्दप्रयोगाः तेषां हेतुरित्यर्थः । अर्थं बुद्ध्वा शब्दरचनेति न्यायेन सकलशब्दप्रयोगकारणत्वरूपलक्षणस्य बुद्धौ विद्यमानत्वाल्लक्षणसङ्गतिः । **ज्ञानमिति** । बुद्धिरेव ज्ञानमित्युच्यत इत्यर्थः । अन्नम्भट्टस्तु ज्ञानत्वमेव बुद्धिलक्षणं वदन् सर्वव्यवहारहेतुरित्यस्य स्वरूपकथनमात्रपरतां मनुते । तदाशयस्तु दीपिकाव्याख्यानावसरे निपुणतरमुपपादयिष्यतेऽस्माभिः । सा बुद्धिः । स्मृतिं लक्षयति । **संस्कार इति** ।

प. **ध्वन्यात्मको भेर्यादाविति** । अवच्छेदकं सप्तम्यर्थः । शब्द इत्यनुषज्यते ।

**यथार्थोऽयथार्थश्चेति । तद्वति तत्प्रकारकानुभवो यथार्थः। सैव प्रमे-**

न्या. स्कारजन्यत्वविशिष्टज्ञानत्वं स्मृतेर्लक्षणम्। संस्कारजन्यत्वविशेषणानुपादाने अनुभवेऽतिव्याप्तिरतस्तद्वारणाय तदुपादानम्। संस्कारध्वंसेऽतिव्याप्तिवारणाय विशेष्यम्। ध्वंसं प्रति प्रतियोगिनः कारणत्वात् संस्कारध्वंसेऽपि संस्कारजन्यत्वस्य सत्त्वात्। प्रत्यभिज्ञायामतिव्याप्तिवारणाय मात्रपदम्। अनुभवं लक्षयति। **तद्भिन्नमिति।** तद्भिन्नत्वं नाम स्मृतिभिन्नत्वम्। तथा च स्मृतिभिन्नत्वविशिष्टज्ञानत्वमनुभवस्य लक्षणम्। विशेषणानुपादाने स्मृतावतिव्याप्तिः, विशेष्यानुपादाने घटादावतिव्याप्तिरतस्तद्वारणाय विशेषणविशेष्ययोरुपादानम्। अनुभवं विभजते। **स द्विविध इति।** यथार्थानुभवं लक्षयति। **तद्वतीति।** तद्वतीत्यत्र सप्तम्यर्थो

वा. **मिति।** तत् स्मृतित्वजातिमत्। स्मृतिवारणाय सत्यन्तम्। द्रव्यादिवारणाय ज्ञानेति। यथार्थानुभवं निरूपयति। **तद्वतीति।** अत्र प्रकारांशे एव यथार्थत्वस्य निर्वक्तव्यतया तत्पदं प्रकारपरम्। सप्तम्यर्थो विशेष्यत्वम् विशेष्यित्वं वा। तत्र च तद्वतो निष्ठत्वेन निरूपितत्वेन वान्वयः। तत्प्रकारकमित्यस्य तन्निष्ठप्रकारतानिरूपितप्रकारितावानर्थः। तदेकदेशप्रकारतायां प्रकारितायां वा निरूपितत्वेनावच्छिन्नत्वेन वा सप्तम्यर्थस्यान्वयः। प्रकारता च तद्वत्तावच्छेदकसंबन्धावच्छिन्ना ग्राह्या। तेन संयोगेन कपाले घटज्ञानस्य समवायेन तद्वद्विशेष्यकत्वस्य तत्प्रकारकत्वस्य च सत्त्वेऽपि न याथार्थ्यप्रसङ्गः। तथा च येन संबन्धेन तत्प्रकारकानुभवस्य याथार्थ्यं तेन संबन्धेन तद्वन्निष्ठविशेष्यतानिरूपिततत्संबन्धावच्छिन्नतन्निष्ठप्रकारतानिरूपितप्रकारिताशालित्वे सत्यनुभवत्वम्। तादृशविशेष्यतानिरूपितविशेष्यित्वावच्छिन्नतादृशप्रकारिताशाल्यनुभवत्वं वा। अयथार्थानुभववारणाय सत्यन्तम्। अत एव तद्वतीत्यपि। अत एव च विशेष्ये तद्वत्त्वनिवेशः। स्मृतीच्छादिवारणाय अनुभवत्वनिवेशः। सप्तम्यन्तार्थस्य ज्ञानान्वय इति तु न शङ्क्यम्। तथा सति तद्वन्निष्ठविशेष्यताकत्वे सति तत्प्रकारकानुभवत्वं लक्षणं स्यात्। तथा च रङ्गत्वरजतत्वाभ्यां रजतरङ्गभ्रमेऽतिव्याप्तिः। **सैवेति।**

नि. स्मृतिर्हि भावनाख्यसंस्कारेण जन्यते ज्ञानञ्च भवतीति लक्षणसमन्वयः। अत्र ज्ञानत्वमात्रोक्तौ अनुभवेऽतिव्याप्तिः। अतस्संस्कारजन्यत्वे सतीति। अनुभवस्य इन्द्रियजन्यत्वेन संस्कारजन्यत्वाभावान्नातिव्याप्तिः। संस्कारजन्यत्वमात्रोक्तौ ध्वंसं प्रति प्रतियोगिनः कारणत्वेन संस्कारजन्यत्वस्य संस्कारध्वंसेऽपि विद्यमानत्वात् अतिव्याप्तिः। तद्वारणाय ज्ञानत्वमुक्तम्। अनुभवं लक्षयति। **तद्भिन्नमिति।** स्मृतिभिन्नमित्यर्थः। तथा च स्मृतिभिन्नत्वे सति ज्ञानत्वमनुभवस्य लक्षणम्। ज्ञानत्वमात्रोक्तौ स्मृतावतिव्याप्तिः। अतः स्मृतिभिन्नत्वे सतीति। स्मृतिभिन्नत्वमात्रोक्तौ घटादावतिव्याप्तिः। अतो ज्ञानत्वमिति। सः अनुभवः। यथार्थानुभवं लक्षयति। **तद्वतीति।** तदस्यास्तीति तद्वान्। तच्छब्देन प्रकारत्वोपलक्षितधर्मो ग्राह्यः। तद्वतीत्यत्र

प. **सैव प्रमेत्युच्यत इति।** आनुपूर्व्यवच्छिन्नं प्रमापदस्यार्थः। इतरभेदः। वचेर्वाक्यं,

त्युच्यते। तदभाववति तत्प्रकारकानुभवोऽयथार्थः। सैवाप्रमेत्युच्यते।

---

न्या.विशेष्यत्वम् । तच्छब्देन प्रकारीभूतो धर्मो ग्राह्यः । तथा च तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वे सति अनुभवत्वं यथार्थानुभवस्य लक्षणम् । उदाहरणम् । रजतत्ववद्विशेष्यकत्वे सति रजतत्वप्रकारकं रजते 'इदं रजतम्' इति ज्ञानम् । तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशाल्यनुभवत्वमिति निष्कर्षः । अन्यथा यथाश्रुते रङ्गरजतयोरिमे रजतरङ्गे इत्याकारकसमूहालम्बनभ्रमेऽतिव्याप्तिः, तत्रापि रजतत्ववद्विशेष्यकत्वरजतत्वप्रकारकत्वयोः रङ्गत्ववद्विशेष्यकत्वरङ्गत्वप्रकारकत्वयोश्च सत्त्वात् । उक्तनिष्कर्षे तु दर्शितभ्रमे नातिव्याप्तिः, तज्ज्ञानस्य रङ्गांशे रजतत्वावगाहित्वेन रजतांशे रङ्गत्वावगाहित्वेन च रजतत्वप्रकारतायाः रङ्गत्ववन्निष्ठविशेष्यतानिरूपितत्वेऽपि रङ्गत्वनिष्ठप्रकारतायाः रजतत्ववन्निष्ठविशेष्यतानिरूपितत्वेऽपि रजतत्वप्रकारताया रजतत्ववन्निष्ठविशेष्यतानिरूपितत्वाभावात् रङ्गत्वप्रकारताया रङ्गत्ववन्निष्ठविशेष्यतानिरूपितत्वाभावाच्च । अयथार्थानुभवं लक्षयति । **तदभाववतीति ।**

वा. शास्त्र इत्यादिः । लोके तु तद्वति तत्प्रकारकज्ञानमात्रमुच्यते इति भावः । अयथार्थानुभवं लक्षयति । **तदभावेति ।** अत्र यत्संबन्धावच्छिन्नतन्निष्ठप्रतियोगिता गृह्यते

नि. विशेष्यत्वं सप्तम्यर्थः । तथा च तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वे सति अनुभवत्वं यथार्थानुभवस्य लक्षणमित्यर्थः । यत्र पुरोवर्तिनि घटे अयं घट इत्याकारकं ज्ञानं जातं स यथार्थानुभवः । स एव लक्ष्यः । वर्तते च तत्रेदं लक्षणम् । तथा हि तादृशज्ञाने त्रयो विषयाः । विशेष्यः प्रकारः संसर्गश्चेति । तत्र पुरोवर्ती घटो विशेष्यः । घटत्वं प्रकारः । समवायस्संसर्गः । तथा च तज्ज्ञानं घटविशेष्यकम् घटत्वप्रकारकं समवायसंसर्गकञ्च भवतीति । एवञ्चात्र तच्छब्देन प्रकारत्वोपलक्षितं घटत्वं ग्राह्यम् । तद्वान् घटः, स चास्मिन् ज्ञाने विशेष्यः । तत् घटत्वं तच्चास्मिन् ज्ञाने प्रकार इति तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वे सति अनुभवत्वरूपलक्षणस्यायं घट इत्याकारकयथार्थानुभवे विद्यमानत्वाल्लक्षणसङ्गतिः । स एव प्रमेत्युच्यत इत्यर्थः । अयथार्थानुभवं लक्षयति । **तदभाववतीति ।** अत्रापि तच्छब्देन प्रकारत्वोपलक्षितधर्मो ग्राह्यः ।

प. बोध्यत्वमाख्यातार्थः । **यत्समवेतमिति ।** ननु समवेतत्वं समवायसम्बन्धावच्छिन्नवृत्तित्वम् । तथा च 'कार्यं यन्निरूपितसमवायसम्बन्धावच्छिन्नवृत्तिताश्रयीभूतं समुत्पद्यत' इति लभ्यते । तच्च नोपपद्यते । यतः सर्वं कार्यमुत्पन्नं सदेव समवैति । न तु समवेतं सदेवोत्पद्यते । न चात्र को विशेष इति वाच्यम् । 'समवेतं सदुत्पद्यते' इत्युक्तौ समवेतत्वस्योत्पत्तिप्रयोजकत्वलाभात् । तत्कथमिति चेत्—सत्पदसमभिव्याहृतसमवेतपदार्थस्य समवेतत्वप्रयोज्यत्वस्योत्पत्तावन्वयात् । समवेतत्वकालीनत्वमेव सत्पदसमभिव्याहृतसमवेतपदार्थः किं न स्यादिति चेन्न । 'घटो रूपवान्सन्-

**(स एव भ्रम इत्युच्यते ।) यथार्थानुभवश्चतुर्विधः। प्रत्यक्षानुमित्युपमितिशाब्दभेदात् । तत्करणमपि चतुर्विधम् । प्रत्यक्षानुमानोपमानश-**

---

न्या. अत्रापि पूर्ववत्तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशाल्यनुभवत्वं विवक्षणीयम् । अन्यथा यथाश्रुते रङ्गरजतयोरिमे रङ्गरजते इत्याकारकसमूहालम्बनप्रमायामतिव्याप्तिः । तस्याः रजतरङ्गोभयविशेष्यकत्वेन रजतत्वरङ्गत्वोभयप्रकारकत्वेन च रजतत्वाभाववद्रङ्गविशेष्यकत्वरजतत्वप्रकारकत्वयोः रङ्गत्वाभाववद्रजतविशेष्यकत्वरङ्गत्वप्रकारकत्वयोश्च सत्त्वात् । उक्तनिष्कर्षे तु न तत्रातिव्याप्तिः । तादृशप्रमायाः रजतांशे रजतत्वावगाहित्वेन रङ्गांशे रङ्गत्वावगाहित्वेन च रजतत्वप्रकारताया रजतत्वाभाववद्रङ्गनिष्ठविशेष्यतानिरूपितत्वाभावात् रङ्गत्वप्रकारताया रङ्गत्वाभाववद्रजतनिष्ठविशेष्यतानिरूपितत्वाभावाच्च । उदाहरणम् । रजतत्वाभाववद्विशेष्यकत्वे सति रजतत्वप्रकारकं शुक्तौ 'इदं रजतम्' इति ज्ञानम् । यथार्थानुभवं विभजते । **यथार्थानुभव इति । तत्करणमिति ।** फलीभूतप्रत्यक्षा-

वा. तत्संबन्धावच्छिन्ना प्रकारतापि ग्राह्या । वाक्यार्थस्तत्प्रयोजनानि च पूर्ववत् । बहुवादिसंमतत्वन्यायानुसारेण यथार्थानुभवं विभजते । **प्रत्यक्षेति ।** प्रमाणसामान्यलक्षणं दर्शयंस्तानि विभजते । **तत्करणमिति । प्रत्यक्षेति ।** तत्करणज्ञानमन्तरेण

नि. तस्याभावस्तदभावः सोऽस्यास्तीति तदभाववान् । तस्मिन्नित्यर्थः । अत्रापि विशेष्यत्वं सप्तम्यर्थः । तथा च तदभाववद्विशेष्यकत्वे सति तत्प्रकारकत्वे सत्यनुभवत्वं यथार्थानुभवस्य लक्षणम् । यत्र पुरोवर्तिनि पटे अयं घट इत्याकारकं ज्ञानं जातं सोऽयथार्थानुभवः । स एव लक्ष्यः । वर्तते च तत्रेदं लक्षणम् । तथा हि, तादृशज्ञानेऽपि त्रयो विषयाः । विशेष्यः प्रकारस्संसर्गश्चेति । तत्र पुरोवर्ती पटो विशेष्यः । घटत्वं प्रकारः। समवायश्च संसर्गः । तथा च तज्ज्ञानं पटविशेष्यकम्, घटत्वप्रकारकं, समवायसंसर्गकञ्चेति । एवञ्चात्र तच्छब्देन प्रकारत्वोपलक्षितं घटत्वं ग्राह्यम् । तदभाववान् पटः स चास्मिन् ज्ञाने विशेष्यः । तत् घटत्वं, तच्चास्मिन् ज्ञाने प्रकार इति तदभाववद्विशेष्यकत्वे सति तत्प्रकारकत्वे सत्यनुभवत्वरूपलक्षणस्य पटविशेष्यकघटत्वप्रकारकेऽयं घट इत्याकारकायथार्थानुभवे विद्यमानत्वाल्लक्षणसङ्गतिः । **स एव भ्रम इत्युच्यते इति ।** अयथार्थानुभव एव भ्रम इत्युच्यत इत्यर्थः । प्रथमोद्दिष्टं यथार्थानुभवं विभजते । **यथार्थानुभव इति ।** प्रत्यक्षं प्रत्यक्षप्रमा, अनुमितिः अनुमितिप्रमा उप-

प. वलोक्यते' 'चैत्रः स्वर्गमिच्छञ्ज्योतिष्टोमं करोति' 'हस्तिनं पश्यन्हस्तिपकं स्मरति' 'धूमं परामृशन्नग्निमुन्नयति' 'पदं गृह्णन्घटं बुद्ध्यति' इत्यादौ सर्वत्र तत्समानकालीनत्वमात्रे बोधोपगमे 'घटोऽवलोक्यमानः सन्रूपवान्' 'चैत्रः ज्योतिष्टोमं कुर्वन्स्वर्गमिच्छति' 'हस्तिपकं स्मरन्हस्तिनं पश्यति' 'वह्निमुन्नयन्धूमं परामृशति'

**द्भेदात् । (व्यापारवत्) असाधारणकारणं करणम् । ( अनन्यथासिद्धत्वे सति ) कार्यनियतपूर्ववृत्ति कारणम् ।**

---

न्या.-दिकरणं चतुर्विधमित्यर्थः । प्रत्यक्षादिप्रमाणानां प्रमाकरणत्वं सामान्यलक्षणम् । एकैकप्रमाणलक्षणं तु वक्ष्यते प्रत्यक्षज्ञानेत्यादिना । करणलक्षणमाह । **असाधारणकारणमिति ।** व्यापारवदसाधारणकारणं करणमित्यर्थः । असाधारणकारणत्वं च कार्यत्वातिरिक्तधर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वम् । यथा दण्डादेर्घटं प्रत्यसाधारणकारणत्वम् । कार्यत्वातिरिक्तो घटत्वरूपो धर्मः तदवच्छिन्नकार्यता घटे तन्निरूपितकारणता दण्डे । अतो घटं प्रति दण्डः असाधारणकारणम् । भ्रम्यादिरूपव्यापारवत्त्वाच्च करणम् । साधारणकारणत्वं च कार्यत्वावच्छिन्नकार्यतानिरूपितकारणताशालित्वम् । यथा ईश्वरादृष्टादेः कार्यत्वावच्छिन्नं प्रत्येव कारणत्वात्साधारणकारणत्वम् । कारणं लक्षयति । **कार्यनियतेति** । कार्यं प्रति नियतत्वे सति पूर्ववृत्तित्वं

वा. प्रमाकरणज्ञानासंभवादुपोद्घातसङ्गत्या करणलक्षणमाह । **व्यापारवदिति** । अत्र व्यापारवत्त्वं जनकतासंबन्धेन बोध्यम् । व्यापारत्वं च जनकत्वमात्रम् । ईश्वरस्तद्ज्ञानेच्छाकृतयः प्रागभावकालदिगदृष्टान्यष्टौ साधारणकारणानि । तत्त्वं तु कार्यत्वावच्छिन्नकार्यतानिरूपितकारणत्वम् । असाधारणकारणत्वं च कार्यत्वानवच्छिन्नकार्यताघटितम् । इत्थं च जनकतासम्बन्धेन स्वजनकवत्त्वे सति स्वासाधारणकारणत्वं स्वकरणत्वम् । व्यापारवारणाय सत्यन्तम् । कुलालपितुरीश्वरादेश्च वारणाय विशेष्यदलम् । उपोद्घातसंगत्या कारणत्वमाह । **अनन्यथेति** । नियतान्यथासिद्धाभिन्नत्वमित्यर्थः ।

नि. मितिः उपमितिप्रमा, शाब्दं शब्दप्रमा, तत्करणं यथार्थानुभवकरणं, प्रत्यक्षं प्रत्यक्षप्रमाणं, अनुमानमनुमानप्रमाणं, उपमानमुपमानप्रमाणं, शब्दं शब्दप्रमाणम् । ननु किन्नाम करणं तदाह । **असाधारणकारणं करणमिति** । ननु किमिदमसाधारणकारणत्वं, अतिशयितत्वमिति गृहाण । तच्च दीपिकाव्याख्यानावसरे सम्यगुपपादयिष्यामः । कारणं किं तदाह । **कार्यनियतपूर्ववृत्ति कारणमिति** । कार्यं प्रति

प. 'घटं गृह्णन्पदं शृणोति' इत्यादिवाक्यानां प्रामाण्यापत्तेः । अतः प्रयोज्यत्वमेवार्थः । प्रयोज्यत्वं च उत्तरकालीनत्वमेव । तेन 'आसीनः शृणोति' 'शयानो वक्ति' इत्यादौ श्रवणवचनादावासनशयनादिप्रयोज्यत्वाभावेऽपि न क्षतिः । तथा च आद्यक्षणसम्बन्धरूपायामुत्पत्तेः समवेतत्वोत्तरकालीनत्वाभावादिदं वाक्यमप्रमाणम् । न चोत्तरकालीनत्वं यद्यदेस्तदोत्पन्नं समवैतीति नोपपद्यते । रूपादीनामुत्पत्तिक्षण एव घटादौ समवायसम्बन्धावच्छिन्नवृत्तित्वाङ्गीकारात् । अन्यथा तृतीयक्षणे घटादीनां चाक्षुषानुपपत्तिरिति वाच्यम् ; उत्तरकालीनत्वमुत्तरक्षणवृत्तित्वं तच्च तत्समानक्षणे तदुत्तरक्षणे च वर्तमानस्य समवेतत्वस्य अक्षतम् । अत एव 'मुखं व्यादाय निद्राति

**कार्यं प्रागभावप्रतियोगि। कारणं त्रिविधम्। समवाय्यसमवायिनिमित्तभेदात्। यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम्।**

---

न्या. कारणत्वम्। नियतत्वविशेषणानुपादाने पूर्ववर्तिनो रासभादेरपि कारणत्वं स्यादतो नियतत्वे सतीति विशेषणम्। नियतपूर्ववर्तिनो दण्डरूपादेरपि घटकारणत्वं स्यादित्यतोऽनन्यथासिद्धत्वमपि कारणलक्षणे निवेशनीयम्। एवं च दण्डरूपादीनां अन्यथासिद्धत्वात् न तत्रातिव्याप्तिः। कार्यं लक्षयति। **कार्यमिति**। प्रागभावप्रतियोगित्वं कार्यस्य लक्षणम्। उत्पत्तेः पूर्वं 'इह घटो भविष्यति' इति या प्रतीतिर्जायते तत्प्रतीतिविषयो योऽभावः स प्रागभावः तत्प्रतियोगि घटादिकार्यम्। कारणं विभजते। **कारणं त्रिविधमिति**। समवायिकारणं लक्षयति। **यत्समवेतमिति**। यस्मिन्स-

वा. तेन न बहुतरभेदनिवेशाद्गौरवं, न वा विशेषदलवैयर्थ्यम्। नियतपूर्ववृत्तित्वं च कार्याव्यवहितपूर्वक्षणावच्छिन्नकार्याधिकरणदेशनिरूपिताधेयतावदभावप्रतियोगितानवच्छेदकधर्मवत्त्वम्। घटं प्रति दण्डत्वादेर्वारणाय सत्यन्तम्। रासभादिवारणाय विशेष्यदलम्। कार्यलक्षणमाह। **कार्यमिति**। प्रसङ्गात्कारणं विभजते। **कारणमिति**। समवायिकारणलक्षणमाह। **यदिति**। यस्मिन् समवेतमिति विग्रहः। तथा च

नि. कार्योत्पत्तिं प्रति नियतं व्यापकं सत् यत्पूर्ववृत्ति, तत्कारणमित्यर्थः। यथा घटं प्रति दण्डः कारणं, तत्र चेदमस्ति लक्षणम्। तत्र हि कार्यो घटः, तदुत्पत्तिं प्रति दण्डो व्यापकः, यत्र यत्र घटोत्पत्तिः तत्र तत्र दण्ड इति व्याप्तौ दण्डस्य व्यापकत्वात्। कार्यपूर्ववर्ती दण्ड इति कार्योत्पत्तिव्यापकत्वे सति पूर्ववृत्तित्वरूपलक्षणस्य दण्डे विद्यमानत्वाल्लक्षणसङ्गतिः। कार्यं किं तदाह। **कार्यमिति**। उत्पत्तेः पूर्वं विद्यमानोऽभावः प्रागभावः। तत्प्रतियोगि कार्यमित्यर्थः। जन्यस्यैव प्रागभावो विद्यते न नित्यस्य, अतः कार्यमेव प्रागभावप्रतियोगीत्यर्थः। कारणं विभजते। **कारणमिति**। तत्र समवायिकारणं लक्षयति। **यत्समवेतमिति**। यस्मिन् समवेतं यत्समवेतं,

प. इत्यादौ मुखव्यादानोत्तरकालीनत्वं निद्रायामक्षतमिति। वस्तुतस्तु प्रयोज्यत्वे निरूढलक्षणा। उत्तरकालीनत्वे स्वारसिकलक्षणा। उत्तरकालीनत्वे यदि निरूढलक्षणा स्यात्तदा 'आसीनः सन्स्वर्गमिच्छति' इत्यादिप्रयोगापत्तेः। स्वारसिकलक्षणायाः प्रयोगबलकल्प्यत्वान्नानुपपत्तिः। यदि तु तेषामिष्यते प्रामाण्यं नव्यैस्तदा तत्रैव निरूढलक्षणा स्यात्तथा चेदमप्रमाणमिति अत्र केचित् यत्समवेतमिति। अत्र यस्मिन् समवैष्यदित्यर्थः। तथा च भविष्यदर्थकप्रत्ययसमभिव्याहृतसत्पदस्य पूर्वकालीनत्वं प्रयोजकत्वं वार्थः। यथा 'स्वर्गं प्राप्स्यञ्ज्योतिष्टोमं करोति' 'वह्निमुन्नयिष्यन् लिङ्गं परामृशति' इत्यादौ स्वर्गं प्रति प्रयोजकत्वं ज्योतिष्टोमकृतौ वह्न्यनुमितिप्रयोजकत्वं धूमपरामर्शे च बोध्यते। तथात्रापि सम-

**यथा तन्तवः पटस्य, पटश्च स्वगतरूपादेः। कार्येण कारणेन वा**

---

न्या. मवेतं सत्समवायसम्बन्धेन वर्तमानं सत्कार्यमुत्पद्यते तत्समवायिकारणमित्यर्थः। उदाहरणम्। **तन्तव इति।** येषु तन्तुषु समवायेन संबद्धं सत्पटात्मककार्यमुत्पद्यते तत्तन्तवः समवायिकारणमित्यर्थः। सामान्यलक्षणं तु समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वं समवायिकारणत्वमिति। समवायसम्बन्धेन घटाद्यधिकरणे कपालादौ कपालादेः तादात्म्यसम्बन्धेनैव कारणत्वात्। समवायसम्बन्धावच्छिन्नघटत्वाद्यवच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकपालत्वाद्यवच्छिन्नकारणतायाः कपालादौ सत्त्वाल्लक्षणसमन्वयः। समवायेन जन्यभावत्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेन द्रव्यस्यैव हेतुत्वाज्जन्यभावेषु द्रव्यगुणकर्मसु त्रिषु द्रव्यमेव समवायिकारणम्। अतो गुणादावपि द्रव्यमेव समवायिकारणमित्याशयेनाह। **पटश्च स्वगतरूपादेरिति।** समवायिकारणमित्यनुषज्यते। असमवायिकारणं लक्षयति। **कार्येणेति।** असमवायिकारणं द्विविधम्। कार्येण

वा. समवायेन कार्याधिकरणत्वं पर्यवसितार्थः। असमवायिकारणत्वस्वरूपमाह। **कार्येणेति।** कार्येण सहैकस्मिन्नर्थे समवेतत्वे सति, कारणेन सहैकस्मिन्नर्थे समवेतत्वे

नि. समवायसंबन्धेन वृत्ति। तथा च कार्यं यस्मिन् समवायसंबन्धेन विद्यते वर्तमानं सदुत्पद्यते, तत्समवायिकारणमित्यर्थः। दृष्टान्तमुखेन स्पष्टयति। **यथा तन्तवः पटस्येति।** समवायिकारणत्वमित्यनुषज्यते। अत्र हि पटात्मकं कार्यं तन्तुषु समवायसंबन्धेन वर्तते, अवयवावयविनोस्समवायात्। अतस्तन्तवः पटस्य समवायिकारणमित्यर्थः। विषयव्याप्त्यर्थमन्यत्राप्युदाहरति। **पटश्च स्वगतरूपादेरिति।** रूपाद्यात्मककार्यं पटे समवायसंबन्धेन वर्तमानं सदेवोत्पद्यते। गुणगुणिनोस्समवायात्। अतस्स्वगतरूपादिकं प्रति पटस्समवायिकारणमित्यर्थः। असमवायिकारणं लक्षयति। **कार्येणेति।** असमवायिकारणं द्विविधम्। कार्येण सहैकस्मिन्नर्थे समवेतत्वे

प. वेतत्वप्रयोजकत्वं तत्पूर्वकालीनत्वं वोत्पत्तौ बोध्यत इत्याहुस्तन्न। उत्पत्तिकाल एव समवेतत्वसंभवेन तत्प्रयोजकत्वस्य तत्पूर्वकालीनत्वस्य वोत्पत्तावसम्भवात्। अन्यथा 'आसीनो वक्ति' इत्यादौ 'आसिष्यमाणो वक्ति' इत्याद्यापत्तेः। अत्रोच्यते 'कार्यपदं वस्तुपरं यत्समवेतत्वं चोद्देश्यतावच्छेदककोटिप्रविष्टं यत्समवेतत्वं च प्रकृतेन 'यन्निरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वं' किन्तु 'यदनुयोगिकसमवायवत्त्वं' तद्वत्त्वं च प्रतियोगितासम्बन्धेन। तथा च प्रतियोगितासम्बन्धेन यदनुयोगिकसमवायवदिति पर्यवसितम्। उत्पद्यत इति विधेयम्। उत्पूर्वकपद्लधातोरुत्पत्तिरर्थः। उत्पत्तिश्च प्रकृते कार्यत्वम्। आख्यातार्थ आश्रयत्वम्। तच्चेह सम्बन्धतया विवक्षितम्। तथा च 'आश्रयतया कार्यत्वं विधेयम्' इति फलितम्। उद्देश्यतावच्छेदकविधेययोरवच्छेद्यावच्छेदकभावस्य व्याप्तिसिद्धत्वात्कार्यत्वे

**सहैकस्मिन्नर्थे समवेतं सत्कारणमसमवायिकारणम् । यथा तन्तुसं-**

---

**न्या.** सहैकस्मिन्नर्थे समवेतं सत् कारणमित्येकम् । कारणेन सहैकस्मिन्नर्थे समवेतं सत् कारणं असमवायिकारणमित्यपरमित्यर्थः । अत्र कारणेनेत्यस्य स्वकार्यसमवायिकारणेनेत्यर्थः । जन्यद्रव्यमात्रे अवयवसंयोगस्यैवासमवायिकारणत्वात्पटात्मककार्ये तदवयवसंयोगस्यैवासमवायिकारणत्वमिति दर्शयन् प्रथममुदाहरति । **यथा तन्तुसंयोगः पटस्येति ।**

**वा.** सतीति योजना । कारणपदं समवायिकारणपरम् । प्रथमे तन्तुसंयोगस्य पटात्मककार्येण सहैकस्मिंस्तन्तौ सत्त्वम् । द्वितीये तन्तुरूपस्य पटगतरूपस्य समवायिकारणपटेन सह तन्तौ सत्त्वम् । इदं च असमवायिकारणत्वसमानाधिकरणधर्मद्वयप्रदर्शनम् । लक्षणं तु समवायस्वसमवायिसमवायान्यन्तरसंबन्धावच्छिन्नप्रतियोगिताककार्याधिक-

**नि.** सति कारणमसमवायिकारणमित्येकं, कारणेन सहैकस्मिन्नर्थे समवेतत्वे सति कारणमसमवायिकारणमित्यपरमित्यर्थः। तत्र कार्येणेत्युदाहरति । **यथा तन्तुसंयोगः पटस्येति।** अत्र पटात्मकं कार्यं तन्तुसमवेतं,अवयवावयविनोस्समवायात् । अतस्तन्तुसंयोगोऽपि तन्तुषु समवेतः, गुणगुणिनोस्समवायात् । कार्येण पटेन सहैकस्मिन् तन्तुरूपार्थे समवेतत्वे सति कारणत्वात् तन्तुसंयोगः पटं प्रत्यसमवायिकारणमित्यर्थः । कारणेनेत्युदाह-

**प.** यदनुयोगिकसमवायसम्बन्धावच्छिन्नत्वं लभ्यते। कार्यमित्यस्य यदित्यादिः। समवायिकारणमित्यस्य तत्कार्यं प्रतीत्यादिः । तथा च यदनुयोगिकसमवायसम्बन्धावच्छिन्नकार्यताश्रयीभूतं यत्कार्यं तत्कार्यं प्रति तत्समवायिकारणमिति फलितमिति न काचिदनुपपत्तिः । असमवायिकारणं लक्षयति—**कार्येणेति ।** कार्यकारणपदे स्वकार्यस्वकार्यसमवायिकारणपरे । ननु कथमत्र विशिष्टवाक्यार्थः । अत्र केचित् । वाकारार्थोऽन्यतरत् । तत्त्वं च 'अन्योन्याभावद्वयावच्छिन्नान्योन्याभाववत्त्वम्' । अन्योन्याभावद्वये कार्यस्य कारणस्य चानुयोगितासम्बन्धेन अन्वयः । यदि चान्योन्याभावद्वयेऽनुयोगितासम्बन्धेन स्वकार्यतावच्छेदकावच्छिन्नस्य स्वकार्यसमावयिकारणतावच्छेदकावच्छिन्नस्य चान्वयोपगमे स्वकार्यतावच्छेदकावच्छिन्नप्रतियोगिताकान्योन्याभावे स्वकार्यसमवायिकारणतावच्छेदकावच्छिन्नप्रतियोगिताकत्वस्य स्वकार्यसमवायिकारणतावच्छेदकावच्छिन्नप्रतियोगिताकान्योन्याभावे च स्वकार्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वस्याभावेन 'पृथिवीजलोभयं गन्धस्नेहवत्' इति वाक्यवदुक्तवाक्यस्याप्रामाण्यापत्तिः । किञ्च यद्यत्र वापदार्थतावच्छेदकमन्योन्याभावद्वयावच्छिन्नप्रतियोगिताकान्योन्याभाववत्त्वं तदाऽप्रसिद्धिः । जगत एव यत्किंचिदन्योन्याभावद्वयवत्त्वेन तदवच्छिन्नप्रतियोगिताकान्योन्याभावाप्रसिद्धेरिति विभाव्यते तदा वाकारस्य खण्डशक्तिरन्योन्याभावेऽवच्छिन्नप्रतियोगिताकत्वे आश्रयत्वे च ततः अन्योन्याभावस्य यत्र प्रतियोगिनस्तदन्वयिनो द्वित्वं तत्र वारद्वयमवच्छिन्नविशेषणतया

**योगः पटस्य, तन्तुरूपं पटगतरूपस्य च । तदुभयाभिन्नं कारणं नि-**

---

न्या. यथा तन्तुसंयोगः पटात्मककार्येण सहैकस्मिन्नर्थे तन्तौ समवायसम्बन्धेन विद्यमानत्वे सति कारणत्वात् पटात्मककार्यं प्रति तन्तुसंयोगोऽसमवायिकारणमित्यर्थः । द्वितीयमुदाहरति । **तन्तुरूपमिति** । स्वकार्यसमवायिकारणेन पटेन सह एकस्मिन् तन्तौ समवेतत्वे सति कारणत्वात् तन्तुरूपं पटरूपस्यासमवायिकारणमित्यर्थः । सामान्यलक्षणं तु समवायसम्बन्धावच्छिन्नकार्यतानिरूपितसमवायस्वसमवायिसमवेतत्वान्यतरसंबन्धावच्छिन्नकारणताश्रयत्वम् । समवायसंबन्धावच्छिन्नघटत्वाद्यवच्छिन्नकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकपालद्वयसंयोगत्वाद्यवच्छिन्नकारणता कपालद्वयसंयोगादौ वर्तते । एवमाद्यपतनक्रियायामाद्यस्यन्दनक्रियायां च गुरुत्वद्रवत्वे असमवायिकारणे भवतः । आद्यपतनक्रियां प्रत्याद्यस्यन्दनक्रियां प्रति च समवायसंबन्धेनैव तयोः कारणत्वात् । अवयविगुणभूतघटपटरूपादौ अवयवगुणभूतकपालतन्तुरूपादेः स्वपदग्राह्यकपालरूपतन्तुरूपादिसमवायिकपालतन्त्वादिसमवेतत्वसंबन्धेनैव कारणत्वात् तत्संबन्धावच्छिन्नकारणताश्रयत्वमवयवगुणभूतकपालरूपतन्तुरूपादौ वर्तत इति लक्षणसङ्गतिः । निमित्तकारणं लक्षयति । **तदुभयभिन्नमिति ।**

चा. रणवृत्त्यभावघटितनियतपूर्ववृत्तित्वघटितमिति भावः । निमित्तकारणं लक्षयति । **तदु-**

नि. रति । **तन्तुरूपं पटगतरूपस्येति** । अत्र कारणेनेत्यस्य स्वकार्यसमवायिकारणेनेत्यर्थः । स्वं तन्तुरूपं, स्वकार्यं पटरूपं, स्वकार्यकारणं पटः, स च तन्तुषु समवेतः, तन्तुरूपमपि तन्तुषु समवेतं, तथा च स्वकार्यसमवायिकारणे एकस्मिन्नर्थे तन्त्वात्मकार्थे समवेतत्वे सति कारणत्वात् तन्तुरूपं पटरूपस्यासमवायिकारणमित्यर्थः । निमित्तकारणं लक्षयति । **तदुभयभिन्नमिति** । समवायिकारणभिन्नत्वे सत्यसमवायिकारणभिन्नत्वे

प. भानम् । एवं त्रित्वादौ वारत्रयादिकं बोध्यम् । सर्वत्रावच्छिन्नप्रतियोगिताकत्वविशेष्यतया सकृद्भानम् । तथा च कार्यप्रतियोगिकान्योन्याभावकारणप्रतियोगिकान्योन्याभावैतद्द्वयावच्छिन्नप्रतियोगिताकान्योन्याभावाश्रयस्य लाभान्नानुपपत्तिः । अथात्र कार्यकारणवाचकपदोत्तरतृतीयावैयर्थ्यम् । तदर्थाभावात् । न च तस्या एव प्रतियोगित्वमनुयोगित्वं वाऽर्थः । तस्यैवान्योन्याभावेऽन्वय इति वाच्यम् । 'घटः पटो वा वर्तत' इत्यादौ यथा घटपटाद्योर्विभक्त्यर्थमद्वारीकृत्यैव साक्षाद्वाकारार्थेऽन्योन्याभावेऽन्वयः । तथात्राप्यन्वयसम्भवेन तद्वैयर्थ्यस्य दुर्वारत्वादिति चेन्न । तस्याः शब्दासाधुत्वार्थकत्वात् । न च तथा सति 'घटः पटो वा वर्तत' इत्यत्रापि तृतीयापत्तिरिति वाच्यम् । भ्रान्तोऽसि । वाकारसमभिव्याहारविरहदशायां यादृशप्रकृत्यर्थान्वितताद‍ृशविभक्त्यर्थस्य यादृशार्थेऽन्वयः वाकारसमभिव्याहारदशायां तादृशप्रकृत्यर्थान्वितवाकारार्थस्य तादृशविभक्त्यर्थत्वोपलक्षितसम्बन्धेन तादृशपदार्थेऽन्वये तादृशप्रकृतिपदसमभिव्याहृततादृशविभक्तिसमभिव्याहृतवाकारसमभिव्याहृततादृशपदज्ञानस्य कारणत्वोपगमेन प्र-

**मित्तकारणम्। यथा तुरीवेमादिकं पटस्य। तदेतत्त्रिविधकारणमध्ये यदसाधारणं कारणं तदेव करणम्। तत्र प्रत्यक्षज्ञानकरणं**

---

न्या. समवायिकारणभिन्नत्वे सति असमवायिकारणभिन्नत्वे सति कारणत्वं निमित्तकारणस्य लक्षणमित्यर्थः। करणलक्षणमुपसंहरति। **तदेतदिति**। **यदसाधारणकारणमिति**। व्यापारवत्त्वे सतीति पूरणीयम्। अन्यथा कपालतन्तुसंयोगयोरतिव्याप्तिः। कपालतन्तुसंयोगयोरपि कार्यत्वातिरिक्तघटत्वपटत्वावच्छिन्नं प्रति कारणत्वादसाधारणकारणत्वमस्त्येव। अतस्तत्र अतिव्याप्तिवारणाय व्यापारवत्त्वे सतीति करणलक्षणे विशेषणं देयमेव। व्यापारवत्त्वं च तज्जन्यत्वे सति तज्जन्यजनकत्वम्। भवति हि दण्डजन्यत्वे सति दण्डजन्यघटजनकता भ्रमणात्मकव्यापारस्य। एवं कपालसंयोगतन्तुसंयोगादेरपि कपालतन्त्वादिव्यापारत्वं कपालतन्त्वादिजन्यत्वे सति कपालतन्त्वादिजन्यघटपटादिजनकत्वात्। करणलक्षणेऽसाधारणत्वानुपादाने ईश्वरादृष्टादेरपि व्यापारवत्त्वात्करणत्वं स्यादतस्तत्रातिव्याप्तिवारणायासाधारणेति। षड्विधेन्द्रियभूतप्रत्यक्षप्रमाणलक्षणमाह। **तत्रेति**। प्रमाभूतप्रत्यक्षादिषु

वा. **भयभिन्नमिति**। कारणमुपसंहरति। **तदेतदिति**। यदसाधारणमित्यस्य व्यापारवदित्यादिः। प्रासङ्गिकं समाप्य प्रत्यक्षप्रमाणलक्षणमाह। **तत्रेति**। प्रमाणेषु मध्ये इत्यर्थः। **प्रत्यक्षेति**। जनकतया प्रत्यक्षत्वावच्छिन्नजनकवत्त्वे सति प्रत्यक्षत्वाव-

नि. सति कारणत्वं निमित्तकारणस्य लक्षणमित्यर्थः। उदाहरति। **यथा तुरीवेमादिकमिति**। करणलक्षणमुपसंहरति। **तदेतदिति**। प्रत्यक्षप्रमाणमाह। **तत्रेति**।

प. कृते वाकारसमभिव्याहारविरहदशायां कार्यकारणवाचकपदोत्तरतृतीयार्थनिरूपितत्वस्य सहपदसमभिव्याहृतसमवेतपदार्थैकदेशे समवेतत्वे सामानाधिकरण्येऽन्वयेन वाकारसमभिव्याहारदशायां कार्यकारणान्वितान्योन्याभावद्वयावच्छिन्नप्रतियोगिताकान्योन्याभावाश्रयरूपवाकारार्थस्य निरूपितत्वसम्बन्धेन सहपदसमभिव्याहृतसमवेतपदार्थैकदेशे सामानाधिकरण्येऽन्वयस्य वक्तव्यतया तादृशतृतीयाया आवश्यकत्वात्। 'घटः पटो वा वर्तत' इत्यत्र च वाकारसमभिव्याहारविरहदशायामपि तृतीयाद्यनपेक्षणेनानुपपत्त्यभावादिति वदन्ति। तन्मन्दम्। चादीनां वाचकतायाः सिद्धान्तविरुद्धत्वात्। अथ तर्हि कार्यपदस्य कारणपदस्य वा कार्यकारणान्यतरलक्षणास्तु। इतरपदं तात्पर्यग्राहकम्। वाकारोऽपि द्योतकः। लक्षणातात्पर्यग्राहकताया एव द्योतकत्वपदार्थत्वादिति चेत्तथा सति कार्यपदस्य लक्षणा स्वीक्रियते कारणपदस्य वेत्यत्र विनिगमनाविरहेणोभयोरपि लक्षणास्वीकारापत्त्या कार्यकारणान्यतरत्वावच्छिन्नस्य वारद्वयं भानापत्तिः इति प्राप्ते ब्रूमः। वाकारस्य स्वाव्यवहितपूर्ववृत्तिपद एव लक्षणातात्पर्यग्राहकत्वम्। न तु व्यवहिते। कार्येण वा कारणेन वेत्युभयत्रापि वाकारसमभिव्याहारस्त्वप्रामाणिकः। तथा च प्रकृते कार्यपदं तात्पर्यग्राहकम्। कारणपदं

**प्रत्यक्षम् । इन्द्रियार्थसंनिकर्षजन्यं ज्ञानं प्रत्यक्षम् । तद्द्विविधम् । निर्विकल्पकं सविकल्पकं चेति । निष्प्रकारकं ज्ञानं निर्वि-**

---

**न्या.** प्रत्यक्षात्मकं यज्ज्ञानं चाक्षुषादिप्रत्यक्षं तत्प्रति करणं व्यापारवदसाधारणकारणमिन्द्रियं भवति । अतः प्रत्यक्षज्ञानकरणत्वं प्रत्यक्षस्य लक्षणम् । आद्यसंनिकर्षातिरिक्तचतुर्विधसंनिकर्षाणां समवायरूपत्वेन व्यापारत्वं न संभवतीति इन्द्रियमनःसंयोगस्यैव बाह्यप्रत्यक्षे जननीये इन्द्रियव्यापारता बोध्या । मानसप्रत्यक्षे त्वात्ममनःसंयोगस्यैव सा बोध्या । प्रत्यक्षप्रमाणमुक्त्वा प्रत्यक्षप्रमालक्षणमाह । **इन्द्रियार्थसंनिकर्षेति** । आदौ लक्षणं जन्यप्रत्यक्षस्यैव लक्ष्यत्वाभिप्रायेण । ईश्वरप्रत्यक्षसाधारणं लक्षणं तु ज्ञानाकरणकम् । **ज्ञानमिति** । ज्ञानं व्याप्तिज्ञानं सादृश्यज्ञानं पदज्ञानं च । तदेव करणं येषां तानि ज्ञानकरणकानि अनुमित्युपमितिशाब्दानि । तद्भिन्नं इत्यर्थः । प्रत्यक्षेन्द्रियाणामेव करणत्वं, न ज्ञानस्य । तथा च ज्ञानाकरणकज्ञानत्वस्य प्रत्यक्षसामान्य एव विद्यमानत्वाल्लक्षणसंगतिः । प्रत्यक्षं विभजते । **निर्विकल्पकमिति** । तल्लक्षयति । **निष्प्रकारकमिति** । प्रकारताशून्यज्ञानत्व-

**वा.** च्छिन्नजनकमित्यर्थः । सन्निकर्षवारणाय सत्यन्तम् । उभयत्र प्रत्यक्षत्वावच्छिन्नत्वनिवेशात्कालविधया प्रत्यक्षजनकध्वंसप्रतियोगिसंनिकर्षे न व्यभिचारः । नापीश्वरादौ । जन्यप्रत्यक्षसामान्यलक्षणमाह । **इन्द्रियेति** । ध्वंसादिवारणाय ज्ञानेति । निर्विकल्पकं लक्षयति । **निष्प्रकारकमिति** । प्रकारिताशून्यमित्यर्थः । एवं संसर्गिताशून्यं विशे-

**नि.** प्रत्यक्षानुमानादिमध्ये प्रत्यक्षज्ञानं प्रति यत् करणं तदेव प्रत्यक्षप्रमाणम् । किं तत् प्रत्यक्षं तदाह । **इन्द्रियेति** । इन्द्रियञ्चक्षुरादिः, अर्थो घटादिः, अनयोस्सन्निकर्षः संयोगादिः, तज्जन्यं यदयं घट इति ज्ञानं तदेव प्रत्यक्षं प्रत्यक्षज्ञानम् । निर्विकल्पकं लक्षयति । **निष्प्रकारकमिति** । प्रकारताख्यविषयताशून्यमित्यर्थः । किञ्चदिद-

**द.** कार्यकारणान्यतरलाक्षणिकम् । वाकारो द्योतकः । तृतीयार्थो निरूपितत्वम् । एकपदं यत्किञ्चित्त्वं स्वरूपसम्बन्धविशेषस्तद्व्यक्तित्वं वा । अर्थपदोत्तरसप्तम्या घटितत्वमवच्छेदकत्वं वार्थः । सहपदसमभिव्याहृतसमवेतपदं समवायद्वयघटितसामानाधिकरण्यविशिष्टपरम् । तस्य कारणपदार्थे कारणत्वेऽन्वयः । असमवायिकारणमिति भावप्रधानो निर्देशः । तथा च कार्यकारणान्यतरनिरूपितयत्किञ्चदर्थघटितसामानाधिकरण्यविशिष्टकारणत्वम् । असमवायिकारणत्वमित्यर्थः । स्वाधिकरणवृत्तित्वरूपसामानाधिकरण्ये स्वाधिकरणविधया यत्किञ्चिदर्थस्य घटकत्वात्तस्य तद्घटितत्वमिति बोध्यम् । अत्र केचित् । कारणपदं कार्यकारणान्यतरलक्षणकम् । तृतीयार्थो निरूपितत्वम् । सहपदार्थोऽधिकरणम् । तदेकदेशेऽधिकरणत्वे व्युत्पत्तिवैचित्र्यात्तृतीयार्थनिरूपितत्वान्वयः । अधिकरणस्याभेदसम्बन्धेन यत्किञ्चिदर्थेऽन्वयः । अर्थपदोत्तरसप्तम्या निरूपितत्वमर्थः ।

**कल्पकम्। सप्रकारकं ज्ञानं सविकल्पकम्। यथा डित्थोऽयं, ब्राह्मणोऽयं, श्यामोऽयं, पाचकोऽयमिति। प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसंनिकर्षः षड्विधः। संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति। चक्षुषा घटप्रत्यक्षजनने संयोगः संनिकर्षः। घटरूपप्रत्यक्षे संयुक्त-**

---

न्या. मेव निर्विकल्पकमित्यर्थः। निर्विकल्पके चतुर्थविषयता स्वीक्रियते। त्रिविधविषयतामध्ये एकापि तत्र नास्ति। अतो विशेष्यताशून्यज्ञानत्वं संसर्गताशून्यज्ञानत्वमित्यपि लक्षणं संभवति। सविकल्पकं लक्षयति। **सप्रकारकमिति**। विषयताया ज्ञाननिरूपितत्वाज्ज्ञानस्य विषयतानिरूपकत्वेन प्रकारतानिरूपकज्ञानत्वं सविकल्पकस्य लक्षणम्। एवं विशेष्यतानिरूपकज्ञानत्वं संसर्गतानिरूपकज्ञानत्वं इत्यपि लक्षणं संभवति। उदाहरति। **यथेति**। इदन्त्वावच्छिन्नविशेष्यतानिरूपकं डित्थत्वादिप्रकारकं ज्ञानं सविकल्पकमित्यर्थः। चाक्षुषादिप्रत्यक्षकारणीभूतसंनिकर्षान्विभजते। **संयोग इत्यादिना**। द्रव्यवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषत्वावच्छिन्नं प्रति

वा. ष्यिताशून्यं च बोध्यम्। सविकल्पकं लक्षयति। **सप्रकारकमिति**। प्रकारितावदित्यर्थः। एवं संसर्गितावत्त्वं विशेष्यितावत्त्वं बोध्यम्। **यथेति**। डित्थपदब्राह्मणत्वजातिश्यामरूपपाककृतीनां क्रमेण प्रकारत्वं बोध्यम्। सन्निकर्षान्विभजते। **षड्विध इति**। विशेषणता चेति पाठः। कार्यमुखेन सन्निकर्षाणां स्वरूपमाह।

नि. मित्यतः प्राक् 'यथेत्युपरिष्टाच्च' इति बहुषु पुस्तकेषु पाठो दृश्यते। स च प्रामादिकः लेखनदोषाद्वा समागतः। इदं निर्विकल्पकं ज्ञानं, किञ्चिदनिर्वाच्यं, निराकारमित्यर्थः। सविकल्पकं लक्षयति। **सप्रकारकमिति**। प्रकारताख्यविषयताविशिष्टमित्यर्थः। तदुदाहरति। **डित्थोऽयमिति**। इदं ज्ञानं डित्थत्वप्रकारकडित्थविशेष्यकं, ब्राह्मणत्वप्रकारकब्राह्मणविशेष्यकं, श्यामत्वप्रकारकश्यामविशेष्यकं भवतीति प्रकारताख्यविषयतानिरूपितत्वस्य तादृशज्ञाने विद्यमानत्वाल्लक्षणसङ्गतिः। इन्द्रियार्थसन्निकर्षन्निरूपयितुमुपक्रमते। **प्रत्यक्षहेतुरिति**। **चक्षुषेति**। घटस्य प्रत्यक्षं घटप्रत्यक्षं, विषयत्वं

प. समवेतं समवायसम्बन्धावच्छिन्नवृत्तिमत्। तदेकदेशे समवेतत्वे निरूपितत्वान्वयः। तथा च कार्यकारणान्यतरनिरूपिताधिकरणतावदभिन्नयत्किंचिदर्थनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वविशिष्टकारणत्वमसमवायिकारणत्वमित्यर्थ इत्याहुः। तत्तु न समीचीनमेव प्रतिभाति। अव्ययनिपातातिरिक्तनामार्थस्यैव नामार्थेऽभेदसम्बन्धेनान्वयस्य व्युत्पत्तिसिद्धत्वात्। न च अधिकरणत्वमेव सहपदार्थः, तस्याश्रयतासम्बन्धेनार्थपदार्थेऽन्वय इति वाच्यम्। 'एकस्मिन्नर्थे' इति पदद्वयं विनाकृत्य यदा 'कार्येण कारणेन वा सह समवेतत्वे सति' इत्येतावन्मात्रं प्रयुज्यते तदा तादृशवाक्यस्यापि

**समवायः । चक्षुःसंयुक्ते घटे रूपस्य समवायात् । रूपत्वसामान्य-**

---

**न्या.** चक्षुःसंयोगस्य कारणत्वम् । द्रव्यसमवेतवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयुक्तसमवायस्य कारणत्वम् । द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयुक्तसमवेतसमवायस्य कारणत्वम् । एवं द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन त्वाचप्रत्यक्षत्वावच्छिन्नं प्रति त्वक्संयोगस्य कारणत्वम् । द्रव्यसमवेतविषयकत्वाचप्रत्यक्षे त्वक्संयुक्तसमवायस्य कारणत्वम् । द्रव्यसमवेतसमवेतोष्णत्वादिजातिप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायस्य कारणत्वम् । एवमात्ममानसे मनःसंयोगस्य कारणत्वम् । आत्मसमवेतसुखादिमानसे मनःसंयुक्तसमवायस्य कारणत्वम् । आत्मसमवेतसमवेतसुखत्वादिमानसे मनः-

**वा. चक्षुषेत्यादि** । अभावप्रत्यक्षजनने विशेषणतासन्निकर्ष इति पाठः । अत एवाग्रे

**नि.** षष्ठ्यर्थः, घटविषयकप्रत्यक्षमित्यर्थः । अयं घट इत्याकारकं घटविषयकप्रत्यक्षं, यदा चक्षुरिन्द्रियेण जन्यते तदा संयोग इन्द्रियार्थसन्निकर्षः । इन्द्रियं चक्षुरर्थो घटः अनयोस्संयोगस्संबन्धः, अवयवावयविभिन्नद्रव्ययोरेव संयोग इति नियमादित्यर्थः । संयुक्तसमवायमुदाहरति । **घटरूपेति** । चक्षुषेत्यनुषज्यते । घटे रूपं घटरूपं, समवेतत्वं सप्तम्यर्थः, घटसमवेतरूपमित्यर्थः । घटरूपस्य प्रत्यक्षं घटरूपप्रत्यक्षं, विषयत्वं षष्ठ्यर्थः, तथा च घटसमवेतरूपविषयकं घटे रूपमित्याकारकं ज्ञानं यदा चक्षुरिन्द्रियेण जन्यते तदा संयुक्तसमवायः इन्द्रियार्थसन्निकर्षः । इन्द्रियं चक्षुरर्थो घटरूपं अनयोस्सम्बन्धः संयुक्तसमवायः, चक्षुस्संयुक्तो घटः तस्मिन् रूपस्य समवायादित्याह । **चक्षुस्संयुक्त इति** । संयुक्तसमवेतसमवायमुदाहरति । **रूपत्वेति** । रूपत्वात्मकं यत्सामान्यं तद्विषयकप्रत्यक्षजनन इत्यर्थः । अत्रापि चक्षुषेत्यनुषज्यते । तथा च रूपत्वविषयकं घटरूपे रूपत्वमित्याकारकं ज्ञानं यदा चक्षुरिन्द्रियेण जन्यते तदा

**प.** योग्यतायाः सर्वमतसिद्धत्वेन तत्र सहपदार्थाधिकरणताया आश्रयतयान्वययोग्यपदार्थानुपस्थित्याऽप्रामाण्यापत्तेः । अथ तत्र सहपदार्थोऽधिकरणमेव तस्य निरूपितत्वसम्बन्धेन समवेतत्वेऽन्वयः । अथवाधिकरणत्वमेवार्थः । तस्य च स्वाश्रयनिरूपितत्वसम्बन्धेन समवेतत्वेऽन्वयः । परम्पराया अपि सम्बन्धत्वस्वीकारादिति चेन्न । उभयत्रापि सम्भवत्यैक्ये तद्भेदकल्पनाया अन्याय्यत्वात् । किंचैकस्मिन्नर्थे इति पदसमभिव्याहारेऽपि एकस्मिन्नर्थे कार्येण कारणेन सह समवेतत्वे सति इति सहपदस्य समवेतत्वपदेनैव सह योजना आनुभाविकी युक्तिसिद्धा च । एकपदसमभिव्याहृतसप्तम्यन्तार्थपदसमवेतपदयोः समभिव्याहारज्ञानस्य 'एकस्मिन्नर्थे समवेतौ रूपरसौ' इत्यत्र सहपदसमवेतपदयोः समभिव्याहारज्ञानस्य एकस्मिन्नर्थे इति पदाघटितनिरुक्तवाक्यस्थले कारणतायास्त्वयापि वाच्यतया तत एव एकस्मिन्नर्थे इति पदघटितनिरुक्तवाक्यादपि

प्रत्यक्षे संयुक्तसमवेतसमवायः । चक्षुःसंयुक्ते घटे रूपं समवेतम् । तत्र रूपत्वस्य समवायात् । श्रोत्रेण शब्दसाक्षात्कारे समवायः संनिकर्षः । कर्णविवरवृत्त्याकाशस्य श्रोत्रत्वात् । शब्दस्याकाशगुणत्वात् । गुणगुणिनोः समवायात् । शब्दत्वसाक्षात्कारे समवेतसमवायः संनिकर्षः । श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात् । अभावप्रत्यक्षे विशेषणविशेष्यभावः संनिकर्षः । भूतलं घटाभाववत् इत्यत्र चक्षुःसंयुक्तभूतले घटाभावस्य विशेषणत्वात् । एवं संनिकर्षजन्यं ज्ञानं प्रत्यक्षम् । तत्करणमिन्द्रियम् । तस्मादिन्द्रियं प्रत्यक्षप्रमाणमिति सिद्धम् ॥

इति प्रत्यक्षपरिच्छेदः ॥

---

न्या. संयुक्तसमवेतसमवायस्य कारणत्वम् । द्रव्यग्राहकाणीन्द्रियाणि चक्षुस्त्वङ्मनांसि त्रीण्येव । अन्यानि घ्राणरसनश्रवणानि तु गुणादिग्राहकाणि । तत्र रसनघ्राणयो रसगन्धतद्गतजातिग्राहकत्वेन द्वितीयतृतीययोः संनिकर्षयोरेव रसगन्धादिप्रत्यक्षे कारणत्वं वाच्यम् । श्रवणेन्द्रियस्याकाशरूपत्वेन शब्दस्याकाशगुणत्वेन श्रवणेन्द्रियेण समं शब्दस्य समवायः संनिकर्षः । शब्दसमवेतशब्दत्वजातिविषयकश्रावणप्रत्यक्षे समवेतसमवायस्य हेतुत्वं च बोध्यम् । **अभावप्रत्यक्ष इति** । विशेषणविशेष्यभावो नाम विशेषणतासंनिकर्षः । पञ्चसंनिकर्षेषु मध्ये संयोगस्थाने

वा. विशेषणतैवोदाहृता । प्रत्यक्षज्ञानमुपसंहरति । **एवमिति** । प्रत्यक्षप्रमाणमुपसंहरति ।

नि. संयुक्तसमवेतसमवाय इन्द्रियार्थसन्निकर्षः । चक्षुस्संयुक्तो घटस्तत्समवेतं रूपं, तस्मिन् रूपत्वस्य समवायो वर्तते, जातिव्यक्त्योस्समवायादित्याह । **चक्षुस्संयुक्त इत्यादिना** । तत्र रूपे । समवायसन्निकर्षमुदाहरति । **श्रोत्रेणेति** । शब्दसाक्षात्कार इत्यत्र शब्दविषयकसाक्षात्कारे इति बहुषु पुस्तकेषु दृश्यते । शब्दो विषयो यस्य सः शब्दविषयः शब्दविषयक इत्यर्थः । साक्षात्कारं प्रत्यक्षज्ञानम् । तथा च श्रोत्रेन्द्रियेण शब्दविषयकं अयं शब्द इत्याकारकं ज्ञानं यदा जायते तदा समवाय इन्द्रियार्थसन्निकर्षः । श्रोत्रमिन्द्रियं, अर्थश्शब्दः, अनयोस्संबन्धस्समवायः, श्रोत्रस्याकाशरूपत्वात्, शब्दस्याकाशगुणत्वात्, गुणगुणिनोस्समवायात्, इत्याह । **कर्णविवरेति** । समवेतसमवायमुदाहरति । **शब्दत्वसाक्षात्कार इति** । श्रोत्रेणेत्यनुषज्यते ।

प. शाब्दबोधोपपत्तौ सहपदार्थपदयोः समभिव्याहारज्ञानस्य शाब्दबोधे प्रातिस्विककारण-

न्या. संयुक्तपदं घटयित्वा समवायस्थाने समवेतपदं घटयित्वा अभावस्थले निर्वाह्यम् । तथा हि । द्रव्याधिकरणकाभावप्रत्यक्षे संयुक्तविशेषणता । द्रव्यसमवेताधिकरणकाभावप्रत्यक्षे संयुक्तसमवेतविशेषणता । द्रव्यसमवेतसमवेताधिकरणकाभावप्रत्यक्षे संयुक्तसमवेतसमवेतविशेषणता च संनिकर्षः । तत्र घटे पटत्वाभावः संयुक्तविशेषणतया गृह्यते । घटसमवेतघटत्वादौ पृथिवीत्वाभावः संयुक्तसमवेतविशेषणतया गृह्यते । घटसमवेतसमवेतरूपत्वादौ नीलत्वाभावश्च संयुक्तसमवेतसमवेतविशेषणतया गृह्यते इति संक्षेपः ॥

इति न्यायबोधिन्यां प्रत्यक्षपरिच्छेदः ।

वा. तस्मादिति ॥

इति वाक्यवृत्तौ प्रत्यक्षपरिच्छेदः समाप्तः ॥

नि. शब्दत्वस्य साक्षात्कारश्शब्दत्वसाक्षात्कारः, विषयत्वं षष्ठ्यर्थः, शब्दत्वविषयक-प्रत्यक्षमित्यर्थः । तथा च शब्दत्वविषयकं शब्दे शब्दत्वमित्याकारकं ज्ञानं यदा श्रोत्रेण जन्यते तदा समवेतसमवाय इन्द्रियार्थसन्निकर्षः । श्रोत्रमिन्द्रियमर्थश्शब्दत्वं तयोस्संबन्धस्समवेतसमवायः, श्रोत्रसमवेतश्शब्दः, तत्र शब्दत्वस्य समवायादि-त्याह । **श्रोत्रसमवेत इति** । विशेषणविशेष्यभावसन्निकर्षमुदाहरति । **अभाव-प्रत्यक्ष इति** । अभावस्य प्रत्यक्षमभावप्रत्यक्षं, विषयत्वं षष्ठ्यर्थः, अभावविषयक-प्रत्यक्ष इत्यर्थः । विशेषणविशेष्यभावो नामेन्द्रियसंबद्धविशेषणविशेष्यभावः । यथा घटाभाववद्भूतलमित्याकारकं ज्ञानं यदा चक्षुरिन्द्रियेण जन्यते तदा इन्द्रियं चक्षुः, इन्द्रियसंबद्धं भूतलं, तत्र घटाभावो विशेषणं, भूतलं विशेष्यम् । तथा चेन्द्रियसंबद्ध-भूतलस्य घटाभावस्य च विशेषणविशेष्यभावो वर्तत इति भवत्येवात्रेन्द्रियसंबद्ध-विशेषणविशेष्यभाव इति भावः । अधिकन्तु दीपिकाव्याख्यानावसरे निरूपयिष्यामः॥

इति निरुक्तौ प्रत्यक्षपरिच्छेदः समाप्तः ॥

प. तायाः कल्पनीयतया गौरवम् । तस्मादस्मदुक्तवाक्यार्थ एव समीचीन इत्यलं पल्ल-वितेन ॥

इति पट्टाभिरामटिप्पण्यां प्रत्यक्षपरिच्छेदः समाप्तः ॥

**अनुमितिकरणमनुमानम् । परामर्शजन्यं ज्ञानमनुमितिः । व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः । यथा 'वह्निव्याप्यधूमवा-**

न्या॰ अनुमानं लक्षयति । **अनुमितिकरणमिति** । अनुमितौ व्याप्तिज्ञानं करणं, परमर्शो व्यापारः, अनुमितिः फलम् । परामर्शस्य व्याप्तिज्ञानजन्यत्वे सति व्याप्तिज्ञानजन्यानुमितिजनकत्वात्तज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारत्वमुपपन्नम् । अनुमितिकरणत्वमनुमानस्य लक्षणम् । अनुमानं व्याप्तिज्ञानम् । एतस्य परामर्शरूपव्यापारद्वारा अनुमितिं प्रत्यसाधारणकारणतयानुमितिकरणत्वमुपपन्नम् । **परामर्शजन्यमिति** । परामर्शजन्यत्वविशिष्टज्ञानत्वमनुमितेर्लक्षणम् । अत्र ज्ञानत्वमात्रोपादाने प्रत्यक्षादावतिव्याप्तिः, अतस्तद्वारणाय परामर्शजन्यत्वे सतीति विशेषणोपादानम् । परामर्शजन्यत्वमात्रोक्तौ परामर्शध्वंसेऽतिव्याप्तिरतस्तद्वारणाय ज्ञानत्वोपादानम् । अनुमितिलक्षणघटकीभूतपरामर्शलक्षणमाचष्टे । **व्याप्तिविशिष्टेति** । व्याप्तिविशिष्टं

वा॰ अनुमानं लक्षयति । **अनुमितीति** । जनकतया अनुमितित्वावच्छिन्नजनकत्वे सति अनुमितित्वावच्छिन्ननिरूपितजनकमित्यर्थः । प्रयोजनं पूर्ववत् । अनुमितिं लक्षयति । **परामर्शेति** । उपोद्घातसंगत्या परामर्शं लक्षयति । **व्याप्तिविशिष्टेति** । वैशिष्ट्यं विषयितया । पक्षधर्मः पक्षसंबन्धी । तस्य भावः पक्षधर्मता ।

नि॰ इदानीमनुमानं निरूपयति । अतस्तल्लक्षणमाह । **अनुमितीति** । अनुमितेः करणमनुमितिकरणम् । निरूपितत्वं षष्ठ्यर्थः । तथा चानुमितिनिरूपितकरणत्वमनुमानप्रमाणलक्षणं पर्यवसितम् । अनुमानलक्षणघटकीभूतानुमितिलक्षणं व्याचष्टे । **परामर्शजन्यमिति** । परामर्शजन्यत्वे सति ज्ञानत्वमनुमितिलक्षणमित्यर्थः । ध्वंसं प्रति प्रतियोगिनः कारणत्वेन परामर्शजन्यत्वस्य परामर्शध्वंसेऽपि विद्यमानत्वादतिव्याप्तिस्स्यात् । अतस्तद्वारणाय ज्ञानत्वमिति । ज्ञानत्वमात्रोक्तौ प्रत्यक्षात्मकज्ञानेऽतिव्याप्तिः स्यात् । अतो विशेषणदलम् । अनुमितिलक्षणघटकीभूतपरामर्शलक्षणमाचष्टे । **व्याप्तिविशिष्टेति** । व्याप्त्या विशिष्टः व्याप्तिविशिष्टः व्याप्तिविशि-

प॰ **यथा वह्निव्याप्यधूमवान्पर्वत इति ज्ञानं परामर्श इति** । वह्निव्याप्यधूमवान्पर्वत इति ज्ञानरूपं यत्परामर्शपदवाच्यं तद्यथा यथोक्तलक्षणाक्रान्तमित्यर्थः । वह्निपदसमभिव्याहृतव्याप्यपदसमभिव्याहृतधूमपदसमभिव्याहृतमतुप्प्रत्ययस्य वह्निव्याप्यधूमत्वावच्छिन्नप्रकारतानिरूपकमर्थः । पर्वतपदस्य पर्वतत्वावच्छिन्नविशेष्यतानिरूपकमर्थः । इतिपदस्य अभेदोऽर्थः । तथा च पर्वतत्वावच्छिन्नविशेष्यतानिरूपकत्वावच्छिन्ने पर्वतपदार्थेऽभेदसम्बन्धेन मतुबन्तार्थस्य प्रकारतानिरूपकत्वावच्छिन्नस्यान्वयान्मतुबन्तपदस्य पर्वतपदसमानलिङ्गकत्वनियम उपपद्यते । अन्यार्थकस्यापि पर्वतपदस्य पुल्लिङ्गत्वात् । उद्देश्यविधेयभावमहिम्ना पर्वतविशेष्यकत्वतादृशप्रकारकत्वयोरवच्छेद्यावच्छेदकभावलाभान्न धूमो वह्निव्याप्यः धूमवान्पर्वत

**नयं पर्वतः' इति ज्ञानं परामर्शः । तज्जन्यं 'पर्वतो वह्निमान्' इति**

**न्या.** च तत्पक्षधर्मताज्ञानं चेति कर्मधारयः । अत्र विशिष्टपदस्य प्रकारतानिरूपकपरत्वात्पक्षधर्मताया ज्ञानमित्यत्र षष्ठ्या विषयत्वबोधनात् । धर्मतापदस्य संबन्धार्थकत्वात् कर्मधारयसमासेन समस्यमानपदार्थयोरभेदसंसर्गलाभाच्च व्याप्तिप्रकारकाभिन्नं यत्पक्षसंबन्धविषयकं ज्ञानं तत्परामर्श इति लभ्यते । एवं सति धूमो वह्निव्याप्यः आलोकवान्पर्वत इत्याकारकसमूहालम्बनेऽप्युक्तपरामर्शलक्षणमस्तीत्यतिव्याप्तिस्तद्वारणाय पक्षनिष्ठविशेष्यतानिरूपितहेतुनिष्ठप्रकारतानिरूपितव्याप्तिनिष्ठप्रकारताशालिज्ञानं परामर्श इति निष्कर्षः कर्तव्यः । एतादृशपरामर्शजन्यत्वे सति ज्ञानत्वमनुमितेर्लक्षणम् । अनुमितिपरामर्शयोर्विशिष्य कार्यकारणभावश्चेत्थम् ॥ वह्नित्वावच्छिन्नसंयोगसंबन्धावच्छिन्नविधेयतानिरूपितपर्वतत्वावच्छिन्नोद्देश्यताशाल्यनुमितित्वावच्छिन्नं प्रति वह्नित्वावच्छिन्नप्रकारतानिरूपितव्याप्तित्वावच्छिन्नप्रकारतानिरूपितधूमत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिर्णयः कारणम् । वह्नित्वावच्छिन्नप्रकारतानिरूपितव्याप्तित्वावच्छिन्नविशेष्यतायाः धूमत्वावच्छिन्नविशेष्यतानिरूपितव्याप्तित्वावच्छिन्नप्रकारतायाश्च अभेदानङ्गीकर्तृमते वह्नित्वावच्छिन्नप्रकारतानिरूपितविशे-

**वा.** पक्षसंबन्ध इति यावत् । तस्याः ज्ञानम् व्याप्तिविशिष्टं च तत्पक्षधर्मताज्ञानं चेति कर्मधारयः । पक्षधर्मताविषयिताविशिष्टे व्याप्तिविषयिताभाने तन्निरूपितविषयतयोरपि परम्परया निरूप्यनिरूपकभावः संबन्धो भासत इति व्याप्तिविषयतानिरूपितसंबन्धविषयतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयतानिरूपकज्ञानं लभ्यते ज्ञानपदं निश्चयपरम् । व्याप्तिविषयतानिरूपितविषयता च व्याप्तिघटकपदार्थविषयतानिरूपिता बोध्या । तेन भ्रमप्रमासाधारण्यनिर्वाहः । तथा च तादृशविषयिताशालिनिश्चयत्वावच्छिन्नकारणतानिरूपितकार्यत्वं अनुमितिलक्षणं पर्यवसितम् । अनुमितिलक्षणवाक्ये

**नि.** ष्टस्य पक्षधर्मता व्याप्तिविशिष्टपक्षधर्मता, पक्षधर्मतायाः ज्ञानम् । लक्ष्यं दर्शयति । **यथेति** । वह्निना व्याप्यः वह्निव्याप्यः । निरूपितत्वं तृतीयार्थः । **व्याप्यो** व्याप्तिविशिष्टः । तथा च वह्निव्याप्यो वह्निनिरूपितव्याप्तिविशिष्टो यो धूमः तद्वानयं पर्वतः इत्याकारकं ज्ञानं लक्ष्यम् । तत्र व्याप्तिविशिष्टस्य धूमरूपहेतोः पक्षधर्मता पर्वतादिवृत्तित्वं भासत इति व्याप्तिविशिष्टपक्षधर्मताज्ञानत्वरूपस्य लक्षणस्य सत्वाल्लक्ष्ये लक्षणसमन्वयः । परामर्शजन्यत्वे सति ज्ञानत्वरूपमनुमितिलक्षणं लक्ष्ये सङ्गमयन् तल्लक्ष्यानुमितिं दर्शयति । **तज्जन्यमिति** । परामर्शजन्यमित्यर्थः । परामर्शलक्षणघटकी-

**प.** इति ज्ञानानन्तरं वह्निव्याप्यधूमवान्पर्वत इति ज्ञानमिदमिति प्रयोगः । 'इत्याकारकं ज्ञानम्' इति पाठे तु इतिपदं पूर्वपदलक्षणातात्पर्यग्राहकम् । आकारश्चाभेदः । कप्रत्ययस्य आश्रयोऽर्थः इत्याहुः । अन्ये तु वह्निव्याप्यधूमवान्पर्वत इत्येकं पदमव्ययम् । तस्य पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्निव्याप्यधूमत्वावच्छिन्नप्रकारत्वमर्थः । इति-

**ज्ञानमनुमितिः। यत्र धूमस्तत्राग्निरिति साहचर्यनियमो व्याप्तिः।**

न्या. ष्यत्वावच्छिन्नव्याप्तित्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नधूमत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिर्णयः कारणमिति वाच्यम्। स च निर्णयः वह्निव्याप्यधूमवान्पर्वत इत्याकारको बोध्यः। **यत्र यत्रेति।** यत्रपदवीप्सा धूमाधिकरणे यावति वह्निमत्त्वलाभाय। यावत्त्वमहिम्ना वह्नेर्धूमव्यापकत्वं लब्धम्। तथा च धूमव्यापकवह्निमतीत्यर्थः। तदेव स्पष्टयति। **साहचर्यनियम इति।**

वा. ज्ञानपदं स्वरूपकथनार्थम्। व्याप्तिस्वरूपमाह। **यत्रेति।** अत्र इतिपदं तादृशवाक्यपरम्। तत्तात्पर्यग्राहकम्। **यत्रेत्यादि।** इतिपदार्थस्य च बोध्यतासंबन्धेन साहचर्यनियमेऽन्वयः। साहचर्यं साध्यनिष्ठहेतुसामानाधिकरण्यम्। तन्नियमः तन्मात्रसत्त्वम्। तद्विरोध्यसत्त्वमिति यावत्। विरोधित्वं च हेतुसमानाधिकरणाभावप्रतियोगित्वम्। यादृशवह्नेर्यादृशधूमसाहचर्यं तस्मिन्न तदव्यापकत्वमिति विरोधः। अनुगतैकव्यक्तौ त्वेकाधिकरणावच्छेदेनासत्त्वम्। तथा च साध्यनिष्ठहेतुव्यापकत्वं स्वाश्रयसामानाधिकरण्यसम्बन्धेन हेतुसंबद्धं व्याप्तिपदार्थः। व्यापकताश्रयसामानाधिकरण्यमिति पर्यवसितोऽर्थः। एतस्य यत्रेत्यादिवाक्यबोध्यता च वह्निपदस्य धूमव्यापकवह्नौ निरूढलाक्षणिकतया, धूमव्यापकवह्नौ धूमे च यत्पदार्थभूतैकाधिकरणवृत्तित्वग्रहे तुल्यवित्तिवेद्यतया धूमे धूमव्यापकवह्निसामानाधिकरण्यबोधात्। अथवा साहचर्यस्य हेतुनिष्ठसाध्यसामानाधिकरण्यस्य नियमः। तद्विरोधिनः साध्याभाववद्वृत्तित्वस्याभावः। एतस्य यत्रेत्यादिवाक्यबोध्यता च वह्नौ धूमाधिकरणवृत्त्यभावाप्रतियोगित्वग्रहे तुल्यवित्तिवेद्यतया धूमे वह्निप्रतियोगिकाभाववदवृत्तित्वग्रहात्। पक्षधर्मतास्वरूपमाह।

नि. भूतव्याप्तिस्वरूपमाचष्टे। **यत्र धूम इति।** सह चरत इति सहचरौ समानाधिकरणौ, एकाधिकरणवृत्ती तयोर्भावः साहचर्यं सामानाधिकरण्यम्, एकाधिकरणवृत्तित्वमिति यावत्। तस्य नियमोऽवश्यंभावः। तथा चावश्यंभाविसाध्यसामानाधिकरण्यं हेतोर्व्याप्तिरिति फलितम्। तादृशव्याप्तेरेवाभिनयः। **यत्र धूमस्तत्राग्निरिति।**

प. शब्दस्तात्पर्यग्राहकः। तस्य निरूपकतासम्बन्धेन ज्ञानेऽन्वयः। 'इत्याकारकम्' इति पाठे तु आकारो विषयत्वं तस्मिन्नभेदसम्बन्धेन प्रकारत्वान्वयः। निरूपकं कप्रत्ययार्थः। तस्याभेदेन ज्ञानेऽन्वय इत्याहुः। **यत्र धूमस्तत्राग्निरितीति।** साहचर्यं सामानाधिकरण्यम्। नियमो नियमवान्। 'कृदभिहितो भावो द्रव्यवत्प्रकाशते' इति न्यायात्। तदर्थश्च कृता बोध्यमानो भावो धात्वर्थः। द्रव्यवत्स्वाश्रयवत्। प्रकाशते भावार्थको भावाश्रयवाचको भवतीति फलितमिति केचित्। तन्न, भावस्य स्वाश्रयवद्बोधासम्भवात्। किन्तु द्रव्यवदित्यत्र सप्तम्यन्ताद्वतिः स्वाश्रये बोध्यमान एवेति यावत्। तथा च 'कृद्बोध्यमानो भावः स्वाश्रयविशेषणतयापि प्रकाशते' इति फलितम्। अन्ये तु द्रव्यवद्विशेष्यवत्तया वतिप्रत्ययसामर्थ्यात् क्वचिद्विशेषणतया

**व्याप्यस्य पर्वतादिवृत्तित्वं पक्षधर्मता । अनुमानं द्विविधम् ।**

---

**न्या.** नियतसाहचर्यं व्याप्तिरित्यर्थः । नियतत्वं व्यापकत्वम् । साहचर्यं सामानाधिकरण्यम् । तथा च धूमनियतवह्निसामानाधिकरण्यं व्याप्तिरित्यर्थः । वह्नौ धूमव्यापकत्वं च धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् । तथा हि । धूमाधिकरणे चत्वरमहानसादौ वर्तते योऽभावः घटत्वाद्यवच्छिन्नप्रतियोगिताकाभावः न तु वह्नित्वावच्छिन्नप्रतियोगिताकाभावः । कुतः । पर्वतादौ वह्नेः सत्त्वात् । एवं सति धूमाधिकरणे पर्वतादौ वर्तमानस्य घटाद्यभावस्य प्रतियोगितावच्छेदकं घटत्वादिकमनवच्छेदकं वह्नित्वं, तद्वत्त्वं वह्नौ वर्ततेऽतो धूमव्यापकत्वं वह्नौ वर्तते । तथा च धूमव्यापकवह्निसामानाधिकरण्यं व्याप्तिरिति फलितमिति इयमन्वयव्याप्तिः सिद्धान्तानुसारेण । पूर्वपक्षीयव्याप्तिस्तु साध्याभाववदवृत्तित्वम् । साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकप्रतियोगितावच्छेदकसंबन्धावच्छिन्नप्रतियोगिता-

**वा.** **व्याप्यस्येति** । धूमादेरित्यर्थः । पर्वतादिवृत्तित्वं पर्वतादिसम्बन्धः । अनुमानं विभजते । **द्विविधमिति** । स्वार्थानुमितित्वपरार्थानुमितित्वे अनुमितित्वव्याप्यजाती । तद्धमाव-

**नि.** व्याप्तिं निरूप्य पक्षधर्मतां निरूपयति । **व्याप्यस्येति** । व्याप्यस्य व्याप्तिविशिष्टस्य धूमादिरूपहेतोर्यत्पर्वतादिवृत्तित्वं तदेव पक्षधर्मतेत्युच्यत इत्यर्थः । पूर्वं व्याप्तिविशिष्टपक्षधर्मताज्ञानमिति परामर्शलक्षणे व्याप्तिविशिष्टं व्याप्तिविषयकं यत्पक्षधर्मताज्ञानं तत्परामर्श इत्यर्थ इति विशिष्टपदस्य पक्षधर्मताज्ञानपदेन सह कर्मधारयमभिप्रेत्य व्याचख्यावन्नंभट्टः । तत्तु व्याप्यस्य पर्वतादिवृत्तित्वं पक्षधर्मतेतीमं ग्रन्थं विरुद्धे । व्याप्तिविशिष्टपक्षधर्मतेत्यस्मद्व्याख्या ग्रन्थमिममनुरुन्द्धे । अनुमानं विभजते । **अनुमानमिति** । स्वार्थानुमानं लक्षयति । **स्वार्थमिति** । परार्थानुमानं लक्षयति ।

**प.** पीत्यर्थमाहुः । तथा च नियतं साहचर्यमिति फलितम् । नियतत्वं व्यापकनिरूपितत्वम् । यत्र धूमस्तत्रेति पदत्रयं तात्पर्यग्राहकम् । वह्निपदं धूमव्यापकवह्निसामानाधिकरण्यलक्षकम् । इतिपदार्थश्चाभेदः । साहचर्येऽन्वयः । 'धूमव्यापकवह्निसामानाधिकरण्याभिन्नं नियतसामानाधिकरण्यं व्याप्तिः' इत्यन्वयः । अत्र केचित् । यत्र धूमस्तत्राग्निरित्येकं पदमव्ययम् । तस्य तादृशवाक्यमर्थः । प्रतिपाद्यत्वमिति पदार्थः । अन्वयश्चास्य नियतसाहचर्ये । यत्र धूमस्तत्राग्निरिति पदे धूमपदं धूमव्यापकलाक्षणिकम् । तस्य वह्नावभेदेनान्वयः । यत्र तत्रेति तात्पर्यग्राहकम् । अथवा यत्र धूमस्तत्राग्निरिति वाक्यात्प्रथमतो धूमवह्निसामानाधिकरण्यबोधः । तदनन्तरं व्यापकत्वस्य मानसबोधः । तावता नियतसाहचर्यस्य तादृशवाक्यात्प्रतिपाद्यत्वमित्याहुः ॥

इति पट्टाभिरामकृता तर्कसंग्रहटिप्पणी समाप्ता ॥

---

स्वार्थं परार्थं चेति। स्वार्थं स्वानुमितिहेतुः। तथा हि। स्वयमेव भूयोदर्शनेन यत्र धूमस्तत्राग्निरिति महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतः, तद्गते च पर्वते धूमं पश्यन् अग्नौ सन्दिहानः व्याप्तिं स्मरति यत्र धूमस्तत्राग्निरिति। तदनन्तरं वह्निव्याप्य-धूमवानयं पर्वत इति ज्ञानमुत्पद्यते। अयमेव लिङ्गपरामर्श इत्युच्यते। तस्मात् पर्वतो वह्निमान् इति अनुमितिरुत्पद्यते। तदेतत्स्वार्थानुमानम्। यत्तु स्वयमेव धूमादग्निमनुमाय परप्रति-पत्त्यर्थं पञ्चावयववाक्यं प्रयुङ्क्ते तत्परार्थानुमानम्। यथा पर्वतो

---

न्या. वच्छेदकावच्छिन्नवैयधिकरण्यावच्छिन्नाभाववन्निरूपितहेतुतावच्छेदकसंबन्धावच्छिन्न-वृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावो व्याप्तिरित्यर्थः। तच्च केवलान्वय्यव्याप्तमिति सिद्धान्तानुसरणम्। अनुमानं विभजते। **स्वार्थमिति**। स्वार्थानुमानं नाम न्याया-

वा. च्छिन्नकरणेऽनुमाने क्रमेण स्वार्थपरार्थानुमाने। स्वार्थानुमानस्वरूपमाह। **स्वानुमितीति**। स्वार्थानुमितिरित्यर्थः। परार्थानुमानस्वरूपमाह। **यत्त्विति**। **तत्परार्थेति**। तदिति

नि. **परार्थमिति**। अनुमानस्वरूपं दर्शयितुं प्रक्रियामाचष्टे। **स्वयमेवेति**। तद्गते पर्वतगते, अग्नावित्यत्र सप्तम्यर्थो विषयत्वम्। तथा च पर्वतवृत्तिवह्निविषयकसन्देह-वानित्यर्थः। पर्वत इत्यत्र सप्तम्यर्थो विशेष्यत्वं, धूममिति च द्वितीयार्थः प्रकारत्वं, पश्यन्निति दृशिधात्वर्थः चाक्षुषप्रत्यक्षम्। तथा च पर्वतविशेष्यकधूमप्रकारकचाक्षुष-प्रत्यक्षवानित्यर्थः। पर्वतो धूमवानित्याकारकचाक्षुषप्रत्यक्षे पर्वतस्य विशेष्यत्वात्, धूमस्य विशेषणत्वात्, पर्वतविशेष्यकं धूमप्रकारकं पर्वतो धूमवानित्याकारकं ज्ञानं तद्वान् पुरुषः। व्याप्तिमिति द्वितीयार्थो विषयत्वं, धात्वर्थः स्मृत्यात्मकज्ञानं, आख्यातार्थ आश्रयत्वम्। यत्र धूमस्तत्राग्निरिति व्याप्तिविषयकस्मरणाकारप्रदर्शनम्। तथा च यत्र धूमस्तत्राग्निरितीत्याकारकव्याप्तिविषयकं यत्स्मृत्यात्मकं ज्ञानं तदाश्रय इत्यर्थः। तदनन्तरं व्याप्तिस्मरणानन्तरं वह्निव्याप्यधूमवानित्याकारकं ज्ञानमुत्पद्यते जन्यते। **अयमेवेति**। लिङ्गपरामर्शमपेक्ष्य पुल्लिङ्गनिर्देशः। **तस्मादिति**। वह्निव्याप्य-धूमवानयं पर्वत इत्याकारकलिङ्गपरामर्शादेवेत्यर्थः। **तदिति**। तादृशलिङ्गपरामर्श इत्यर्थः। स्वार्थानुमानमपेक्ष्य नपुंसकलिङ्गनिर्देशः। स्वार्थानुमानं निरूप्य परार्थानुमानं प्रदर्शयति। **यत्त्विति**। परार्थानुमानवाक्यमित्यनेनास्यान्वयः। **तदिति**। पञ्चा-वयवानुमानवाक्यमित्यर्थः। **परार्थानुमानमिति**। नन्विदमसङ्गतं वाक्यस्यानु-मानत्वासम्भवात्, अनुमितिकरणं ह्यनुमानं, न हि पञ्चावयववाक्यमनुमितौ करणी-भवितुं प्रभवति। आचष्टे चोपरिष्टात् ग्रन्थकृदपि स्पष्टं स्वार्थानुमितिपरार्थानुमित्योर्लिङ्ग-

**वह्निमान् धूमवत्त्वात्, यो यो धूमवान् सोऽग्निमान् यथा महानसः, तथा चायम्, तस्मात्तथा इति । अनेन वाक्येन प्रतिपादितााल्लिङ्गात्परोऽप्यग्निं प्रतिपद्यते। प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः। पर्वतो वह्निमान् इति प्रतिज्ञा। धूमवत्त्वात् इति हेतुः। यो यो धूमवान् सोऽग्निमान् यथा महानस इत्युदाहरणम् । तथा**

---

**न्या.** प्रयोज्यानुमानम् । तत्प्रयोज्यानुमानं परार्थानुमानम् । न्यायत्वं च प्रतिज्ञाद्यवयव-

**वा.** लुप्तपञ्चमीकमव्ययम् । प्रयोज्यत्वं पञ्चम्यर्थः । पञ्चावयववाक्यप्रयोज्यमित्यर्थः । प्रयोज्यत्वं स्वजन्यमहावाक्यार्थबोधजन्यत्वम् । विजातीयानुमितिजनकतावच्छेदकं विजातीयपरामर्शत्वं मानसत्वव्याप्यम्। तदवच्छिन्नजनकतावच्छेदकव्याप्तिज्ञानत्वमपि तथा। तदवच्छिन्नं प्रति महावाक्यार्थबुद्धित्वेन कारणत्वात्पञ्चावयववाक्यजन्यमहावाक्यार्थबोधजन्यत्वरूपं पञ्चावयववाक्यप्रयोज्यत्वं परार्थानुमानस्य । अथवा यदिति लुप्तचतुर्थीकमव्ययम् । यदर्थमित्यर्थः । यत्पदार्थः व्याप्तिज्ञानम् । तत्पदं व्याप्तिज्ञानपरम् यदर्थं पञ्चावयववाक्यं प्रयुङ्क्ते तत्परार्थानुमानमित्यर्थः । पञ्चावयववाक्यान्याह । **यथेति** । **पर्वत इति** । अत्र वह्निमतोऽभेदेन पर्वतेऽन्वयाद्वह्निमदभिन्नः पर्वत इति बोधः । **धूमेति** । पञ्चम्यर्थो ज्ञानजन्यज्ञानविषयत्वम् । प्रथमज्ञाने धूमस्यान्वयाद्धूमज्ञानजन्यज्ञानविषयत्वमिति बोधः । **यो य इति ।** अत्र द्विरुक्तयच्छब्दसमभिव्याहृतवह्निपदस्य धूमव्यापकवह्निरर्थः । यत्तत्पदे तात्पर्यग्राहके । धूमवत्पदार्थस्य महानसपदार्थेऽन्वयः । धूमवदन्वितमहानसपदार्थे वह्निमत्पदार्थस्याभेदेनान्वयः । तादृशा-

**नि.** परामर्श एव करणम्, तस्माल्लिङ्गपरामर्शोऽनुमानामिति । अतः पञ्चावयववाक्यादुत्पद्यमानश्रोत्रलिङ्गपरामर्श एव तदीयानुमितौ करणीभवितुं प्रभवेत्, न तु पञ्चावयववाक्यम्। अतः कथं परार्थानुमानमिति चेन्न परार्थानुमानमित्यत्र परार्थञ्च तदनुमानञ्चेति न कर्मधारयः । किन्तु परार्थानुमानं यस्मादिति पञ्चमीगर्भबहुव्रीहिः । तेन पञ्चावयववाक्यं परार्थानुमानजनकमिति लभ्यते । संभवति चेदं, पञ्चावयववाक्यजन्यलिङ्गपरामर्शस्य परार्थानुमानत्वेन पञ्चावयववाक्यस्य परार्थानुमानजनकत्वस्य उपपत्तेः । पञ्चावयववाक्यं वर्णयति । **यथा पर्वतो वह्निमानिति । तथा चायमिति ।** अयं पर्वतश्च, तथा धूमवान् । तस्माद्धूमवत्त्वात्, तथा वह्निमान् । **अनेनेति ।** पञ्चावयववाक्येनेत्यर्थः । **अग्निं प्रतिपद्यत इति** । द्वितीयार्थो विषयत्वं प्रतिपूर्वकपद्धातोरनुमित्यात्मकज्ञानामित्यर्थः । आख्यातार्थ आश्रयत्वम् । तथा च वह्निविषयकानुमित्यात्मकज्ञानाश्रयो भवतीत्यर्थः । पञ्चावयववाक्यघटकीभूतानामवयवानां नामानि प्रतिपादयति । **प्रतिज्ञेति** । उक्तानुमानवाक्ये प्रतिज्ञादीन् विभज्य दर्शयति । **पर्वतो वह्निमानिति ।** अनुमितिकरणत्वरूपलक्षणमनुमाने सङ्गमयति ।

चायं इत्युपनयः। तस्मात्तथेति निगमनम्। स्वार्थानुमितिपरार्थानुमित्योः लिङ्गपरामर्श एव करणम्। तस्माल्लिङ्गपरामर्शोऽनुमानम्। लिङ्गं त्रिविधम्। अन्वयव्यतिरेकि केवलान्वयि केवलव्यतिरेकि चेति। अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वयव्यतिरेकि। यथा वह्नौ साध्ये धूमवत्त्वम्। यत्र धूमस्तत्राग्निः यथा महानसः इत्य-

---

न्या. पञ्चकसमुदायत्वम्। अवयवत्वं च प्रतिज्ञाद्यन्यतमत्वम्। **अन्वयेनेति**। साध्यसामानाधिकरण्यरूपान्वयव्याप्तिमानित्यर्थः। **व्यतिरेकेणेति**। व्यतिरेको नामाभावः।

वा. न्वयतात्पर्यग्राहकमेव यथेति। तथा च धूमवन्महानसं धूमव्यापकवह्निमदित्यन्वयबोधः। धूमवति वह्निभाने वह्निमद्वृत्तित्वस्य धूमे भानाद्धूमव्यापकवह्निसमानाधिकरणो धूम इति पर्यवसितो बोधः। **तथेति**। धूमवानित्यर्थः। इदंपदार्थः संनिकृष्टपर्वतः। तथा च धूमवान्पर्वत इति बोधः। **तस्मादिति**। व्याप्तिपक्षधर्मताविशिष्टधूमस्तत्पदार्थः। तथा च व्याप्तिपक्षधर्मताविशिष्टधूमज्ञानज्ञाप्यवह्निमान्पर्वत इति बोधः। उपसंहरति। **तस्मादिति। लिङ्गपरामर्श इति**। धूमो वह्निव्याप्य इत्याकारक इत्यर्थः। पुनरनुमानं विभजते। **लिङ्गमिति। अन्वयव्यतिरेकीति**। अन्वयोऽन्वयव्याप्तिः। व्यतिरेको व्यतिरेकव्याप्तिः। तदुभयवदित्यर्थः। **केवलान्वयीति**। केवलपदेन साध्यव्यतिरेकव्यवच्छेदः। व्यतिरेकश्चाभावमात्रम्। अन्वयित्वं चाविवक्षितम्। तथा च व्यतिरेकाप्रतियोगिसाध्यकत्वं केवलान्वयित्वमित्यर्थः। **केवलव्यतिरेकीति**। अत्र वक्ष्यमाणस्वरूपग्रन्थपर्यालोचनया यदा अन्वयव्याप्तिग्रहाविषयत्वे सति व्यतिरेकव्याप्तिग्रहविषयत्वम् तदा तस्य केवलव्यतिरेकित्वम्। क्रमेण स्वरूपमाह। **अन्वयेनेति**। अन्वयः साध्यम्। व्यतिरेकः साध्याभावः। निरूपितत्वं तृतीयार्थः। साध्यनिरूपिता हेतुनिष्ठा साध्याभावनिरूपिता च हेत्वभावनिष्ठा व्यापकत्वरूपा। तद्वत्त्वं च हेतोः स्वाश्रयप्रतियोगित्वसंबन्धेन। **यत्र धूम इत्यादि**। एतस्य व्याप्तिबोधकत्वं पूर्वमेवोक्तम्। यत्र वह्निर्नास्तीत्यादेरपि धूमपद-

नि. **स्वार्थेति**। अनुमानं निष्कर्षयति। **तस्मादिति**। अनुमितिकरणत्वादित्यर्थः। लिङ्गं विभजते। **लिङ्गमिति**। लिङ्गं हेतुः। **अन्वयव्यतिरेकीति**। अन्वयः अन्वयव्याप्तिः, व्यतिरेकः व्यतिरेकव्याप्तिः, अन्वयश्च व्यतिरेकश्चान्वयव्यतिरेकौ अन्वयव्यतिरेकावस्य स्त इत्यन्वयव्यतिरेकी। तदेतदभिप्रेत्याह। **अन्वयेन व्यतिरेकेण चेति**। अभेदः तृतीयार्थः। तथा चान्वयाभिन्नव्यतिरेकाभिन्नव्याप्तिमत्त्वं अन्वयव्यतिरेकिहेतोर्लक्षणम्। लक्ष्यं दर्शयति। **यथेति**। वह्नौ वह्नित्वावच्छिन्ने साध्ये सति धूमवत्त्वम्। धूमः अन्वयव्यतिरेकिहेतुरित्यर्थः। अत्रान्वयव्याप्तिं व्यतिरेकव्याप्तिश्चाभिनीय दर्शयति। **यत्र धूमस्तत्राग्निरिति**। इदमत्र बोध्यम्।

**न्वयव्याप्तिः। यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा महाह्रदः इति व्यतिरेकव्याप्तिः। अन्वयमात्रव्याप्तिकं केवलान्वयि। यथा घटोऽभिधेयः प्रमेयत्वात् पटवत् इति। अत्र प्रमेयत्वाभिधेयत्व-**

---

न्या. तथा च साध्याभावहेत्वभावयोर्व्याप्तिर्व्यतिरेकव्याप्तिः। इयं च व्याप्तिः यत्र यत्र वह्न्यभावस्तत्र तत्र धूमाभाव इति। यत्रपदवीप्सया वह्न्यभाववति यावति धूमाभावग्रहणे यावत्पदस्य व्यापकत्वपरतया धूमाभावे वह्न्यभावव्यापकत्वं लभ्यते। वह्न्यभावे धूमाभावव्याप्यत्वं च लभ्यते। वह्न्यभावनिष्ठव्याप्यत्वं च स्वाश्रयवह्न्यभावव्यापकीभूताभावप्रतियोगित्वसंबन्धेन धूमनिष्ठतया गृह्यत इति व्यतिरेकव्याप्तिमत्त्वेनान्वयव्याप्तिमत्त्वेन चान्वयव्यतिरेकित्वेन गीयते। व्यतिरेकपरामर्शाकारश्च वह्न्यभावव्यापकीभूताभावप्रतियोगिधूमवानिति। केवलान्वयिनो लक्षणमाह। **अन्वयेति**। व्यतिरेकव्याप्तिशून्यत्वे सति अन्वयव्याप्तिमत्त्वं केवलान्वयित्वम्। अथवा केवलान्वयिसाध्यकत्वं तत्। एतच्च लक्षणं हेतोर्व्यतिरेकित्वेऽपि सङ्गच्छते। साध्यस्य केवलान्वयित्वादेव व्यतिरेकव्याप्तेरभावादन्वयमात्रव्याप्तिकं केवलान्वयीति मूलोक्तलक्षणमुपपन्नम्। अत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम्। न चैवमाकाशाभावे संयोगाभावे चाव्याप्तिरिति वाच्यम्। स्वविरोधिवृत्तिमदत्यन्ताभावाप्रतियोगित्वस्यैव तदर्थत्वात्। तथा च तयोः एकजातीय-

वा. समभिव्याहृतनञो वह्न्यभावव्यापकाभावपरत्वाद्बोध्यम्। **व्यतिरेकव्याप्तिर्ना-**

नि. हेतुसाध्ययोर्व्याप्तिरन्वयव्याप्तिः, साध्याभावहेत्वभावयोर्व्याप्तिर्व्यतिरेकव्याप्तिः, अन्वयव्याप्तौ हेतुर्व्याप्यः, साध्यं व्यापकं, व्यतिरेकव्याप्तौ साध्याभावो व्याप्यः हेत्वभावो व्यापकः, व्याप्यस्य वचनं पूर्वं व्यापकस्य ततः परम्। अतोऽन्वयव्याप्तौ हेतोः प्रथमं निर्देशः। अनन्तरं साध्यस्य। व्यतिरेकव्याप्तौ साध्याभावस्य प्रथमं निर्देशः, अनन्तरं हेत्वभावस्य। प्रकृते च धूमो हेतुः, वह्निस्साध्यः। अत एवान्वयव्याप्तौ धूमः प्रथमं निर्दिष्टः, अनन्तरं साध्यम्। यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्तीति व्यतिरेकव्याप्तौ साध्याभावः प्रथमं निर्दिष्टः, अनन्तरं हेत्वभाव इति। केवलान्वयिनं लक्षयति। **अन्वयमात्रेति**। केवलमन्वयः अन्वयव्याप्तिर्यस्य तत् केवलान्वयि। यस्य लिङ्गस्यान्वयव्याप्तिरेव वर्तते व्यतिरेकव्याप्तिश्च नास्ति तत् केवलान्वयिलिङ्गम्। अयमेवार्थः अन्वयमात्रव्याप्तिकमित्यनेनापि दर्शितः। केवलान्वयिस्थले पञ्चावयववाक्यं दर्शयति। **यथा घटोऽभिधेय इति**। अत्र घटः पक्षः, अभिधेयत्वं साध्यं, प्रमेयत्वं हेतुः। अभिधेयत्वं नाम वाच्यत्वं, प्रमेयत्वं नाम प्रमाविषयत्वम्। **पटवदिति**। यो यः प्रमेयत्ववान् स सोऽभिधेयत्ववान्, यथा पट इत्यर्थः। अथ तथा चायं तस्मात्तथेति उपनयनिगमनावयवद्वयं पूर्णीयम्। तदर्थश्च—अयं घटश्च तथा प्रमेयत्ववान्, तस्मात् प्रमेयत्ववत्त्वात् तथा अभिधेयत्ववानिति। अत्र प्रमेयत्वरूपहेतौ अन्वय-

योऽव्यतिरेकव्याप्तिर्नास्ति सर्वस्यापि प्रमेयत्वादभिधेयत्वाच्च । व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि । यथा पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वात् । यदितरेभ्यो न भिद्यते न तद्गन्धवत् यथा जलम् । न चेयं

---

न्या. संबन्धेन सर्वत्र विद्यमानत्वान्नाव्याप्तिः । केवलव्यतिरेकिणो लक्षणमाह । **व्यतिरेकेति** । निश्चितान्वयव्याप्तिशून्यत्वे सति व्यतिरेकव्याप्तिमत्त्वं केवलव्यतिरेकित्वम् । **यथेति** । अत्र पृथिवीत्वावच्छिन्नं पक्षः । पृथिवीतरजलादिभेदः साध्यम् । गन्धवत्त्वं हेतुः । अत्र यद्गन्धवत्तदितरेभ्यो भिद्यते यथेत्यन्वयदृष्टान्ताभावाद्गन्धव्यापकेतरभेदसामानाधिकरण्यरूपान्वयव्याप्तिग्रहासंभवः । किं तु यत्र यत्र पृथिवीतरभेदाभावस्तत्र तत्र गन्धाभावो यथा जलादिकमिति व्यतिरेकदृष्टान्ते जलादावितरभेदाभावरूपसाध्याभावव्यापकता गन्धाभावे गृह्यते । इममेवार्थं मनसि निधाय यदितरेभ्यो न भिद्यते न तद्गन्धवत् यथा जलमिति ग्रन्थेन मूलकारो व्यतिरेकव्याप्तिमेव प्रदर्शितवान् । एवंप्रकारेण व्यतिरेकव्याप्तिग्रहानन्तरमितरभेदाभावव्यापकीभूताभावप्रतियोगिगन्धवती पृथिवीत्याकारकव्यतिरेकपरामर्शात्पृथिवीत्वावच्छिन्नोद्देश्यतानिरूपितेतरभेदत्वावच्छिन्नविधेयताका पृथिवी इतरभेदवतीत्याकारकानुमितिर्जायत इति तत्त्वम् । यथाश्रुतमूलार्थस्तु यज्जलं, इतरेभ्यो न भिद्यते इतरभेदाभाववत्, न तद्गन्धवत् जलमितरभेदाभावव्यापकगन्धाभाववत् । न चेयं तथा । इयं पृथिवी न तथा गन्धाभाववती

वा. नि. स्तीति । व्यतिरेकस्यैवाप्रसिद्धत्वादिति भावः । तदेवाह । **सर्वस्येति** । व्याप्तिर्वर्तते इत्यर्थः । यो यः प्रमेयत्ववान् स सोऽभिधेयत्ववान्, यथा घटः इत्यन्वयव्याप्तेः दर्शितत्वात् । व्यतिरेकव्याप्तिः परं नास्तीत्याह । **अत्र प्रमेयत्वाभिधेयत्वयोरिति** । अत्र हेतुमाह । **सर्वस्यापीति** । अत्र व्यतिरेकव्याप्तौ सत्यां यत्र अभिधेयत्वं नास्ति तत्र प्रमेयत्वं नास्तीति यथा अमुक इति । **दृष्टान्तो नास्तीति** । अभिधेयत्वाभाववतः प्रमेयत्वाभाववतश्चाप्रसिद्धेरित्यर्थः । केवलव्यतिरेकिणो लक्षणमाह । **व्यतिरेकमात्रव्याप्तिकमिति** । केवलं व्यतिरेकः अस्यास्तीति केवलव्यतिरेकी, यस्मिन् हेतौ व्यतिरेकव्याप्तिरेव विद्यते अपरं नास्ति स हेतुः केवलव्यतिरेकीत्यर्थः । अयमेवार्थः व्यतिरेकमात्रव्याप्तिकमिति अनेन प्रदर्शितः । केवलव्यतिरेकिहेतुमुदाहरति । **यथा पृथिवीति** । इतरेभ्यो जलादिभ्यः, प्रतियोगित्वं पञ्चम्यर्थः, भिद्धातोः भेदोऽर्थः, भेदश्च अन्योन्याभावः, आख्यातार्थः आश्रयत्वम् । तथा च जलादिवृत्तिप्रतियोगिकान्योन्याभाववतीत्यर्थः । अत्र व्यतिरेकव्याप्तौ उदाहरणमाह । **यदितरेभ्यो न भिद्यत इति** । इतरप्रतियोगिकभेदाभाववदित्यर्थः । इयन्तु पृथिवी न तथा गन्धाभाववती न अपि तु गन्धवत्येवेत्यर्थः । तस्मात् गन्धवत्त्वात् न तथा, इतरभेदाभाववती न । किंतु इतरभेदवत्येवेत्यर्थः । अत्र गन्धवत्त्वरूपहेतौ व्यतिरेकव्याप्तिः यदितरेभ्यो न भिद्यते न तत् गन्धवत् इत्य-

**तथा। तस्मान्न तथेति। अत्र यद्गन्धवत्तदितरभिन्नम् इत्यन्वयदृष्टान्तो नास्ति पृथिवीमात्रस्य पक्षत्वात्। सन्दिग्धसाध्यवान् पक्षः। यथा धूमवत्त्वे हेतौ पर्वतः। निश्चितसाध्यवान् सपक्षः। यथा तत्रैव महानसः। निश्चितसाध्याभाववान् विपक्षः। यथा तत्रैव महाह्रदः।**

---

न्या. न, किंतु तदभावगन्धवती। तस्मान्न तथा। तस्मात् गन्धाभावाभाववत्त्वात, न तथा इतरभेदाभाववती न। किंतु इतरभेदाभावाभाववती इतरभेदवतीति पर्यवसन्न इति। पक्षलक्षणमाह। **संदिग्धेति**। साध्यप्रकारकसंदेहविशेष्यत्वं पक्षत्वम्। संदेहश्च पर्वतो वह्निमान्न वेत्याकारः। इदं च लक्षणमनुमितेः पूर्वं साध्यसंदेहो नियमेन पक्षे जायत इत्यभिप्रायेण प्राचीनैः कृतम्। गगनविशेष्यकमेघप्रकारकसंदेहाभावदशायामपि गृहमध्यस्थपुरुषस्य घनगर्जितश्रवणेन गगनं मेघवदित्याकारकगगनत्वावच्छिन्नोद्देश्यतानिरूपितमेघत्वावच्छिन्नविधेयताकानुमितिदर्शनात्प्राचीनलक्षणं विहाय नवीनैरनुमित्युद्देश्यत्वं पक्षत्वमिति स्थिरीकृतम्। सपक्षलक्षणमाह। **निश्चितसाध्येति**। साध्यप्रकारकनिश्चयविशेष्यत्वं सपक्षत्वम्। निश्चयश्च महानसो वह्निमानित्याकारकः। विपक्षलक्षणमाह। **निश्चितसाध्याभाववानिति**। साध्याभावप्रकारकनिश्चय-

वा. न तथेतीति पञ्चावयवप्रतिपाद्यं लिङ्गम्। **अन्वयदृष्टान्तो नास्तीति**। निश्चितसाध्यसाधनवान्नास्तीत्यर्थः। तदेवाह। **पृथिवीमात्रस्येति**। सर्वपृथिव्यां साध्यसंशयात्। तथा च साध्यनिश्चयः कुत्रापि नास्तीति भावः। इत्थं च हेतावन्वयव्याप्तिग्रहो न संभवतीति पर्यवसितोऽर्थः। प्रसंगात्पक्षादीनां लक्षणमाह। **सन्दिग्धेति**। संदिग्धं संदेहप्रकारीभूतं साध्यम् यत्रेति विग्रहे सन्देहप्रकारीभूतसाध्यवानित्यर्थः। सन्देहः साध्यपारतन्त्र्येण धर्मिण्येवान्वेतीति विशेष्यतासंबन्धेन साध्यप्रकारकसंदेहवत्त्वं लक्षणं पर्यवसितम्। **निश्चितेति**। विशेष्यतया साध्यप्रकारकनिश्चयवत्त्वम्। पूर्ववदर्थः। **निश्चितसाध्याभावेति**। पूर्ववत्।

नि. नेन दर्शिता, अन्वयव्याप्तिस्तु न सम्भवतीत्याह। **अत्र यदिति**। अन्वयदृष्टान्तः, अन्वयव्याप्तौ दृष्टान्तः। ननु गन्धवत् यत् तदितरभिन्नं यथा घट इति अन्वयदृष्टान्तो भवेत्। तत् कथम् अन्वयदृष्टान्तो नास्तीति। तदाह। **पृथिवीमात्रस्येति**। तथा च पक्षातिरिक्तस्यैव दृष्टान्तत्वेन घटस्य च पक्षान्तर्गतत्वात् न दृष्टान्तत्वं संभवतीति भावः। प्रसङ्गात् पक्षलक्षणमाह। **सन्दिग्धेति**। संदिग्धञ्च तत् साध्यम् च सन्दिग्धसाध्यं तदस्यास्तीति तद्वान् पक्ष इत्यर्थः। धूमानुमाने धूमवत्त्वहेतुस्थले। **पर्वत इति**। पर्वते वह्निमत्त्वरूपसाध्यं सन्दिग्धं अतः स पक्ष इत्यर्थः। प्रसङ्गात् सपक्षं लक्षयति। **निश्चितेति**। तत्रैव, धूमानुमान एव। विपक्षं लक्षयति। **निश्चितेति**। तत्रैव, धूमानुमान एव।

**सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च हेत्वाभासाः । सव्यभिचारोऽनैकान्तिकः । स त्रिविधः—साधारणासाधारणानुपसंहारिभेदात् । तत्र साध्याभाववद्वृत्तिः साधारणः । यथा**

---

न्या. विशेष्यत्वं विपक्षत्वम् । निश्चयश्च ह्रदो वह्न्यभाववानित्याकारकः । सद्धेतून्निरूप्य हेत्वाभासान्निरूपयति । **सव्यभिचारेति** । हेतुवदाभासन्त इति हेत्वाभासाः दुष्टहेतवः । दोषाश्च व्यभिचारविरोधसत्प्रतिपक्षासिद्धिबाधाः । एकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसंबन्धेन एतद्विशिष्टहेतव इत्यर्थः । यद्विषयकत्वेन ज्ञानस्यानुमितितत्करणान्यतरप्रतिबन्धकत्वं तत्त्वं दोषसामान्यलक्षणम् । हेतौ दोषज्ञाने सत्यनुमितिप्रतिबन्धः तत्करणप्रतिबन्धो वा जायते । अतो वादिनिग्रहार्थं वादिनोद्भावितहेतौ दोषोद्भावनार्थं दुष्टनिरूपणमिति भावः । सव्यभिचारं विभज्य दर्शयति । **साधारणेति** । साधारणाद्यन्यतमत्वं सव्यभिचारसामान्यलक्षणम् । साधारणत्वं साध्याभाववद्वृत्तित्वम् ।

वा. प्रसङ्गात् दुष्टहेतून् निरूपयति । **सव्यभिचारेति** । सामान्यलक्षणं तु यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तद्वत्त्वम् । व्यभिचाराद्यन्यतमवत्त्वं वा । तेनानुपसंहार्यादौ नाव्याप्तिः । सव्यभिचारः हेतुनिष्ठसाध्याभाववद्वृत्तित्वादिरूपव्यभिचारसहितः । **विरुद्धेति** । हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वरूपविरोधसहितः । सत्प्रतिपक्षः सन् साध्याभावव्याप्तिपक्षधर्मताविशिष्टः प्रतिपक्षः प्रतिहेतुर्यस्येति विग्रहे साध्याभावसाधकहेत्वन्तरविशिष्टः । असिद्धः हेत्वभाववत्पक्षादिरूपासिद्धिविशिष्टः । बाधितः साध्याभाववत्पक्षादिरूपबाधविशिष्टः । सव्यभिचारशब्दपर्यायमाह । **अनैकान्तिक इति** । एकान्ते साध्यवत्येव वर्तत इति ऐकान्तिकः । न ऐकान्तिक इति विग्रहे सव्यभिचारपदसमानार्थकत्वम् । साधारणाद्यन्यतमत्वम् सव्यभिचारत्वम् । तं विभजते । **त्रिविध इति** । साधारणः साध्यतदभाववति वर्तमानः तत्र साध्यवद्वृत्तित्वस्यानुपयोगादवशिष्टभागमादाय स्वरूपमाह । **साध्याभावेति** । एतज्ज्ञानं साध्याभाववदवृत्तित्वरूपव्याप्तिग्रहप्रतिबन्धकम् । असाधारणस्व-

नि. एतावता प्रबन्धेन सद्धेतवो निरूपिताः । इदानीं असद्धेतवो निरूपणीयाः । अतस्तान् विभजते । **सव्यभिचार इति । हेत्वाभासा इति** । हेतुवत् आभासन्ते इति हेत्वाभासाः असद्धेतवः इत्यर्थः । प्रथमोद्दिष्टं सव्यभिचारं लक्षयति । **सव्यभिचार इति । अनैकान्तिक इति** । एकान्तो नियमः, अव्यभिचार इति यावत् । सोऽस्यास्तीत्यैकान्तिकः, अव्यभिचारीत्यर्थः । स न भवतीत्यनैकान्तिकः । अतस्सव्यभिचारोऽनैकान्तिकः । तत्र साधारणासाधारणानुपसंहारिमध्ये इत्यर्थः । **साध्याभाववद्वृत्तिरिति** । साध्यस्याभाव इत्यत्र प्रतियोगित्वं षष्ठ्यर्थः । तथा च साध्यप्रतियोगिकाभाववद्वृत्तिर्यो हेतुः सः साधारणानैकान्तिकहेत्वाभास इत्यर्थः ।

**पर्वतो वह्निमान् प्रमेयत्वात्। अत्र प्रमेयत्वस्य वह्न्यभाववति (साध्याभाववति) ह्रदे विद्यमानत्वात्। सर्वसपक्षविपक्षव्यावृत्तोऽसाधारणः। यथा शब्दो नित्यः शब्दत्वात्। अत्र शब्दत्वं सर्वेभ्यो नित्येभ्योऽनित्येभ्यो व्यावृत्तं शब्दमात्रवृत्ति। अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी। यथा सर्वमनित्यं प्रमेयत्वात्। अत्र सर्व-**

---

न्या. **पर्वतो वह्निमान् प्रमेयत्वादिति**। अत्र प्रमेयत्वरूपहेतौ वह्न्यभाववद्वृत्तित्वरूपव्यभिचारे ज्ञाते वह्न्यभाववदवृत्तित्वरूपव्याप्तिज्ञानप्रतिबन्धः फलम्। **असाधारण इति।** सर्वसपक्षव्यावृत्तत्वं साध्यवद्वृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावः। हेतौ साध्यवदवृत्तित्वे निश्चिते साध्यवद्वृत्तित्वरूपव्याप्तिज्ञानप्रतिबन्धः फलम्। अनुपसंहारिणं लक्षयति। **अन्वयेति**। उभयदृष्टान्ताभावादन्वयव्याप्तिज्ञानव्यतिरेकव्याप्तिज्ञानोभयसामग्री नास्तीत्यर्थः। किञ्चिद्विशेष्यकनिश्चयाविषयसाध्यकत्वे सति किञ्चिद्विशेष्यकनिश्चयाविषय-

वा. रूपमाह। **सर्वेति**। अत्र सर्वसपक्षव्यावृत्तिग्रहवतः पुरुषस्य साध्यसामानाधिकरण्यग्रहप्रतिबन्धः फलम्। अनुपसंहारिणमाह। **अन्वयेति**। अत्र द्विविधसहचाराग्रहेण

नि. तमुदाहरति। **पर्वत इत्यादि**। अत्र वह्निमत्त्वं साध्यम्। तत्प्रतियोगिकाभाववान्महाह्रदः, तद्वृत्तित्वं प्रमेयत्वरूपहेतोरिति साधारणानैकान्तिकत्वं तस्येत्याह। **साध्याभाववतीति**। विद्यमानत्वादित्यनन्तरं साधारणानैकान्तिकत्वं तस्येति पूरणीयम्। असाधारणानैकान्तिकं लक्षयति। **सर्वेति**। सर्वसपक्षव्यावृत्त इति बहुषु पुस्तकेषु पाठो दृश्यते। सपक्षो निश्चितसाध्यवान्, विपक्षो निश्चितसाध्याभाववान्, तद्व्यावृत्तत्वं तदवृत्तित्वं असाधारणहेतोर्लक्षणम्। **यथा शब्दो नित्य इति**। अत्र शब्दः पक्षः। नित्यत्वं साध्यम्। शब्दत्वं हेतुः। अयं चासाधारणानैकान्तिकः। सर्वसपक्षविपक्षव्यावृत्तत्वात्। सपक्षा नित्या आकाशादयः। विपक्षा अनित्या घटादयः तदुभयव्यावृत्तश्शब्दत्वरूपहेतुः। न हि आकाशादौ घटादौ वा शब्दत्वं वर्तते, तस्य शब्दमात्रवृत्तित्वादित्याह। **शब्दत्वं हीति**। नित्येभ्यो नित्यत्वरूपसाध्यवद्भ्य आकाशादिरूपेभ्यः सपक्षेभ्यः, अनित्येभ्यः नित्यत्वरूपसाध्याभाववद्भ्यः घटादिरूपविपक्षेभ्यो व्यावृत्तम्। तर्हि तत्कुत्र वर्तते इत्याह। **शब्दमात्रवृत्तीति।** अनुपसंहार्यनैकान्तिकं लक्षयति। **अन्वयव्यतिरेकदृष्टान्तरहित इति**। अन्वयव्याप्तौ व्यतिरेकव्याप्तौ च दृष्टान्तरहितो यो हेतुः सोऽनुपसंहार्यनैकान्तिकहेत्वाभास इत्यर्थः। उदाहरति। **यथा सर्वमिति**। अत्र सर्वं पक्षः, अनित्यत्वं साध्यम्, प्रमेयत्वं हेतुः। स चानुपसंहारी, अन्वयव्यतिरेकदृष्टान्तरहितत्वात्। न ह्यत्र अन्वयव्याप्तौ व्यतिरेकव्याप्तौ कश्चिद्दृष्टान्तः संभवितुं प्रभवति, पक्षातिरिक्तस्य दृष्टान्तत्वात्। न ह्यत्र पक्षातिरिक्तः कश्चिदस्ति सर्वस्यापि पक्षत्वादित्याह। **सर्वेत्यादि**। एवं त्रिप्रकारं

स्यापि पक्षत्वाद्दृष्टान्तो नास्ति। साध्याभावव्याप्तो हेतुर्विरुद्धः । यथा शब्दो नित्यः कार्यत्वात् (कृतकत्वात्) घटवत्। (अत्र कृतकत्वं हि नित्यत्वाभावेनानित्यत्वेन व्याप्तम्।) यस्य साध्याभावसाधकं हेत्वन्तरं विद्यते स सत्प्रतिपक्षः। यथा शब्दो नित्यः श्रावणात्वात् शब्दोऽनित्यः कार्यत्वात् घटवत्। असिद्धस्त्रिविधः—आश्रयासिद्धः

---

न्या. साध्याभावकत्वमेव अनुपसंहारित्वम्। एतदीयज्ञानस्य व्याप्तिसंशयजननद्वारा व्याप्तिज्ञानप्रतिवन्धः फलमिति भावः। वस्तुतस्तु अत्यन्ताभावाप्रतियोगिसाध्यादिकमेव अनुपसंहारित्वमिति बोध्यम्। विरुद्धं लक्षयति। **साध्याभावव्याप्त इति**। साध्याभावव्याप्तिः साध्याभावनिरूपितव्यतिरेकव्याप्तिः साध्यव्यापकीभूताभावप्रतियोगित्वम्। तथा च पक्षविशेष्यकसाध्याभावव्याप्यहेतुप्रकारकज्ञानात् पक्षविशेष्यक-

वा. द्विविधव्याप्त्यज्ञानं फलम्। विरुद्धं लक्षयति। **साध्याभावेति**। व्याप्तः व्यतिरेकव्याप्तिमान्। सा च साध्यव्यापकीभूताभावप्रतियोगित्वम्। हेतौ तज्ज्ञानं च पक्षे हेतुज्ञानसहित साध्यानुमितौ प्रतिबन्धकम्। सत्प्रतिपक्षमाह। **साध्याभावेति**। एतज्ज्ञान-

नि. सव्यभिचारं निरूप्य विरुद्धं निरूपयति। **साध्याभावव्याप्त इति**। साध्यस्याभाव इत्युक्तौ प्रतियोगित्वं षष्ठ्यर्थः। तथा च साध्यप्रतियोगिकाभाव इत्यर्थः। व्याप्तः व्याप्त्याश्रयः व्याप्तिविशिष्ट इत्यर्थः। साध्याभावेन व्याप्तः इत्युक्तौ तृतीयार्थो निरूपितत्वम्। एवं च साध्यप्रतियोगिकाभावनिरूपितव्याप्तिविशिष्टो यो हेतुः स विरुद्धहेत्वाभास इत्यर्थः। तदुदाहरणम्। **यथा नित्यः शब्द इति**। अत्र शब्दे पक्षे नित्यत्वरूपसाध्यस्य कृतकत्वरूपो हेतुर्विरुद्धः। साध्यप्रतियोगिकाभावनिरूपितव्याप्तिविशिष्टत्वात्। तथा हि। यत्र यत्र कृतकत्वं तत्र तत्र नित्यत्वमित्युक्तिर्नास्ति। तत्र तत्र नित्यत्वाभाव एव वर्तते। अतः कृतकत्वं व्याप्यं नित्यत्वाभावो व्यापकः। तथा च कृतकत्वरूपहेतोर्नित्यत्वरूपसाध्यप्रतियोगिकाभावनिरूपितव्याप्तिविशिष्टत्वाद्विरुद्धमित्याह। **अत्र कृतकत्वमिति**। नित्यत्वाभावरूपं यदनित्यत्वं तेन व्याप्तं तन्निरूपितव्याप्तिविशिष्टमित्यर्थः। सत्प्रतिपक्षं निरूपयति। **यस्येति**। सन् विद्यमानः प्रतिपक्षः प्रकृतसाध्यस्याभावसाधनीभूतोऽन्यो हेतुर्यस्येति व्युत्पत्त्या लभ्यमेवार्थं यस्येत्यादिलक्षणवाक्येन स्पष्टीकृत्योदाहरति। **यथा नित्यः शब्द इति**। अत्र प्रथमे शब्दः पक्षः, नित्यत्वं साध्यं, श्रावणत्वं हेतुः। श्रावणत्वं च श्रवणेन्द्रियजन्यप्रत्यक्षविषयत्वम्। द्वितीये शब्दः पक्षः, अनित्यत्वं साध्यम्, कृतकत्वं हेतुः। कृतकत्वं च उत्पादविनाशशालित्वम्। अत्र श्रावणत्वरूपहेतोः यत्साध्यं नित्यत्वं तदभावः अनित्यत्वं तत्साधकं कृतकत्वरूपहेत्वन्तरं विद्यत इति कृत्वा श्रावणत्वरूपहेतुस्सत्प्रतिपक्षः। असिद्धभेदमाह। **त्रिविध इति**। आश्रयः पक्षः असिद्धो यस्य हेतोः स आश्रयासिद्धः। उदाहरति।

**स्वरूपासिद्धो व्याप्यत्वासिद्धश्चेति । आश्रयासिद्धो यथा—गगनारविन्दं सुरभि अरविन्दत्वात् सरोजारविन्दवत् । अत्र गगनारविन्दमाश्रयः । स च नास्त्येव । स्वरूपासिद्धो यथा—शब्दो गुणः चाक्षुषत्वात् । अत्र चाक्षुषत्वं शब्दे नास्ति शब्दस्य श्रावणत्वात् । सोपाधिको व्याप्यत्वासिद्धः । साध्यव्यापकत्वे सति साधनाव्यापकत्वं उपाधिः । साध्यसमानाधिकरणात्य-**

---

न्या. साध्यप्रकारकानुमितिप्रतिबन्धः फलम् । एवं सत्प्रातिपक्षेऽपि । विरुद्धसत्प्रतिपक्षयोर्विशेषस्तु हेतोरेकत्वेन हेतोर्द्वित्वेन च ज्ञातव्यः । साध्याभावव्याप्यप्रतिहेतुमत्पक्षस्सत्प्रतिपक्ष इति यावत् । विरुद्धे साध्याभावसाधको हेतुः साध्यसाधकत्वेनोपन्यस्त इत्यसामर्थ्यसूचनमपि । **आश्रयासिद्ध इति ।** पक्षे पक्षतावच्छेदकविरहः आश्रयासिद्धिः । **यथेति ।** अत्रारविन्दे गगनीयत्वाभावे निश्चिते गगनीयत्वविशिष्टारविन्दे सौरभ्यानुमितिप्रतिबन्ध· फलम् । **स्वरूपासिद्ध इति ।** स्वरूपासिद्धिर्नाम पक्षे हेत्वभावः । तथा च हेत्वभावविशिष्टपक्षज्ञानात्पक्षविशेष्यकहेतुप्रकारकपरामर्शप्रतिबन्धः फलम् । **व्याप्य-**

वा. मपि पूर्ववत्साध्याभावव्याप्यवत्ताज्ञानमुद्रया साध्यानुमितिप्रतिबन्धकम् । साध्यं नित्यत्वम् । असिद्धं विभजते । **आश्रयेति ।** आश्रयासिद्धः । आश्रयासिद्धिमान् । आश्रयस्य पक्षस्यासिद्धिः पक्षे पक्षतावच्छेदकस्याभावस्तद्वान् । स्वरूपस्य हेतोरसिद्धिः पक्षे विरहः तद्वान् । व्याप्यत्वासिद्धः व्याप्यत्वस्यासिद्धिर्यस्मादिति व्युत्पत्त्योपाधिरेव व्याप्यत्वासिद्धिः । उपाधिना व्यभिचारानुमितौ व्याप्तेरसिद्धेः । तद्वान् । क्रमेणोदाहरणान्याह । **गगनेति । स च नास्त्येवेति ।** अरविन्दस्य गगनीयत्वं नास्तीत्यर्थः । तेन न सिद्ध्यसिद्धिभ्यां व्याघातः । एवमन्यत्रापि बोध्यम् । व्याप्यत्वासिद्धिं लक्षयति । **सोपाधिक इति ।** व्यभिचारितासंबन्धेनोपाधिविशिष्ट इत्यर्थः । उपाधिं लक्षयति ।

नि. **गगनारविन्दमिति ।** गगनारविन्दं पक्षः । सुरभित्वं साध्यम् । अरविन्दत्वं हेतुः । स चाश्रयासिद्धः, आश्रयस्य गगनारविन्दस्यासिद्धत्वात् । न हि गगने किञ्चिदरविन्दमस्तीत्यत आह । **अत्रेति ।** स्वरूपं हेतुः तच्च पक्षे असिद्धं यत्र हेतौ स स्वरूपासिद्धः । तमुदाहरति । **यथा शब्दो गुण इति ।** अत्र शब्दं पक्षीकृत्य गुणत्वे साध्ये चक्षुरिन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वरूपहेतुः स्वरूपासिद्धः । ईदृशहेतुरूपस्य पक्षे अप्रसिद्धत्वात् । न हि शब्दश्चाक्षुषप्रत्यक्षविषयः । अपि तु श्रावणप्रत्यक्षविषय एवेत्याह । **अत्र चाक्षुषत्वमिति ।** व्याप्यत्वासिद्धं निरूपयति । **सोपाधिक इति ।** उपाधिविशिष्टो यो हेतुः स एव व्याप्यत्वासिद्धः । उपाधित्वचांश्चोपाधिः । उपाधित्वं किन्तदाह । **साध्यव्यापकत्वे सतीति ।** साध्यव्यापकतां निर्वक्ति । **साध्यसमानाधिकरणेति ।** समानमधिकरणं यस्य स समानाधिकरणः । अथ तृतीयातत्पुरुषे तु

न्ताभावाप्रतियोगित्वं साध्यव्यापकत्वम् । साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वम् । (यथा) पर्वतो धूमवान् वह्नेः इत्यत्र आर्द्रेन्धनसंयोग उपाधिः । यत्र धूमः तत्रार्द्रेन्धनसंयोग इति साध्यव्यापकता । यत्र वह्निः तत्रार्द्रेन्धनसंयोग इति नास्ति, अयोगोलके आर्द्रेन्धनसंयोगाभावात् । एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वादार्द्रेन्धनसंयोग उपाधिः । सोपाधिकत्वा-

---

**न्या.** **त्वासिद्ध इति** । प्रकृते धूमव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं चेद्धूमे आर्द्रेन्धनसंयो-

**वा.** **साध्येति** । एतज्ज्ञानेन व्यभिचारानुमित्या व्याप्तिग्रहप्रतिबन्धः फलम् । बाधितं

**नि.** साध्याधिकरणवृत्तिरित्यर्थः । तादृशो योऽत्यन्ताभावः तदप्रतियोगित्वं तदित्याह । साधनाव्यापकत्वं निर्वक्ति । **साधनेति** । साधनसमानाधिकरणेत्यत्र साधनवन्निष्ठेति बहुपुस्तकेषु पाठो दृश्यते । अर्थस्तु समानः । तथा च साधनसमानाधिकरणः साधनाधिकरणवृत्तिर्योऽत्यन्ताभावस्तत्प्रयोगित्वमित्यर्थः । यादृशहेतुस्थले उपाधिरस्ति तादृशहेतुमुदाहरति । **यथेति** । अत्र पर्वतः पक्षः, धूमवत्त्वं साध्यम्, वह्निमत्त्वं हेतुः । स च व्याप्यत्वासिद्धः सोपाधिकत्वात् । उपाधिश्चात्र आर्द्रेन्धनसंयोगः, साध्यव्यापकत्वे सति साधनाव्यापकत्वात् । तथा हि । साध्यस्य यद्यार्द्रेन्धनसंयोगो व्यापकः तदा साध्यं व्याप्यम् । साध्यं चात्र धूमवत्त्वम् । तथा च यत्र धूमस्तत्रार्द्रेन्धनसंयोग इति व्याप्तावार्द्रेन्धनसंयोगस्य व्यापकता संभवति । साधनाव्यापकतार्द्रेन्धनसंयोगे संभवति । तथा हि । आर्द्रेन्धनसंयोगः साधनस्य यदि व्यापकः स्यात्तदा साधनं व्याप्यमिति वक्तव्यम् । साधनं त्वत्र वह्निः । तथा च यत्र वह्निस्तत्रार्द्रेन्धनसंयोग इति वाच्यम् । तच्च न संभवति, वह्निमत्ययोगोलके आर्द्रेन्धनसंयोगाभावात् । अतस्साधनाव्यापकत्वमपि आर्द्रेन्धनसंयोगस्य वर्तत इत्याह । **यत्र धूमस्तत्रार्द्रेन्धनसंयोग इत्यादिना** । आर्द्रेन्धनसंयोगाभावादित्यन्तेन पूर्वपक्षितम् । **साध्यसमानाधिकरणेत्यादि** । साध्यव्यापकत्वमप्यार्द्रेन्धनसंयोगस्य संभवति । तथा हि । साध्यो धूमः, साध्याधिकरणं महानसपर्वतादि, तद्वृत्तिर्योऽत्यन्ताभावः न तावदार्द्रेन्धनसंयोगात्यन्ताभावः धूमवत्यार्द्रेन्धनसंयोगस्यावश्यकत्वात् । अपि तु जलात्यन्ताभावः तत्प्रतियोगित्वं जलस्य, अप्रतियोगित्वमार्द्रेन्धनसंयोगस्यास्तीति साध्यव्यापकत्वम् । एवं साधनाव्यापकत्वमपि वर्तते । तथा हि । साधनं वह्निः । साधनाधिकरणं पर्वतादिकमिवायोगोलकमपि, तद्वृत्तिर्योऽत्यन्ताभाव आर्द्रेन्धनसंयोगात्यन्ताभाव एव तत्प्रतियोगित्वस्यार्द्रेन्धनसंयोग एव विद्यमानत्वात् । तथा च उक्तोपाधिलक्षणसत्त्वेनार्द्रेन्धनसंयोगस्योपाधित्वं संप्रतिपन्नमित्याह । **एवमिति** । दर्शितोपाधिविशिष्टत्वेन वह्निमत्त्वरूपहेतोर्व्याप्यत्वासिद्धत्वं सुस्थिरमित्याह । **सोपाधिकत्वादिति** । बाधितं

**द्वह्निमत्त्वं व्याप्यत्वासिद्धम् । यस्य साध्याभावः प्रमाणान्तरेण निश्चितः स बाधितः । यथा वह्निरनुष्णः पदार्थत्वात् । अत्रानुष्णत्वं साध्यम्, तदभाव उष्णत्वं त्वाचप्रत्यक्षेण गृह्यत इति बोध्यम् । व्याख्यातमनुमानम् ॥**

इति तर्कसंग्रहे अनुमानपरिच्छेदः समाप्तः ॥

---

**न्या.** गव्याप्यत्वं गृह्यते । एवं वह्नेरव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं चेद्वह्नौ तदव्याप्यत्वं गृह्यते । तदेव व्यभिचरितत्वम् । तथा चोपाधिव्यभिचरितत्वं साधने गृहीतं चेदुपाधिभूतार्द्रेन्धनसंयोगव्याप्यधूमव्यभिचरितत्वं गृह्यत एव । अनुमानप्रकारश्च पूर्वानुमाने हेतुं पक्षीकृत्य वह्निर्धूमव्यभिचारी धूमव्यापकार्द्रेन्धनसंयोगव्यभिचरितत्वात् घटत्वादिवत् यो यद्व्यापकव्यभिचारी स सर्वोऽपि तद्व्यभिचारीति रीत्या बोध्यः । एवंप्रकारेण प्रकृतानुमानहेतुभूतपक्षे साध्यव्यभिचारोत्थापकतया दूषकत्वमुपाधेः फलम् । तथा च धूमाभाववदवृत्तित्वाभावरूपधूमव्यभिचारे गृहीते वह्नौ धूमाभाववदवृत्तित्वरूपव्याप्तिज्ञानप्रतिबन्धः फलम् । न च व्याप्यत्वासिद्धेः व्यभिचाराभेद इति वाच्यम् । धूमाभाववदवृत्तित्वाभावाभावत्वेन व्याप्यत्वासिद्धित्वं, धूमाभाववदवृत्तित्वत्वेन व्यभिचारत्वमिति भेदात् । **यस्येति** । यस्य हेतोः साध्याभावः साध्यबाधः प्रमाणान्तरेण प्रत्यक्षप्रमाणेन पक्षे निर्णीतः स बाधित इत्यर्थः । तथा च प्रात्यक्षिकबाध्यबाधनिश्चये जाते साध्यानुमितिप्रतिबन्धः फलम् । बाधितसाध्यकत्वाद्बाधितहेतुरित्युच्यते ॥

इति न्यायबोधिन्यामनुमानपरिच्छेदः समाप्तः ॥

**वा.** लक्षयति । **यस्येति । निश्चित इति** । पक्ष इत्यादिः । तथा च पक्षविशेष्यकप्रमानिश्चयप्रकारीभूतसाध्याभावरूपबाधवत्त्वं बाधितत्वमिति भावः । अथ वा प्रमाणेन निश्चितत्वकथनाद्वस्तुतः पक्षनिष्ठसाध्याभाव इति लभ्यते । तथा च पक्षनिष्ठसाध्याभावादिरूपबाधवान् बाधित इति भावः । उदाहरणे प्रमाणान्तरग्राह्यत्वं दर्शयति । **अत्रेति** ॥

इति वाक्यवृत्तौ अनुमानपरिच्छेदः समाप्तः ॥

**नि.** लक्षयति । **यस्येति** । साध्यस्याभावः साध्याभावः इत्यत्र षष्ठ्याः प्रतियोगित्वमर्थः । एवं च साध्यप्रतियोगिकाभाव इत्यर्थः । स प्रमाणान्तरेण प्रत्यक्षादिप्रमाणेन निश्चितो निश्चयविषयीभूतः । **स बाधित इति** । तमुदाहरति । **यथेति** । अत्र वह्नौ पक्षे अनुष्णत्वे साध्ये पदार्थत्वरूपहेतुर्बाधितः । तत्साध्यस्यानुष्णत्वस्य योऽभावः उष्णत्वं तस्य स्पार्शनप्रत्यक्षरूपेण प्रमाणान्तरेण निश्चितत्वादित्याह । **अत्रेति** । स्पार्शनप्रत्यक्षेण त्वगिन्द्रियजन्यप्रत्यक्षप्रमाणेन गृहीतं निश्चितम् । अतः पदार्थत्वरूपहेतोर्बाधितत्वमित्यर्थः ॥

इति निरुक्तौ अनुमानपरिच्छेदः समाप्तः ॥

# अथ उपमानपरिच्छेदः ॥

उपमितिकरणमुपमानम् । संज्ञासंज्ञिसंबन्धज्ञानमुपमितिः । तत्करणं सादृश्यज्ञानम् । तथा हि । कश्चिद्गवयशब्दार्थमजानन् कुतश्चिदारण्यकपुरुषात् गोसदृशो गवयः इति श्रुत्वा वनं गतो

---

न्या. उपमानं लक्षयति । **उपमितिकरणमिति** । उपमितिं लक्षयति । **संज्ञासंज्ञीति** । संज्ञा नाम पदम् । संज्ञी अर्थः । तयोः सम्बन्धः शक्तिः । तथा च पदपदार्थसम्बन्धज्ञानमुपमितिरित्यर्थः । उपमानं नामातिदेशवाक्यार्थ-ज्ञानम् । अतिदेशवाक्यार्थस्मरणं व्यापारः । उपमितिः फलम् । गोसदृशो

वा. अथोपमानं निरूपयन् तल्लक्षयति । **उपमितीति** । जनकतया उप-मितित्वावच्छिन्नजनकवत्त्वे सति उपमितित्वावच्छिन्नजनकमित्यर्थः । शेषं पूर्व-वत् । उपमितिलक्षणं तु सादृश्यविशिष्टे पदवाच्यत्वप्रकारकस्मृतित्वावच्छिन्नकारण-तानिरूपितकार्यत्वम् । उपमितिस्वरूपमाह । **संज्ञेति** । संज्ञा गवयादिपदम् । संज्ञी गवयादिः । तयोः संबन्धो वाच्यवाचकभावः । उपमानस्वरूपमाह । **सादृश्यज्ञान-मिति** । **श्रुत्वेति** । गोसादृश्यविशिष्टगवयपदवाच्यत्वप्रकारकशाब्दबोधानन्तरमित्य-र्थः । श्रुधातोः श्रवणशाब्दोभयवाचकत्वात् । **स्मरन् गोसदृशं पश्यतीति** ।

नि. एवं प्रत्यक्षानुमाने निरूप्येदानीमुपमानं निरूपणीयमित्यतस्तल्लक्षणमाचष्टे । **उपमितिकरणमिति** । उपमितेः करणमित्युक्तौ षष्ठ्या निरूपितार्थत्वेन उपमिति-निरूपितकरणत्वमुपमानस्य लक्षणमित्यर्थः । उपमानलक्षणघटकीभूतामुपमितिं लक्ष-यति । **संज्ञासंज्ञीति** । संज्ञा पदं, संज्ञ्यर्थः, तयोस्संबन्धः वाच्यवाचकभावः । अयं गवयपदवाच्य इत्याकारकं हि ज्ञानमुपमितिः । सा लक्ष्या । वर्तते चात्रेदं लक्ष-णम् । तथा हि । संज्ञा गवयपदं, संज्ञी गवयरूपार्थः, तयोः संवन्धः वाच्यवाचक-भावः, तद्विषयकज्ञानत्वस्योपमितौ विद्यमानत्वाल्लक्षणसङ्गतिः । उक्तार्थं स्पष्टयितुं प्रक्रियां दर्शयति । **कश्चिदित्यादि** । गोसदृशं पश्यतीत्यत्र द्वितीयाया विषयत्व-मर्थः । दृशधातोश्चक्षुरिन्द्रियप्रत्यक्षज्ञानमर्थः । आख्यातस्याश्रयत्वमर्थः । तथा च गोसदृशविषयकचाक्षुषज्ञानवान् भवतीत्यर्थः । चाक्षुषज्ञानं च अयं गोसदृश इत्याका-रकं तद्वान् भवतीत्यर्थः । तदनन्तरं सादृश्यविशिष्टपिण्डज्ञानानन्तरम्, अयं गवयपद-वाच्य इत्युपमितिरुत्पद्यत इति गवयपदतदर्थयोः शक्तिरूपसम्वन्धज्ञानं जायत

**गोसदृशपिण्डं पश्यन् वाक्यार्थं स्मरति । तदनन्तरं अयं गवयपद-वाच्यः इत्युपमितिरुत्पद्यते । व्याख्यातमुपमानम् ॥**

**इति तर्कसंग्रहे उपमानपरिच्छेदः समाप्तः ॥**

---

**न्या.** गवयपदवाच्य इत्याकारकवाक्याद्गोसादृश्यावच्छिन्नविशेष्यकगवयपदवाच्यत्वप्रकारकं यज्ज्ञानं जायते तदेव करणम् ॥

इति न्यायबोधिन्यामुपमानपरिच्छेदः समाप्तः ॥

**वा.** अत्र दर्शनानन्तरजन्यं स्मरणं बोध्यम् । एवं वैधर्म्यज्ञानादुपमितिर्बोध्या ॥

इति वाक्यवृत्तौ उपमानपरिच्छेदः समाप्तः ॥

**नि.** इत्यर्थः । **तत्करणमिति** । उपमितिकरणमित्यर्थः । व्याख्यातमेवमुपमानम् ॥

इति निरुक्तौ उपमानपरिच्छेदः समाप्तः ॥

# अथ शब्दपरिच्छेदः॥

**आप्तवाक्यं शब्दः । आप्तस्तु यथार्थवक्ता । वाक्यं तु**

---

न्या. शब्दं लक्षयति । **आप्तेति** । आप्तोच्चरितत्वे सति वाक्यत्वं शब्दस्य लक्षणम् । प्रमाणशब्दत्वं लक्ष्यतावच्छेदकम् । वाक्यत्वमात्रोक्तावनाप्तोच्चरितवाक्येऽतिव्याप्तिरत आप्तोच्चरितत्वनिवेशः । तावन्मात्रोक्तौ जवगडदशादावतिव्याप्तिरतो वाक्यत्वम् । आप्तत्वं च प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम् । तथा च प्रयोगहेतुभूतयथार्थज्ञानजन्यशब्दत्वमिति पर्यवसन्नार्थः । वस्तुतस्तु पदज्ञानं करणम् । वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थोपस्थितिर्व्यापारः । वाक्यार्थज्ञानं शाब्दबोधः फलम् । वृत्तिर्नाम शक्तिलक्षणान्यतररूपा । शक्तिर्नाम घटादिपदजन्यबोधविषयत्वप्रकारकेश्वरसङ्केतः । ईश्वरसंकेतो नाम ईश्वरेच्छा । सैव शक्तिरित्यर्थः । शक्तिनिरूपकत्वमेव पदे शक्तत्वम् । विषयतासंबन्धेन शक्त्याश्रयत्वं अर्थे शक्यत्वम् । शक्यसंबन्धो लक्षणा । सा द्विविधा गौणी शुद्धा चेति । गौणी नाम सादृश्यविशिष्टे लक्षणा । यथा सिंहो माणवक इत्यादौ सिंहपदस्य सिंहसादृश्यविशिष्टे लक्षणा । शुद्धा त्रिविधा । जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणा चेति । लक्ष्यतावच्छेदकरूपेण लक्ष्यमात्रबोधप्रयोजिका लक्षणा जहल्लक्षणा । यथा गङ्गायां घोष इत्यत्र गङ्गापदशक्यप्रवाहसंब-

वा. शब्दं निरूपयन् तल्लक्षयति । **आप्तवाक्यमिति** । आप्तोच्चरितमित्यर्थः । उपोद्घातेनाप्तं लक्षयति । **आप्तस्त्विति** । **यथार्थवक्तेति** । प्रकृतवाक्यार्थविषयकयथार्थशाब्दबोधविषयकतात्पर्यवानित्यर्थः । तथा चैतादृशतात्पर्यजन्यवाक्यत्वं प्रमाणशब्द-

नि. अथ प्रत्यक्षादिप्रमाणचतुष्टये निरूपितेभ्योऽवशिष्टं शब्दप्रमाणमपि निरूपयति । **आप्तवाक्यमिति** । आप्तस्य वाक्यमित्युक्तौ संबन्धित्वं षष्ठ्यर्थः । संबन्धश्च आप्तोच्चरितत्वम्, तथा च आप्तोच्चरितत्वे सति वाक्यत्वं शब्दप्रमाणलक्षणम् । विशेष्यमात्रोक्तौ अनाप्तोच्चरिते वाक्ये अतिव्याप्तिः । अतः आप्तोच्चरितत्वमुपात्तम् । तावन्मात्रोक्तौ निरर्थकजवगडदशादावतिव्याप्तिः अतो वाक्यत्वमुपात्तम् ॥ ननु आप्तेन इष्टजनेन उच्चरितत्वे सति वाक्यत्वरूपशब्दप्रमाणलक्षणमनुपपन्नम्, इष्टजनोच्चरितबाधितार्थकवाक्ये अतिव्याप्तेरित्यत आह । **आप्तस्त्विति** । ननु वाक्यत्वं नाम तिङ्सुबन्तसमुदायत्वं, 'तिङ्सुबन्तचयो वाक्यम्' इत्यमरोक्तेः । तथा च यत्र घटस्त्वयाऽऽनेतव्य इत्यभिधायि तत्र न व्याप्नोतीदं लक्षणम् । यथोक्तवाक्यत्वस्य तत्रासंभवादित्यत आह । **वाक्यं तु पदसमूह इति** । तथा

**पदसमूहः । शक्तं पदम् । अस्मात्पदादयमर्थो बोद्धव्य इतीश्वर-सङ्केतः शक्तिः । आकाङ्क्षा योग्यता सन्निधिश्च वाक्यार्थज्ञान-**

---

**न्या.** न्धस्य तीरे सत्त्वात्तादृशशक्यसंबन्धरूपलक्षणाज्ञानाद्गङ्गापदात्तीरोपस्थितिः । लक्ष्यतावच्छेदकरूपेण लक्ष्यशक्योभयबोधप्रयोजिका लक्षणा अजहल्लक्षणा । यथा काकेभ्यो दधि रक्ष्यतामित्यत्र काकपदस्य दध्युपघातुके लक्षणा । लक्ष्यतावच्छेदकदध्युपघातुकत्वेन रूपेण दध्युपघातुकानां काकविडालकुक्कुटादीनां शक्य लक्ष्याणां सर्वेषां बोधात् । शक्यतावच्छेदकपरित्यागेन व्यक्तिमात्रबोधप्रयोजिका जहदजहल्लक्षणा । यथा तत्त्वमसीत्यत्र सर्वज्ञत्वकिंचिज्ज्ञत्वपरित्यागेन व्यक्तिमात्रबोधनात् जहदजहल्लक्षणा । इयं च लक्षणा जीवब्रह्मणोरैक्यं ब्रुवतां वेदान्तिनां सिद्धान्तरीत्या । **आकाङ्क्षेति** । अव्यवहितोत्तरत्वादिसंबन्धेन

**वा.** त्वं पर्यवसितम् । वाक्यं प्रति वाक्यार्थबुबोधयिषायाः कारणत्वात् । **पदसमूह इति** । तथा च पदसमूहादेव शाब्दबोधो नैकस्मादिति भावः । **शक्तमिति** । शक्तिमदित्यर्थः . शक्तिस्वरूपमाह । **अस्मादिति** । जन्यत्वं पञ्चम्यर्थः । **बोद्धव्य इति** । बोधविषय इत्यर्थः । तथा च घटपदजन्यबोधविषयो घटो भवत्वितीश्वरेच्छा शक्तिरिति पर्यवसितम् । ईश्वरीयत्वनिवेशादाधुनिकसङ्केतितस्य शब्दस्य न यज्ञादौ

**नि.** सत्यमरोक्तिरौत्सर्गिकस्थलाभिप्रायेणेति भावः । ननु पद्यते गम्यते अनेनेति व्युत्पत्त्या पदशब्दो निष्पन्नः पदधातुश्च गत्यर्थकत्वाज्ज्ञानार्थकोऽपि । तेन ज्ञानसाधनं पदशब्दार्थः । तत्र यद्यपि घटादिपदस्य घटादिज्ञानसाधनत्वात्सम्भवत्येवायमर्थः । तथापि पदशब्दस्य ज्ञानसाधनार्थकत्वे ज्ञानसाधनसमुदायत्वं वाक्यलक्षणं लभ्यते । तच्चातिव्याप्नोति । तथा हि । यत्रापथि प्रवर्तमाने देवदत्ते त्रिचतुरैः कण्ठध्वनिभिर्यज्ञदत्तेन निवारिते सति तदा तेषां ध्वनीनां समुदाये वाक्यत्वाभाववति तस्य तादृशापथप्रवृत्तिनिवारणज्ञानसाधनसमुदायत्वं वर्तते । तत्रोक्तलक्षणस्यातिव्याप्तिरिति चेदाह । **शक्तं पदमिति** । शक्तं शक्तिमत्, शक्तिः सामर्थ्यं, तच्च ज्ञानजनन इति । तथा च ज्ञानजननसमर्थं पदमिति लब्धम् । एवं च भक्षितो लशुनो न शान्तो व्याधिरितिवत् शक्तं पदमित्युक्तावपि पूर्वोक्तकण्ठध्वनिसमुदायेऽतिव्याप्तेरनिवारितत्वादित्यत आह । **अस्मादिति** । प्रसङ्गाच्छब्दप्रमाणेन शाब्दबोधे जननीये यानि कारणानि तान्युपपादयति । **आकाङ्क्षेति** । **वाक्येति** । वाक्यस्यार्थो वाक्यार्थः । प्रतिपाद्यत्वं षष्ठ्यर्थः । वाक्यप्रतिपाद्यार्थ इत्यर्थः । वाक्यार्थस्य ज्ञानं वाक्यार्थज्ञानं, विषयत्वं षष्ठ्यर्थः । वाक्यार्थविषयकज्ञानमित्यर्थः । शाब्दबोध इति यावत् । ननु आकाङ्क्षा इच्छा, तथा च इच्छायाः शाब्दबोधहेतुत्वमापतितम् । तच्च न युज्यते, अनिश्चितोऽपि वाक्याच्छाब्दबोधोत्पत्त्या इच्छायाः शाब्दबोधकारणत्वासम्भवादत

**हेतुः। पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकाङ्क्षा। अर्थाबाधो योग्यता। पदानामविलम्बेनोच्चारणं सन्निधिः।**

---

**न्या.** यत्पदप्रकारकज्ञानव्यतिरेकप्रयुक्तो हि यादृशशाब्दबोधाभावस्तादृशशाब्दबोधे तत्पदे तत्पदवत्त्वमाकाङ्क्षा। यथा घटमित्यादिस्थलेऽव्यवहितोत्तरत्वादिसंबन्धेन अम्पदं घटपदवदित्याकारकाम्पदविशेष्यकघटपदप्रकारकज्ञानसत्त्वे घटीयं कर्मत्वमिति बोधो जायते। अम् घट इति विपरीतोच्चारणे तु तादृशज्ञानाभावात्तादृशशाब्दबोधो न जायते। अतस्तादृशाकाङ्क्षाज्ञानं शाब्दबोधे कारणम्। **अर्थाबाध इति।** बाधाभावो

**वा.** प्रयोगः। आकाङ्क्षामाह। **पदस्येति।** पदनिष्ठमित्यर्थः। **अन्वयाननुभावकत्वमिति।** अन्वयबोधानुपधायकत्वमित्यर्थः। तथा च गामानयेत्यत्र गोपदनिष्ठं अम्पदाभावप्रयुक्तं शाब्दबोधानुपधायकत्वं गोपदे अम्पदनिरूपिताकाङ्क्षा। शाब्दबोधस्तु गोवृत्तिकर्मत्वमिति। योग्यतामाह। **अर्थेति।** अर्थस्य प्रकारस्याबाध· अभावाभावः। तथा चाम्पदार्थकर्मत्वरूपविशेष्ये गोपदार्थरूपप्रकारवत्त्वं निरुक्तशाब्द- बोधे योग्यतेत्यर्थः। संनिधिमाह। **पदानामिति।** तथा च गोपदनिष्ठं अम्पदाव्य-

**नि.** आकाङ्क्षां निर्वक्ति। **पदस्येति।** यत्पदस्य यत्पदव्यतिरेकप्रयुक्तं यत्पदाभावप्रयोज्यम्, अन्वयाननुभावकत्वं शाब्दबोधाजनकत्वम्, तत्पदस्य तत्पदेन सहाकाङ्क्षेत्यर्थः। यथा गामानयेत्यादिवाक्यघटकीभूतगोपदस्याम्पदव्यतिरेकप्रयुक्तमन्वयाननुभावकत्वं वर्तते। न ह्यम्पदव्यतिरेके सति गोपदमन्वयमनुभावयति, गो आनयेत्यत्र शाब्दबोधानुदयात्। अतो गोपदस्य अम्पदेन सहाकाङ्क्षा। नन्विदमसङ्गतम्, गामानयेत्यादिवाक्यघटकीभूतगोपदस्य स्वसमभिव्याहृताम्पदेन सहाकाङ्क्षानुपपत्तेः। न हि तादृशवाक्यघटकीभूतस्य गोपदस्य अम्पदव्यतिरेकोऽस्ति, न तावत् व्यतिरेकप्रयुक्तमन्वयाननुभावकत्वम्, अत इदमनुपपन्नमिति चेन्न। यत्पदजातीयस्य यत्पदजातीयव्यतिरेके सत्यन्वयाननुभावकत्वं तत्पदस्य तत्पदेन सहाकाङ्क्षेति विवक्षितत्वात्। वर्तते हि गोपदजातीयस्य अम्पदजातीयव्यतिरेके सत्यन्वयाननुभावकत्वम्। अतः गोपदस्याम्पदेन सहाकाङ्क्षेति किमनुपपन्नम्। ननु वाक्यस्य योग्यत्वं ग्राह्यत्वं श्राव्यत्वं सुखविशेषजनकीभूतश्रावणप्रत्यक्षविषयत्वमिति यावत्। तच्च न शाब्दबोधे कारणम्, अश्राव्यवाक्यादपि शाब्दबोधोदयादित्यतो योग्यतां निर्वक्ति। **अर्थाबाधो योग्यतेति।** अबाधोऽसम्बन्धाभावः संबन्ध इति यावत्। अर्थयोः अबाधः अर्थाबाधः। अर्थयोः परस्परसम्बन्धः तथा च एकपदार्थेऽपरपदार्थसम्बन्धो योग्यतेति फलितम्। वर्तते हि गामानयेत्यत्र अम्पदार्थकर्मत्वे गोपदार्थसम्बन्धः आधेयत्वरूपः। अतस्तत्र योग्यतास्त्येव। ननु सन्निधिर्नाम सामीप्यं पदार्थानां वक्तृसामीप्यवृत्तित्वमिति यावत्। तच्च न शाब्दबोधे करणीभवितुं क्षमते। दूरतरवर्तिनोऽप्यर्थस्य शाब्दबोधोदयात्, इत्यतः सन्निधिं निर्वक्ति। **पदानामिति।**

**आकाङ्क्षादिरहितं वाक्यं न प्रमाणम् । यथा गौरश्वः पुरुषो हस्ती इति वाक्यं न प्रमाणम्, आकाङ्क्षाविरहात् । अग्निना सिञ्चतीति वाक्यं न प्रमाणं योग्यताविरहात् । प्रहरे प्रहरेऽसहोच्चारितानि गामानयेत्यादिपदानि न प्रमाणं सान्निध्याभावात् । वाक्यं द्विविधं वैदिकं लौकिकं चेति । वैदिकमीश्वरोक्तत्वात् सर्वमपि प्रमाणम् । लौकिकं त्वाप्तवाक्यं प्रमाणम् । अन्यदप्रमाणम् । वाक्यार्थज्ञानं शाब्दज्ञानम् । तत्करणं शब्दः । एवं यथार्थानुभवो निरूपितः ॥**

इति तर्कसंग्रहे शब्दपरिच्छेदः समाप्तः ॥

---

**न्या.** योग्यतेत्यर्थः । अग्निना सिञ्चतीत्यत्र सेककरणत्वस्य जलधर्मस्य वह्नौ बाधनिश्चयसत्त्वान्न तादृशवाक्याच्छाब्दबोधः । संनिधिं निरूपयति । **असहोच्चारितानीति** । असहोच्चारितानि विलम्बेनोच्चरितानि । **वैदिकमिति** । वेदवाक्यमित्यर्थः । इदमुपलक्षणम् । वेदमूलकस्मृत्यादीन्यपि ग्राह्याणि । **लौकिकमिति** । वेदवाक्यभिन्नमित्यर्थः ॥

इति न्यायबोधिन्यां शब्दपरिच्छेदः समाप्तः ॥

**वा.** वह्नित्वं गोपदे अम्पदसन्निधिरित्यर्थः । एवं तात्पर्यस्यापि हेतुत्वं बोध्यम् । एतेषां ज्ञायमानानां कारणत्वं बोध्यम् । कारणतानियामकव्यतिरेकमाह । **आकाङ्क्षादीति**। प्रसङ्गाद्वाक्यसामान्यं विभजते । **द्विविधमिति** । वैदिकं वेदघटकम् । तद्भिन्नं लौकिकम् । शाब्दस्वरूपमाह । **वाक्यार्थेति** । एकपदार्थेऽपरपदार्थसंसर्गविषयकं ज्ञानमित्यर्थः । शाब्दलक्षणं तु शक्तिलक्षणान्यतरसंबन्धेन पदजन्यपदार्थस्मृतित्वावच्छिन्नकारणतानिरूपितकार्यत्वम् । अत्रेयं शाब्दबोधप्रक्रिया । प्रथमं गवादिपदानां गवादौ संबन्धज्ञानं गवादिपदशक्यो लक्ष्यो वेति । ततः कालान्तरे गामानय त्वमिति केनचिदुक्ते गवादिपदेभ्यो गवादीनर्थान्स्मरति । आकाङ्क्षादीन जानतस्तदनन्तरं गोकर्मकानयनानुकूलकृतिमांस्त्वमिति शाब्दबुद्धिर्जायत इति । लक्षणा च शक्यसंबन्धः । यथा गङ्गापदस्य शक्यसामीप्यवति तीरे लक्षणा । शब्दप्रमाणमुपसंहरति । **तत्करणमिति** ॥

इति वाक्यवृत्तौ शब्दपरिच्छेदः समाप्तः ॥

**नि.** आविलम्बेन अव्यवधानेन । वैशिष्ट्यं तृतीयार्थः । पदानामित्यत्र कर्मत्वं षष्ठ्यर्थः । तथा च परस्परव्यवधानाभावविशिष्टं यत्पदकर्मकमुच्चारणं सन्निधिरित्यर्थः ॥

इति निरुक्तौ शब्दपरिच्छेदः समाप्तः ॥

अयथार्थानुभवस्त्रिविधः—संशयविपर्ययतर्कभेदात् । एकस्मिन्धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यज्ञानं संशयः। यथा स्थाणुर्वा पुरुषो वा इति । मिथ्याज्ञानं विपर्ययः । यथा शुक्ताविदं रजतम् इति । व्याप्यारोपेण व्यापकारोपस्तर्कः । यथा

---

न्या. यथार्थानुभवं निरूप्यायथार्थानुभवं विभजते । **संशयेत्यादिना** । **एकेति** । एकधर्मावच्छिन्नविशेष्यकभावाभावप्रकारकज्ञानं संशय इत्यर्थः । भावद्वयकोटिकसंशयाप्रसिद्धेः स्थाणुर्वेत्यादौ स्थाणुत्वस्थाणुत्वाभावपुरुषत्वपुरुषत्वाभावकोटिकसंशय एवार्थः । **मिथ्याज्ञानमिति** । अयथार्थज्ञानमित्यर्थः । विपर्ययो नाम भ्रमः । **व्याप्यारोपेणेति** । तर्के व्याप्यस्य व्यापकस्य च बाधनिश्चयः कारणम् । अन्यथा इष्टापत्तिदोषेण तर्कानुत्पत्तेः ।

वा. अयथार्थानुभवस्य प्राग्लक्षितत्वाद्विभागमाह । **अयथार्थेति** । संशयं लक्षयति । **एकस्मिन्निति** । सप्तम्यर्थो विशेष्यत्वम् । **विरुद्धेति** । विरोधविशिष्टनानाधर्मप्रकारकम् । तथा च यत्किंचिद्धर्मिविशेष्यतानिरूपितविरुद्धनानानिष्ठप्रकारतानिरूपितप्रकारिताशालिज्ञानत्वं पर्यवसितम् । स्थाणुर्वेति ज्ञाने पुरोवर्तिनिष्ठविशेष्यतानिरूपितस्थाणुत्वपुरुषत्वरूपविरुद्धनानानिष्ठप्रकारतानिरूपितप्रकारिताशालित्वाल्लक्षणसमन्वयः । विपर्ययं लक्षयति । **मिथ्येति** । मिथ्या तदभाववति तत्प्रकारकं ज्ञानम् । तर्कान्यनिश्चयः । तथा च तदभाववति तत्प्रकारकतर्कान्यनिश्चयानुभवत्वं विपर्ययलक्षणम् । तर्कं लक्षयति । **व्याप्येति** । अत्र व्याप्यपदं व्याप्यत्वेन ज्ञायमानपरम् । तेनाव्याप्यारोपेण तर्के नाव्याप्तिः । आरोपपदं ज्ञानमात्रपरम् । तेनायोगोलके धूमाभावेन वह्न्यभावतर्के नाव्याप्तिः । व्यापकारोपेत्यत्रारोपपदं बाधविषयकायथार्थनिश्चयपरम् । तेन ह्रदो वह्निमानित्यनुमितौ नातिव्याप्तिः । बाधनिश्चये यथार्थत्वनिवेशादयोगोलकं धूमाभाववत्स्यादिति तर्के नातिव्याप्तिः । अयथार्थानुभवस्यैव लक्ष्यत्वात् । इत्थं च व्याप्यत्वेन ज्ञानजन्यत्वे सति बाधविषयकायथार्थनिश्चयत्वं पर्यवसि-

नि. एवं सकरणकं यथार्थानुभवं निरूप्य संप्रत्ययथार्थानुभवं निरूपयति । **अयथार्थ इत्यादि** । तत्र संशयं लक्षयति । **एकस्मिन्निति** । धर्मिपदं वस्तुपरम् । सप्तम्यर्थो विशेष्यत्वम् । **विरुद्धेति** । विरुद्धाः परस्परासमानाधिकरणाः ये धर्मास्तेषां यद्वैशिष्ट्यं सम्बन्धः, तस्य ज्ञानं, विषयत्वं षष्ठ्यर्थः । तथा च एकधर्मिविशेष्यकविरुद्धनानाधर्मसम्बन्धविषयकज्ञानत्वं संशयस्य लक्षणम् । लक्ष्यभूतं ज्ञानं दर्शयति । **यथा स्थाणुरिति** । मिथ्याज्ञानं बाधितार्थनिश्चयः । **व्याप्येति** । आरोपः आहार्यज्ञानं बाधकालीनेच्छाजन्यत्वमाहार्यज्ञानत्वम् । व्याप्यारोपेणेत्यत्र तृतीयार्थो

**यदि वह्निर्न स्यात् तर्हि धूमोऽपि न स्यात् इति । स्मृतिरपि द्विविधा । यथार्थाऽयथार्था चेति । प्रमाजन्या यथार्था । अप्रमाजन्या अयथार्था । सर्वेषामनुकूलतया वेदनीयं सुखम् । प्रतिकूलतया वेदनीयं दुःखम् । इच्छा कामः । क्रोधो द्वेषः । कृतिः प्रयत्नः।**

---

**न्या.** सुखं निरूपयति । **सर्वेषामिति** । इतरेच्छाऽनधीनेच्छाविषयत्वमिति निष्कर्षः । यथाश्रुते घटोऽनुकूल इत्याकारकानुकूलत्वप्रकारकज्ञानविशेष्यत्वस्य घटादावपि सत्त्वात्तत्रातिव्याप्तेः । सुखेच्छाधीने भोजनादावतिव्याप्तिवारणाय इतरेच्छानधीनेतीच्छाविशेषणम् । सुखेच्छा तु सुखत्वप्रकारकज्ञानजन्यैव । दुःखं निरूपयति । **प्रतिकूलेति** । अत्रापीतरद्वेषानधीनद्वेषविषयत्वमिति निष्कर्षः । द्वेषविषयत्वमात्रोक्तौ सर्पादावतिव्याप्तिस्तत्रापि द्वेषविषयत्वसत्त्वादतस्तत्रातिव्याप्तिवारणायेतरद्वेषानधीनेति द्वेषविशेषणम् । सर्पजन्यदुःखादौ द्वेषात्सर्पे द्वेष इति सर्पद्वेषस्य सर्पजन्यदुःखद्वेषजन्यत्वादन्यद्वेषाजन्यद्वेषविषयत्वरूपलक्षणस्य सर्पादौ नातिव्याप्तिः । फलेच्छा उपायेच्छां प्रति कारणम् । अतः फलेच्छावशादुपायेच्छा भवति । एवं फलद्वेषात्

**वा.** तम् । प्राक्स्मृतेर्लक्षितत्वात्तां विभजते । **स्मृतिरपीति** । **प्रमाजन्येति** । तच्च संस्कारद्वारा बोध्यम् । तथा च संस्कारसंबन्धावच्छिन्नप्रमाभ्रमनिष्ठजनकतानिरूपितजन्यत्वे लक्षणे बोध्ये । बुद्धिं निरूप्य सुखादीन्निरूपयति । **सर्वेषामित्यादि । अनुकूलतया वेदनीयमिति** । स्ववृत्तित्वेनेच्छाविषयः । लक्षणं तु इष्टसाधनताज्ञानानधीनेच्छाविषयत्वम् । अनिष्टसाधनताज्ञानानधीनद्वेषविषयत्वं दुःखस्य लक्षणम् । **प्रतिकूलतया वेदनीयमिति** । द्वेषविषय इत्यर्थः । प्रवृत्तेः साक्षादनुकूलत्वमिच्छालक्षणम् । निवृत्तेः साक्षादनुकूलत्वं द्वेषलक्षणम् । ज्ञानवारणाय साक्षादिति । **कृतिः प्रयत्न इति** । कृतित्वजातिमत्त्वं प्रयत्नसामान्यलक्षणम् । स त्रिविधः ।

**नि.** जन्यत्वम् । तथा च व्याप्यविषयकाहार्यज्ञानजन्यव्यापकविषयकाहार्यज्ञानत्वं तर्कलक्षणं इति पर्यवसन्नम् । लक्ष्यं दर्शयति । **यदीति** । अत्र संशये इन्द्रियरूपं प्रत्यक्षं करणम् । विपर्यये तु इन्द्रियादीनि चत्वारि दुष्टानि करणानि, तर्के मनः करणं इति बोध्यम् । प्रमाजन्याप्रमाजन्येत्यत्र प्रमाणजन्याप्रमाणजन्या इति पाठे भावे ल्युडिति बोध्यम् । एतावता प्रबन्धेन सप्रपञ्चां बुद्धिं निरूप्य सुखं निरूपयति । **सर्वेषामिति** । अनुकूलतया इच्छाविषयतया, तथा च सकलपुरुषीयेच्छाविषयत्वं सुखस्य लक्षणमित्यर्थः । दुःखं लक्षयति । **प्रतिकूलतयेति** । द्वेषविषयतयेत्यर्थः । अत्रापि सर्वेषामित्यनुषज्यते । तथा च सकलपुरुषीयद्वेषविषयत्वं दुःखस्य लक्षणं लभ्यते । इच्छायाः कामत्वं, द्वेषस्य क्रोधत्वं, प्रयत्नस्य कृतित्वं, लक्षणं बोध्यम् ।

**विहितकर्मजन्यो धर्मः । निषिद्धकर्मजन्योऽधर्मः । बुद्ध्यादयोऽष्टावात्ममात्रगुणाः । बुद्धीच्छाप्रयत्ना नित्या अनित्याश्च । नित्या ईश्वरस्य । अनित्या जीवस्य । संस्कारस्त्रिविधः । वेगो भावना**

---

न्या. उपायद्वेषः । धर्माधर्मौ निरूपयति । **विहितेत्यादिना** । वेदविहितेत्यर्थः । नि-

वा. प्रवृत्तिनिवृत्तिजीवनयोनियत्नभेदात् । **विहितेति** । इष्टसाधनत्वेन वेदबोधित इत्यर्थः। साक्षात्सुखसाधनत्वं पर्यवसितं लक्षणम् । तेन ज्योतिष्टोमादौ नातिप्रसङ्गः । **निषिद्धेति** । अनिष्टसाधनत्वेन वेदबोधित इत्यर्थः । साक्षाद्दुःखसाधनत्वं पर्यवसितलक्षणम् । तेन निषिद्धकर्मादौ नातिप्रसङ्गः । **वेग इति** । क्रियाजन्यत्वे सति क्रियाजनकत्वं वेगलक्षणम् । गुरुत्वादिवारणाय सत्यन्तम् । विभागादिवारणाय विशेष्यदलम् । पृथिव्यप्तेजोवायुमनोमात्रवृत्तितावच्छेदकसंस्कारविभाजकोपाधिमत्त्वं वा वेग-

नि. धर्मं लक्षयति । **विहितेति** । विहितानि वेदविहितानि यानि कर्माणि यागादीनि तज्जन्यो धर्म इत्यर्थः । अधर्मं लक्षयति । **निषिद्धेति** । वेदनिषिद्धानि यानि कर्माणि कलञ्जभक्षणागम्यागमनसुरापानादीनि, तज्जन्यो निषिद्ध इत्यर्थः । बुद्ध्यादीनामष्टानां गुणानामाश्रयमाह । **बुद्ध्यादय इति** । आत्मनो गुणा इत्युक्तौ समवेतत्वं षष्ठ्यर्थः। आत्मसमवेतगुणा इत्यर्थः । संस्कारं विभजते । **संस्कार इति** । वेगं लक्षयति । **वेग इति** । पृथिव्यादिचतुष्टयमनोवृत्तिरित्यत्र पृथिव्यादिचतुष्टयवृत्तिर्मनोवृत्तिश्च इति पाठे तत्राद्यं वेगस्य स्वरूपकथनं, मनोवृत्तिरिति लक्षणम् । मनसि वर्तत इति मनोवृत्तिः । निरूपितत्वं सप्तम्यर्थः, मनोनिरूपितवृत्तित्वाश्रय इत्यर्थः । तत्त्वं वेगस्य लक्षणम् । ननु जन्यमात्रं कालोपाधिः, मूर्तमात्रं दिगुपाधिः इति न्यायेन जन्यमात्रे कालिकसंबन्धेन सर्वं वर्तते, मूर्तमात्रे च दैशिकविशेषणतासंबन्धेन सर्वं वर्तते। तथा च मनोनिरूपितंदैशिकसंबन्धावच्छिन्नवृत्तित्वस्य घटादौ सत्त्वादतिव्याप्तिरिति चेन्न । मनोनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वाश्रयत्वस्य विवक्षितत्वात् । मनोनिरूपितदैशिकसंबन्धावच्छिन्ना या वृत्तिता तदाश्रयत्वं वेगे वर्तते । तथा हि—यो येन संबन्धेन यत्र वर्तते स संबन्धः तन्निरूपिता तन्निष्ठा या वृत्तिता तस्यामवच्छेदकः । यथा भूतले संयोगसंबन्धेन घटो वर्तते चेत् भूतलनिरूपितायां घटनिष्ठायां वृत्तितायां संयोगसंबन्धः अवच्छेदकः, अतो भूतलनिरूपितसंयोगसंबन्धावच्छिन्नवृत्तिताश्रयो घटः । प्रकृते च वेगः समवायसंबन्धेन मनसि वर्तते, अतः मनोनिरूपितायां वेगनिष्ठायां वृत्तितायां समवायसम्बन्धोऽवच्छेदकः, अतो मनोनिरूपितसमवायसम्बन्धावच्छिन्नत्वस्य वेगे विद्यमानत्वाल्लक्ष्ये लक्षणसमन्वयः । नन्वेवमपि जातिव्यक्त्योस्समवायसम्बन्धान्मनसि मनस्त्वजातिः समवायसम्बन्धेन वर्तत इति मनोनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वाश्रयत्वस्य मनस्त्वात्मकजातौ विद्यमानत्वाद-

**स्थितस्थापकश्चेति । वेगः पृथिव्यादिचतुष्टयमनोवृत्तिः । अनुभव-**

---

**न्या.** पिद्धेति । वेदनिषिद्धेत्यर्थः । भावनां लक्षयति । **अनुभवेति** । अनुभवजन्यत्वे सति स्मृतिहेतुत्वं भावनाया लक्षणम् । अत्रानुभवजन्यत्वे सतीति विशेषणानुपादाने आत्ममनःसंयोगेऽतिव्याप्तिरात्ममनःसंयोगस्य ज्ञानमात्रं प्रत्यसमवायिकारणत्वेन स्मृतिं प्रत्यपि कारणत्वादतस्तदुपादानम् । आत्ममनःसंयोगस्यानुभवजन्यत्वाभावान्नातिव्याप्तिः । तावन्मात्रे कृतेऽनुभवध्वंसेऽतिव्याप्तिः । ध्वंसं प्रति स्वप्रतियोगिनः कारणत्वेनानुभवध्वंसस्याप्यनुभवजन्यत्वात् । अतः स्मृतिहेतुत्वोपादानम् । अनुभवध्वंसे स्मृतिहेतुत्वाभावान्नातिव्याप्तिः । नन्वत्र विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणता सकलतान्त्रिकमतसिद्धा । यथा दण्डविशिष्टबुद्धिं प्रति दण्डज्ञानं कारणम् । दण्डविशिष्टबुद्धिर्नाम दण्डप्रकारकज्ञानम् । तथा च दण्डप्रकारकबुद्धित्वावच्छिन्नं प्रति दण्डज्ञानत्वेन कारणत्वमित्यापतितम् । दण्डप्रकारकबुद्धिर्दण्डी पुरुष इत्याकारकबुद्धि-

**वा.** लक्षणम् । **अनुभवजन्येति** । अनुभववारणाय सत्यन्तम् । स्मृतिवारणाय विशेष्य-

**नि.** तिव्याप्तिः । न च गुणत्वे सतीति विशेषणं दीयते, अतः मनस्त्वजातेर्गुणत्वाभावान्नातिव्याप्तिरिति वाच्यम् । एवमपि मनस्समवेतसङ्ख्यापरिमाणादौ मनोनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वाश्रयत्वे सति गुणत्वरूपलक्षणस्य विद्यमानत्वादतिव्याप्तिरिति चेन्न, न वयं गुणत्वविशेषणं प्रक्षिपामः । किन्तु संस्कारत्वम्, तथा च मनोनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वाश्रयत्वे सति संस्कारत्वं वेगलक्षणं पर्यवसन्नम् । भावनां लक्षयति । **अनुभवेति** । अनुभवजन्यत्वे सति स्मृतिहेतुत्वं भावनालक्षणम् । भावना हि अनुभवेन जन्यते, स्मृतिं जनयति, अतः अनुभवजन्यत्वे सति स्मृतिहेतुत्वस्य भावनायां विद्यमानत्वात् लक्षणसंगतिः अनुभवजन्यत्वविशेषणानुपादाने आत्ममनस्संयोगे अतिव्याप्तिः, आत्ममनस्संयोगस्य ज्ञानसामान्यं प्रत्यसमवायिकारणत्वेन स्मृतिं प्रत्यपि कारणत्वात् अतस्तदुपादानम् । एवं चेदात्ममनस्संयोगस्यानुभवजन्यत्वाभावान्नातिव्याप्तिः, तावन्मात्रोपादाने अनुभवध्वंसेऽतिव्याप्तिः, ध्वंसं प्रति प्रतियोगिनः कारणत्वेनानुभवध्वंसस्यानुभवजन्यत्वात् । अतः स्मृति हेतुत्वमिति । अनुभवध्वंसे त्वनुभवजन्यत्वमात्रसत्त्वेऽपि स्मृतिहेतुत्वाभावात् नातिव्याप्तिः । नन्वत्र विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणता सकलतान्त्रिकमतसिद्धा यथा । दण्डविशिष्टबुद्धिं प्रति दण्डज्ञानं कारणम्, दण्डविशिष्टबुद्धिर्नाम दण्डप्रकारकज्ञानमित्यर्थः, तथा च दण्डप्रकारकबुद्धित्वावच्छिन्नं प्रति दण्डज्ञानत्वेन कारणत्वं आपतितम्, दण्डप्रकारकबुद्धिस्तु दण्डी पुरुषः इत्याकारिका बुद्धिः, तत्र दण्डज्ञानं कारणम् । न हि दण्डमजानानः पुमान् दण्डी पुरुष इति प्रत्येति । एवं च यत्र अयं दण्ड इति प्रत्यक्षानुभवो जातः, तदनन्तरं तादृशदण्डवानयं पुरुष इत्याकारकप्रत्यक्षज्ञानमुत्पद्यते, तत्र दण्डी पुरुष इत्याकारकप्रत्यक्षेऽतिव्याप्तिः । तद्धि

## जन्या स्मृतिहेतुर्भावना । आत्ममात्रवृत्तिः। अन्यथाकृतस्य (स्थितस्य)

न्या. स्तत्र दण्डज्ञानं कारणम् । न हि दण्डमजानानः पुमान् दण्डी पुरुष इति प्रत्येति । एवं च यत्रायं दण्ड इति प्रत्यक्षं जातं तदनन्तरं दण्डी पुरुष इत्याकारकप्रत्यक्ष-मुत्पन्नं तत्र दण्डी पुरुष इत्याकारकप्रत्यक्षेऽतिव्याप्तिः । तद्धि स्वाव्यवहितपूर्वक्षणोत्पन्न-दण्डज्ञानात्मकानुभवजन्यं जनिष्यमाणे दण्डी पुरुष इत्याकारकस्मरणे कारणं च स्मृतिं प्रत्यनुभवस्य कारणत्वात् । तथा चानुभवजन्यत्वे सति स्मृतिहेतुत्वरूपभावना-लक्षणस्य यथोक्तदण्डी पुरुष इत्याकारकानुभवे विद्यमानत्वादतिव्याप्तिरिति चेत्र । अत्र ब्रूमः । अनुभवजन्यत्वं अनुभवनिष्ठकारणतानिरूपितकार्यताश्रयत्वम् । तत्र कारणतायामनुभवत्वावच्छिन्नत्वं निवेश्यते । तथा चानुभवत्वावच्छिन्नकारणतानिरूपि-

वा. दलम् । **अन्यथाकृतस्येति** । पूर्वसंयोगाद्विजातीयसंयोगवत इत्यर्थः । **पुनरिति** ।

नि. स्वाव्यवहितपूर्वक्षणोत्पन्नदण्डज्ञानात्मकानुभवाज्जन्यते । किञ्च जनिष्यमाणे दण्डी पुरुष इत्याकारकस्मरणेऽपि कारणं भवति । स्मृतिं प्रत्यनुभवस्य कारणत्वात् । तथा च अनुभवजन्यत्वे सति स्मृतिहेतुत्वस्य लक्षणं यथोक्तदण्डी पुरुष इत्याकारक-प्रत्यक्षानुभवेऽतिव्याप्तिरिति चेत् तत्र ब्रूमः । अनुभवजन्यत्वं च अनुभवनिष्ठकार-णतानिरूपितकार्यताश्रयत्वम् । तत्र कारणतायां अनुभवत्वावच्छिन्नत्वं निवेश्यते । तथा सति अनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वमनुभवजन्यत्वं इति फलति । अतो नोक्तातिव्याप्तिः । यथा । दण्डप्रकारकबुद्धित्वावच्छिन्नकार्यतानिरूपिता दण्डज्ञाननिष्ठा या कारणता तस्यां न दण्डानुभवत्वमवच्छेदकम् । कुतः दण्डानु-भवादिवद्दण्डस्मरणादपि दण्डप्रकारकज्ञानोत्पत्त्या दण्डप्रकारकबुद्धित्वावच्छिन्नं प्रति अनुभवस्मरणसाधारणेन दण्डज्ञानत्वेनैव दण्डज्ञानस्य कारणतायाः स्वीकार्यत्वेन दण्डज्ञानत्वस्यैव तदवच्छेदकत्वात् । तथा च अनुभवत्वावच्छिन्नकारणतानिरूपित-कार्यताश्रयत्वस्य यथोक्तप्रत्यक्षानुभवे अविद्यमानत्वान्नातिव्याप्तिः । भावनायां त्विदं लक्षणं वर्तते । तथा हि । अनुभवेनैव भावनाख्यसंस्कारोत्पत्त्या भावनात्वावच्छिन्नं प्रति अनुभवस्य अनुभवत्वेनैव कारणतया भावनात्वावच्छिन्नकार्यतानिरूपितानुभवनिष्ठा या कारणता, तस्यामनुभवत्वमेवावच्छेदकम् । अतोऽनुभवत्वावच्छिन्नकारणतानिरूपितका-र्यताश्रयत्वं भावनायां वर्तत इति नासंभवः । नन्वेवं सति स्मृतिहेतु त्वनिवेशनं व्यर्थमा-पद्यते, तद्धि अनुभवध्वंसे अतिव्याप्तिवारणाय प्रागुपात्तम् । यथोक्तानुभवजन्यत्वविव-क्षायामनुभवध्वंसेऽतिव्याप्तिः न प्रसज्यते । तथा हि ध्वंसत्वावच्छि प्रति प्रतियो-गिनः कारणत्वं प्रतियोगित्वेन रूपेण, अथवा ध्वंसवृत्तित्वावच्छि । प्रति तत्प्रति-योगिव्यक्तेस्तत्तद्व्यक्तित्वेन कारणत्वमित्येवं ध्वंसप्रतियोगिनोः कार्यकारणभावः, तथा च ध्वंसनिष्ठकार्यतानिरूपितानुभवनिष्ठा या कारणता तस्यां प्रतियोगित्व-मवच्छेदकम् । अथवा तत्तद्व्यक्तित्वम् । न त्वनुभवत्वम् । अपसिद्धान्तादन्यत्र

**पुनस्तादवस्थ्यापादकः स्थितस्थापकः । कटादिपृथिवीमात्रवृत्तिः ।**

---

**न्या.** तकार्यताश्रयत्वमनुभवजन्यत्वमिति फलितम् । अतो नोक्तातिव्याप्तिः । तथा हि । दण्डप्रकारकबुद्धित्वावच्छिन्नकार्यतानिरूपितदण्डज्ञाननिष्ठा या कारणता तस्यां न दण्डानुभवत्वमवच्छेदकं दण्डानुभवात् दण्डस्मरणादपि दण्डप्रकारकबुद्धेरुत्पत्तेः । अतो दण्डप्रकारकबुद्धित्वावच्छिन्नं प्रत्यनुभवस्मरणसाधारणदण्डज्ञानत्वेनैव दण्डज्ञानस्य कारणतायाः स्वीकरणीयत्वेन दण्डज्ञानत्वस्यैव तदवच्छेदकत्वात् । तथा चानुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्य यथोक्तप्रत्यक्षानुभवेऽभावान्नातिव्याप्तिः । भावनायां तु लक्षणमिदं वर्तते । तथा हि । अनुभवेनैव भावनाख्यसंस्कारोत्पत्त्या भावनात्वावच्छिन्नं प्रत्यनुभवस्यानुभवत्वेनैव कारणतया भावनात्वावच्छिन्नकार्यतानिरूपितानुभवनिष्ठा या कारणता तस्यामनुभवत्वमवच्छेदकम् । अतोऽनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वं भावनायां वर्तत इति नासंभवः । नन्वेवं स्मृतिहेतुत्वविशेषणवैयर्थ्यमापद्यते । तद्ध्यनुभवध्वंसेऽतिव्याप्तिवारणाय प्रागुपात्तम् । न हि यथोक्तानुभवजन्यत्वविवक्षायामनुभवध्वंसेऽतिव्याप्तिः प्रसज्यते । तथा हि । ध्वंसत्वावच्छिन्नं प्रति प्रतियोगिनः कारणत्वं प्रतियोगित्वेन रूपेण तत्तद्ध्वंसत्वावच्छिन्नं प्रति तत्तत्प्रतियोगिव्यक्तेस्तत्तद्व्यक्तित्वेन कारणत्वमित्येवं ध्वंसप्रतियोगिनोः कार्यकारणभावः । तथा च ध्वंसनिष्ठकार्यतानिरूपिता यानुभवनिष्ठा कारणता तस्यां प्रतियोगित्वमवच्छेदकं तत्तद्व्यक्तित्वं च । न त्वनुभवत्वमपीति सिद्धान्तात । अन्यत्र दूषितत्वात् । तथा चानु-

**वा.** पूर्वसंयोगसजातीयसंयोगासमवायीत्यर्थः । तथा च पूर्वसंयोगविजातीयसंयोगनाश-

**नि.** दूषितत्वाच्च, तथा च अनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वरूपानुभवजन्यत्वविशेषणविरहेणैवानुभवध्वंसेऽतिव्याप्तिवारणसंभवात्कृतं स्मृतिहेतुत्वप्रवेशनेनेति चेन्न । स्मृतावतिव्याप्तिवारणायैव तद्विशेषणप्रवेशनात् । तथा हि । स्मृतिं प्रत्यनुभव एव कारणम्, न तु स्मृतिरपि, अतो घटत्वावच्छिन्नस्मृतिं प्रति घटानुभवस्य घटानुभवत्वेनैव कारणत्वम्, न तु घटज्ञानत्वेन, तथा च घटस्मृतिनिष्ठकार्यतानिरूपिता या घटानुभवनिष्ठा कारणता तस्यां घटानुभवत्वमवच्छेदकम् । तेनानुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्य स्मृतौ विद्यमानत्वादतिव्याप्तिः । अतस्तद्वारणाय स्मृतिहेतुत्वमुक्तम् । न हि स्मृतिः स्मृतिहेतुः अतः न तत्रातिव्याप्तिरिति। स्थितस्थापकं लक्षयति । **अन्यथेति** । अन्यथा प्रकारान्तरेण, पूर्वावस्थानभिन्नावस्थान इति यावत् । वैशिष्ट्यं तृतीयार्थः स्थितस्येत्यत्र ष्ठाधात्वर्थावस्थानेऽन्वेति, क्तप्रत्ययार्थः आश्रयः, निष्ठत्वं षष्ठ्यर्थः, सा अवस्था अवस्थानं यस्य तस्य भावः तादवस्थ्यं तदवस्थानवत्त्वं तदवस्थानमिति यावत् । तथा च पूर्वावस्थानभिन्नावस्थानाश्रयीभूतव्यक्तिनिष्ठपूर्वावस्थानसंपादकत्वं स्थितस्थापकत्वमिति यावल्लक्षणं पर्यवसन्नम् । अन्यथा कृतस्येति पाठे तु अन्यथा प्रकारान्तरेण पूर्वावस्थानभिन्नावस्थानत्वेनेत्यर्थः ।

**चलनात्मकं कर्म । ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम् । अधोदेशसंयोगहेतुरपक्षेपणम् । शरीरसंनिकृष्टसंयोगहेतुराकुञ्चनम् । विप्रकृष्टसंयोगहेतुः प्रसारणम् । अन्यत्सर्वं गमनम् । नित्यमेकमनेकानुगतं**

---

**न्या.** भवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वरूपानुभवजन्यत्वविरहेणैवातिव्याप्तिवारणसंभवात्कृतं स्मृतिहेतुत्वविशेषणेनेति चेन्न । स्मृतावतिव्याप्तिवारणायैव तद्विशेषणप्रवेशात् । तथा हि । स्मृतिं प्रत्यनुभव एव कारणं । न तु स्मृतिरप्यतो घटस्मृतित्वावच्छिन्नं प्रति घटानुभवस्य घटानुभवत्वेनैव कारणत्वम् । न तु घटज्ञानत्वेन । तथा च घटस्मृतिनिष्ठकार्यतानिरूपिता या घटानुभवनिष्ठा कारणता तस्यां घटानुभवत्वं अवच्छेदकम् । तेन अनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्य स्मृतौ विद्यमानत्वादतिव्याप्तिवारणाय स्मृतिहेतुत्वं उक्तम् । न हि स्मृतिः स्मृतिहेतुः । अतः न तत्रातिव्याप्तिरित्यलं पल्लवतल्लजकल्पानल्पजल्पनेन । सामान्यं निरूपयति । **नित्यमेकमिति ।** नित्यत्वे सत्यनेकसमवेतत्वं सामान्यलक्षणम् । नित्यत्वानुपादाने संयोगादावतिव्याप्तिः । तत्रापि अनेकसमवेतत्वसत्त्वात् । तद्वारणाय नित्यत्वविशेषणम् । अनेकसमवेतत्वानुपादाने आकाशादावतिव्याप्तिस्तद्वारणायानेकसमवेतत्वविशेषणम् । अनेकत्वानुपादाने जलपरमाणुरूपादौ अतिव्याप्तिः । अतः अनेकेति ।

**वा.** कत्वे सति पूर्वसंयोगसजातीयसंयोगजनकत्वं पर्यवसितम् । क्रियावारणाय सत्यन्तम् । विभागवारणाय विशेष्यदलम् । संस्कारः सर्वोऽप्यनित्यः । गुणान्निरूप्य कर्मणां लक्षणमाह । **चलनात्मकमिति** । संयोगविभागानुकूलमित्यर्थः । **नित्यमिति** । ध्वंसाप्रतियोगित्वं नित्यत्वम् । **एकमनेकानुगतमिति** । स्वरूपतोऽनेकानुगतमित्यर्थः । न तु सामान्यरूपेणेति भावः । अनेकानुगतत्वं च समवायेनानेकवृत्तित्वम् । तथा च

**नि.** प्रकारत्वं तृतीयार्थः, कृञ्धात्वर्थः कृतिः, प्रत्ययार्थो विषयः, शेषं पूर्ववत् । तथा च पूर्वावस्थानभिन्नावस्थानवत्प्रकारककृतिविषयीभूतव्यक्तिनिष्ठपूर्वदेशावस्थानसम्पादकत्वमिदानीं स्थितस्थापकलक्षणं पर्यवस्यतीति बोध्यम् । **ऊर्ध्वदेशेति ।** क्रियाया विभागः, ततः पूर्वदेशसंयोगनाशः, ततः उत्तरदेशसंयोगोत्पत्तिः इति क्रमः । स चोत्तरदेशसंयोगः यद्यूर्ध्वदेशसंयोगः स्यात् तदा तादृशसंयोगजनकीभूतमुत्क्षेपणमित्युच्यते । एवमुत्तरत्रापि बोध्यम् । सामान्यं लक्षयति । **नित्यमिति ।** अनेकानुगतत्वं अनेकसमवेतत्वं अनेकनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वं इति यावत् । नित्यद्रव्यवृत्तय इत्यत उपरिष्टात् विशेषा इत्यतोऽधस्तात् क्वचित्पुस्तकेषु व्यावर्तका इत्यस्ति । तत्रापि आङ्पूर्वकवृतुधानोरितरभेदानुमितिरर्थः । अकप्रत्ययस्य जनकत्वमर्थः । तथा च इतरभेदानुमितिजनक इति फलितम् । विशेषा हि परमाणुषु परस्परभेदानुमितिं जनयन्ति, अयं परमाणुः इतरपरमाणुभ्यो भिद्यते, एतद्विशेषादिति

**सामान्यम् । परं सत्ता । अपरं द्रव्यत्वादि । नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः । नित्यसंबन्धः समवायः । अयुतसिद्धवृत्तिः । ययोर्मध्य एकमविनश्यदवस्थमपराश्रितमेवावतिष्ठते तावयुतसिद्धौ । यथा अवयवावयविनौ, गुणगुणिनौ, क्रियाक्रियावन्तौ, जातिव्यक्ती, विशेषनित्यद्रव्ये चेति । अनादिः सान्तः प्रागभावः ।**

---

**न्या. नित्यद्रव्यवृत्तय इति** । नित्यद्रव्येषु परमाण्वादिषु वर्तमानाः । अत एव व्यावर्तकाः इतरभेदानुमितिहेतवः । नित्यद्रव्यवृत्तित्वरूपपक्षधर्मताप्रयोज्येतरभेदानुमापकताशालिन इत्यर्थः । नित्यद्रव्यनिष्ठविशेष्यतानिरूपितैकमात्रवृत्तिभेदानुमितिजनकतावच्छेदकप्रकारताश्रयत्वं विशेषाणां लक्षणमिति भावः । पार्थिवपरमाणौ जलादिभेदानुमापकगन्धेऽतिव्याप्तिवारणाय एकमात्रवृत्तित्वं भेदविशेषणम् । घटादौ तदितरभेदानुमापके तद्रूपादावतिव्याप्तिवारणाय निरूपितान्तम् प्रकारताविशेषणम् । एतेन व्यावर्तका इत्यस्य नित्यद्रव्यविशेष्यकेतरभेदानुमितिप्रयोजका इत्यर्थकतया लक्षणपरत्वेन साफल्येऽपि नित्यद्रव्यवृत्तय इति विफलमेव स्वरूपाख्यानस्यापि कृतत्वादिति प्रत्युक्तम् । **ययोर्मध्य इति** । यन्निष्ठकालनिरूपिताधेयतासामान्यं यदवच्छिन्नं तदुभया-

**वा.** नित्यत्वे सत्यनेकसमवेतत्वं तत्त्वं पर्यवसितम् । तत् द्विविधम् । परमपरञ्चेति । तदेवाह । **परमित्यादिना** । विशेषाणां स्वरूपमाह । **नित्यद्रव्येति** । व्यावर्तका आश्रयाणां परस्परं भेदानुमितिजनकाः । तथा हि । अयं पृथिवीपरमाणुरितरपरमाणुभ्यो भिद्यते एतद्विशेषादित्यनुमाने हेतुत्वं बोध्यम् । लक्षणं तु सामान्यभिन्नत्वे सति सामान्यशून्यत्वे सति समवेतत्वम् । अथवा स्वतो व्यावृत्तत्वम् । **नित्य इति** । संयोगादिवारणाय नित्यत्वम् । गगनादिवारणाय संबन्ध इति सम्बन्धत्वं स्वरूपत्वानवच्छिन्नसांसर्गिकविषयताश्रयत्वम् । तेन गगनादीनां स्वरूपत्वेन संबन्धित्वेऽपि न क्षतिः । **ययोरिति** । **अविनश्यदिति** । विनाशपर्यन्तमित्यर्थः । एकं अवयव्यादिकम् । अपरं अवयवादि । **आश्रितमेवेति** । अवयवादिकं परित्यज्यावयव्यादिकं नैव तिष्ठति । भूतलादिकं परित्यज्य घटादिकं तिष्ठतीति तौ नायुतसिद्धाविति भावः । **अनादिरिति** । आदिरहितः । आदिरुत्पत्तिः । **सान्त इति** । अन्तो ध्वंसः । प्रतियोगितासम्बन्धेन तद्वान् । तथा चोत्पत्तिशून्यत्वे सति ध्वंसप्रतियोगित्वं प्राग-

**नि.** तत्प्रकारः । समवायं लक्षयति । **नित्यसंबन्ध इति** । नित्यत्वे सति संबन्धत्वं समवायस्य लक्षणम् । संयोगे अतिव्याप्तिवारणाय सत्यन्तम् । आकाशादावतिव्याप्तिवारणाय विशेष्यांश. । कौ तावयुतसिद्धौ तदाह । **ययोरिति** । तन्तुपटयोर्मध्ये पटः तन्त्वाश्रित एवावतिष्ठते । अतस्तावयुतसिद्धावित्यर्थः । तत्राधेयाः समवायप्रतियोगिनः, आधाराः समवायानुयोगिन इति बोध्यम् । **अनादिरिति** । आदिरुत्पत्तिः

**उत्पत्तेः पूर्वं कार्यस्य । सादिरनन्तः प्रध्वंसाभावः । उत्पत्तेरनन्तरं कार्यस्य । त्रैकालिकः संसर्गाभावोऽत्यन्ताभावः यथा भूतले घटो नास्ति इति तादात्म्यावच्छिन्नप्रतियोगिताकाभावोऽन्योन्याभावः ।**

---

न्या. न्यतरत्वमयुतासिद्धत्वमित्यर्थः । **त्रैकालिकेति** । प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वे सत्यन्योन्याभावभिन्नत्वे सत्यभावत्वमत्यन्ताभावस्य लक्षणम् । ध्वंसप्रागभावान्योन्याभावाकाशादीनां वारणाय यथाक्रमं विशेषणोपादानम् । वस्तुतस्तु संसर्गाभावत्वं तादात्म्यभिन्नसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वम् । ध्वंसप्रागभावयोश्च न संसर्गावच्छिन्नप्रतियोगिताकत्वमिति तेनैव तद्वारणे त्रैकालिकेति स्वरूपाख्यान-

वा. भावत्वम् । घटादिवारणाय सत्यन्तम् । गगनादिवारणाय विशेष्यदलम् । **सादिरिति** । उत्पत्तिमानित्यर्थः । अनन्तः ध्वंसाप्रतियोगी । इदं च स्वरूपकीर्तनम् । तेन नात्माश्रयः । उत्पत्तिमत्त्वे सति अभावत्वं लक्षणम् । अत्यन्ताभावादिवारणाय सत्यन्तम् । घटादिवारणाय विशेष्यदलम् । **त्रैकालिकेति** । भूतभविष्यद्वर्तमानरूपत्रिकालवृत्तिरित्यर्थः । नित्य इति भावः । **संसर्गेति** । तादात्म्यातिरिक्तेत्यर्थः । तथा चोक्तसंसर्गावच्छिन्नप्रतियोगिताकाभावत्वं अत्यन्ताभावलक्षणम् । नित्यत्वं स्वरूपकथनम् । परमाण्वादिवारणायाभावत्वस्यावश्यकतया नित्यत्वस्य व्यर्थत्वात् अथवा संसर्गेति । अन्योन्याभावभिन्नाभावत्वमित्यर्थः । तेन घटान्योन्याभावाभावस्य अन्योन्याभावस्वरूपत्वेन तादात्म्यातिरिक्तसंबन्धावच्छिन्नप्रतियोगिताकत्वेऽपि नान्योन्याभावेऽतिव्याप्तिः । इत्थं च ध्वंसादिवारणाय त्रैकालिकेति । **घटो नास्तीति** । इत्यादिप्रतीतिसिद्ध इत्यर्थः । एवमग्रेऽपि । अत्रेदं तत्त्वम् । घटान्योन्याभावानां स्वात्यन्ताभावस्वरूपत्वेऽपि न तेषामत्यन्ताभावलक्षणलक्ष्यतेति न तेषां भेदा अत्यन्ताभावशरीरे निवेशनीयाः । अत एव तेषामन्योन्याभावलक्षणलक्ष्यत्वेनोपन्यासो यथा घटः पटो न भवतीत्यनेन । घटात्यन्ताभावानां स्वावच्छिन्नभिन्नभेदादिस्वरूपत्वेऽपि न तेषां भेदास्तत्र निवेशनीयाः । अत एव तेषां अत्यन्ताभावलक्षणलक्ष्यत्वेनोपन्यासो यथा भूतले घटो नास्तीत्यनेन । इत्थं चात्यन्ताभावलक्षणप्रविष्टमन्योन्याभावभिन्नत्वं नान्योन्याभावसामान्यभेदोऽपि त्वलक्ष्यत्वेनाभिप्रेतानां घटादिभेदानां विशिष्यैवेति । इय-

नि. तच्छून्यत्वमनादित्वम् । सान्तत्वं च विनाशप्रतियोगित्वम् । सादित्वमुत्पत्तिमत्त्वम्, अनन्तत्वं विनाशाप्रतियोगित्वम् । त्रैकालिकत्वे सति संसर्गाभावत्वं अत्यन्ताभावस्य लक्षणम् । लोके हि संसर्गाभावस्त्रिविधः । प्रागभावः प्रध्वंसाभावः अत्यन्ताभावश्च इति । तत्र त्रैकालिकसंसर्गाभावोऽत्यन्ताभाव एव, न प्रागभावध्वंसाभावौ इति नानुपपत्तिः। भूतले घटो नास्तीति प्रतीतिविषयीभूतो योऽभावः सोऽत्यन्ताभाव

**यथा घटः पटो न भवति इति । सर्वेषामपि पदार्थानां उक्तेष्वेवान्तर्भावात् सप्तैव पदार्थाः इति सिद्धम् ॥**

---

**न्या.** मेवेति बोध्यम् । **तादात्म्येति** । अभावत्रयवारणाय विशेषणम् । घटाभाववान्नेति प्रतीतिविषयघटादिवारणाय विशेष्यम् । ननु सादृश्यादीनामतिरिक्तपदार्थानामनिरूपणेन न्यूनतेत्यत आह । **सर्वेषामिति** । तद्भिन्नत्वविशिष्टतद्गतभूयोधर्मरूपसादृश्यस्यापि घटपटादिरूपत्वेन नातिरिक्तत्वमेवमन्येषामप्यूह्यम् । **काणादेति** । कणादस्येदं काणादं काणादन्यायमते इति द्वन्द्वगर्भकर्मधारयः । कणादप्रोक्तगौतमप्रोक्तमतयोरिति यावत् । काणादन्यायाभिन्नमतद्वयविषयकबालसमवेताभिन्नव्युत्पत्तिसिद्धप्रयोजकान्नंभट्टाभिन्नविद्वन्निष्ठभूतकालीनकृतिविषयाभिन्नस्तर्कसंग्रहाख्यग्रन्थ इत्यन्वयबोधः ॥

**वा.** मेव रीतिरन्योन्याभावलक्षणेऽप्यूह्या । **तादात्म्येति** । अत्यन्ताभावभिन्नाभाव इत्यर्थः। तेनात्यन्ताभाववद्भिन्नभेदस्यात्यन्ताभावत्वेऽपि नातिव्याप्तिः । अत्रापि नित्यत्वं निवेशनीयम् । तेन ध्वंसादौ नातिव्याप्तिः । न्यायनये षोडशपदार्थोक्तेरपि न सप्तत्वहानिरित्याह । **सर्वेषामिति** । प्रमाणादीनामित्यर्थः । तथा च कणादन्यायमतयोरविरोध

**नि.** इत्यर्थः । अन्योन्याभावं लक्षयति । **तादात्म्येति** । तादात्म्यमवच्छेदकसंबन्धः, तदवच्छिन्नप्रतियोगिताको योऽभावः सोऽन्योन्याभाव इत्यर्थः । घटे हि पटतादात्म्यं नास्ति, किन्तु तादात्म्यसंबन्धावच्छिन्नपटनिष्ठप्रतियोगितानिरूपकाभाव एव वर्तते । स एवान्योन्याभावः । येन सवन्धेन यन्नास्तीत्युच्यते तन्निष्ठप्रतियोगितायां स संबन्धोऽवच्छेदकः । यथा भूतले संयोगसंबन्धेन घटो नास्तीत्युच्यमाने संयोगसंबन्धावच्छिन्नघटनिष्ठप्रतियोगितानिरूपकाभावोऽस्तीत्यर्थः । तादृशाभावीयघटनिष्ठप्रतियोगितायां संयोगसंवन्धस्यावच्छेदकत्वात्, प्रकृते घटतादात्म्येन पटो नास्तीत्युच्यमाने तादात्म्यसंबन्धावच्छिन्नपटनिष्ठप्रतियोगितानिरूपकाभावोऽस्तीत्यर्थः । तादृशाभावीयप्रतियोगितायां तु तादात्म्यसंबन्धस्यावच्छेदकत्वादिति लक्षणसमन्वयः। घटः पटो न भवतीति प्रतीतिविषयीभूताभाव एवान्योन्याभाव इत्यर्थः । ननु प्रमाणप्रमेयेति सूत्रे षोडश पदार्था उक्ताः । तत्कथमिह सप्तपदार्था इत्यत आह । **सर्वेषामेवेति** । यथायथं यथायोग्यम् । **अन्तर्भावादिति** । अन्तर्भावप्रकारश्च दीपिकायां दर्शितः । इह तु विस्तरभयान्न लिख्यते । इति सर्वं समञ्जसम् ॥

काणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये ।
अन्नम्भट्टेन विदुषा रचितस्तर्कसंग्रहः ॥

इति तर्कसंग्रहः समाप्तः ॥

---

कृष्णावलम्बिनो गाः पुषो गोवर्धनस्तमभ्यर्चन् ।
विपुलाभीरसभाजनजनितबुधेन्द्रस्तवाभिरचनाभिः ॥

इति तर्कसंग्रहव्याख्या न्यायबोधिन्याख्या संपूर्णा ॥

भावः । तदेवाह । **कणादेति** ॥

इति मेरुशास्त्रिकृतवाक्यवृत्तिसंज्ञिततर्कसंग्रहव्याख्या समाप्ता ॥

अयुक्तमपि शास्त्रज्ञा यदुक्तं पुनरुक्तिमत् ।
बालबोधनिमित्तार्थं क्षम्यतां तदशेषतः ॥

इति निरुक्तिः समाप्ता ॥

# तर्कसंग्रहदीपिका ।

## नीलकण्ठप्रकाशिका-रामरुद्रीय-नृसिंहप्रकाशिका-पट्टाभिरामप्रकाशिकासमन्विता ।

विश्वेश्वरं साम्बमूर्तिं प्रणिपत्य गिरां गुरुम् ।
टीकां शिशुहितां कुर्वे तर्कसंग्रहदीपिकाम् ॥

## नीलकण्ठप्रकाशिका ।

वन्दे गुरुं शिवं साम्बं दक्षिणामूर्तिमव्ययम् ।
यद्वन्दनेन मन्दोऽपि विन्देद्गुरुसमानताम् ॥

प्रारिप्सितग्रन्थस्य निर्विघ्नपरिसमाप्तये समाचरितं मङ्गलमीश्वरनत्यात्मकं शिष्यशिक्षायै निबध्नंश्चिकीर्षितं प्रतिजानीते । **विश्वेश्वरमिति** । गिरां गुरुं निखिल-

## रामरुद्रीयम् ।

तातस्य तर्कसरसीरुहकाननेषु रामेश्वरस्य तरणेश्चरणौ प्रणम्य ।
श्रीरामरुद्रसुकृती कृतिनां हिताय लीलावशात् किमपि कौतुकमातनोति ॥

अथ पण्डितशिरोमणिरन्नम्भट्टाख्यो निजनिर्मिततर्कसंग्रहव्याख्यानं चिकीर्षुः निर्विघ्नपरिसमाप्तये कृतं मङ्गलं शिष्यशिक्षायै ग्रन्थतो निबध्नाति । **विश्वेश्वरमित्या-**

## नृसिंहप्रकाशिका ।

ध्यात्वा श्रीमातृपादाब्जे दीपिकायाः प्रकाशिका ।
श्रीरायनरसिंहेन पण्डितेन चिकीर्ष्यते ॥

तत्र प्रारिप्सितग्रन्थविरामविरोधिविघ्नव्यूहविध्वंसनविचक्षणां विश्वनाथादिविनुतिं शिष्यशिक्षार्थं आदौ ग्रन्थतः निबध्य शिष्यावधानाय प्रारिप्सितं प्रतिजानीते : **विश्वेश्वरमित्यादिना** । विश्वस्य प्रपञ्चस्य ईश्वरं सृष्ट्यादिकर्तारं इत्यर्थः । एते-

## पट्टाभिरामप्रकाशिका ।

इन्द्रादिवृन्दारकबृन्दमूर्ध्नि भ्राजिष्णुकोटीरमणिप्रभाभिः ।
नीराजिताम्भोरुहपादपीठं वन्दे शिवं स्वेष्टफलागमार्थम् ॥

इह खलु अन्नम्भट्टाख्यो विबुधः स्वप्रारिप्सितप्रकरणपरिसमाप्तिपरिपन्थिप्रत्यूहनिकरनिर्वापणाय निरन्तरनिश्रेयसाधिगमाय परमेश्वरप्रणामलक्षणं मङ्गलमुपनिबध्नाति । **विश्वेश्वरमिति** । सन्तोषातिशयकालीना प्रार्थना झटिति स्वाभीष्टद

**नी.** विद्यानामुपदेष्टारम् । इदमपि ईश्वरे विशेषणम् । गिरं गुरुम् इति पाठे तु सरस्वतीं विद्यागुरुं च प्रणिपत्य इत्यर्थो बोध्यः । स्वग्रन्थस्येतरग्रन्थेनागतार्थतां दर्शयति ।

**रा.** दिना । विश्वेश्वरं जगन्नियन्तारं, साम्बमूर्तिं, अम्बा पार्वती तत्सहितविग्रहं, गिरां वेदरूपवाचां गुरुं उपदेष्टारम् । गिरं गुरुमिति क्वचित् पाठः, तत्र सरस्वतीं गुरुं चेत्यर्थः । प्रणिपत्य नमस्कृत्य । स्वापकर्षबोधानुकूलव्यापारः नमःपदार्थः । स च मानसस्थले आत्ममनस्संयोगः, वाचिकस्थले वाग्रूपः, कायिकस्थले क्रियारूपः इति विशेषो मन्तव्यः । प्रणिपूर्वकपत्लृधातोरप्येष एवार्थः । न च नमस्कृत्येत्यत्र कृञ्धातुना यत्नबोधनात् व्याख्येयग्रन्थे तद्बोधकपदाभावात् नेयं व्याख्या सङ्गतेति शङ्कनीयम् । त्वाप्रत्ययप्रकृतिकपदत एव तद्बोधकस्य सत्त्वात् । कर्तरि कृदिति सामान्यसूत्रेण कृत्प्रत्ययमात्रस्यैव कर्तृबोधकत्वावधारणात् । कर्तुश्च कृतिमद्रूपत्वात् । उत्तरकालीनत्वमपि ल्यपोऽर्थः । तत्र चोत्तरत्वे प्रतियोगितया प्रकृत्यर्थस्य पूर्वोक्तनमःपदार्थस्यान्वयः । तस्य चानुयोगितया, ध्वंसाधिकरणकालस्य चाधेयतया, प्रतियोगितया प्रतिज्ञावाक्यार्थे कृञ्धात्वर्थेऽन्वयः । एवं सर्वत्रानुसन्धेयं, प्रतिज्ञायास्तु फलं शिष्यावधानम्, टीकामित्यस्य व्याख्यामित्यर्थः । शिशुहितत्वं च व्याख्याया बालबोधकत्वेन मन्त-

**नृ.** नेश्वरे अनुमानप्रमाणं सूचितम् । तथा हि कार्यं कृतिजन्यं कार्यत्वात् घटवत्, भूतानां स्थितिः पतनप्रतिबन्धकप्रयत्नप्रयुक्ता हि स्थितित्वात् नितम्बावलम्बस्वपुत्रादिस्थितिवत्, प्रपञ्चनाशः प्रयत्नजन्यः नाशत्वात् अस्मदादिकर्तृकशत्रुनाशवदित्यनुमानात्, कृतिजन्यत्वसिद्धौ तद्घटककृत्याश्रयत्वस्य इतरेषां बाधात् तदाश्रयतया ईश्वरस्य सिद्धिः इत्येतेन ईश्वरे प्रमाणाभावात्तद्विषयकमङ्गळाचरणमयुक्तमिति शङ्का निरस्ता । ईश्वरे अनुमानरूपप्रमाणप्रदर्शनं चोपलक्षणम् । 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व । तद्ब्रह्मेति' इत्यादिश्रुतिरपि ईश्वरे प्रमाणमिति बोध्यम् । नमस्कार्यस्य विश्वनाथस्य सन्तुष्टतां सूचयितुमाह । **साम्बमूर्तिमिति** । अम्बया सहिता मूर्तिः यस्येति व्युत्पत्त्या अर्धनारीश्वरस्य पार्वत्यालिङ्गितशरीरस्य शिवस्य वा लाभात् । तादृशविश्वनाथं प्रणम्येत्यर्थलाभः । ननु गणाधिपतेरेव विघ्ननाशकत्वात् विघ्ननाशार्थं कथं विश्वनाथनमस्कारः कृत इति चेन्न । 'गणेभ्यो गणपतिभ्यश्च वो नमो नम' इत्यादिश्रुत्या शिवस्यापि गणपतित्वप्रतिपादनात् । वाग्देव्याः विद्यागुरोश्च प्रसादाभावे इष्टसिद्धिर्न भवतीति तदर्थं तां तं च प्रणमति । **गिरं गुरुमिति** । वाग्देवीं विद्यागुरुञ्चेत्यर्थः । प्रणिपत्येत्यस्य काकाक्षिन्यायेन उभयत्राप्यन्वयः । **शिशुहितामिति** ।

**प.** नापटीयसीति मत्वाह । **साम्बमूर्तिमिति** । अम्बया सहिता साम्बा तादृशी मूर्तिर्यस्येति बहुव्रीहिः । उत्तरपदलक्षणया मूर्तिपदस्यैव अम्बाविशिष्टमूर्तिविशिष्टार्थकत्वम् । विश्वेश्वरमित्यत्र द्वितीयार्थो विशेष्यत्वम् । प्रणिपत्येत्यत्र प्रणिपूर्वकपत्लृ-

नी. **शिशुहितामिति** । तर्कसंग्रहदीपिकां तर्कसंग्रहार्थप्रकाशिकाम् । आचरितस्य मङ्गलस्य

रा. व्यम् । **तर्कसंग्रहदीपिकेति** । ग्रन्थनं च लोके स्वकीर्त्यनुवृत्तिमभिप्रेत्य । प्रतिज्ञा च स्वकर्तव्यत्वेन वस्तुनिर्देशः । अथात्र नमस्कार्यगणपतिप्रभृतीनामिव अपकर्षबोधार्थकधात्वर्थतावच्छेदकफलशालित्वेन कर्मत्वोपपत्तावपि जन्यज्ञानानधिकरणस्य ईश्वरस्य कथं कर्मत्वम् । नित्यज्ञानस्य धात्वर्थतावच्छेदकफलत्वाभावात् नमस्कारानुद्देश्यस्यापि तादृशबोधाधिकरणस्य कर्मत्वापत्तिः । न च 'कर्तुरीप्सिततमं कर्म' इति सूत्रेण धात्वर्थतावच्छेदकफलशालित्वेन कर्तुरिच्छाविषयस्यैव कर्मत्वानुशासनात् ईश्वरस्य धात्वर्थतावच्छेदकफलशालित्वाभावेऽपि तच्छालित्वेन विसंवादिनीच्छाविषयत्वेन कर्मत्वोपपत्तिः, नमस्कारानुद्देश्यस्य तथात्वेनेच्छाविषयत्वाभावादेव न कर्मत्वोपपत्तिरिति वाच्यम् । एवमपि तथा युक्तं चानीप्सितमित्यनेन धात्वर्थतावच्छेदकफलशालित्वेन कर्तुरनीप्सितस्यापि धात्वर्थतावच्छेदकफलशालिनः कर्मत्वानुशासनात्, नमस्कारानुद्देश्यस्यापि तथाविधफलशालिनः कर्मत्वापत्तेर्दुर्वारत्वात् । अत एव अनुद्देश्यत्वादौ न कर्मता । न च तथायुक्तं चानीप्सितमित्यनेनैव सर्वत्र सकर्मत्वोपपत्तौ कर्तुरीप्सिततमं कर्मेति सूत्रवैयर्थ्यमिति वाच्यम् । काशीं गच्छन् पथि मृत इत्यादौ धात्वर्थतावच्छेदकोत्तरदेशसंयोगस्यानधिकरणत्वेऽपि काशीं प्रति गन्तुं प्रवृत्ते पुंसि काशीं गच्छतीति प्रयोगोपपत्तये तदनुशासनस्य आवश्यकत्वात् । विषमहं न भुनज्मि दैवात् विषभक्षणं मे संपन्नमित्यादिप्रयोगोपपत्तये च तस्यावश्यकत्वात् । अन्यथा भक्षणे विषकर्मत्वाभावबोधासंभवादिति चेन्न । धात्वर्थतावच्छेदकफलशालित्वं च अनुकूलतासंबन्धेन धात्वर्थविशेषणं न धातुप्रतिपाद्यं यत् तच्छालित्वम् । प्रकृते च अपकर्षबोधानुकूलत्वस्यैव धात्वर्थविशेषणत्वम् । न त्वनुकूलत्वसंबन्धेन अपकर्षबोधस्येत्यपकर्षबोधाश्रयस्य कर्मत्वापत्त्ययोगात् । नमस्कार्यगुर्वादेः कर्मता तु धात्वर्थप्रविष्टापकर्षावधित्वेनैव । न च धात्वर्थप्रविष्टापकर्षावधेः कर्मत्वं केनानुशिष्यत इति वाच्यम् । अकथितश्चेत्यनेन तदनुशासनात्, अपादानत्वादिभिरविवक्षितं धात्वर्थसंबन्धेन विवक्षितं कर्मेति तदर्थत्वात् । गुरवे नम इत्यादौ तु नमःपदा-

नृ. शिशुभ्यः ग्रहणे धारणे चासक्तेभ्यः हितां बोधनसमर्थामित्यर्थः । एतेन स्वीयव्याख्यायां काठिन्याभावलाभात् तेषां काठिन्यज्ञानप्रयुक्तप्रवृत्त्यभावशङ्का निरस्तास्य ग्रन्थस्येत्याशङ्कां परिहरति । **तर्कसंग्रहदीपिकामिति** । तर्कसंग्रहाख्यग्रन्थस्य दीपिकां तर्कसंग्रहप्रतिपाद्यार्थप्रकाशिकामित्यर्थः । प्रसिद्धदीपिका यथा अर्थप्रकाशिका तथा इयमपि टीका तर्कसंग्रहप्रतिपाद्यार्थप्रकाशिकेति स्वीयटीकाया अपि दीपिकात्व-

प. धातोः प्रणामोऽर्थः । स च स्वावधिकोत्कर्षप्रकारकज्ञानम् । ल्यबर्थः उत्तरकालीनत्वम् । गुरुं गिरं इत्यत्र द्वितीयार्थो विशेष्यत्वम् । टीकां इत्यत्रापि विशेष्यत्वं द्वितीयार्थः । कुर्वे इत्यत्र कृञ् धातोः कृतिः । आख्यातार्थ आश्रयत्वम् । दीपिकां प्रकाशिकाम् ।

चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं शिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकमिष्टदेवतानमस्कारात्मकं मङ्गलं शिष्यशिक्षायै ग्रन्थ-

नी. तन्निबन्धनस्य च फलं दर्शयति । **चिकीर्षितस्येत्यादिना** । ननु समाप्तिं प्रति

रा. थस्य धात्वर्थत्वाभावेन अपकर्षावधेः न कर्मता । परन्तु नमःस्वस्तीत्यादिसूत्रेण चतुर्थ्यैव । न चैवं नारायणं नमस्कृत्येत्यत्र द्वितीयानुपपत्तिरिति वाच्यम् । तत्र अगत्या कृञ्धातोरेव नमस्कारार्थकत्वोपगमात् नमःपदस्य तात्पर्यग्राहकत्वात् । अत एव स्वयंभुवे नमस्कृत्येत्यत्र नमःपदस्य सार्थकत्वोपगमेन तद्योगे चतुर्थ्येवेति सर्वमवदातम् । ग्रन्थकर्तुः मङ्गलाचरणस्य तन्निबन्धनस्य च निष्फलत्वशङ्कानिरासायाह । **चिकीर्षितस्येति** । ग्रन्थस्येत्यस्य समाप्तावन्वयः । निर्विघ्नपरिसमाप्तिः अर्थः फलं यस्य तत् तथाभूतं मङ्गलमित्यर्थः । अनेन च मङ्गलाचरणप्रयोजनं प्रदर्शितम् । ननु मङ्गलाचरणस्य सप्रयोजनकत्वेऽपि मङ्गले समाप्तिसाधनत्वस्य दुर्ग्रहतया इष्टसाधनताज्ञानं विना प्रवृत्त्यनुपपत्त्या च मङ्गलाचरणे ग्रन्थकर्तुः प्रवृत्त्यनुपपत्तिरित्याशङ्कां निराकर्तुमाह । **शिष्टेति** । कर्तव्यत्वं च बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वे सति कृतिसाध्यत्वम् । इष्टत्वं च प्रकृते निर्विघ्नपरिसमाप्तिरेव । समाप्तौ विघ्नध्वंसपूर्वकत्वकथनन्तु विनष्टस्य मङ्गलस्य कथमनन्तरभाविसमाप्तिफलकत्वमित्याशङ्कानिरासाय विघ्नध्वंसस्य द्वारतालाभार्थमित्यवधेयम् । निबन्धनस्य प्रयोजनमाह । **शिष्येति** । शिष्याणां शिक्षा कर्तव्यत्वेन ज्ञानम् । न च प्रतिज्ञायाः शिष्यालाभाददोषत्वं लभ्यते । एतादृशीं टीकां कुर्वे अहं करवाणीत्यर्थः । इदानीं निधायेत्यादि मूलं अवतारयति । **चिकीर्षितस्येति** । कर्तुमिच्छाविषयस्येत्यर्थः ।

नृ. मङ्गलस्य निष्फलत्वशङ्काप्रयुक्तानाचरणीयत्वशङ्कानिरासायाह । **निर्विघ्नपरिसमाप्त्यर्थमिति** । विघ्नध्वंसपूर्वकसमाप्त्यै इत्यर्थः । तथा च समाप्तिं प्रति विघ्नध्वंसद्वारा मङ्गलस्य हेतुत्वलाभात् नोक्तशङ्कावकाशः । विघ्नध्वंसस्य द्वारत्वकथनेन मङ्गलस्य त्रिक्षणावस्थायिनः कालान्तरभाविसमाप्तिसाधनत्वासंभवात्तद्दोषतादवस्थ्यमिति शङ्का निरस्ता । मङ्गलस्य समाप्तिसाधनत्वमुक्त्वा अवश्यकर्तव्यत्वमाह । **शिष्टेति** । शिष्टाचारेण अनुमिता या श्रुतिः तया बोधिता कर्तव्यता यस्येति व्युत्पत्त्या तादृशकर्तव्यतावदित्यर्थलाभः । इदानीं मङ्गलस्य स्वरूपमाह । **इष्टदेवतेति** । इष्टदेवतोद्देश्यकनमस्काररूपमित्यर्थः । स च नमस्कारस्त्रिविधः कायिको वाचिको मानसिकश्चेति । आद्यस्तु उरसा शिरसा दृष्ट्येत्यष्टाङ्गसहितः प्रणामः । द्वितीयः विश्वनाथाय नमः इति शब्दरूपम् । अन्त्यस्तु त्वदेवधिकापकर्षाश्रयोऽहं मदवधिकोत्कर्षाश्रयस्त्वं इत्या-

प. तथा च—अस्मादिविशिष्टमूर्तिविशिष्टाभिन्नविश्वेश्वरविशेष्यकगुरुविशेष्यकसरस्वतीविशेष्यकस्वावधिकोत्कर्षप्रकारकज्ञानोत्तरकालीनशिशुहितत्वादिविशेषणविशिष्टटीकाविषयिणी या कृतिस्तदाश्रयः इत्यन्वयबोधः । चिकीर्षितस्य कर्तुमिच्छाविषयीभूतस्य । चिकीर्षिते-

तो निबध्नंश्चिकीर्षितं प्रतिजानीते । **निधायेति** । ननु मङ्गलस्य समाप्ति-साधनत्वं नास्ति । मङ्गले कृतेऽपि किरणावल्यादौ समाप्त्यदर्शनात् मङ्गलाभावेऽपि कादम्बर्यादौ समाप्तिदर्शनाच्च अन्वयव्यतिरेकाभ्यां व्य-

---

**नी.** मङ्गलस्य कारणता स्याच्चेत्तदा तदाचरणं युज्यते । सैव न संभवतीत्याशङ्कते । **व्यभिचारादिति** । अन्वयव्यतिरेकव्यभिचारज्ञानरूपप्रतिबन्धकसत्त्वान्नियतान्वय-

**रा.** वधाने कथमुपयोग इति वाच्यम् । शिष्यस्य कर्तव्यविषयाज्ञाने स्वानपेक्षिततत्त्वशङ्कया शिष्यप्रवृत्त्यसंभवेन स्वानपेक्षितत्वशङ्कानिरासकत्वेन शिष्यप्रवृत्तौ तस्योपयोगादिति ध्येयम् । ननु समाप्त्यर्थं मङ्गलाचरणं अयुक्तम् । लोके हि यत् यस्य फलं भवति तत् तदर्थमेव क्रियते । यथा तृप्त्यर्थं भोजनादि । न च प्रकृते समाप्तिः मङ्गलफलं इति वक्तुं शक्यते । अन्वयव्यतिरेकाभ्यां व्यभिचारात् । न च समाप्तिसाधनत्वं वेदेन बोधितमिति वाच्यम् । बाधितार्थस्य वेदेनापि बोधनासंभवात् । अत एव आदित्यो यूपः यजमानः प्रस्तर इत्यादौ मुख्यार्थबाधेन वेदेऽपि लक्षणैवाङ्गीकृता । बाधितमर्थं वेदोऽपि न बोधयतीत्याशङ्कते । **नन्विति** । अन्वयव्यभिचारः कारणसत्त्वेऽपि कार्या-नुत्पादः । व्यतिरेकव्यभिचारस्तु कारणाभावेऽपि कार्योत्पत्तिः । **कादम्बर्यादावि-**

**नृ.** कारकज्ञानाविशेषरूप इति बोध्यम् । **शिष्यशिक्षार्थमिति** । शिष्या अप्येवं कुर्युरिति शिष्यानुग्रहायेत्यर्थः । **निबध्नन्निति** । निबन्धनं कुर्वन्नित्यर्थः । तादृशमङ्गलप्रति-पादकं वाक्यं उच्चरन् इति यावत् । शतृप्रत्ययस्य समानकालीनत्वमर्थः । तस्य प्रति-जानीते इत्यत्र प्रतिज्ञायामन्वयः । **चिकीर्षितमिति** । कर्तुमिच्छाविषयीभूतमि-त्यर्थः । **प्रतिजानीत इति** । शिष्यावधानायेत्यादिः । प्रतिज्ञानुकूलकृतिमान् ग्रन्थकार इत्यर्थः । तथा च शिष्यशिक्षाफलकतादृशमङ्गलप्रतिपादकनिबन्धनकरणसमानकाली-नशिष्यावधानफलकचिकीर्षितकर्मकप्रतिज्ञानुकूलकृतिमान् ग्रन्थकार इति वाक्यार्थः फलित इति । ननु निर्विघ्नपरिसमाप्त्यर्थमिति ग्रन्थेन मङ्गलस्य समाप्तिसाधनत्वं प्रति-पादितम् । तन्न संभवतीत्याशङ्कते । **नन्वित्यादिना** । **मङ्गलस्य समाप्तिसाध-नत्वं नास्तीति** । मङ्गलनिष्ठः समाप्तिकारणत्वाभाव इत्यर्थः । मङ्गले समाप्तिकारण-त्वाभावः प्रत्यक्षसिद्ध इति यावत् । योग्यानुपलब्धिरूपकारणसत्त्वादिति शेषः । ननु मङ्गले कारणत्वप्रत्यक्षोत्पत्त्या तदभावरूपयोग्यानुपलब्धिस्तत्र बाधिता इत्याशङ्कां तादृशप्रत्यक्षोत्पादकसामग्रीविघटकत्वप्रदर्शनेन परिहरति । **मङ्गले कृतेऽपीत्यादि-ना** । किरणावल्यादावित्यादिपदेन मङ्गले कृतेऽपि येषां ग्रन्थानां असमाप्तिः तेषां संग्रहः । **समाप्त्यदर्शनादिति** । इदन्तु समाप्त्यभावग्राहकयोग्यानुपलब्धि-

**प.** त्यादिग्रन्थादवगतमङ्गलसमाप्तिकारणतामाक्षिपति । **नन्विति** । तथा च मङ्गलं समाप्तिसाधनत्वाभाववत् । तत्र हेतुमाह । **अन्वयेति** । अभेदस्तृतीयार्थः । तथा

**भिचारादिति चेन्न । किरणावल्यादौ विघ्नबाहुल्यात्समाप्त्यभावः । का-**

---

**नी.** व्यतिरेकसहचारनिश्चयरूपकारणासंभवेन न कारणत्वनिश्चय इत्यभिसन्धिः । **समाप्त्यभाव इति** । अतो न व्यभिचार इत्यनेनान्वयः । विघ्नान्यूनसंख्याकस्य

**रा.** **त्यादि** । आदिपदेन नास्तिकग्रन्थपरिग्रहः । **विघ्नबाहुल्यादिति** । तथा च प्रति-

**नृ.** प्रदर्शनाय । समाप्त्यभावादित्यर्थः। **मङ्गलाभावेऽपीति** । मङ्गलरूपकारणाभावेऽपीत्यर्थः। कादम्बर्यादावित्यादिपदेन मङ्गलाकरणेऽपि येषां ग्रन्थानां समाप्तिः तेषां संग्रह । **समाप्तिदर्शनादिति** । समाप्तेः इत्यर्थः । दर्शनग्रहणं समाप्तौ प्रत्यक्षप्रमाणोपन्यासाय । यथाश्रुते समाप्तिदर्शनं प्रति मङ्गलस्य पूर्वं हेतुत्वाप्रतिपादनात् तत्खण्डनाय व्यभिचारप्रदर्शनस्यासङ्गतत्वापत्तेरिति बोध्यम् । **अन्वयव्यतिरेकव्यभिचारादिति** । अन्वययोः कार्यकारणयोः व्यतिरेकयोः कारणाभावकार्याभावयोश्च व्यभिचारात् अव्यापकत्वादित्यर्थः । तद्ग्रहादिति यावत् । कार्ये कारणाव्यापकत्वग्रहात्, कार्याभावे कारणाभावाव्यापकत्वग्रहात् इति फलितार्थः । तथा च स्वस्वव्याप्येतरयावत्कारणसत्त्वे अग्रिमक्षणे अवश्यं यत्सत्त्वे यदुत्पत्तिः यदभावे अवश्यं यदुत्पत्त्यभावः इति व्यापकत्वघटितान्वयव्यतिरेकसहचारग्रहसहकृतेनैव इन्द्रियेण मङ्गले समाप्तिसाधनत्वं ग्राह्यम् । प्रकृते सहकारिकारणीभूतनिरुक्तसहचारग्रहप्रतिबन्धकान्वयव्यतिरेकव्यभिचारग्रहसत्त्वेन तादृशसहकारिकारणानुत्पत्तौ तत्सहकृतेन्द्रियरूपकारणाभावात् मङ्गले समाप्तिसाधनताप्रत्यक्षं न सम्भवतीति भावः । अत्र घटाद्युत्पादकयावत्कारणसत्ताकाले रासभादिसत्त्वे अग्रिमक्षणे घटाद्युत्पत्त्या रासभादेः घटादिकारणत्वापत्तिवारणाय सहकारिकारणंशरीरे व्यतिरेकदलम् । एवञ्च रासभाद्यभावे घटाद्यभावाभावात् नोक्तदोषः। कपालाकाशसंयोगतद्व्याप्यकपालद्वयसंयोगातिरिक्तयावद्घटकारणसत्त्वे कपालाकाशसंयोगाभावे घटानुत्पत्त्या कपालाकाशसंयोगस्य घटकारणत्वापत्तिवारणाय एतच्छरीरेऽन्वयदलम् । एवञ्च कपालाकाशसंयोगतद्व्याप्यकपालद्वयसंयोगेतरयावत्कारणसत्त्वे कपालद्वयसंयोगशून्यकाले कपालाकाशसंयोगसत्त्वेऽपि घटोत्पत्त्यभावात् नोक्तदोषः । तादृशयावत्कारणसत्त्वे कपालाकाशसंयोगसत्त्वे कदाचित् कपालद्वयसंयोगसत्त्वे घटोत्पत्त्या कपालाकाशसंयोगस्य तदापत्तिः । अतः अन्वयदले

**प.** च अन्वयव्यभिचारव्यतिरेकव्यभिचाराभेदात् इत्यर्थः । न चैवं पक्षे हेत्वोरसिद्ध्या कथं समाप्तिकारणत्वाभावसाधनं इति वाच्यम् । तत्रापि स्वव्याप्येतरयावत्कारणसमवधानकालीनत्वविशिष्टस्वसत्ताप्रयुक्तसत्ताकत्वप्रतियोगिताकाभावरूपान्वयव्यभिचारस्वाभावप्रयुक्ताभावप्रतियोगिकार्थकत्वाभावरूपव्यतिरेकव्यभिचाररूपहेत्वोस्सत्त्वेन तत्साधनसंभवात् । अन्वयव्यभिचारव्यतिरेकव्यभिचारौ क्रमेण परिहरति । **किरणावल्यादावित्यादिना** । किरणावल्यादाविति न व्यभिचार इत्यनेनान्वयः।

दम्बर्यादौ ग्रन्थाद्बहिरेव मङ्गळं कृतमतो न व्यभिचारः। ननु मङ्गळस्य

---

**नी.** बलवत्तरस्य वा मङ्गलस्य विघ्ननिरसनद्वारा समाप्तिसाधनत्वेन तादृशमङ्गळाभावान्नान्वयव्यभिचार इति भावः। **बहिरेवेति**। जन्मान्तर एवेत्यर्थः। अतः कुतश्चिद्ग्रन्थकर्तुर्नास्तिकत्वेऽपि न क्षतिः। **अत इति**। तादृशमङ्गळस्य विघ्नध्वंसद्वारा सत्त्वान्न

**रा.** बन्धकसंसर्गाभावकूटस्यापि कार्यसामान्यं प्रति कारणत्वेन मङ्गळेन यत्किञ्चिद्विघ्नध्वंसेऽपि इतरविघ्नसंसर्गाभावविरहात् न समाप्तिः। न चैवमपि कारणसत्त्वेऽपि कार्यानुत्पादात् अन्वयव्यभिचार इति वाच्यम्। न हि कारणसत्त्वे कार्यानुत्पादः अन्वयव्यभिचारः। तथा सति दण्डादेरपि घटकारणत्वानुपपत्तेः, किन्तु स्वस्वव्याप्येतरयावत्कारणसत्त्वे स्वसत्त्वे कार्यानुत्पाद एव। न च प्रकृते तथा। स्वस्वव्याप्येतरस्य विघ्नान्तरसंसर्गाभावस्य असत्त्वादिति भावः। यत्तु विघ्नसमसङ्ख्याकमङ्गळस्यैव विघ्ननाशकत्वेन विघ्नबाहुल्यस्थले व्यापाराभावात् व्यापारसंबन्धेन मङ्गळस्यैवासत्त्वेन नान्वयव्यभिचार इत्याह तन्मन्दम्। अधिकसङ्ख्याकमङ्गळात् विघ्नध्वंसानापत्तेः। न च विघ्नान्यूनसङ्ख्याकमङ्गळत्वेन कारणत्वमास्तामिति वाच्यम्। विघ्नान्यूनसङ्ख्याकत्वं हि विघ्नपरिसमाप्तसङ्ख्याव्यापकसङ्ख्याकत्वम्। मङ्गळविघ्नपर्याप्तसङ्ख्ययोः वैयधिकरण्येन व्याप्यव्यापकभावासंभवात्, अन्यस्य च तस्य दुर्वचत्वात्। **ग्रन्थाद्बहिरिति**। ग्रन्थस्थ-

**नृ.** व्यापकत्वार्थमवश्यमिति पदम्। एवञ्च तादृशयावत्कारणसत्त्वे कपालद्वयसंयोगसत्ताशून्यकाले कपालाकाशसंयोगसत्त्वेन तत्र तदानीं घटानुत्पत्त्या व्यापकत्वघटितान्वयदलाभावात् न कपालाकाशसंयोगस्य तदापत्तिः। यावत्कारणदण्डव्यतिरेकस्याप्रसिद्धत्वात् तस्य कारणत्वानुपपत्तिः। अतः स्वेतरेति। दण्डेतरचक्रभ्रम्यादिघटितयावत्कारणसत्त्वे दण्डव्यतिरेकेऽपि घटव्यतिरेकाभावात् दण्डस्य कारणत्वानुपपत्तिः। अतः स्वव्याप्येतरेति। घटप्रागभावघटयोरेककालावृत्तितया घटप्रागभावसत्ताकाले घटोत्पत्त्यसम्भवात्तस्य घटकारणत्वानुपपत्तिः। अतस्तद्दले अग्रिमक्षण इत्युक्तम्। तादृशयावत्कारणसत्त्वे दण्डसत्त्वेऽपि अग्रिमक्षणे चक्रे घटोत्पत्तावपि घटस्य स्थित्य-

**प.** तथा च स्वस्वव्याप्येतरयावत्कारणसत्त्वे यत्सत्त्वे अवश्यं यत्सत्त्वम् यदभावे यदभावः इत्यन्वयव्यतिरेकवत्त एव कारणत्वेन प्रकृते व्यापारभूतविघ्नध्वंसरूपकारणाभावात् समाप्त्यभाव इति नान्वयव्यभिचार इति भावः। **कादम्बर्यादाविति**। न व्यभिचार इत्यनेनान्वयः। ग्रन्थाद्बहिः ग्रन्थकालपूर्वकालातिरिक्तकालावच्छेदेनेत्यर्थः। **कृतमिति**। नास्तिकेनेति शेषः। वस्तुतस्तु—ग्रन्थाद्बहिरित्यस्य ग्रन्थावच्छेदकशरीरातिरिक्तशरीरावच्छेदेनेत्यर्थः। जन्मान्तरावच्छेदेनेति यावत्। इत्थं च तस्य नास्तिकत्वेऽपि न क्षतिः। तथा हि विघ्नस्य समसङ्ख्याकमङ्गलाभावाज्जन्मान्तरे मङ्गलसत्त्वाच्चेत्यर्थः। **न व्यभिचार इति**। यत इति शेषः। न व्यभिचारः

नी. व्यतिरेकव्यभिचार इत्यर्थः । एवं च कारणत्वं सिद्धयतीति भावः । परे तु अत

रा. शब्दादप्रतिपाद्यमित्यर्थः । यद्यप्यादिपदग्राह्ये नास्तिकग्रन्थे ग्रन्थाद्बहिः मङ्गलाचरणमिति न शक्यते वक्तुम् । तैरीश्वरानङ्गीकारात्, तथापि ग्रन्थात् बहिरपि मङ्गलं जन्मान्तरीयमेव तत्र मन्तव्यम् । ननु शिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकत्वस्य मङ्गले पूर्वमभिहितत्वेन अत एव मङ्गले कर्तव्यत्वे श्रुतेः प्रमाणत्वलाभात् मङ्गलस्य कर्तव्यत्वे

नृ. भावात् दण्डस्य तदनुपपत्तिः । अतः अन्वयदले यत्सत्त्वमित्यपहाय यदुत्पत्तिरित्युक्तम् । तादृशयावत्कारणाधिकरणचक्रे दण्डाभावेऽपि घटस्य स्थितिसम्भवेन तदभावाभावात् तस्य तदनुपपत्तिरतो व्यतिरेकदले यदभावे इत्यनुक्त्वा यदुत्पत्त्यभाव इति उक्तमिति ध्येयम् । क्वचित्पुस्तके अन्वयव्यतिरेकव्यभिचाराभ्यां व्यभिचारादिति पाठः । तत्र तृतीयायाः अभेदार्थकत्वाङ्गीकारात् अन्वयात्मकव्यभिचारात् व्यतिरेकात्मकव्यभिचारात् । तज्ज्ञानादिति यावत् । अन्वयात्मकव्यभिचारश्च कारणनिरूपितकार्यनिष्ठाव्यापकत्वं, व्यतिरेकात्मकव्यभिचारश्च कारणाभावनिरूपितकार्याभावनिष्ठाव्यापकत्वं, तज्ज्ञानादिति फलितोऽर्थ इति पूर्वोक्तार्थ एव पर्यवसानमिति बोध्यम् । **विघ्नबाहुल्यादिति** । बहूनां विघ्नानां सत्त्वादित्यर्थः । **समाप्त्यभाव इति** । समाप्तिरूपकार्यानुत्पत्तिरित्यर्थः । **ग्रन्थाद्बहिरेवेति** । ग्रन्थादौ तन्निबन्धनं अकृत्वेत्यर्थः । कादम्बर्यादौ तन्निबन्धनमेव न कृतं, मङ्गलं तु कृतमेवेति फलितार्थः । **अतो न व्यभिचार इति** । तथा च किरणावल्यादौ कतिपयमङ्गलेन कतिपयविघ्नध्वंसोत्पत्तावपि केषाञ्चित् विघ्नानां सत्त्वेन विघ्नत्वावच्छिन्नप्रतियोगिताकाभावस्य तत्रावर्तमानतया किरणावल्यादिग्रन्थकर्तरि स्वस्वव्याप्येतरयावत्कारणान्तर्गतविघ्नत्वावच्छिन्नाभावस्यासत्त्वेन तादृशयावत्कारणसत्त्वे अग्रिमक्षणे कार्यानुत्पत्तावेव व्यभिचारप्राप्त्या प्रकृते यावत्कारणासत्त्वेन समाप्त्यनुत्पत्तावपि नान्वयव्यभिचारप्रसक्तिः । कादम्बर्यादिग्रन्थकर्तरि मङ्गलसत्त्वेन तदभावाभावात् । समाप्त्यनुत्पत्त्यभावेऽपि न व्यतिरेकव्यभिचारप्रसक्तिश्चेति । अभ्रान्तस्य तादृशव्यभिचारज्ञानरूपप्रतिबन्धकासत्त्वेन नियतान्वयव्यतिरेकसहचारज्ञानोत्पत्तौ बाधकाभावात् तत्सहकृतेन्द्रियेण समाप्तिकारणताप्रत्यक्षसम्भवेन तदभावरूपयोग्यानुपलब्धिविरहात् सहकारिकारणाभावेन मङ्गले समाप्तिकारणत्वाभावः नेन्द्रियवेद्य इति भावः । मङ्गले समाप्तिकारणत्वं प्रत्यक्षप्रमाणगम्यमित्युपलक्षणम् । तस्यानुमानेनापि ग्राह्यत्वसंभवात् । तथा हि । मङ्गलं समाप्तिसाधनं समाप्तिकामनया शिष्टैरनुष्ठीयमानत्वात् । यत् यत्कामनया शिष्टैरनुष्ठीयते तत्तत्साधनं यथा ज्योतिष्टोमः स्वर्गसाधनम् । अत्र स्वर्गकामनतया बौद्धैरनुष्ठीयमानत्वस्य चैत्यवन्दनेऽपि सत्त्वात् तत्र साध्याभावेन

प. नान्वयव्यभिचारः न व्यतिरेकव्यभिचार इत्यर्थः । तथा च हेतुभूतान्वयव्यभिचारव्यतिरेकव्यभिचारयोरभावादनन्यथासिद्धत्वमक्षतमेवेति भावः । अत्र समाप्तिर्नाम

**नी.** उक्तहेतुद्वयान्न व्यभिचारः नान्वयव्यतिरेकव्यभिचारः इत्याहुः । मणिकृतस्तु 'मङ्ग-

**रा.** किं प्रमाणमित्युत्तरग्रन्थासङ्गतिः । न च तत्र श्रुतिजन्यबोधविषयत्वलाभेऽपि श्रुति-जन्यबोधे प्रमात्वालाभेन श्रुतेः प्रमाणत्वालाभात् नेयमनुपपत्तिरिति वाच्यम् । बाधितार्थस्य श्रुत्या बोधनासंभवादित्यभिप्रायेण नास्तिकग्रन्थेऽपि मङ्गलं विना

**नृ.** व्यभिचारवारणाय शिष्टैरित्युक्तम् । शिष्टत्वञ्चात्र इष्टसाधनत्वांशे भ्रान्तिरहितत्वम् । तथा च तादृशभ्रान्तिरहितसमवेतानुष्ठानविषयत्वं लाघवात् तादृशभ्रान्त्यजन्यानुष्ठान-विषयत्वं वा हेतुरिति पर्यवसितम्। एवं चैत्यवन्दनादिविषयकबौद्धानुष्ठानस्य इष्टसाधन-त्वांशे भ्रमजन्यत्वान्न व्यभिचारः । न च नास्तिकादिग्रन्थे मङ्गलाभावेऽपि समाप्त्यु-त्पत्त्या मङ्गलस्य समाप्तिकारणत्वं बाधितं, एवं च बाधितार्थसाधकत्वात् हेतोः बाधि-तत्वमिति वाच्यम् । नास्तिकादिग्रन्थे विघ्नध्वंसद्वारा जन्मान्तरीयमङ्गलेनैव समाप्त्यु-त्पत्तिस्वीकारेण मङ्गले समाप्तिकारणत्वस्य अबाधिततया तत्साधककहेतोरपि अबाधितत्वात् । न च तथापि जन्मान्तरीयमङ्गलसन्देहाहितसमाप्तिसाधनत्वसन्दे-हसम्भवेन हेतोरपि व्यभिचारसन्देहसम्भवात् व्याप्तिनिश्चयरूपानुमानमेव नावतर-तीति वाच्यम् । ईदृशव्यभिचारसंशयस्य पक्षे साध्यसंशयाधीनतया व्याप्तिनिश्चया-प्रतिबन्धकत्वात् । साध्याभाववत्तांशे निर्णयात्मक-वृत्तित्वांशे संशयनिश्चयसाधारण-स्य व्यभिचारज्ञानमात्रस्यैव व्याप्तिनिश्चयप्रतिबन्धकत्वस्य सकलतान्त्रिकानुमतत्वात् । अन्यथा धूमेऽपि पर्वते वह्निसन्देहाहितव्यभिचारसंशयसंभवात् धूमेऽपि वह्निनिरूपित-व्याप्तिनिश्चयानुत्पत्तिप्रसङ्गः । न चानुकूलतर्कविरहविशिष्टव्यभिचारशङ्काया एव व्याप्ति-निश्चयप्रतिबन्धकतया प्रकृते धूमवह्न्योः कार्यकारणभावरूपानुकूलतर्कसत्त्वेन न धूमे व्याप्तिनिश्चयानुत्पत्तिरिति वाच्यम् । सर्वज्ञगौतमकणादाद्याचाररूपस्य शिष्टाचारानु-मितश्रुतिरूपस्य वा अनुकूलतर्कस्यात्रापि सत्त्वात् व्याप्तिनिश्चयोत्पत्तौ बाधकाभावात् । तस्मान्मङ्गले समाप्तिसाधनत्वमनुमानग्राह्यमित्यपि बोध्यम् । एतेन नास्तिकादिग्रन्थ-समाप्तिस्थले जन्मान्तरीयमङ्गलसन्देहात् मङ्गले समाप्तिसाधनत्वसन्देहेन तादृशसन्दे-हस्य कारणताप्रत्यक्षप्रतिबन्धकतया नियतान्वयव्यतिरेकसहचारज्ञानसहकृतेन्द्रिय-ग्राह्यत्वं समाप्तिसाधनत्वस्य दुर्घटमिति दूषणमपास्तम् । अनुमानेनैव मङ्गले समाप्ति-साधनत्वस्य उपपादितत्वात् । ननु शिष्टाचारानुमितिश्रुतिबोधितकर्तव्यताकं इत्यभेदेन मङ्गलस्य अवश्यकर्तव्यत्वं प्रतिपादितम् । तन्न संभवतीत्याशङ्कते । **नन्विति ।** निर्विघ्नपरिसमाप्त्यर्थं ग्रन्थादौ मङ्गलमेव कर्तव्यमिति नियमे मानाभावः प्रायश्चित्ता-दिनापि विघ्ननाशसंभवात् । ततस्समाप्त्युत्पत्तेश्चेत्याशयेन शङ्कते । **नन्वित्यादिना ।**

**प.** चरमवर्णध्वंसरूपा । चरमत्वं च स्वघटितग्रन्थघटकवर्णप्रागभावासमानकालीनवर्णत्वम् । स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसंबन्धेन समाप्तित्वावच्छिन्नं प्रति समवायेनात्मनि-ष्ठप्रत्यासत्त्या मङ्गलस्य हेतुत्वं बोध्यम् । इत्थं च समाप्तेराकाशनिष्ठत्वेऽपि न क्षतिः ।

**(ग्रन्थादौ) कर्तव्यत्वे किं प्रमाणमिति चेन्न। शिष्टाचारानुमितश्रुतेरेव प्रमाण-**

**नी.** ळस्य विघ्नध्वंस एव फलम्। समाप्तिस्तु स्वसामग्रीवशादेव' इत्याहुः। एतत्तत्त्वम-स्मदीयचिन्तामणिव्याख्यायामनुसन्धेयम्। मङ्गळस्य श्रुतिबोधितकर्तव्यताकत्वं व्यव-स्थापयितुं शङ्कते। **नन्विति। अनुमितश्रुतेरेवेति।** अत्रायमाशयः श्रुतेर्वेदबो-

**रा.** समाप्तिदर्शनात् मङ्गले समाप्तिरूपेष्टसाधनत्वं बाधितमित्याशङ्क्य जन्मान्तरीयमङ्गला-नुमानेन मङ्गले समाप्तिसाधनत्वस्य अबाधितत्वव्यवस्थापनात्। अत एव श्रुतिजन्यबोधे अबाधितार्थकत्वरूपप्रमात्वस्य लाभसंभवात्। न च जन्मान्तरीयसमाप्तेः जन्मान्त-रीयमङ्गळफलकत्वे आमुष्मिकसमाप्तिमुद्दिश्यापि शिष्टानां मङ्गलाचरणापत्तिरिति वा-च्यम्। यतो ह्यामुष्मिकसमाप्तिकामनया मङ्गळकर्तुः ग्रन्थकरणसामर्थ्ये इहजन्मन्येव ग्रन्थे प्रवृत्त्या ऐहिकसमाप्तेरेव तत्फलत्वसंभवात्। तदभावे तु मङ्गळस्य बहुतरायाससा-ध्यत्वाभावेन ग्रन्थकरणसमयेऽपि तदाचरणसंभव इति आक्षेपसंभवात् इति न जन्मा-न्तरीयसमाप्त्युद्देश्यकमङ्गळाचरणापत्तिरिति। कथमन्यथा भाविराज्यसंभावनयां श्वेत-च्छत्रोपार्जनं नरः कुर्यात्। न चैवं नास्तिकसमाप्तेः कथं जन्मान्तरीयमङ्गळफलत्वमिति वाच्यम्। ऐहिकसमाप्तिकामनयैव कृतमङ्गळस्य पूर्वजन्मनि सहकार्यन्तरविरहेण ग्रन्थास-माप्तौ जन्मान्तरीयसमाप्तिफलकत्वसंभवादिति चेन्न। शिष्टाचारानुमितश्रुतेरिदानीन्त-नानामानुपूर्वीविशेषनिर्णयाभावेन बोधकत्वासंभवात् प्रमाणत्वासंभवः। अनुमानस्यापि मङ्गळस्य समाप्तिहेतुत्वेन प्रमाणत्वसंभवः। सर्गाद्यकालीनाशिष्टानां शिष्टाचारविषयत्व-रूपलिङ्गग्रहाभावात् इत्यभिप्रायेण नन्वित्यादिग्रन्थावतारणात्। तत्र च किंशब्द आक्षेपार्थकः। तथा मङ्गळस्य कर्तव्यत्वे समाप्तिरूपेष्टसाधनतारूपे न किमपि प्रमाण-मित्यर्थः। समाधत्ते। **नेति। श्रुतेरेवेति।** एवकारोऽप्यर्थकः। अत्रैव घटो नास्तीत्यादौ तथादर्शनात् नानुमानसमुच्चयः। तथा च सर्गाद्यकालीनशिष्टानां साक्षात् ब्रह्मोपदे-शतः समस्तशाखावेदोपलब्ध्या सकलश्रुत्यानुपूर्वीकज्ञानात् तादृशश्रुतिरेव प्रमाणम्।

**नृ.** **मङ्गळस्येति। ग्रन्थादावित्यादि। कर्तव्यत्व इति।** नियमेन कर्तव्यत्व इत्यर्थः। प्रायश्चित्तादेः अकर्तव्यत्व इति यावत्। **किं प्रमाणमिति।** प्रामाणाभाव इत्यर्थः।

**प.** अधिकं तु मुक्तावलीतत्त्वविवेचने द्रष्टव्यम्। ननु उक्तयुक्तया समाप्तिरूपकार्यं प्रति मङ्गलस्य हेतुत्वसिद्धावपि प्रमाणाभावान्न कर्तव्यमेवेति नास्तिकाशङ्कायामाह। **शिष्टेत्यादिना। श्रुतेरेवेति।** एवकारोऽप्यर्थकः। मङ्गळं कर्तव्यतावत् समाप्त्यादि-प्रयोजनकत्वात् इत्यनुमानमपि तत्र प्रमाणं बोध्यम्। वेदेन बोधिता कर्तव्यता यस्ये-ति विग्रहः। अलौकिकत्वं वेदेतरप्रमाणानवगतफलकत्वम्। अविगीतत्वं धर्मशास्त्रा-विरुद्धत्वम्। आचारः कृतिः विषयपदसमभिव्याहारात्। एतेषां प्रयोजनानि दीपि-कायामेव स्फुटमुक्तानि। ननु तावत् किं नाम शिष्टत्वम्। न तावद्वेदोक्तकर्मकर्तृत्वम्। वेदस्य यावत्त्वे विवक्षिते असम्भवापत्तेः। यावद्वेदविहितकर्मकर्तृत्वस्य वसिष्ठादिष्व

**त्वात् । तथा हि मङ्गलं वेदबोधितकर्तव्यताकमलौकिकाविगीतशिष्टाचारवि-**

**नी.** धितकर्तव्यताकत्वरूपवक्ष्यमाणविधेयकोटिप्रविष्टत्वेऽपि तदन्तर्भावेन विधेयत्वमभ्युपगम्यते । तच्छ्रुतेरनुमितेः पूर्वमसिद्धत्वात् । एतेन 'वह्न्यादिसाध्यकानुमितिविषयतामादाय वह्नित्वादिकमनुमितम्' इति व्यवहाराभावेन श्रुतावनुमितत्वव्यवहारः कथमिति शङ्का निरस्ता । श्रुतौ विधेयत्वाभ्युपगमेन तादृशव्यवहारे बाधकाभावात् । एवकारोऽप्यर्थकः । तेन मङ्गलं कर्तव्यं समाप्तिफलकत्वात् इत्यनुमानरूपप्रमाणान्तरसत्त्वेऽपि न क्षतिः । अन्ये तु 'स्वबोधितकर्तव्यताकत्वसंबन्धेन श्रुतेरेव साध्यता । अग्रिमग्रन्थस्यात्रैव तात्पर्यम् । एवं च श्रुतेरनुमितत्वोपपत्तेः' इत्याहुः । **अलौकिकेति** । विधिमन्तरा रागादिप्राप्तभिन्नेत्यर्थः । **अविगीतेति** । धर्मशास्त्राविरुद्धेत्यर्थः । **शिष्टेति** । वेदोक्ततत्त्वज्ञानेन वेदविहितकर्मकारीत्यर्थः । वेदोक्ताहिंसादिकर्तरि बौद्धेऽतिव्याप्तिवारणाय तृतीयान्तम् । **आचारविषयत्वादिति** ।

**रा.** इदानीन्तनानान्तु तज्ज्ञानाभावेऽपि शिष्टाचारविषयत्वरूपहेतौ सफलत्वरूपसाध्यस्य सहचारज्ञानसत्त्वात् तान् प्रति अनुमानमेव प्रमाणमिति भावः । शिष्टाचारेण श्रुत्यनुमानं कथं कीदृशानुमानं वा आधुनिकानां मङ्गलस्य समाप्तिहेतुत्वे प्रमाणमित्याशङ्कासत्त्वात् । तत्र एकमेवोत्तरमाह । **तथा हीति** । एतेन श्रुतेरेवेत्येवकारेण प्रमाणान्तरव्यवच्छेदात् तथा हीत्यादिना मङ्गलस्य कर्तव्यत्वे अनुमानस्य प्रमाणत्वेन

**नृ.** शिष्टाचारलिङ्गकश्रुत्यनुमितिप्रकारमाह । **तथा हीत्यादिना** । **अलौकिकेति** ।

**प.** प्यभावात् । यत्किञ्चित्त्वविवक्षायां तु अहिंसादिरूपयत्किञ्चिद्वेदोक्तकर्मकर्तृत्वमादाय बौद्धादिष्वतिव्याप्तिः । यदि वेदनिषिद्धाकर्तृत्वे सति यत्किञ्चिद्वेदविहितकर्मकर्तृत्वं शिष्टत्वम् बौद्धादेश्च वेदनिषिद्धचैत्यवन्दनादिरूपकर्मकर्तृत्वान्न तत्रातिव्याप्तिरिति विभाव्यते । तदा वसिष्ठादावव्याप्तेः । वसिष्ठपरशुरामादीनां वेदनिषिद्धभृगुपतनमातृहननादिकर्मकर्तृत्वात् । न च तेषामलक्ष्यत्वम् । तत्प्रणीतस्मृत्यादेरेवाप्रामाणिकत्वापत्तेः । अथ वेदप्रामाण्याभ्युपगन्तृत्वं शिष्टत्वम् । वसिष्ठादिष्वपि वेदाः प्रमाणं इत्यभ्युपगमस्य सत्त्वान्न तत्राव्याप्तिरिति चेन्न । अभ्युपगमस्य ज्ञानरूपस्य त्रिक्षणावस्थायितया तस्य विशेषणत्वविवक्षायां मनसो विषयान्तरसंचारदशायां तदभावेनासंभवापत्तेः । उपलक्षणत्वविवक्षायां तु पूर्वमास्तिकस्य बौद्धतादशायामतिव्याप्तिः । कदाचिद्वेदप्रामाण्याभ्युपगमस्य तस्मिन् सत्त्वादिति चेदत्राहुः । आद्यवेदप्रामाण्याभ्युपगमकालीनविरोध्यभ्युपगमयावत्संसर्गाभाववत्त्वं शिष्टत्वम् । आद्यो यो वेदप्रामाण्याभ्युपगमः तत्कालीना विरोध्यभ्युपगमप्रतियोगिका यावन्तः संसर्गाभावाः तावद्वत्त्वमित्यर्थः । अस्ति चेदं नित्यशिष्टे, वेदप्रामाण्याभ्युपगमकालीनानां विरोध्यभ्युपगमप्रतियोगिकानां यावतामत्यन्ताभावानामत्र सत्त्वात् । य आदौ शिष्टस्ततो नास्तिकस्तत्रापि शिष्टतादशायां नाव्याप्तिः । वेदप्रामाण्या-

नी. आचारः कृतिः तस्या वृत्त्यनियामकविषयतासंबन्धेन हेतुता विवादग्रस्तेति तद्विष-

स. उपन्यस्तत्वात् विरोधः इति परास्तम् । अत्र च श्रुतेः साध्यतावच्छेदककोटिप्रविष्ट-त्वेन अनुमानतः सिद्धये श्रुतिबोधितत्वं कर्तव्यताविशेषणम् । कर्तव्यत्वं च बलवदनि-ष्टाननुबन्धित्वे सति कृतिसाध्यत्वे सति इष्टसाधनत्वम् । परदारगमनचन्द्राहरणजलता-डनादौ कर्तव्यत्वव्यवहाराभावात् । इष्टं च प्रकृते प्रारिप्सितग्रन्थसमाप्तिरेव ।

नृ. अलौकिकत्वे सत्यविगीतत्वे सति शिष्टाचारविषयत्वादित्यर्थः। भोजनादावित्यादिना।

प. भ्युपगमकालीनविरोध्यभ्युपगमप्रतियोगिकानां यावतां प्रागभावानां तत्र सत्त्वात् । नापि नास्तिकतादशायामतिव्याप्तिः । तादृशप्रागभावमध्ये यः प्राथमिकः वेदाः अप्रामाणिकाः इत्यभ्युपगमः तत्प्रतियोगिकाभावस्य निविष्टतया तद्घटित-यावदभावानां तदानीमसत्त्वात्, यावत्पदादाने तु मुमूर्षाकालीनविरोध्यभ्यु-पगमानां प्रागभावस्य मुमूर्षापर्यन्तं सत्त्वेन बौद्धेऽतिव्याप्तिः, तत्र वेदप्रामा-ण्याभ्युपगमकालीनविरोध्यभ्युपगमप्रतियोगिकयत्किञ्चित्संसर्गाभावस्य सत्त्वात्। तद्दाने तु न दोषः । मुमूर्षापूर्वकालीनो यो यो विरोध्यभ्युपगमः तत्तत्प्रतियोगिकप्राग-भावघटितयावदभावानां असत्त्वात् । एवं यस्तु आदौ शिष्टस्ततो नास्तिकः पुनश्च शिष्टस्तस्य द्वितीयशिष्टतादशायामपि नाव्याप्तिः । तत्रापि द्वितीयशिष्टतादशायां यो वेदप्रामाण्याभ्युपगमः तत्कालीनानां विरोध्यभ्युपगमप्रतियोगिकानां यावतां ध्वंसानां सत्त्वात् । न चैवं ध्वंसानां प्रथमशिष्टतादशायामसत्त्वेन वेदप्रामाण्याभ्युपगमकाली-नत्वावच्छिन्नविरोध्यभ्युपगमप्रतियोगिकयावदभाववत्त्वासंभवेन तदानीमव्याप्तिरिति वाच्यम् । एतदव्याप्तिवारणायाद्यपदप्रवेशात् । तथा च द्वितीयाभ्युपगमका-लिकानामभावानामविवक्षितत्वात् । तदसत्त्वेऽपि अव्याप्त्यतिव्याप्त्यनवकाशात् । न चैवमपि द्वितीयशिष्टतादशायामाद्यवेदप्रामाण्याभ्युपगमकालीनप्रागभावासत्त्वे-न तादृशयावदभावासत्त्वादव्याप्तिरिति वाच्यम् । आद्यपदस्य वर्तमानार्थ-कत्वात् । तथा च वर्तमानो यो वेदप्रामाण्याभ्युपगमस्तत्कालीनत्वस्य विशेषणत्वे-नेति । द्वितीयशिष्टतादशायां वर्तमानवेदप्रामाण्याभ्युपगमकालीनाः विरोध्यभ्युपगम-प्रतियोगिका यावन्तोऽभावा ध्वंसा एव तावद्वत्त्वस्य तदानीं सत्त्वान्नाव्याप्तिः । एवं प्रथमशिष्टतादशायामपि वर्तमानवेदप्रामाण्याभ्युपगमकालीनविरोध्यभ्युपगमप्रतियो-गिका यावन्तोऽभावाः प्रागभावा एवेति तद्वत्त्वस्य तत्र सत्त्वान्नाव्याप्तिः । कालीनेति विशेषणानुपादाने निद्राणे बौद्धेऽतिव्याप्तिः । तत्र विरोध्यभ्युपगमप्रतियोगिकध्वंसानां उत्पत्स्यमानविरोध्यभ्युपगमप्रतियोगिकप्रागभावानां यावतां च सत्त्वात् । न च यावत्संसर्गाभावान्तर्गतात्यन्ताभावस्य तत्रासत्त्वान्नातिव्याप्तिरिति वाच्यम् । यावत्प-दस्य *संभाविताशेषपरत्वेन बौद्धे ध्वंसप्रागभावयोरेव संभाविततया तद्वत्त्वस्य तत्र

*लक्षणतावच्छेदकाधिकरणत्वं संभाविताशेषत्वम् ।

षयत्वादर्शादिवत् । भोजनादौ व्यभिचारवारणाय अलौकिकेति । रात्रि-

नी. यत्वस्य हेतुघटनम् । यथाक्रमं हेतुविशेषणप्रयोजनमाह । भोजनादौ इत्यादिना । अलौकिकाविगीताचारविषयत्वस्यैव हेतुतास्तु । अशिष्टाचारविषये तादृशहेतोस्सत्त्वेन

रा. भोजनादाविति । तत्र इष्टसाधनतासत्त्वेऽपि तस्य वेदबोधितत्वाभावात् व्यभिचार इति भावः । यद्यपि 'मुनिभिश्चिन्तनं प्रोक्तं लोकानां मर्त्यवासिनाम् । आहारश्च तमस्विन्यां सार्धप्रहरयामतः ॥' इत्यादिना तत्रेष्टसाधनतायाः वेदबोधितत्वसंभवात् व्यभिचारो दुर्घटः, तथापि भोजनस्य रागप्राप्तत्वेन तत्रोत्पत्तिविध्यसंभवेऽपि पञ्च पञ्चनखा भक्ष्या इत्यत्रेव परिसंख्याविधिरेवाभ्युपेयः । परिसंख्याविधिश्च इतरनिषेधप्रयोजकत्वेन एकस्मिन् दिवस एव वारद्वयातिरिक्तं भोजनं न कुर्यादिति निषेध एव पर्यवसानात् । तत्रेष्टसाधनत्वस्य वेदबोधितत्वे न भवति व्यभिचार इति ध्येयम् । अलौकिकत्वं लोकानवगतेष्टसाधनताकत्वम् । लोको वेदोपजीविप्रमाणातिरिक्तं प्रमाणम् । वेदोपजीविप्रमाणानि च 'ज्योतिष्टोमादीनि स्वर्गसाधनानि तत्त्वेन श्रुतिबोधितत्वात्' इत्यनुमानं स्मृत्यादिश्च । रात्रीति । अविगीतत्वं च

नृ. मालिन्यनिवर्तकस्नानादेः परिग्रहः । अलौकिकेति । अलौकिकत्वं फलनिष्ठकार्यतानिरूपितव्यापारसंबन्धानवच्छिन्नकारणताश्रयीभूतं यद्यत्. तत्तदन्यत्वम् । एवञ्च भोजनादेः साक्षादेव तृप्तिजनकत्वेन तदन्यत्वरूपालौकिकत्वाभावात् न व्यभिचार इति भावः । रात्रिश्राद्धादाविति । शत्रुनाशमुद्दिश्य कृतरात्रिश्राद्धादावित्यर्थः ।

प. सत्त्वादतिव्याप्तेरपरिहार्यत्वात् । *अन्यथानेकाशेषपरत्वे† नित्यशिष्टे विरोध्यभ्युपगमप्रतियोगिकस्यात्यन्ताभावस्यैव तल्लक्षणघटकतया तत्रानेकाभावासत्त्वादव्याप्तेर्दुर्वारत्वात् । कालीनत्वान्तविशेषणदाने च निद्राणे बौद्धे वेदप्रामाण्याभ्युपगमाभावेन तस्मिन्विद्यमानध्वंसप्रागभावयोस्तत्कालीनत्वाभावेनातिव्याप्त्यभावात् । न चैवं शिष्टात्मनिष्ठतद्प्रामाण्याभ्युपगमकालीनत्वस्य निद्राकालीनबौद्धात्मनिष्ठध्वंसप्रागभावयोः सत्त्वेन विशिष्टलक्षणसत्त्वादतिव्याप्तिः स्यादेवेति वाच्यम् । लक्षणघटकीभूतसंसर्गपदस्य सामानाधिकरण्यपरत्वेन वर्तमानवेदप्रामाण्याभ्युपगमसमानाधिकरणविरोध्यभ्युपगमप्रतियोगिकयावदभावत्वस्य विवक्षितत्वात् । निद्राणबौद्धात्मनिष्ठविरोध्यभ्युपगमप्रतियोगिकध्वंसप्रागभावयोर्वर्तमानवेदप्रामाण्याभ्युपगमसमानाधिकरणत्वाभावेन विशिष्टलक्षणासत्त्वादतिव्याप्त्यनवकाशात् । विरोध्यभ्युपगमेत्यनुक्तौ नित्यशिष्टे अव्याप्तिः । तत्र वर्तमानवेदप्रामाण्याभ्युपगमसमानाधिकरणानामतीतानागतादिसुखादिप्रतियोगिकध्वंसप्रागभावानां सत्त्वेऽपि वेदप्रामाण्याभ्युपगमकालोत्पन्नसुखादिप्रति-

*संभाविताशेषत्वरूपत्वमनङ्गीकृत्य ।

†एकत्वान्यसंख्यापर्याप्त्यधिकरणलक्षणतावच्छेदकाधिकरणत्वम् ।

**श्राद्धादौ व्यभिचारवारणाय अविगीतेति । शिष्टपदं स्पष्टार्थम् ।**

---

**नी.** व्यभिचारासंभवादित्याशङ्कामिष्टापत्त्या परिहरति । **शिष्टपदमिति** । जलताडनादौ

**रा.** बलवदनिष्टाननुबन्धित्वं वेदानिषिद्धत्वं वा । रात्रिश्राद्धं न कुर्वीतेति निषिद्धत्वेन तस्य अविगीतत्वाभावादिति भावः । शिष्टपदानर्थक्यपरिहारमाह । **शिष्टपदमिति । स्पष्टार्थमिति** । शिष्याणां ज्ञानार्थमित्यर्थः । शिष्टानां वेदप्रामाण्याभ्युपगन्तॄणामेवाचारः तथाविध इति ज्ञानाकारो बोध्य इत्यर्थः । ननु शिष्टपदं चैत्यवन्दनादौ अतिव्याप्तिवारकमेव संभवतीति किमर्थं तस्य स्पष्टार्थकत्वमुपगम्यते । तस्याप्यलौकिकत्वात् अविगीतत्वाच्च । वेदप्रामाण्याभ्युपगन्तृभिः तदनाचरणाच्च, शिष्टपदेन तद्वारणस्यापि संभावत् । न च दत्तेऽपि शिष्टपदे प्रमादतः शिष्टकृततथाचेष्टायां अतिव्याप्तिर्दुर्वारैवेति वाच्यम् । प्रकृतशिष्टपदस्य वेदप्रामाण्याभ्युपगन्तृत्वपरत्वाभावेन फलसाधनत्वांशे भ्रान्तिरहितत्वस्यैव शिष्टपदार्थत्वाभ्युपगमात्

**नृ.** आदिना शत्रुनाशकमन्त्रजपादेः परिग्रहः । **अविगीतेति** । अविगीतत्वं बलवदनिष्टाननुबन्धित्वम् । एवञ्च तादृशरात्रिश्राद्धादेः निरुक्तालौकिकत्वेऽपि नरकसाधनत्वेन बलवदनिष्टाननुबन्धित्वरूपाविगीतत्वाभावात् न व्यभिचार इति भावः । नन्वत्र शिष्टपदमनर्थकं अलौकिकत्वाविगीतत्वोभयसमानाधिकरणविषयतानिरूपकाचारस्य शिष्टमात्रसमवेतत्वादित्याशङ्कां इष्टापत्त्या परिहरति । **शिष्टपदं स्पष्टार्थमिति** । निरुक्तोभयसमानाधिकरणविषयतानिरूपकाचारः शिष्टान्यासमवेत इति स्फुटप्रतिपत्त्यर्थमेवेत्यर्थः । न तस्य प्रयोजनान्तरमस्तीति भावः । ननु शिष्टपदानुपादाने निरर्थकजलताडनादेरपि निरुक्तहेतुमत्त्वात् तत्र साध्याभावेन व्यभिचार इत्याशङ्कां

**प.** योगिकध्वंसप्रागभावयोस्तदानीमसत्त्वेन तादृशयावदभावासत्त्वात्ततो विरोध्यभ्युपगमप्रतियोगिकेति । तथा च विरोध्यभ्युपगमप्रतियोगिकस्य तादृशात्यन्ताभावस्यैव तत्र सत्त्वेन अव्याप्तेरनवकाशादिति शिष्टत्वं निर्वक्तुं शक्यमेव । केचित्तु ननु नास्तिकादिव्यावृत्तं शिष्टत्वं दुर्वचम् । न च वेदप्रामाण्याभ्युपगन्तृत्वं शिष्टत्वं तदिति वाच्यम् । तथा सति ज्ञानरूपाभ्युपगमस्य द्विक्षणावस्थायित्वेन तन्नाशदशायां शिष्टत्वाभावप्रसङ्गादिति चेन्न । तज्जन्यदृढतर*संस्काररूपवासनाविशेषात्मकाभिमानवत्त्वस्यैव शिष्टत्वरूपत्वात् । स च विरोधिसंस्कारप्रादुर्भावान्नश्यतीति नास्तिकतादशायां न शिष्टत्वापत्तिरिति वदन्ति । ननु अलौकिकाचारविषयस्यैव शिष्टाचारत्वात्तेनैव सामञ्जस्ये शिष्टपदं व्यर्थमित्याह । **शिष्टपदमिति** । तथा च †व्यभिचाराद्यवारकत्वेऽपि

---

*संस्कारपदं ज्ञानपरम् ।

†आदिना स्वरूपासिद्धिपरिग्रहः ।

**न कुर्यान्निष्फलं कर्म इति जलताडनादेरपि निषिद्धत्वात्। तर्क्यन्ते प्रति-**

---

**नी.** अशिष्टाचारविषये तादृशहेतोरसत्त्वं स्फुटयति । **न कुर्यादिति** । स्वर्गादिफले व्यभिचारवारणाय आचारविषयत्वेति । विधेयताख्याचारविषयत्वार्थकमिति सङ्क्षेपः । तर्कपदस्याऽऽरोपार्थकत्वभ्रमं वारयितुं द्रव्यादिसाधारणतर्कत्वं निर्वक्ति । **तर्क्यन्त**

**रा.** इत्यत आह । **न कुर्यादिति** । यद्यपि विधिनिषेधयोः नराधिकारीयत्वेन पश्वादि-कृतवृथाचेष्टायां अलौकिकत्वाविगीतत्वयोः सत्त्वेन तत्र व्यभिचारवारणाय शिष्टपद-

**नृ.** तत्र हेतुघटकाविगीतत्वविशेषणासत्त्वप्रतिपादनेन परिहरति । **न कुर्यादिति ।** तथा च तादृशजलताडनादेः निषिद्धत्वात् । अविगीतत्वेन तत्राविगीतत्वघटितहेत्व-

**प.** व्यतिरेकव्याप्तौ अखण्डाभावसंपादकतया सार्थकमिति भावः । तादृशाचारस्यैव शिष्टाचारत्वे शिष्टपदादानेऽपि जलताडनादौ न व्यभिचार इत्याह । **न कुर्यादि-त्यादिना** । आदिना योधगमनादिपरिग्रहः । एवं च तस्य प्रमाणवलात्कर्तव्यत्वे सिद्धे न कुर्यादिति वलात् फलं कल्पनीयम् । अत्र प्राञ्चः विघ्नध्वंसद्वारा समाप्तेरेव फलत्व-कल्पनान्न काप्यनुपपत्तिरिति तन्न । न हि कृतमङ्गलस्यासमाप्तिः विघ्नान्तरोत्पत्त्यादि-वक्ष्यमाणरीत्या तैर्वक्तुं शक्यते । द्वारीभूतविघ्नध्वंसस्य पूर्वं जातस्य सत्त्वेन दुरितान्त-रोत्पादेऽपि समाप्त्यापत्तेर्दुर्वारत्वात् । अतः मङ्गलं निष्फलमेव स्यादिति । नव्यास्तु प्रारिप्सितादौ शिष्टैर्मङ्गलाचरणेन 'यान्यस्माकँ सुचरितानि तानि त्वयोपास्यानि' इति श्रुत्या सुचरितपदज्ञापितालौकिकाविगीतशिष्टाचारविषयस्य कर्तव्यताबोधनेन मङ्गलस्य सफलत्वे सिद्धे उपस्थितत्वात् प्रारिप्सितप्रतिवन्धकदुरितनाशस्यैव फलत्व-कल्पनात् । न च 'कृतमङ्गलासमाप्तिस्थले व्यभिचारः तत्र दुरितध्वंसस्योत्पादात् समाप्त्यभावस्तु दुरितान्तरोत्पादेन प्रतिवन्धकात्यन्ताभावविरहात् । न हि प्राचीन-मत इव विघ्नध्वंसस्य समाप्तिहेतुत्वम् । येन दुरितान्तरोत्पादेऽपि पूर्वोत्पन्नदुरितध्वंस-सत्त्वात्समाप्तिरापद्येत । न चाकृतमङ्गलस्थले व्यतिरेकव्यभिचारः । स्वतस्सिद्धविघ्नात्यन्ता-भावादेव समाप्त्या विघ्ननाशस्यैवानुत्पादात् । प्राचीनमते तु जन्मान्तरीयमङ्गलजन्यविघ्न-ध्वंसकल्पनया तत्र व्यभिचारो वारणीय इति गौरवम् । विशेषणतया विघ्ननाशं प्रति समवायादिना मङ्गलं कारणमिति आत्मनिष्ठप्रत्यासत्त्यैव कार्यकारणभावः । ननु कायव्यूहस्थले एकशरीरावच्छेदेन मङ्गले अन्यशरीरावच्छेदेन विघ्ननाशापत्त्या तद-वच्छिन्नसमाप्त्यापत्तिरिति चेन्न । शरीरान्तरावच्छेदेन समाप्तेरिष्टत्वात् क्वचित्तदभावस्तु दुरितान्तरोत्पादात् तच्छरीरावच्छिन्नकार्योत्पत्तिं प्रति तच्छरीरावच्छिन्नकार्यविषयके-च्छायाः कायव्यूहस्थले कारणत्वावश्यकत्वात् तादृशेच्छाभावाद्वा उपपादनीयः । आत्म-निष्ठप्रत्यासत्त्यङ्गीकारादेव परकायप्रवेशस्थले पूर्वात्मनिष्ठमङ्गलसत्त्वे अपरात्मनि आपा-दनमपि निरस्तम् । अधिकं तु मुक्तावलीतत्त्वविवेचने द्रष्टव्यम् । तर्कशब्दार्थं निर्वक्ति । **तर्क्यन्त इति** । तेषामित्यत्र द्रव्यादिपदार्थाः तच्छब्दार्थः । विशेष्यत्वं षष्ठ्यर्थः ।

पाद्यन्ते इति तर्काः द्रव्यादिपदार्थास्तेषां संग्रहः सङ्क्षेपेण स्वरूपकथनं क्रियत

---

नी. इति । उपादानरूपसंग्रहस्यासंभवादाह । संक्षेपेणेति । स्वरूपकथनं स्वरूपज्ञानानु-

रा. मधिकारिपरमावश्यकमेव । तथापि बलवदनिष्टाननुबन्धित्वमेव प्रकृते अविगीतत्वम् । तच्च इष्टोत्पत्त्या तदीयदुःखनिजदुःखाजनकत्वम् । वृथाचेष्टास्थले इष्टोत्पत्त्यभावेन

नृ. भावादेव तत्र साध्याभावेऽपि व्यभिचारवारणे शिष्टपदं व्यर्थमेवेति भावः । एतादृशानुमानेन वेदबोधितकर्तव्यत्वरूपसाध्यघटकश्रुत्यनुमितौ तादृशी श्रुतिः कीदृशानुपूर्वीकेत्याकाङ्क्षायां पठ्यमानवेदस्य अध्यापकोक्तिपरंपरया आनुपूर्वीनिर्णयवत् अनुमितवेदस्यापि सर्वज्ञगौतमकणादादिभिः समाप्तिकामो मङ्गळमाचरेत इत्याद्यानुपूर्वीविशिष्टश्रुतेरेव तत्र तत्र लिखितत्वात् तादृशश्रुतिरेव सिध्यति । एवं च तादृशश्रुत्या समाप्तिकामस्य ग्रन्थादौ मङ्गळस्यैव कर्तव्यत्वप्रतिपादनात् तादृशश्रुत्यन्यथानुपपत्त्या ग्रन्थादौ समाप्तिकामनया मङ्गळमेव कर्तव्यं न प्रायश्चित्तादिकं समाप्तिकामः प्रायश्चित्तमाचरेतेति केनचिल्लिङ्गेन केनचित्पुरुषेणाननुमितत्वात् । न च तथापि शिष्टाचारेण श्रुतिरेवानुमेया आवश्यकत्वात् न तु श्रुतिबोधितकर्तव्यतापि व्यर्थत्वादिति वाच्यम् । शिष्टाचारलिङ्गेन श्रुतिमात्रानुमितेरसंभवात् । तथा हि शिष्टाचारस्य समवायेन हेतुत्वे श्रुतेः स्वानुकूलकृतिमत्त्वसंबन्धेन साध्यत्वे च मूकसमवेतभोजनाद्याचारस्य निरुक्तशिष्टसमवेताचारत्वेन तस्य च मूकादौ सत्त्वात् । तत्र निरुक्तसंबन्धेन साध्याभावात् व्यभिचारापत्तिः। मूकस्त्रीबालशूद्राद्यसमवेतशिष्टाचारस्य हेतुत्वमङ्गीकृत्य उक्तव्यभिचारवारणेऽपि सर्वेष्वध्यापकेषु समवायेन तादृशहेतुसत्त्वात् । तत्र तेन सम्बन्धेन मङ्गळस्य कर्तव्यताबोधकश्रुतेरभावात् तद्दोषतादवस्थ्यम् । स्वरूपविषयत्वोभयघटितसामानाधिकरण्यसम्बन्धेनालौकिकत्वाविगीतत्वोभयविशिष्टशिष्टाचारस्य हेतुत्वे मङ्गळनिष्ठालौकिकत्वादेः आत्मन्यभावात् । तत्र विशिष्टहेतोरभावेन आत्मनः पक्षत्वासम्भवः । मङ्गळस्यैव पक्षत्वमङ्गीकृत्य निरुक्तहेतुना प्रतिपाद्यतासम्बन्धेन श्रुत्यनुमाने मङ्गळं प्रमेयमित्यादिश्रुतिसिद्धिमादायार्थान्तरदोषापत्तिः । तथा मङ्गळस्य कर्तव्यताप्रतिपादनात् । तस्मात् मङ्गळे निरुक्तहेतुना स्वनिष्ठकर्तव्यताबोधकश्रुतिकत्वं श्रुतिबोधितकर्तव्यत्वं चावश्यं साधनीयं इति न वैयर्थ्यशङ्केति दिक् । अत्र स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसम्बन्धेन चरमवर्णध्वंसरूपसमाप्तिं प्रति आश्रयतासम्बन्धेन ज्ञानरूपमङ्गळस्य स्वानुकूलकृतिमत्त्वसम्बन्धेन वस्तुनिर्देशरूपमङ्गळस्य च हेतुत्वं वाच्यम् । स्वप्रतियोगिचरमवर्णावच्छेदकतासम्बन्धेन समाप्तिं प्रति समवायसम्बन्धेन क्रियाविशेषरूपमङ्गळस्य हेतुत्वं वाच्यम् । तेन चरमवर्णध्वंसरूपसमाप्तेः आकाशनिष्ठत्वेऽपि न क्षतिः । केचित्तु चरमवर्णरूपैव समाप्तिः बाधकाभावात् कार्यतावच्छेदकसम्बन्ध-

प. संक्षेपः अल्पशब्दः । घटितत्वं तृतीयार्थः । असाधारणधर्मप्रकारकज्ञानानुकूलव्यापारः स्वरूपकथनशब्दार्थः । कृञ्धातोः कृतिरर्थः । आख्यातस्य विषयत्वम् । तथा च

इत्यर्थः । कस्मै प्रयोजनायेत्यत आह । **सुखबोधायेति** । सुखेनानायासेन यो बोधः पदार्थज्ञानं तस्मा इत्यर्थः । ननु बहुषु तर्कग्रन्थेषु सत्सु किमर्थमपूर्वोऽयं ग्रन्थः क्रियत इत्यत आह । **बालानामिति** । तेषामतिविस्तृतत्वाद्बालानां बोधो न जायत इत्यर्थः । ग्रहणधारणपटुर्बालः न तु स्तनन्धयः । किं कृत्वा क्रियत इत्यत आह । **निधायेति** । विश्वेशं जगन्नियन्तारम् । हृदि निधाय नितरां स्थापयित्वा सदा तद्ध्यानपरो भूत्वेत्यर्थः । गुरूणां विद्यागुरूणां, वन्दनं नमस्कारं, विधाय कृत्वेत्यर्थः ।

---

**नी.** कुलशब्दः । एतावता द्रव्यादिपदार्था विषयाः, पदार्थतत्त्वावधारणं प्रयोजनम्, संबन्धश्च प्रतिपाद्यप्रतिपादकभावः, पदार्थतत्त्वावधारणकामोऽधिकारीत्यनुबन्धचतुष्टयं प्रेक्षावत्प्रवृत्त्यङ्गं सूचितम् । षष्ठीतत्पुरुषभ्रमवारणायाह । **सुखेनेति** । सुखबोधरूपप्रयोजनस्याऽन्यतःसिद्धत्वेन एतद्ग्रन्थकरणे प्रयोजनाकाङ्क्षा न शाम्यतीत्याशयेनावतारयति । **नन्विति** । तेषां भाष्यादिग्रन्थानाम् । मूले **सप्त पदार्था इति** । द्रव्यत्वादिरूपा ये सप्तोपाधयः तदन्यतमवन्तः पदार्था इत्यर्थः । तत्र सप्तत्वमपेक्षाबुद्धिविशेषविषयत्वमेवमग्रिमग्रन्थस्याऽपि पर्यवसानमवधेयम् । ननु सामान्यधर्मज्ञानस्य विशेषजिज्ञासां प्रति हेतुत्वात्सामान्यलक्षणकथनानन्तरमेव विभागो युक्तः ।

**रा.** कष्टं कर्मेति न्यायेन तज्जनितश्रमस्य इष्टोत्पत्त्यनान्तरीयकजनकनिजदुःखतया पश्वादिवृथाचेष्टायामपि अविगीतत्वाभावेन व्यभिचारासंभवादिति ध्येयम् । **ननु**

**नृ.** लाघवाचेत्याहुः । अपरे तु आनुपूर्वीविशेषावच्छिन्नचरमवर्णज्ञानं तादृशचरमवर्णध्वंसज्ञानं वा समाप्तिः बाधकाभावात् । समवायस्य कार्यतावच्छेदकसम्बन्धत्वसम्भवेन लाघवाचेत्याहुः । तद्द्वयमपि मन्दम् । इदानीमपि अयं ग्रन्थः समाप्तिविशिष्ट इति सकलतान्त्रिकव्यवहारानुपपत्तेः चरमवर्णस्य तद्ध्वंसविषयकज्ञानस्य वा इदानीं अवर्तमानत्वादिति बोध्यम् । अधिकन्तु अस्मत्कृतमुक्तावलीप्रभायां अनुसन्धेयम् ।

**प.** द्रव्यादिपदार्थत्वावच्छिन्नविशेष्यकस्वल्पशब्दघटितलक्षणस्वरूपासाधारणधर्मप्रकारकज्ञानानुकूलव्यापारानुकूलकृतिविषयीभूत इत्यन्वयबोधः । प्रतिज्ञावाक्यघटकीभूतसामान्यलक्षणमाह । **पदस्यार्थ इति** । पदार्थः पदशक्यः । इति व्युत्पत्त्या, इत्याकारकावयवव्युत्पत्त्या । अभिधेयत्वं अभिधाविषयत्वं, विषयतासंबन्धेनाभिधैव वा पदार्थसामान्यलक्षणं बोध्यम् । ननु वाक्यार्थे अतिव्याप्तिः तस्यापदार्थत्वेनालक्ष्यत्वात् । अभिधेयत्वस्य केवलान्वयित्वात् । तथा न च पदशक्तिरेव, तथा च नातिव्याप्तिरिति वाच्यम् । तथा सति तल्लक्षणस्य अपदार्थभूतवाक्यार्थव्यावर्तकत्वेन व्यावर्तकस्यैव लक्षणत्वेत्यादिग्रन्थविरोधापत्तेरिति चेन्न । तस्यापि वाक्यार्थस्य पदार्थत्वेन

**पदार्थान् विभजते। द्रव्येति। पदस्यार्थः पदार्थः इति व्युत्पत्त्याभिधेयत्वं पदार्थसामान्यलक्षणम् (लभ्यते)। ननु विभागादेव सप्तत्वे सिद्धे सप्त (पद)**

---

**नी.** मूले कथमादौ विभाग इति न्यूनतां परिहरति। **पदस्येति**। पदस्यार्थोऽभिधेयः इति व्युत्पत्त्या पदसंबन्ध्यभिधाविषयत्वस्य लाभेऽपि पदसंबन्धित्वांशस्याव्यावर्तकत्वादाह। **अभिधेयत्वमिति**। लक्षणं लभ्यत इति शेषः। तथा च न न्यूनतेति भावः। **विभागादेवेति**। पदार्थत्वावान्तरधर्मपुरस्कारेण धर्मिप्रतिपादनादेवेत्यर्थः।

**रा.** **विभागादेवेति**। परस्परमसंकीर्णव्याप्यधर्माणामेव विभाजकतया द्रव्यगुणादीनां

**नृ.** **पदार्थान् विभजत इति**। अत्र विपूर्वकभजधातोः अवान्तरधर्मप्रकारकज्ञानानुकूलव्यापारोऽर्थः। आख्यातस्य कृतिरर्थः। पदार्थानित्यत्र द्वितीयायाः सविषयकधातुयोगात् विशेष्यताख्यविषयत्वमर्थः। तस्य धात्वर्थैकदेशे ज्ञानेऽन्वयः। एवञ्च पदार्थविशेष्यकपदार्थत्वावान्तरधर्मप्रकारकज्ञानानुकूलव्यापारानुकूलकृतिमान् संग्रहकार इति शाब्दबोधः। एवमग्रेऽपि। ननु मङ्गलकरणानन्तरं पदार्थसामान्यमुद्दिश्य मूले विभागकरणं न सम्भवति। विभागं प्रति उद्देश्यज्ञानस्य हेतुत्वेन तदभावादिति चेन्न। क्रियते तर्कसंग्रह इति प्रतिज्ञाघटकतर्कपदेनैव पदार्थसामान्यस्योपस्थितत्वेन उक्तदोषाप्रसक्तेः। ननु सामान्यधर्मप्रकारकज्ञानस्य विशेषधर्मप्रकारकजिज्ञासां प्रति हेतुतया लक्षणात्मकसाधारणधर्मप्रकारकज्ञानाभावात् कियन्तः पदार्था इति जिज्ञासानुत्पत्त्या विभागकरणमनुचितम्। अजिज्ञासितत्वेनार्थान्तरदोषापत्तेरित्याशङ्कां लक्षणप्रदर्शनेन परिहरति। **पदस्येति**। पदार्थ इति नैकं पदं, किन्तु वाक्यमिति बोधनाय विग्रहप्रदर्शनम्। तस्यैकपदत्वे पदार्थपदस्य कोशेनाभिधेये शक्त्यप्रतिपादनात् असाङ्गत्यापत्तेः। **इति व्युत्पत्त्येति**। एतादृशविग्रहबोध्यार्थकपदार्थ इति वाक्यघटकार्थपदेन इत्यर्थः। **लभ्यत इति**। अर्थोऽभिधेय इति कोशेनार्थपदस्य अभिधेयत्वावच्छिन्ने शक्तिप्रतिपादनात् इत्यर्थः। इदमुपलक्षणम्। ऋ गतावित्यनुशासनबलात् गत्यर्थको धातुः। तस्य गुणे कृते अरिति धातुनिष्पत्तिः। तदुपरि थप्रत्यये अर्थ इति शब्दो निष्पन्न इति गत्यर्थकधातूनां ज्ञानार्थकत्वनियमेन विषयार्थकप्रत्ययान्तार्थशब्देन ज्ञानविषयत्वं लभ्यत इति ज्ञानविषयत्वमपि पदार्थसामान्यलक्षणम्। प्रतिपाद्यतासम्बन्धेन पदार्थशब्दवत्त्वं लक्ष्यतावच्छेदकमिति बोध्यम्। **मूले द्रव्येत्यादि**। अत्राभावपदस्य द्रव्याद्यभावान्तान्यतमत्वविशिष्टे लक्षणा। द्रव्यादिपदानि तात्पर्यग्राहकाणि। एतेन कस्मिन्नपि पदार्थे द्रव्याद्यभेदाभावात् असङ्गतिदोषस्य नावकाश इति भावः। एवं च समानविभक्तिकपदद्वयसमभिव्याहारबलात् अभेदसम्बन्धेन द्रव्याद्यभावान्तान्यतमविशिष्टाः पदार्थाः इत्यन्वयबोधः। तत्र सप्तपदस्य प्रयोजनं वक्तुमाक्षिपति दीपिकायाम्। **नन्वित्यादिना**। **विभागादेवेति**। द्रव्यगुणेत्यादिद्वन्द्वसमभिव्याहृतबहुवचनादेवेत्यर्थः। तथा च द्वन्द्वसमभिव्याहृतबहुवचनस्य

**प.** लक्ष्यत्वात्। **पदार्थान् विभजत इति**। विभागो नाम सामान्यधर्मप्र-

**ग्रहणं व्यर्थमिति चेन्न अधिकसंख्याव्यवच्छेदार्थकत्वात् । नन्वतिरिक्तः**

---

नी. **अधिकसंख्याव्यवच्छेदार्थकत्वादिति** । तादृशसंख्यानिषेधसिद्धिफलकत्वादि-

रा. परस्परभेदे सिद्धे तेषां सप्तत्वस्यार्थतो लाभात् इति भावः । **अधिकसंख्येति** । व्यर्थं सत् किंचित् ज्ञापयति इति न्यायेन सप्तत्वाधिकसंख्या पदार्थेषु नास्तीति व्यवच्छेदबोधायैव तदुपादानादिति भावः । यद्यपि पदार्थानां द्रव्यगुणादीनां बहुविधत्वेन सप्तत्वाधिकसंख्या अस्त्येवेति तन्निषेधो न संभवत्येव । न च पदार्थविभाजकोपाधित्वेन तन्निषेधो वाच्य इति वाच्यम् । तेष्वपि तदाश्रयानादाय अधिकसंभवात् । तथापि पदार्थविभाजकोपाधित्वव्याप्यसप्ताधिकसंख्याव्यवच्छेदस्यैव तात्पर्यविषयत्वात् । **नन्वतिरिक्त इति** । द्रव्या-

नृ. द्वन्द्वप्रतिपाद्यतावदर्थपर्याप्तसङ्ख्यावाचकत्वनियमः अवश्यमङ्गीकरणीयः । अन्यथा रामलक्ष्मणभरतशत्रुघ्ना इत्यत्र बहुवचनेन त्रित्वादिबोधोत्पत्त्या अनुभवविरोधापत्तेः । एवञ्च प्रकृते द्वन्द्वप्रतिपाद्यद्रव्याद्यभावान्तसमुदायपर्याप्तसंख्यावाचकतायाः तादृशद्वन्द्वसमभिव्याहृतबहुवचनस्यावश्यं स्वीकार्यतया तादृशसङ्ख्या सप्तत्वसङ्ख्यैवेति बहुवचनेन तत्सिद्धिरिति भावः । **सप्तपदग्रहणं व्यर्थमिति** । मूलस्थसप्तपदं निष्प्रयोजनकमित्यर्थः । सप्तत्वोपस्थितेः बहुवचनेनैव सम्भवादिति भावः । **अधिकसङ्ख्याव्यवच्छेदार्थकत्वादिति** । अष्टत्वसङ्ख्यापर्याप्त्यधिकरणसमुदायनिषेधार्थकत्वादिति भावः । अष्टौ पदार्था न सन्तीति ज्ञानायेति यावत् । सप्तपदमावश्यकमिति शेषः । तथा च यथा ब्राह्मणमानयेत्यादिवाक्यघटकैकवचनान्तब्राह्मणपदेन एकत्वविशिष्टब्राह्मणस्यानयननिरूपितकर्मत्वेन उपस्थितावपि द्वितीयं नानयेत्यर्थालाभः । एकं ब्राह्मणमानयेत्यादौ सङ्ख्यावाचकैकादिपदानामितरनिषेधार्थकत्वात् द्वितीयं नानयेत्यर्थलाभः । तथा द्रव्येत्यादिद्वन्द्वसमभिव्याहृतबहुवचनेन सप्तत्वरूपबहुत्वसङ्ख्योपस्थितावपि अष्टत्वसङ्ख्यापर्याप्त्यधिकरणसमुदायस्य निषेधालाभात् तदर्थं सप्तपदमप्यावश्यकमिति भावः । ननु द्रव्याद्यभावान्तपदार्थेषु सप्तत्वसङ्ख्यापर्याप्तिवत् परार्थत्वपर्यन्तसंख्याया अपि तादृशपदार्थे पर्याप्ततया अष्टत्वादिसंख्यापर्याप्त्यधिकरणपदार्थानां सत्त्वात् तादृशपदार्थनिषेधः सप्तपदसहस्रेणापि कर्तुमशक्य इति चेन्न । अष्टत्वसङ्ख्यापर्याप्त्यधिकरणपदार्थनिषेधार्थं सप्तपदमिति न ब्रूमः । किन्तु सप्तत्वाधिकसङ्ख्यापर्याप्त्यधिकरणपदार्थविभाजकधर्मनिषेधार्थम् । एवञ्च मूले सप्तपदार्था इत्यस्य सप्तपदार्थविभाजकधर्मान्यतमविशिष्टा इत्यर्थः । तथा च सङ्ख्यावाचकैकादिपदानां इतरनिषेधबोधतात्पर्यग्राहकतया एकघटवद्भूतलमित्यादौ द्वितीयघटाभावबोधवत् सप्तपदार्थविभाजकधर्मान्यतमविशिष्टा इत्यनेनाष्टमपदार्थविभाजकधर्मशून्या इत्यर्थलाभसम्भवात् व्यवच्छेदसङ्गतिः । एतदभिप्रायेणैव दीपिकाकारेणाधिकसङ्ख्याव्य-

प. कारकज्ञानविशेष्यीभूतपदार्थविशेष्यकपरस्परासमानाधिकरणधर्मप्रकारकज्ञानानुकूलव्या-

**पदार्थः प्रमितो वा न वा । नाऽद्यः प्रमितस्य निषेधायोगात् । न द्वितीयः प्रतियोगिप्रमितिं विना निषेधानुपपत्तेरिति चेन्न । पदार्थत्वं**

---

नी. त्यर्थः । उद्देश्यविधेयभावस्थले उद्देश्यतावच्छेदके विधेयव्याप्यत्वभानमौत्सर्गिकमि-

रा. व्यतिरिक्त इत्यर्थः । **प्रमितो वेति** । यद्यपीदमसङ्गतम् । सप्ताधिकसंख्याया एव व्यवच्छेद्यत्वेन पूर्वमुक्ततया द्रव्यादिभिन्नपदार्थस्य प्रकृते अव्यवच्छेद्यत्वात् । तथापि द्रव्यादिभिन्नपदार्थस्य प्रमितत्वे तद्गतासाधारणधर्मस्य पदार्थविभाजकत्वात् आवश्यकत्वेन तत्साधारणातिरिक्तसप्तत्वाधिकसङ्ख्यायाः प्रमितत्वात् तद्व्यवच्छेदो न संभवतीत्यत्र तात्पर्यात् नासङ्गतिः । **प्रतियोगीति** । यद्यपि प्रतियोगिविशेषिताभावबुद्धौ प्रतियोगिज्ञानस्यैव हेतुत्वेन प्रतियोगिप्रकारकप्रमा **न हेतुः**। अन्यथा अवृत्तिगगनादेरभावबुद्ध्यनुपपत्तेः । तथापि प्रतियोगितावच्छेदकप्रकारकप्रतियोगिविशेष्यकप्रमैव प्रकृते प्रमाशब्दार्थः । प्रतियोगिताव-

नृ. वच्छेदार्थकत्वादित्युक्तमिति ध्येयम् । ननु सप्तपदेन निरुक्तपदार्थलाभोऽपि न संभवति अप्रसिद्धत्वादित्याशङ्कते । **नन्विति । अतिरिक्तः पदार्थ इति** । अतिरिक्तः अष्टमपदार्थः पदार्थविभाजकधर्म इत्यर्थः । **प्रमितो वा न वेति** । प्रमाविषयत्ववान् तदभाववान् वेत्यर्थः । ननु संशयधर्मिणः अष्टमपदार्थविभाजकधर्मस्य प्रमितत्वतदभावरूपकोट्यन्तरस्य चाप्रसिद्धत्वेन धर्मितावच्छेदकप्रकारकानिर्णयाभावात् कोटिद्वयोपस्थित्यभावाच्च कथं विकल्प इति चेन्न । प्रकृतेऽष्टमत्वं द्रव्यत्वाद्यभावत्वान्तपदार्थविभाजकधर्माणां प्रत्येकप्रतियोगिकभेदसप्तकवत्त्वम् । द्रव्यत्वाद्यभावत्वान्ततादृशधर्मान्यतमत्वावच्छिन्नप्रतियोगिताकैकभेदवत्त्वं वा । तथा च तादृशभेदविशिष्टः विभाजकधर्मः प्रमितो वा न वा पदार्थविभाजकधर्मत्वेन प्रमितो न वा । अथवा पदार्थविभाजकधर्मः अष्टमः प्रमितो वा न वा निरुक्तभेदवत्त्वरूपाष्टमत्वेन प्रमितो न वेत्यत्र तात्पर्यात् धर्मिप्रसिद्ध्या कोटिद्वयप्रसिद्ध्या च विकल्पसङ्गतिरिष्टार्थलाभश्चेति बोध्यम् । अस्मद्गुरुचरणास्तु अतिरिक्तः पदार्थः प्रमितो वा न वेति, प्रमितः पदार्थः पदार्थविभाजकधर्मोऽतिरिक्तो न वेत्यर्थः । धर्म्यप्रसिद्धिशङ्कानिरासाय तादृशधर्मे प्रमितत्वमुपात्तम् । न तु धर्मितावच्छेदककोटौ तस्यापि निवेशः गौरवात् प्रयोजनाभावाच्च । अतिरिक्तत्वं चात्र द्रव्यत्वाद्यभावत्वान्तान्यतमाधिकरणावृत्तित्वम् । तथा च पदार्थविभाजकधर्मः द्रव्यत्वाद्यभावत्वान्यतमाधिकरणावृत्तिर्न वेति अर्थलाभात् धर्मितावच्छेदकरूपेण धर्मिप्रसिद्ध्या गगनाद्यन्तर्भावेन कोटिप्रसिद्ध्या च विकल्पसङ्गतिरिष्टार्थलाभश्चेति। **प्रमितस्येति**। विद्यमानस्येत्यर्थः। **प्रतियोगिप्रमितिं विनेति**। प्रतियोगिनः कालसम्बन्धं विनेत्यर्थः। **निषेधानुपपत्तेरिति**। शशशृङ्गस्येव निषेधासम्भवादिति व्याचक्रुः। **पदार्थत्वमिति** । पदार्थविभाजकधर्माः यावन्तः

प. पारात्मकशब्दप्रयोगः । सप्तग्रहणमाक्षिपति । **नन्विति** । परिहरति । **पदार्थत्व-**

**द्रव्यादिसप्तान्यतमत्वव्याप्यामिति व्यवच्छेदार्थकत्वात् ( सप्तग्रहणम् )। ननु**

---

नी. त्याशयेनाह । **पदार्थत्वमिति** । **व्यवच्छेदार्थकत्वादिति** । एतद्रूपो यो व्य-

रा. च्छेदकविशिष्टप्रतियोगिज्ञानं च अभावादिबुद्धौ हेतुरेव । अभावबुद्धेः विशिष्ट-वैशिष्ट्यावगाहित्वानियमेन विशेषणतावच्छेदकप्रकारकनिर्णयजन्यत्वादिति भावः । तदपि प्रमात्मकाभावज्ञानमेवापेक्षितम् । घटत्वेन घटावगाहिज्ञानादपि घटो नास्तीत्याकारकस्य भ्रमात्मकज्ञानस्य संभवादिति ध्येयम् । **सप्तान्यतमत्वेति** । तच्च द्रव्यादिभेदसप्तकात्यन्ताभावः द्रव्याद्यवृत्तिपदार्थाभावो वा । नातो द्रव्यादिभिन्नपदार्थाप्रसिद्धावपि अन्यतमत्वाप्रसिद्धिः । **व्यवच्छेदार्थकत्वादिति** । अधिक-

नृ. तावदन्यतमत्वावच्छिन्नमित्यर्थः। **द्रव्यादिसप्तान्यतमत्वव्याप्यमिति**। अत्र सप्तपदं द्रव्याद्यभावान्तलाभाय,न तु व्यापकतावच्छेदककोटौ सप्तत्वस्यापि प्रवेशः। गौरवात् प्रयोजनाभावाच्च । एवञ्च द्रव्याद्यभावान्तान्यतमत्वनिरूपितव्याप्यत्वलाभः । **इति व्यवच्छेदार्थकत्वादिति** । इत्याकारकनिश्चयफलकत्वादित्यर्थः । **सप्तग्रहणमिति** ।

प. मिति । **व्यवच्छेदार्थकत्वादिति** । व्यवच्छेदो निश्चयः स एवार्थो यस्य तस्य भावस्तस्मादित्यर्थः । तथा च पदार्थत्वविशेष्यकद्रव्याद्यन्यतमत्वनिरूपितव्याप्तिप्रकारकनिश्चयार्थकं सप्तग्रहणं भवतीति न वैयर्थ्यापत्तिः । ननु सप्तपदस्य सप्तत्वसङ्ख्यायां शक्तत्वेन तद्विशिष्टघटादिलाक्षणिकत्वेन निश्चयात्मकार्थे शक्तिलक्षणान्यतरासम्भवात् कथं तदर्थकत्वमिति । न च निरुक्तव्याप्तिप्रकारकेच्छया उच्चरितं विभागवाक्यमिति तात्पर्यग्राहकत्वेन सप्तपदस्य सार्थकत्वमिति वाच्यम्। उद्देश्यविधेयस्थले व्याप्यव्यापकभावावश्यम्भावात् । प्रकृते उद्देश्यतावच्छेदकीभूतपदार्थत्वव्यापकत्वं विधेयीभूतद्रव्याद्यन्यतमत्वे भासते चेत्तद्व्याप्यत्वमुद्देश्यतावच्छेदकीभूतपदार्थत्वे भासत एवेति । एवं च विभागवाक्यादेव निरुक्तनिश्चयसंभवात् सप्तपदस्य वैयर्थ्यापत्तेरिति चेन्न । अप्रामाण्यज्ञानानास्कन्दितसंशयान्यतादृशव्याप्तिप्रकारकनिश्चयस्यैवानुमितिहेतुत्वावश्यम्भावात्तादृशनिश्चयो न केवलं विभागवाक्यात् भवतीति तदर्थं सप्तग्रहणमिति बोध्यम् । न चैवं तादृशनिश्चयोऽपि मास्तु तदर्थं सप्तग्रहणमपि मास्तु। को दोष इति वाच्यम् । तथा सति नवीनानां महदनिष्टं स्यात् । तथा हि । द्रव्यगुणकर्मसामान्यविशेषसमवायाभावास्सप्त पदार्थाः षोडशपदार्थानामत्रैवान्तर्भूतत्वादित्यादिकणादसूत्रव्याख्यानावसरे प्रमाणादिषोडशपदार्थान् पक्षीकृत्य पदार्थत्वरूपहेतुना द्रव्याद्यन्यतमत्वसाधने प्रमाणादिविशेष्यकद्रव्याद्यन्यतमत्वविधेयकानुमितिं प्रत्यप्रामाण्यज्ञानानास्कन्दितसंशयान्यपदार्थत्वविशेष्यकद्रव्याद्यन्यतमत्वनिरूपितव्याप्तिप्रकारकज्ञानं करणमिति वाच्यम् । तच्च सप्तग्रहणमन्तरा न संभवतीति सप्तग्रहणमावश्यकमित्यालोचय । एवं संख्यायाः पृथङ्निवेशस्तु अभावत्वेन सङ्ख्याधिकरणतावच्छेदकद्रव्यत्वादीनां परस्परासामानाधिकरण्यरूपो न्यूनसङ्ख्याव्यवच्छेदो॰

**सप्तान्यतमत्वं सप्तभिन्नभिन्नत्वमिति वक्तव्यम् । सप्तभिन्नस्याप्रसिद्धया कथं सप्तान्यतमत्वव्याप्तिनिश्चय इति चेन्न । द्रव्यादिसप्तान्यतमत्वं नाम द्रव्यादिभेदसप्तकाभाववत्त्वम् । अतो दोषविरहात् । एवमग्रेऽपि द्रष्टव्यम् ।**

---

नी. वच्छेदो निर्णयस्तदर्थकत्वादित्यर्थः । **सप्तभिन्नभिन्नत्वमितीति** । द्रव्यादयो ये सप्त पदार्थास्तद्भेदकूटविशिष्टभिन्नत्वं वक्तव्यमित्यर्थः । **द्रव्यादिभेदसप्तकाभाववत्त्वमिति** । द्रव्यादिभेदानां प्रत्येकं प्रसिद्धानां सप्तानां कुत्राप्यसत्त्वेन तादृशभेदसप्तकत्वावच्छिन्नाभावस्य सर्वत्र सत्त्वान्न दोष इति भावः । वस्तुतस्तु पदार्थत्वं द्रव्यादिसप्तान्यतमत्वव्याप्यम् इत्यस्य पदार्थत्वं द्रव्यत्वादिसप्तोपाध्यन्यतमवत्त्वव्याप्यमित्यर्थः । तेन बहुषु पुस्तकेषु सप्तान्यतमत्वाप्रसिद्धिशङ्का तत्समाधानपरस्य ननु सप्तान्यतमत्वम् इत्यादिग्रन्थस्यासत्त्वेऽपि न क्षतिरिति ध्येयम् । **एवमग्रेऽपीति** ।

रा. सङ्ख्येत्यादिग्रन्थव्यवच्छेदशब्दार्थत्वादित्यर्थः । सप्तपदस्य प्रकृते पदार्थत्वे निरुक्ता-

नृ. आवश्यकमिति शेषः । ननु यावत्पदार्थविभाजकधर्मान्यतमत्वावच्छिन्ननिष्ठद्रव्याद्यभावान्तान्यतमत्वव्याप्यत्वबोधकत्वं न शक्त्या सप्तपदस्य तत्र शक्त्यभावात् । न च सप्तपदस्य लक्षणयैव तद्बोधोऽस्त्विति वाच्यम् । तादृशव्याप्यत्वे शक्यसम्बन्धरूपलक्षणाया अभावात् । कथञ्चित् शक्यसंबन्धोपपादनेन तद्बोधोपपादनेऽपि वक्ष्यमाणसप्तत्वबोधानुपपत्तेः । सकृदुच्चरितशब्दः सकृदेवार्थप्रत्यायक इति न्यायादिति चेन्न । न वयं सप्तपदस्य वृत्त्या तादृशव्याप्यत्वबोधकत्वं आचक्ष्महे । येन उक्तदोषः प्रसज्येत । किन्तूद्देश्यविधेयभावमहिम्नैव तादृशबोधः । तथा हि । यावत्पदार्थविभाजकधर्मान्यतमत्वावच्छिन्नं उद्दिश्य द्रव्याद्यभावान्तान्यतमत्वविधानात् अनुमिताविव शाब्दबोधेऽप्यसति प्रतिबन्धके विधेये उद्देश्यतावच्छेदकव्यापकत्वस्य संसर्गविधया भाननियमेन प्रकृते द्रव्याद्यभावान्तान्यतमत्वरूपविधेये यावत्पदार्थविभाजकधर्मान्यतमत्वावच्छिन्ननिरूपितव्यापकत्वबोधे जाते तद्बलादुत्तरकालं निरुक्तोद्देश्यतावच्छेदके निरुक्तविधेयव्याप्यत्वस्यापि मानसप्रत्यक्षसम्भवात् । एवञ्च पदार्थविभाजकधर्माः सप्त वा अष्टौ वा इति संशयस्य निरुक्तव्याप्यत्वसंशयजनकसामग्रीत्वेन तादृशसंशयाधीनस्य निरुक्तोद्देश्यतावच्छेदके निरुक्तविधेयव्याप्यत्वसंशयस्य ग्राह्यसंशयविधया तादृशमानसप्रत्यक्षात्मकनिश्चयप्रतिबन्धकतया तादृशसंशयानुत्पादाय सप्तपदमुपा-

प. लभ्यते । यद्यपि सप्तत्वं न गुणात्मकसङ्ख्यारूपम्, गुणादिषु तद्वत्त्वासम्भवात् । नाप्यन्यतमत्वरूपं द्रव्यादिभेदसप्तकाश्रयाप्रसिद्धया तदन्यत्वरूपान्यतमत्वस्याप्रासिद्धेः । तथापि द्रव्यादिसप्तवृत्तिशून्यत्वरूपमन्यतमत्वं तत् । न तत्रापि सप्तत्वप्रवेशादात्माश्रय इति वाच्यम् । द्रव्यावृत्तित्वे सति गुणावृत्तित्वे सतीत्येवंप्रकारेण प्रत्येकं तत्तदवृत्तित्वस्य संयोगादिना तदवृत्तिगगनादीनां निवेशेन सप्तत्वानिवेशात् द्रव्याद्यवृत्तिच

नी. एवंरीत्या द्रव्याणीत्यादावपीत्यर्थः । **द्रव्यमिति** । जात्येकवचनम् । मीमांसकमतं

रा. न्यतमत्वव्याप्यत्वबोधकतया न नैरर्थक्यम् । न वा अप्रसिद्धिः । अधिकपदार्थसत्त्वे

नृ. त्तम् । एवञ्च सप्तपदेन पदार्थविभाजकधर्मे सप्तत्वोपस्थितौ अष्टत्वाभावोपस्थितौ च पदार्थविभाजकधर्माः सप्त वा अष्टौ वा इत्याकारकस्य सप्तत्वतदभावकोटिकस्य अष्टत्वतदभावकोटिकस्य च संशयस्य सामग्र्यभावेनानुत्पत्तौ तदधीनव्याप्यत्वसंशयस्यापि अनुत्पत्त्या प्रतिबन्धकलेशाभावेन तादृशव्याप्यत्वप्रकारकनिर्णयात्मकमानसप्रत्यक्षं अनायासेन सम्भवतीति दीपिकाकर्तुः निगूढाभिप्रायमिति ध्येयम् । ननु तथापि निरुक्तव्याप्तिनिश्चयसम्पादकं सप्तपदं व्यर्थमेव । तादृशव्याप्तिनिश्चयस्यैवानपेक्षितत्वात् इति चेन्न । तादृशव्याप्तिनिश्चयस्यानपेक्षितत्वे प्रमाणादिषोडशपदार्थान् प्रत्येकं पक्षीकृत्य द्रव्याद्यभावान्तान्यतमत्वरूपद्रव्याद्यन्तर्भूतत्वस्य पदार्थविभाजकधर्मवत्त्वहेतुना द्रव्यादिदृष्टान्तेन साधनासम्भवेन षोडशपदार्थानां द्रव्याद्यन्तर्भूतत्वासिद्धिप्रसङ्गात् । न चेष्टापत्तिः षोडशपदार्थानामत्रैवान्तर्भूतत्वादिति कणादसूत्रविरोधापत्तेरिति दिक् । अनयैव दिशा द्रव्यादिविभागवाक्यघटकनवादिग्रहप्रयोजनमप्यूह्यम् । ननु द्रव्याद्यभावान्तान्यतमत्वं न तावत् तादृशाभावान्तसमुदायत्वावच्छिन्नप्रतियोगिताकभेदावच्छिन्नप्रतियोगिताकभेदवत्त्वं एको न द्वाविति

प. गगनादि, तच्छून्यत्वं द्रव्यादौ संभवतीति नाप्रसिद्धिः । अथ कालिकसंबन्धेन आकाशादेर्वृत्तित्वमते गगनादेरपि द्रव्याद्यवृत्तित्वमप्रसिद्धम् । यत्किञ्चित्संबन्धेनावृत्तित्वविवक्षणे संयोगादिना तदवृत्तेर्गगनादेः मेयत्वादेश्च कालिकसंबन्धेन स्वरूपसंबन्धेन च द्रव्यादिवृत्तित्वात्तच्छून्यत्वासंभवः । येन येन संबन्धेन द्रव्याद्यवृत्ति यत् तेन तेन संबन्धेन तच्छून्यत्वं तत् इत्युक्तौ वीप्सायाः प्रयोजनभावात् अभावीयविशेषणतासंबन्धेनावृत्तित्वस्य तच्छून्यत्वस्य च विवक्षणे प्रकृते यथाकथंचित् संभवेऽपि सर्वत्र न तादृशसामान्याद्यन्यतमपदार्थत्वं सङ्गच्छते । द्रव्यगुणकर्मावृत्तिगगनादिशून्यत्वादेरपि द्रव्यगुणकर्मान्यतमत्वपदार्थत्वापत्त्या सामान्यादावपि द्रव्यगुणकर्मान्यतमपदप्रयोगापात्तिः । प्रमेयत्वादिमात्रं द्रव्यादिसप्तान्यतमत्वं इत्युक्तावपि प्रकृतानिर्वाहाच्च । न च द्रव्यादिसप्तावृत्तियावच्छून्यत्वं तदन्यतमत्वं द्रव्यगुणकर्मान्यतमत्वमपि तत्त्रितयावृत्तियावच्छून्यत्वमिति यावदन्तर्गतसत्ताभावादेः सामान्यादौ सत्त्वेन तच्छून्यत्वाभावान्न सामान्यादौ द्रव्यगुणकर्मान्यतमपदप्रयोगापत्तिरिति वाच्यम् । एकसत्त्वेऽपि यावदन्तर्गतगगनादेस्तत्रासत्त्वेन यावत्त्वावच्छिन्नाभावस्य सामान्यादावक्षतेस्तादृशयावतां प्रत्येकाभावसमुदायवत्त्वविवक्षणे त्वतिगौरवं इति चेन्न । तादृशावृत्तित्वावच्छिन्नप्रतियोगिताकाभाववत्त्वविवक्षणात् । यत्किञ्चिदवृत्तिमति च तत्त्वावच्छिन्नाभावसत्त्वान्न दोषः । तत्राप्यवृत्तित्वं शून्यत्वं चाभावविशेषणतयैव बोध्यम् । तेन नोक्तदोषः ।

**नी.** दूषयितुमुपन्यस्यति । **नन्वित्यादिना** । प्रतीतिबलात् प्रात्यक्षिकप्रतीतिबलात् ।

**रा.** निरुक्तव्याप्यत्वासंभवेन तादृशसंख्याव्यवच्छेदासंभवादिति भावः । **अबाधि-**

**नृ.** प्रतीत्या एकस्मिन्नुभयत्वावच्छिन्नप्रतियोगिताकभेदवत् एको न सप्तेति प्रतीत्या प्रत्येकमेकस्मिन् तादृशभेदसत्त्वेन तस्य केवलान्वयितया तादृशभेदावच्छिन्नप्रतियोगिताकभेदाप्रसिद्धेः । नापि द्रव्यत्वाद्यभावत्वान्तानां प्रत्येकधर्मावच्छिन्नप्रतियोगिताकभेदसमुदायवद्भिन्नत्वम् । तादृशसमुदायवतः अप्रसिद्धत्वेन तादृशसमुदायवद्भिन्नत्वस्य सुतरामप्रसिद्धत्वादिति चेन्न । द्रव्यत्वाद्यभावत्वान्तानां प्रत्येकावच्छिन्नप्रतियोगिताक-

**प.** यद्वा तत्तदेकत्वद्वयावगाहिबुद्धिविशेषविशेष्यत्वं अन्यतमत्वम् । तत्तद्वृत्तिषु नानैकत्वप्रकारकबुद्धिविशेषविशेष्यत्वं अन्यतमत्वम् । एकत्वं च न गुणात्मकसंख्यारूपम्, गुणादावभावात् । किन्तु तत्तत्संख्याधिकरणतावच्छेदकद्रव्यत्वाद्यवच्छिन्नभेदाभावरूपोऽभेदः सोऽपि तत्तत्प्रतियोगितावच्छेदकद्रव्यत्वादिरूप एव तादृशान्यतमत्वघटकतादृशधर्मेषु परस्परासामानाधिकरण्यमपि निवेशनीयम् । तेन घटो द्रव्यमिति ज्ञानविषयत्वमादाय न तत्र द्वित्वादिप्रत्ययापत्तिः । तत्र परस्परसामानाधिकरण्याभावे सत्येव अयमेकोऽयमेकः इत्यादिप्रतीतेः । वस्तुतस्तु अयमन्यतरोऽयमन्यतम इत्येकस्मिन्नप्यन्यतरत्वादिप्रतीत्या द्वावित्याद्यप्रतीत्या न द्वावित्याद्यैक्यप्रतीत्या चान्यतरत्वादेर्द्वित्वादिसंख्यायाश्च परस्परं भेद आवश्यक इति तादृशैकत्वप्रकारकापेक्षाबुद्धिविशेषविषयत्वं द्वित्वादिसंख्या । तस्याश्च व्यासज्यवृत्तित्वाङ्गीकारादेको न द्वावित्यादिप्रतीतिरुपपद्यते । तादृशापेक्षाबुद्धिविशेषविषयैकत्ववत्त्वं च अन्यतरत्वादिकम् । एवं च प्रकृते संख्यावाचकसप्तपदस्य अन्यतमत्वविशिष्टे लक्षणा । तादृशान्यतमत्वस्वरूपभानादेव परस्परासामानाधिकरण्यमपि भासते । तद्घटकैकत्वेषु परस्परासामानाधिकरण्यविशेषणात् । तेन तादृशन्यूनसंख्याव्यवच्छेदोऽपि लभ्यते । न च द्रव्यत्वादिषु परस्परासामानाधिकरण्यबोधेऽपि द्रव्यादिषु कस्मिंश्चित्पदार्थत्वाभावशङ्कायाः कथं निवृत्तिः । द्रव्याद्यन्यतमस्य कस्यचित्तर्कपदार्थत्वाभावेऽपि द्रव्याद्यन्यतमत्वस्य पदार्थत्वव्यापकत्वान्न क्षतिरिति वाच्यम् । विभागवाक्यस्थले परस्परोद्देश्यविधेयकबोधाङ्गीकारेण द्रव्यादयः पदार्था इति द्रव्याद्यन्यतमोद्देश्यकपदार्थविधेयकबोधस्याप्रसिद्धत्वादेव विधेयतावच्छेदकीभूतपदार्थत्वे उद्देश्यतावच्छेदकद्रव्याद्यन्यतमत्वव्यापकत्वस्यापि बोधेन तादृशशङ्कानुदयादिति दिक् । वस्तुतस्तु सम्यक्पर्यालोचनया सप्तपदं व्यर्थमेवेति प्रतिभाति । तथा हि । सप्तपदादानेऽपि गणनादिनैव पदार्थत्वं द्रव्यादिसप्तान्यतमत्वव्याप्यं इति पदार्थत्वविशेष्यकद्रव्यादिसप्तान्यतमत्वनिरूपितव्याप्तिप्रकारकज्ञानस्योदयात् । न च अधिकसंख्याव्यवच्छेदार्थं सप्तग्रहणं इति वाच्यम् । सप्तपदाग्रहणेऽपि द्रव्यादयः पदार्था इति ग्रन्थेन 'असति बाधके सर्वं वाक्यं साव-

द्रव्यं (द्रव्याणि ) विभजते । **तत्रेति** । तत्र द्रव्यादिमध्ये । द्रव्याणि नवैवेत्यन्वयः । कानि तानि इत्यत आह । **पृथिवीति** । ननु तमसो दशमद्रव्यस्य विद्यमानत्वात्कथं नवैत्र द्रव्याणीति । तथा हि । नीलं

---

**नी.** तस्य द्रव्यत्वेऽनुमानं प्रमाणयति । **नीलरूपाधारतयेति** । समवायेन नीलरूप-

**रा.** **तेति** । शुक्ताविदं रजतमिति प्रतीतिबलादपि रजतत्वासिद्धेः अत उक्तमबाधितेति ।

**नृ.** भेदसमुदायत्वावच्छिन्नप्रतियोगिताकात्यन्ताभाववत्त्वस्य तदर्थकत्वात् नोक्तदोषः। वस्तुतस्तु द्रव्याद्यभावान्तान्यतमत्वं द्रव्यत्वाद्यभावत्वान्तान्यतमासमानाधिकरणशून्यत्वम्, द्रव्यत्वाद्यभावत्वान्तान्यतमवत्त्वं वा लाघवादिति प्रतिभाति । **द्रव्याणीति** । उद्देशक्रमानुसारात् प्रथममित्यादिः । **विभजत इति** । अवान्तरधर्मप्रकारकज्ञानानुकूलव्यापारानुकूलकृतिमान् इत्यर्थः । मूले **तत्र द्रव्याणीति** । सप्तपदार्थसमुदायघटकप्रथमोद्दिष्टद्रव्याणीत्यर्थः । **पृथिवीत्यादि** । अत्राप्युक्तदोषवारणाय चरममनःपदस्य पृथिव्यादिमनोऽन्तान्यतमविशिष्टे लक्षणाया आवश्यकत्वात्तादृशान्यतमाभिन्नानीत्यर्थलाभः। नवैव द्रव्याणीत्यन्वयबलात् द्रव्यपदस्य द्रव्यविभाजकधर्मान्यतमावच्छिन्नार्थकत्वात् । नवैवेति पदोपस्थितनवत्वसंख्यायाः एवकारार्थदशत्वादिसंख्याशून्यत्वस्य च उक्तदोषवारणाय द्रव्यविभाजकधर्मे एवान्वयावश्यकत्वाच्च तादृशान्यतमविशिष्टानि दशत्वसंख्याशून्यनवत्वसंख्याविशिष्टद्रव्यविभाजकधर्मान्यतमविशिष्टानीति तत्र द्रव्याणीत्यादिवाक्यप्रतिपाद्योऽर्थः । द्रव्यविभाजकधर्मे नवत्वविशेषणप्रयोजनन्तु पदार्थविभाजकधर्मे सप्तत्वविशेषणप्रयोजनदिशा ज्ञेयमिति हृदयम् । अत्र दशमत्वरूपसंख्याविशिष्टतमस्त्वरूपद्रव्यविभाजकधर्माङ्गीकर्तृमीमांसकमतनिराकरणाय मूले नवैवेत्येवकारः प्रयुक्त इति स्फुटीकरणायादौ तन्मतमुपन्यस्यति दीपिकायाम् । **नन्वित्यादिना** । **तमसो दशमद्रव्यस्येति** । दशमत्वाश्रयतमस्त्वरूपद्रव्यविभाजकधर्मावच्छिन्नस्येत्यर्थः । **कथं नवैव द्रव्याणीतीति** । नवत्वसंख्यापर्याप्त्यधिकरणद्रव्यविभाजकधर्मान्यतमवन्तीति कथमित्यर्थः । द्रव्यविभाजकधर्मे नवत्वसंख्यापर्याप्तिः कथमिति फलितोऽर्थः । ननु तमसः द्रव्यत्वे मानाभावात् न तमस्त्वस्य द्रव्यविभाजकधर्मत्वं इत्याशङ्कां, तमसः द्रव्यत्वेऽपि पृथिव्यादिमनोऽन्तान्यतमत्वाश्रयत्वेन पृथिवीत्वादिमनस्त्वान्तान्यतमरूपद्रव्यविभाजकधर्माश्रयत्वात् तमस्त्वस्य कॢप्त-

**प.** धारणं' इति न्यायेन द्रव्यादय एव पदार्था इति लाभात् । एवकारस्य सप्तपदार्थातिरिक्तव्यवच्छेदकत्वं सिद्धमेवेति सप्तपदं निरर्थकमेवेति चिन्तनीयम् । अथवा तदर्थमेव सप्तग्रहणमित्यपि गृहाण । **द्रव्याणि विभजत इति** । द्रव्यत्वावच्छिन्नविशेष्यकावान्तरधर्मप्रकारकज्ञानानुकूलकृत्याश्रयो ग्रन्थकारः । पृथिव्यादि नवैवेत्यधिकसंख्याव्यवच्छेदमसहमानः प्रत्यवतिष्ठते । **नन्विति** । तमसो द्रव्यान्तरत्वमुपपादयति । **तथा हीति** । तत्र युक्तिमाह । **नीलं तम इति** ।

**तमश्चलतीत्यबाधितप्रतीतिबलान्नीलरूपाधारतया क्रियाधारतया च तमसो द्रव्यत्वं तावत् सिद्धम् । तत्र तमसो नाकाशादिपञ्चकेऽन्तर्भावः**

---

**नी.** वर्त्तयेत्यर्थः । तेन कालिकादिसम्बन्धेन तस्याऽतिप्रसक्तत्वेऽपि न क्षतिः । एवमग्रेऽपि बोध्यम् । तत्र द्रव्यत्वे सिद्धे सत्यतिरिक्तत्वं व्यवस्थापयितुं क्लृप्तद्रव्येष्वन्तर्भावं निरा-

**रा.** उत्तरकाले बाधरहितेति तदर्थः । **अत एवेति** । रूपवत्त्वादेवेत्यर्थः । संभवद्वेत्व

**नृ.** द्रव्यविभाजकधर्मव्यधिकरणत्वाभावेन घटत्वादेरिव नवद्रव्याविभाजकधर्मत्वमिति शङ्काञ्च तमसः द्रव्यत्वसाधनेन पृथिव्यादिमनोऽन्तान्यतमत्वशून्यत्वसाधनेन च परिहरति । **तथा हीत्यादिना** । तमसि वक्ष्यमाणद्रव्यत्वसाधकहेतोः स्वरूपासिद्धत्वशङ्कापरिहारायादौ तादृशहेतोः प्रत्यक्षसिद्धत्वमाह । **नीलं तम इत्यादिना** । तादृशप्रतीतेः भ्रमत्वे विषयसिद्धेरसम्भवात् अबाधितप्रतीतिबलात् इत्युक्तम् । प्रमात्मकप्रतीत्यन्यथानुपपत्तेरित्यर्थः । **नीलरूपाधारतयेत्यादि** । तादृशप्रतीत्यन्यथानुपपत्त्या अवश्यमङ्गीकार्येण नीलरूपवत्त्वलिङ्गेन क्रियावत्त्वलिङ्गेन चेत्यर्थः । **द्रव्यत्वं तावत्सिद्धमिति** । तावदिति वाक्यालङ्कारः । द्रव्यत्वमनुमितिनिरूपितविधेयतावत् इत्यर्थः । तथा च तमः द्रव्यं नीलत्वात् क्रियावत्त्वाच्च नीलघटादिवत् इत्यनुमानात् तमसि द्रव्यत्वसिद्धिरिति भावः । अत्र नीलत्वस्य हेतुत्वे नीलद्रव्याणामेव दृष्टान्तत्वसंभवः । क्रियाया हेतुत्वे मूर्तमात्रस्य दृष्टान्तत्वसंभवः इति दृष्टान्तसौलभ्याय द्वितीयहेत्वनुसरणमिति ध्येयम् । एतावता तस्य द्रव्यत्वं प्रसाध्य इदानीं पृथिव्यादिमनोऽन्तान्यतमत्वानाश्रयत्वं साधयति । **तत्रेति** । पृथिव्यादिमनोऽन्तान्यतम इत्यर्थः । घटकत्वं सप्तम्यर्थः । तस्य आकाशादिपञ्चकेऽन्वयः । **तमस इति** । तमोनिष्ठ इत्यर्थः । **नाकाशादिपञ्चकेऽन्तर्भाव इति** । आकाशादिमनोऽन्तान्यतमत्वाभाव इत्यर्थः । तम आकाशादिमनोऽन्तान्यतमत्वशून्यमिति । आकाशत्वादिमनस्त्वान्तान्यतम शून्यमिति यावत् । **रूपवत्त्वादिति** । घटवदिति शेषः । अत्र तमसि आकाशादिमनोऽन्तान्यतमत्वाभावसाधनं सुलभम् । एकेन हेतुना तत्संभवादिति सौलभ्यज्ञानात् । प्रथमं तत्साधन एव बालानामिच्छा संभवतीति तदि-

**प.** प्रतीतेः भ्रमत्वं वारयति । **अबाधितेति** । न केवलगुणाश्रयत्वेन द्रव्यत्वम् । किन्तु क्रियाश्रयत्वेनापीत्याह । **क्रियेति । सिद्धमिति** । प्रमाणतो लक्षणतश्चेति शेषः । ननु तमसो द्रव्यत्वे सिद्धेऽपि दशमद्रव्यत्वं केन प्रमाणेन सिध्यतीत्याकाङ्क्षायां परिशेषानुमानप्रमाणादिति वक्तुं तस्य नवस्वनन्तर्भावमाह । **तत्र तमस इति** । तथा च तमः आकाशादिपञ्चकभिन्नं रूपवत्त्वादित्यनुमानप्रकारः । अत्राकाशत्वादिकं नीरूपत्वव्याप्यं, तमसि न नीरूपत्वं, तस्मादाकाशत्वाद्यभाववदित्यर्थः । अत्र रूपवत्त्वं समवायेन बोध्यम् । तेन कालिकविशेषणतया तद्वत्त्वमादाय कालादौ न व्यभिचारः ।

**रूपवत्त्वात् । अत एव न वायौ, स्पर्शाभावात् सदागतिमत्त्वाभावाच्च ।**

---

नी. चष्टे । **तमस इत्यादिना** । अत एव रूपवत्त्वादेव । **न वायाविति** । अन्तर्भाव इत्यनुषज्यते । संबन्धभेदाभिप्रायेणाह । **स्पर्शाभावादिति** । इदं ध्वंसप्रागभावाधिकरणेऽत्यन्ताभावो नाङ्गीक्रियत इति प्राचीनमताभिप्रायेण । अन्यथा समवायावच्छिन्नस्पर्शसामान्याभावस्य दैशिकविशेषणतयोत्पत्तिकालावच्छेदेन वायावपि सत्त्वात् व्यभिचरितत्वापत्तेः । वस्तुतस्तु निरवच्छिन्नदैशिकविशेषणतया तस्य हेतुत्वमिति ध्येयम् । विषमहेतुमभिधाय समव्याप्तं तमाह । **सदागतीति** । सदागतिर्विजातीयक्रिया । उप-

रा. न्तरानुक्तया स्वस्य न्यूनतामपाकर्तुमाह । **सदागतीति** । एवमग्रेऽपि बोध्यम् ।

नृ. च्छानुरोधात् पश्चान्निर्दिष्टानामप्याकाशादिमनोऽन्तान्यतमत्वशून्यत्वं आदौ साधितमिति हृदयम् । एतेनोद्देशक्रमानुसारात् पृथिव्याद्यनन्तर्भूतत्वसाधनानन्तर एव आकाशाद्यनन्तर्भूतत्वस्य साधनीयतया प्रथमं तत्साधने बीजाभाव इति दूषणमपास्तम् । इदानीमप्यव्यवहितपूर्वोपस्थितिक्रमेण वाय्वनन्तर्भूतत्वं साधयति । **अत एवेति** । रूपवत्त्वादेवेत्यर्थः । **न वायाविति** । वायौ नान्तर्भवतीत्यर्थः । यद्यपि रूपवत्त्वहेतुना एकदैव वाय्वादिषट्कानन्तर्भावसाधनसंभवे पृथक् तमः पक्षीकृत्य, तेन हेतुना वाय्वनन्तर्भूतत्वसाधनमनुचितं प्रयासाधिक्यात् । तथापि वाय्वनन्तर्भावसाधकदृष्टान्तसौलभ्यसम्पादकहेत्वन्तरसत्त्वात् तेन हेतुनापि वाय्वनन्तर्भावसाधनाय पूर्वं वाय्वादिषट्कानन्तर्भावसाधनमुपेक्ष्याकाशादिपञ्चकानन्तर्भावसाधनमेव कृतमिति ध्येयम् । **स्पर्शाभावादिति** । अत्र तमः वायुभिन्नं वायुत्वशून्यं वा स्पर्शाभावादित्यनुमानं फलितम् । अत्र वायावप्याद्यक्षणावच्छेदेन निरुक्तहेतोः सत्त्वात् व्यभिचार इति नाशङ्कनीयम् । स्पर्शाभाव इत्यस्य स्पर्शः अभावो यस्येति व्युत्पत्त्या स्पर्शवद्भिन्नत्वार्थवत्त्वेन च तस्य वायावभावात् न व्यभिचारः । न चैवमुत्पन्नविनष्टवाय्वादौ व्यभिचारः तदवस्थ इति वाच्यम् । स्पर्शाधिकरणवृत्त्याकाशवृत्तिजातिशून्यत्वस्य समवायसंबन्धेन स्पर्शसंबन्धित्वसमवायघटितसामानाधिकरण्यसंबन्धेन स्पर्शसंबन्धित्वान्यतरशून्यत्वस्य वा विवक्षितत्वान्न दोषप्रसक्तिः । एवमुत्तरत्राप्यूह्यम् । यद्यपि निरुक्तहेतुना पृथिव्यादिवाय्वन्तान्यतमत्वशून्यत्वसाधनमुचितं सौलभ्यात् । तथापि इतोऽपि दृष्टान्तसौलभ्यसंपादकहेत्वन्तरसत्त्वात् तेन निरुक्तान्यतमत्वशून्यत्वसाधनासंभवात् तेन हेतुना वाय्वनन्तर्भावसाधनाय तादृशान्यतमत्वशून्यत्वसाधनमुपेक्ष्य वाय्वनन्तर्भावसाधनमादृतम् । रूपवत्त्वादित्यस्य हेतुत्वेऽपि पृथिव्यादित्रयाणामेव

प. **अत एवेति** । रूपवत्त्वादेवेत्यर्थः । **न वायाविति** । तथा च तमो वायुभिन्नं रूपवत्त्वात् इत्यनुमाने तात्पर्यम् । ननु कैश्चिन्नवीनैरेकदेशिभिर्वायावनुद्भूतरूपाङ्गीकाराद्वायौ व्यभिचार इत्यरुचेराह । **सदागतिमत्त्वेति** । समवायसंबन्धावच्छिन्नसदागतिमत्त्वावच्छिन्नप्रतियोगिताकाभाववत्त्वादित्यर्थः । तेन संयोगेन सदागत्य-

**नापि तेजसि, भास्वररूपाभावात् उष्णस्पर्शाभावाच्च । नापि जले, शीतस्पर्शाभावात् नीलरूपवत्त्वाच्च । नापि पृथिव्यां, गन्धाभावात् स्पर्शरहितत्वाच्च । तस्मात्तमो दशमद्रव्यमिति चेन्न । तमसस्तेजोऽ-**

---

**नी.** संहरति । **तस्मादिति ।** क्लृप्तद्रव्येष्वनन्तर्भावादित्यर्थः । **तेजोऽभावरूपत्वादिति ।**

**रा.** **तेजोऽभावेति ।** ननु तमसः तेजोऽभावरूपत्वे नीलं तमश्चलतीत्यबाधितप्रतीतिरेव

**नृ.** दृष्टान्तता । स्पर्शाभावादित्यस्य हेतुत्वे आकाशादिपञ्चानामेव दृष्टान्तता । सदागतिमत्त्वाभावस्य हेतुत्वे वायुभिन्नाष्टद्रव्याणामेव दृष्टान्तता संभवतीति अनेकदृष्टान्तलाभाय एतादृशहेत्वनुसरणम् । अत्राप्युक्तदोषवारणाय सदागतिमत्त्वाभावादित्यस्य सदागतिमत्त्वसमानाधिकरणपृथिव्यवृत्तिजातिशून्यत्वस्य समवायेन सदागतिमद्भिन्नत्वसमवायघटितसामानाधिकरण्यसंबन्धेन सदागतिमद्भिन्नत्वैतदुभयवत्त्वस्य वा विवक्षितत्वान्न कोऽपि दोष इति ध्येयम् । **नापि तेजसीति** । तेजस्यपि नान्तर्भूतमित्यर्थः । अपिना वाय्वनन्तर्भूतत्वं समुच्चीयते । तथा च तमः यथा वाय्वनन्तर्भूतं तथा तेजस्यपि नान्तर्भूतमिति फलितम् । तेजोऽनन्तर्भूतत्वं तेजोभिन्नत्वम् तेजस्त्वशून्यत्वं वेति बोध्यम् । एवञ्च तमः तेजोभिन्नम्, भास्वररूपाभावात् घटवत् इत्यनुमानं बोध्यम् । अत्र भास्वरत्वं तेजोरूपमात्रवृत्तिशुक्लत्वव्याप्यजातिविशेषः । एतल्लाभायैव **हेतुवाक्ये** रूपपदमुपात्तम् । न तु प्रतियोगितावच्छेदककोटौ रूपत्वस्यापि प्रवेशः प्रयोजनाभावात्, भास्वरत्वविशिष्टरूपत्वस्य भास्वरत्वरूपलघुधर्मसमनियतत्वाच्च । एवञ्च भास्वरत्वावच्छिन्नाभावो हेतुः फलितः । इदञ्च साङ्कर्यस्य जातिबाधकत्वानङ्गीकर्तृनवीनमते । तदङ्गीकर्तृप्राचीनमते तु उद्भूतत्वजात्या

**प.** भावसदागतिस्नेहोभयाभावादिकमादाय न वायौ व्यभिचारः । सदागतिमत्त्वव्याप्यं वायुत्वं, तमसि तदभावान्न वायुत्वम् । **नापि तेजसीति ।** तेजस्त्वं भास्वररूपव्याप्यं तदभावादित्यर्थः । समवायसंबन्धावच्छिन्नभास्वररूपत्वावच्छिन्नप्रतियोगिताकाभावादित्यर्थः । तेन संयोगेन भास्वररूपाभावभास्वररूपस्नेहोभयाभावादिकमादाय न तेजसि व्यभिचारः । ननु आद्यक्षणावच्छिन्नतेजसोऽपि एतादृशत्वात्तत्र व्यभिचार इति चेन्न । निरुक्तभास्वररूपाभावे प्रतियोगिवैयधिकरण्यनिवेशात्तस्य भास्वररूपाभावस्य स्वप्रतियोग्यधिकरणाद्यक्षणावच्छिन्नतेजोवृत्तित्वान्न व्यभिचारः । पृथिव्यां षड्विधरूपस्यापि सत्त्वेन विषमव्याप्तत्वात् समव्याप्तहेतुमाह । **उष्णस्पर्शाभावादिति ।** यद्वा चक्षुषि व्यभिचार इत्यरुचेराह । **उष्णस्पर्शाभावादिति । नापि जल इति । शीतस्पर्शाभावादिति ।** प्रतियोगिव्यधिकरणशीतस्पर्शत्वावच्छिन्नसमवायसंबन्धावच्छिन्नप्रतियोगिताकाभाववत्त्वादित्यर्थः । अथ प्रतियोगिव्यधिकरणत्वं न प्रतियोग्यधिकरणावृत्तित्वम्, अधिकरणभेदेनाभावभेदाभावादाद्यक्षणावच्छिन्नजलवृत्तिशीत-

**नी.** प्रौढप्रकाशकतेजस्सामान्याभावरूपत्वाङ्गीकारादित्यर्थः । अतस्तमस्वत्यपि देशे तेजः-

**रा.** बाधिकेति कथं तस्य तद्रूपतेत्याशङ्कायां उक्तप्रतीतेः बाधितत्वमेवोपपादयति ।

**नृ.** अनुद्भूतत्वजात्या वा साङ्कर्यात् भास्वरत्वं न जातिः उद्भूतत्वशून्यचक्षुरादिरूपे भास्वरत्वसत्त्वात् । भास्वरत्वशून्यघटादिरूपे उद्भूतत्वसत्त्वात् । प्रभादिरूपे च उभयसत्त्वाच्च । किन्तु तेजस्समवेतत्वविशिष्टरूपत्वमेव तथेति बोध्यम् । ननु तेजस्समवेतत्वविशिष्टरूपत्वं च समवायसम्बन्धावच्छिन्नाधेयत्वसमवायैतदुभयघटितसामानाधिकरण्यसम्बन्धेन तेजोविशिष्टरूपत्वस्वरूपम् । समवायघटितसामानाधिकरण्यसमवायैतदुभयघटितसामानाधिकरण्यसंबन्धेन तेजस्त्वविशिष्टरूपत्वमिति पर्यवसितम् । एवञ्च विशेष्यवति विशिष्टाभावस्य विशेषणाभावात्मकत्वमते रूपविशिष्टतमसि वर्तमानस्य तादृशविशिष्टाभावस्य तेजस्त्वरूपविशेषणाभावात्मकतया तेजोभिन्नत्वसिद्धेः पूर्वमसिद्धत्वेन तेन हेतुना तेजोभिन्नत्वसाधनं न संभवतीत्याशयेन हेत्वन्तरमाह । **उष्णस्पर्शाभावाच्चेति** । अत्र उष्णत्वं तेजस्समवेतस्पर्शमात्रसमवेतस्पर्शत्वव्याप्यजातिविशेषः प्रत्यक्षसिद्धम् । एतल्लाभायैव हेतुवाक्ये स्पर्शपदमुपात्तम् । न तु स्पर्शत्वस्यापि प्रतियोगितावच्छेदककोटिप्रवेशः । प्रयोजनाभावात् उष्णत्वविशिष्टस्पर्शत्वस्य उष्णत्वरूपलघुधर्मसमनियतत्वाच्च । एवञ्च उष्णाभावादिति हेतुः फलितः । अत्राद्यक्षणावच्छेदेन तेजस्युष्णाभावसत्त्वात् व्यभिचार इति नाशङ्कनीयम् । उष्णः अभावः यस्येति व्युत्पत्त्या तत्पदेन उष्णवद्भिन्नत्वार्थलाभात् । न चैवमुत्पन्नविनष्टतेजसि व्यभिचार इति वाच्यम् । उष्णसमानाधिकरणपृथिव्यवृत्तिजातिशून्यत्वस्य विवक्षितत्वात् न दोष इति । **नापि जल इति** । तमो न जलमित्यर्थः । **शीतस्पर्शाभावा**-

**प.** स्पर्शाभावस्य घटादिवृत्तिशीतस्पर्शाभावस्य चैकत्वात् घटान्तर्भावेन प्रतियोग्यधिकरणावृत्तित्वात्तस्याद्यक्षणावच्छिन्नजले सत्त्वात्तद्दोषतादवस्थ्यापत्तिः । न च प्रतियोग्यनधिकरणवृत्तित्वं इति वाच्यम् । तथापि पूर्वोक्तयुक्त्या तद्दोषतादवस्थ्यापत्तिरिति चेन्न । प्रतियोगिव्यधिकरणपदेन प्रतियोगितावच्छेदकावच्छिन्नाधिकरणतावच्छेदकावच्छिन्नभेदवद्वृत्तित्वविशिष्टतादृशाभावो हेतुरिति विवक्षणान्नोक्तदोषः । न च अभावे भेदवद्वृत्तित्ववैशिष्ट्यमपहाय प्रतियोगितावच्छेदकानवच्छिन्नाधिकरणतावच्छेदकावच्छिन्नभेदवत्त्वविवक्षणेनैव सामञ्जस्ये शीतस्पर्शाभावस्य च निरर्थकत्वेनानुपादेयत्वात् स्वप्रतियोगितावच्छेदकीभूतशीतस्पर्शत्वावच्छिन्नाधिकरणतावच्छेदकीभूतजलत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वमेव हेतुरिति वाच्यम् । स्वपदार्थस्य द्विधानिवेशेन स्वप्रतियोगितावच्छेदकेत्यादिनिवेशे शीतस्पर्शाभावस्याप्यावश्यकत्वादेतदपेक्षया लाघवाद्भावरूपहेतुमाह । **नीलरूपवत्त्वाच्चेति** । यद्वा हेतोः साध्याविशेषः स्यात् इत्यरुचेराह । **नीलरूपेति** । **नापि पृथिव्यामिति** । तथा च तमः पृथिवीभिन्नम् । तत्र हेतुमाह । **गन्धाभावादिति** । समवायसंबन्धाव-

भावरूपत्वात्। तथा हि। तमो न रूपिद्रव्यमालोकासहकृतचक्षुर्ग्राह्यत्वा-

---

नी. परमाण्वादिसत्त्वेन, तेजस्सामान्याभावाभावेऽपि न क्षतिः। त्र्यणुकादिवारणाय प्रौढेति

रा. **तथा हीत्यादिना**। यद्यप्युक्तहेतुना केवलद्रव्यत्वाभावोऽपि शक्यते साधयितुमिति

नृ. **दिति**। **उष्णस्पर्शाभावादिति**। उक्तहेतुपरिष्काररीत्या अयं हेतुः परिष्करणीयः। अन्यथा उक्तरीत्या दोषापत्तेः। शीतवद्वृत्तिपृथिव्यवृत्तिजातित्वावच्छिन्नाभावत्वरूपगुरुधर्मावच्छिन्नस्य हेतुत्वापेक्षया लघुधर्मावच्छिन्नस्यापि हेतुत्वं संभवतीत्याशयेन आह। **नीलरूपाश्रयत्वाच्चेति**। नीलत्वरूपजात्यवच्छिन्नवत्त्वादित्यर्थः। अत्र दृष्टान्तसौलभ्याय शीतस्पर्शाभावादित्युक्त्वा लघुधर्मावच्छिन्नहेतुसत्त्वप्रदर्शनाय नीलरूपाश्रयत्वादितीत्यस्मद्गुरुचरणाः। **नापि पृथिव्यामिति**। तम इति पदमनुवर्तते। तथा च तमः पृथिव्यां नान्तर्भवतीत्यर्थः। तमः पृथिव्याः भिन्नमिति यावत्। अतः हेतुमाह। **तत्र गन्धाभावादिति**। गन्धवद्भिन्नत्वादित्यर्थः। तेनाद्यक्षणावच्छेदेन घटे न व्यभिचारः। न चैवमप्युत्पन्नाविनष्टघटे प्राचीनमते सुरभ्यसुरभ्यवयवारब्धे निर्गन्धघटे व्यभिचारः तदवस्थ इति वाच्यम्। गन्धसमानाधिकरणजलावृत्तिजातिशून्यत्वस्य विवक्षितत्वात्। एतावता प्रत्येकहेतुना पृथिव्यादिचतुर्णां प्रत्येकानन्तर्भूतत्वं तमसि प्रसाध्य साधनसौलभ्यायैकहेतुनाकाशादिपञ्चकानन्तर्भूतत्वसाधनवदेकहेतुनापि पृथिव्यादिचतुष्टयानन्तर्भूतत्वं साधयति। **स्पर्शरहितत्वाच्चेति**। एतस्य पूर्वोक्त

प. च्छिन्नगन्धत्वावच्छिन्नप्रतियोगिताकाभाववत्त्वादित्यर्थः। ननु आद्यक्षणावच्छिन्नघटादेरप्येतादृशत्वात्तत्र व्यभिचार इति चेन्न। समवायसंबन्धावच्छिन्नगन्धत्वावच्छिन्नाधेयतानिरूपिताधिकरणत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वविवक्षणान्न व्यभिचारः। परस्परप्रतिबन्धादनुत्पन्नगन्धवति सुरभ्यसुरभ्यवयवारब्धघटादौ व्यभिचारः स्यादित्यरुचेराह। **स्पर्शरहितत्वाच्चेति**। समवायसंबन्धावच्छिन्नस्पर्शत्वावच्छिन्नप्रतियोगिताकाभाववत्त्वादित्यर्थः। ननु उत्पन्नं द्रव्यं क्षणमगुणं तिष्ठतीति न्यायेन आद्यक्षणावच्छिन्नघटादेरपि निरुक्तहेतुमत्त्वात्तत्र व्यभिचार इति चेन्न। अभावे प्रतियोगिव्यधिकरणत्वनिवेशात् समवायसंबन्धावच्छिन्नस्पर्शत्वावच्छिन्नाधिकरणत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वविवक्षणाद्वा न व्यभिचार इति बोध्यम्। अत्र रूपवत्त्वादित्युपक्रम्य स्पर्शरहितत्वादित्युपसंहारेण रूपसमानाधिकरणस्पर्शाभाव एक एव निष्कृष्टो हेतुरिति सर्वत्र सूचित इत्यवधेयम्। परिशेषात्तमसो दशमद्रव्यत्वं सिद्धमित्युपसंहरति। **तस्मादिति**। तथा च तमोऽतिरिक्तं द्रव्यं क्लृप्तद्रव्यभिन्नत्वे सति द्रव्यत्वादिति भावः। पूर्वपक्षं निषेधयति। **नेति**। तर्हि क्वान्तर्भावस्तस्येत्यत आह। **तेजोऽभावेति**। ननु रूपवत्त्वादिना तमसो द्रव्यत्वस्य साधितत्वेन कथं तेजोऽभावरूपत्वं इत्याशङ्क्याह। **तम इति**। अन्धकारस्य घटादिप्रत्यक्षवारणायालोकसंयोगस्य

नी. दिक् । घटादौ व्यभिचारवारणायाऽऽलोकासहकृतेति । चक्षुर्ग्राह्यत्वं चक्षुर्जन्य-लौकिकप्रत्यक्षविषयत्वम् । तेन तमसश्चाक्षुषे तमोवान् घट इति घटादीनामुपनय-

रा. विशिष्टद्रव्यत्वाभावसाधनमफलं द्रव्यत्वाभावेनैव दशमद्रव्यत्वनिराकरणार्थत्वसंभवात्। तथापि हेतुरस्तु साध्यं मास्त्वित्याद्यप्रयोजकत्वशङ्कानिरासाय कार्यकारणभावानुकूल-तर्कसंपत्तये तदुपादानमिति बोध्यम् । अत एवोक्तानुमाने अप्रयोजकत्व-

नृ. एवार्थः । केचित्तु निरुक्तार्थकस्पर्शाभावलिङ्गेन पृथिव्यादिचतुष्टयान्यतमभिन्नत्वसाधनं विभुत्वाभावलिङ्गेन आकाशादिचतुष्टयान्यतमभिन्नत्वसाधनं, महत्त्वलिङ्गेन मनोभिन्न-त्वसाधनं च तदनुमतमित्याहुः । विश्वनाथपञ्चाननास्तु निरुक्तार्थकगन्धाभावलिङ्गेन पृथिवीभिन्नत्वसिद्धिः, नीलरूपवत्त्वलिङ्गेन जलाद्यष्टकान्यतमभिन्नत्वसिद्धिरिति मीमांस-काभिप्रायं वर्णयन्ति । इदानीं मीमांसकमतमुपसंहरति । **तस्मादिति** । उक्तरीत्या तमसः पृथिवीत्वादिमनस्त्वान्तान्यतमभिन्नत्वसिद्धेरित्यर्थः । **दशमद्रव्यमिति** । पृथि-वीत्वादिमनस्त्वान्तान्यतमभिन्नद्रव्यविभाजकधर्मवदित्यर्थः । पृथिव्यादिमनोऽन्तान्य-तमभिन्नत्वे सति द्रव्यत्वादिति हेतुः पूरणीयः । यन्नैवं तन्नैवं यथा पृथिवीति व्यतिरेकदृष्टा-न्तेन तमसि निरुक्तसाध्यसिद्धिः निष्प्रत्यूहेति मीमांसकाभिप्रायः । **तेजोऽभावरूप-त्वादिति** । महाप्रभावत्त्वावच्छिन्नप्रतियोगिताकात्यन्ताभावाभिन्नत्वादित्यर्थः । ननु रूपवतः कथमभावरूपवत्त्वमित्याशङ्क्यां रूपवद्भिन्नत्वसाधनेन द्रव्यसामान्यभिन्नत्वसाध-नेन च परिहरति । **तथा हीत्यादिना** । **तमो न रूपिद्रव्यमिति** । अत्र तमः रूपवद्भिन्नं द्रव्यसामान्यभिन्नं वेति विकल्पेन साध्यद्वये तात्पर्यम् । अत्र रूपवद्भिन्नत्व-साधनपक्षे उद्भूतरूपात्मककारणाभावेन तत्र द्रव्यत्वप्रकारकचाक्षुषानुत्पत्त्या तदभाव-रूपयोग्यानुपलब्ध्या द्रव्यत्वाभावसिद्धिः । द्रव्यभिन्नत्वसाधने तु साक्षादेव तत्सिद्धि-रिति बोध्यम् । **आलोकासहकृतेति** । आलोकासहकृतं यच्चक्षुस्तद्ग्राह्यत्वादित्यर्थः । आलोकाजन्यचक्षुर्जन्यज्ञाननिरूपितलौकिकविषयतावत्त्वादिति फलितार्थः । हेतुघटि-

प. हेतुत्वं वाच्यम् । न च परमाण्वादिचाक्षुषापत्तिः आलोकसंयोगस्य सत्त्वादिति वाच्यम्। आलोकसंयोगेन चाक्षुषे जननीये महदुद्भूतरूपस्य सहकारित्वात् । तथा च महदुद्भू-तरूपवद्द्रव्यचाक्षुषत्वावच्छिन्नं प्रत्यालोकसंयोगस्य हेतुतायास्सिद्धत्वात् । एवं च कारणविरहेऽपि चाक्षुषोत्पत्त्या न तमसो रूपवद्द्रव्यत्वमिति तमसि रूपवद्द्रव्यत्वा-भावं साधयति । **तथा हीत्यादिना** । तथा च तमो रूपवद्द्रव्याभिन्नम् । तत्र हेतुमाह । **आलोकासहकृतेति** । तत्र दृष्टान्तमाह । **आलोकाभाववदिति** । आलोकासह-कृतचक्षुर्ग्राह्यत्वं च आलोकनिष्ठकारणतानिरूपितकार्यताशून्यं चक्षुर्निष्ठकारणतानिरू-पितकार्यताश्रयं यज्ज्ञानं तद्विषयत्वम् । भवति च तम आलोकाजन्यचक्षुर्जन्यज्ञान-विषयः । चक्षुर्जन्यज्ञानविषयत्वमात्रोक्तौ घटादौ व्यभिचारः स्यात् । अत आलोकेत्यादि। आलोकाजन्यज्ञानविषयत्वमात्रोक्तौ केवलस्पार्शनप्रत्यक्षविषयरूपिद्रव्यविशेषे व्यभिचार

**दालोकाभाववत्। रूपिद्रव्यचाक्षुषप्रमायामालोकस्य कारणत्वात्। तस्मात्**

---

नी. मर्यादया भानेऽपि न क्षतिः। विशेषाभावं दृष्टान्तयति। **आलोकाभाववदिति।** आलोकं विना रूपवत्त्वेन तमोविषयकचाक्षुषभ्रमोदयादाह। **प्रमायामिति।** **कारणत्वादिति।** अन्यथा अन्धकारस्थघटादेश्चाक्षुषत्वापत्तेरिति दिक्। ननु तमसोऽ-

रा. शङ्कानिरासार्थकत्वमेवाह। **रूपीति**। तथा च तमसो रूपसत्त्वे रूपवच्चाक्षुषत्वेन आलोकत्वेन कार्यकारणभावभङ्गप्रसङ्गः। यद्यपि रूपवच्चाक्षुषत्वावच्छिन्नं प्रत्येव आलोकसंयोगस्य हेतुत्वे अव्यभिचारात् प्रमापदमनर्थकम्। तथापि रूपवति रूपवत्त्वप्रकारकचाक्षुषप्रमां प्रति आलोकसंयोगस्य हेतुत्वादित्यर्थः। तत्र च प्रमापदानुपादाने नीलं तम इति चाक्षुष एव व्यभिचारापत्त्या प्रमात्वनिवेशस्यावश्य-

नृ. तद्विशेषणप्रयोजनं स्फुटमिति ग्रन्थविस्तरभिया नोक्तम्। अत्र चक्षुर्जन्यत्वं चक्षुःकरणकत्वं वाच्यम्। यथाश्रुते घटादेरपि कालोपाधिविधया तादृशचक्षुर्ग्राह्यत्वात् तादृशचक्षुःकरणकज्ञानविषयत्वस्य लौकिकस्यालोकेऽपि सत्त्वात् व्यभिचारवारणाय अलौकिकविषयतावत्त्वं निवेशितम्। वस्तुतः आलोकासहकृतचक्षुर्ग्राह्यत्वं आलोका-

प. इत्यतः चक्षुरिति। अथेदं तम इति प्रत्यक्षतमोविषयकज्ञानस्यापि कालविधया आलोकजन्यत्वात् हेत्वप्रसिद्ध्यापत्तिरिति चेन्न। आलोकत्वावच्छिन्नकारणतानिरूपितकार्यताशून्यत्वस्य विवक्षितत्वात्तमोविषयकज्ञानस्य कालत्वेनालोकजन्यत्वेऽपि आलोकत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वाभावान्न हेत्वसिद्धिः। ननु घटः पटभिन्नः तद्वृत्तिसंयोगेन चक्षुषः इति ज्ञायमानलिङ्गस्यानुमितिकरणतावादिनये घटः पटवानित्यनुमित्यात्मकज्ञानस्यालोकाजन्यत्वाच्च चक्षुर्जन्यत्वाच्च तद्विषयत्वाद्घटस्य तत्र व्यभिचारापत्तेः। न च ज्ञानपदस्य प्रत्यक्षपरत्वान्न व्यभिचार इति वाच्यम्। एवमपि रूपिद्रव्यविशेषस्पार्शनप्रत्यक्षविषय एव जातस्तादृशस्पार्शनप्रत्यक्षस्य कालविधया चक्षुर्जन्यत्वाच्च आलोकाजन्यत्वात्तत्र व्यभिचारः स्यात्। नच चक्षुस्त्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्य विवक्षणान्न तत्र व्यभिचार इति वाच्यम्। तथाप्यत्र तम इति चाक्षुष इति चाक्षुषोपनीतभानात्मकप्रत्यक्षविषयीभूताधिकरणादौ व्यभिचारापत्तेरिति चेन्न। तादृशप्रत्यक्षनिरूपितलौकिकविषयताशालित्वविवक्षणान्न तत्र व्यभिचारः। ननु तेजोविषयकप्रत्यक्षे तेजोऽन्तरानपेक्षेति सिद्धान्तादालोकरूपतेजोविषयकप्रत्यक्षस्य आलोकाजन्यत्वाच्चक्षुर्जन्यत्वाच्च तद्विषयत्वादालोकस्य व्यभिचारापत्तेरिति चेन्न। निरुक्ततादृशलौकिकविषयतायामालोकावृत्तित्वस्य वा तेजोऽवृत्तित्वस्य वा विशेषणीयत्वान्न तत्र व्यभिचारः। तथा चालोकत्वावच्छिन्नकारणतानिरूपितकार्यताशून्यचक्षुस्त्वावच्छिन्नकारणतानिरूपितकार्यताशालिप्रत्यक्षानिरूपिततेजोऽवृत्तिलौकिकविषयताशालित्वं हेतुरिति दिक्। विपक्षे बाधकमाह। **रूपिद्रव्यचाक्षुषप्रमायामिति**। तथा च

नो. भावरूपत्वे तमसि रूपवत्ताप्रतीतिः कर्मवत्ताप्रतीतिश्च कथम् । अभावे रूपकर्मणोर-

रा. कत्वात् । न चैवं रूपाविषयकप्रत्यक्षे आलोकसंयोगस्य कारणत्वानुपपत्तिरिति वाच्यम् । द्रव्यचाक्षुषमात्रे रूपभानस्यावश्यकत्वात् । न चैवमपि निर्विकल्पकासंग्रहः, तस्य रूपाप्रकारकत्वादिति वाच्यम् । रूपविषयकत्वस्यैव कार्यतावच्छेदकत्वोपगमात् । निर्विकल्पकेऽपि चक्षुस्संयुक्तसमवायेन रूपभानात् । यद्यपि विषयतासंबन्धेन रूपविषयकचाक्षुषस्य रूपादावप्युत्पत्त्या विषयतया तादृशचाक्षुषं प्रति संयोगेन आलोकस्य न कारणत्वसंभवः । समवायेन तादृशचाक्षुषं प्रति आलोकस्य तथात्वे सर्वदैवात्मन्यालोकसंयोगस्य सत्त्वेन अन्धकारेऽपि घटचाक्षुषापत्तिरिति द्रव्यनिष्ठलौकिकविषयताया एव कार्यतावच्छेदकत्वं अभ्युपेयम् । तथा च कार्यतावच्छेदककोटौ

नृ. प्रयोज्यचाक्षुषनिरूपितलौकिकविषयतावत्त्वरूपमेव लाघवात् वाच्यमिति प्रतिभाति । ननु प्रभायामपि तादृशहेतुसत्त्वात् व्यभिचारः, तच्चाक्षुषे संयोगेनालोकस्याहेतुत्वादिति चेन्न । तच्चाक्षुषे संयोगेनालोकस्याहेतुत्वेऽपि तादात्म्यसम्बन्धेनालोकस्य हेतुतया आलोकाजन्यत्वघटितप्राथमिकहेत्वभावात् आलोकाप्रयोज्यत्वघटितनिर्गळितकल्पीयहेत्वभावाच्च न व्यभिचार इति निरुक्तहेतावप्रयोजकत्वशङ्कानिवर्तकमनुकूलतर्कमाह । **रूपीत्यादि** । अत्र चाक्षुषं प्रमात्मकमेवेति स्फुटीकरणाय चाक्षुषप्रमायामित्युक्तम् । न तु तदपि कार्यतावच्छेदकप्रविष्टं तस्यार्थसमाजग्रस्तत्वेन कार्यतानवच्छेदकत्वात् गौरवात्प्रयोजनाभावाच्च । एवञ्च सुवर्णभिन्नतेजोभिन्नद्रव्यवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषं प्रति समवायेनोद्भूतरूपस्य संयोगेनालोकस्य हेतुत्वादित्यर्थः फलितः । तथा च तादृशकार्यकारणभावभङ्गप्रसङ्गरूपानुकूलतर्कबलात् व्यभिचारशङ्कानुत्पत्त्या व्याप्तिनिश्चयसम्भवात् तमसि रूपिभिन्नत्वसिद्धिः द्रव्यभिन्नत्वसिद्धिर्वा निराबाधेवेति भावः । ननु तर्हि तमसः कुत्रान्तर्भाव इत्याशङ्कामुपसंहारव्याजेनाभावे अन्तर्भाव्य परिहरति । **तस्मादिति** । द्रव्यरूपत्वाभावात्तत्समवेतरूपत्वाभावात्

प. रूपवद्द्रव्यवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषत्वावच्छिन्नं प्रत्यालोकस्य हेतुत्वावश्यकत्वात्तमसि तदभावेऽपि चाक्षुषोत्पादान्न रूपिद्रव्यत्वसिद्धिः । किन्तु प्रौढप्रकाशकतेजस्सामान्याभाव एव तम इत्यर्थः । अत्र केचित् । रूपवत्त्वात् क्रियावत्त्वात् क्लृप्तानन्तर्भावात्तमसोऽतिरिक्तद्रव्यत्वमेव स्वीक्रियते । न च रूपतत्त्वादिप्रतीतेर्भ्रमत्वान्न तमसो द्रव्यत्वसिद्धिः । इदं नीलं तमश्चलतीति प्रतीत्यनन्तरं नेदं तमो नीलं, नेदं तमश्चलतीति बाधप्रतिसन्धानाभावेन तस्या भ्रमत्वायोगात् । किञ्च तमसस्तेजोऽभावरूपत्वे किञ्चिन्निष्ठनीलरूपमादाय नीलं तम इति प्रतीत्युपपत्तिः क्रियते । तथा सति पीतादिरूपमादायापि कदाचित् पीतं तम इति प्रतीतिरपि स्यात् । मणिमयमेरुशिखरादिरूपस्फुरणसंक्रमणादिकमादाय नीलं नभः पीतं नभ इत्यादिप्रतीतिवत् । तस्मादन्यदीयनीलरूपादेरारोपासंभवेन रूपवत्ताप्रतीतेर्भ्रमत्वायोगेन

प्रौढप्रकाशकतेजस्सामान्याभावस्तमः, तत्र नीलं तमश्चलति इति प्रत्य-

---

**नी.** भावादित्यत आह । **तत्रेति** । तमसोऽतिरिक्तत्वे अनन्तावयवतत्प्रागभावादिकल्पना-

**रा.** रूपविषयकत्वस्य रूप**विषयकभ्रम**भिन्नत्वरूपप्रमात्वस्य निवेशनमफलम् । तमसि द्रव्यनिष्ठलौकिकविशेषणतया चाक्षुषानुत्पत्त्या व्यभिचाराभावात् । तथापि रूपवन्निष्ठलौकिकविषयतासंबन्धेन चाक्षुषं प्रति संयोगसंबन्धेन आलोकस्य कारणत्वाभिप्रायेणैव रूपप्रकारकप्रमायां विषयनिष्ठप्रत्यासत्त्या आलोकस्य उपधायकत्वात् नानुपपत्तिः । इदं च तमो न रूपवदित्येव साध्यम् । द्रव्यपदं तु द्रव्यस्यैव रूपवत्त्वेन स्वरूपकीर्तनमेव । तथा च तमो न रूपवत । आलोकसंयोगं विनापि चक्षुर्ग्राह्यत्वात् । रूपवन्निष्ठलौकिकविषयतासंबन्धेन चाक्षुषं प्रति आलोकस्य कारणत्वादित्येव समुदायार्थः । अत्रेदमवधेयम् । लाघवात् द्रव्यनिष्ठलौकिकविषयतासंबन्धेन चाक्षुषं प्रति आलोकस्य हेतुत्वमुचितम् । तावतापि तमसो द्रव्यत्वानुपपत्त्या तमसो द्रव्यत्वनिराकरणसंभवात् एतावानायासोऽनुचितः । ननु किं तेजस्सामान्याभावस्य तमस्त्वं, उत तेजोऽभावविशेषस्य वा । नाद्यः । सान्दतमसि तमःप्रतीत्यनुपपत्तेः । तत्रापि तेजःपरमाणुभूतस्वर्णादिरूपतेजसस्सत्त्वात् । न द्वितीयः । सालोकदेशेऽपि तमःप्रतीत्यापत्तेरित्याशङ्कां उपसंहारव्याजेन निराचष्टे । **तस्मादिति** । नन्वेवं नीलं तमश्चलतीति प्रतीतेः

**नृ.** तत्सम्बन्धरूपत्वाभावाच्चेत्यर्थः । **प्रौढप्रकाशकेति** । *महाप्रभात्वावच्छिन्नप्रतियोगिताकाभावरूपं तम इत्यर्थः । तथा च तमः निरुक्ततेजोऽभावरूपं भावभिन्नत्वात् घटाद्यभाववदित्यनुमानात् अभावत्वे सिद्धे निष्प्रतियोगिकाभावाप्रसिद्धये-

**प.** प्रमात्वस्यैवावश्यकतया रूपवत्त्वादिना तमसोऽतिरिक्तद्रव्यत्वं तावत्सिद्धमेवेति वाच्यम् । निरुक्तयुक्तिभिस्तमसोऽतिरिक्तरूपवद्द्रव्यत्वाङ्गीकारे आलोकसहकृतचक्षुर्ग्राह्यत्वं स्यात् । द्रव्यवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषत्वावच्छिन्नं प्रत्यालोकसहकृतचक्षुषः कारणत्वावश्यम्भावात्तमोविषयकचाक्षुषस्य आलोकविरहेऽपि जायमानत्वान्न तमसोऽतिरिक्तद्रव्यत्वसिद्धिः । न च तमोभिन्नद्रव्यचाक्षुषत्वावच्छिन्नं प्रत्येवालोकस्य कारणत्वाङ्गीकारान्नानुपपत्तिरिति वाच्यम् । तथा सति तमोभिन्नत्वविशिष्टद्रव्यचाक्षुषत्वं कार्यतावच्छेदकं वा द्रव्यत्वविशिष्टतमोभिन्नचाक्षुषत्वं कार्यतावच्छेदकं वेति मिथो विशेषणविशेष्यभावे विनिगमनाविरहेणोभयोरपि कार्यतावच्छेदकत्वस्वीकारे कार्यतावच्छेदकद्वयकल्पनाप्रयुक्तगौरवापत्तेरिति चेन्न । भवन्मतेऽपि तेजोविषयकप्रत्यक्षे तेजोऽन्तरसन्निकर्षानपेक्षणेन आलोकसहकृतचक्षुषः कारणत्वे आलोकात्मकद्रव्यचाक्षुषेऽनुपपन्नतया तेजोभिन्नद्रव्यचाक्षुषत्वावच्छिन्नं प्रत्येव आलोकसहकृतचक्षुषः कारणत्वं वाच्यम् । तथा च तेजोविषयकचाक्षुषत्वावच्छिन्नं प्रत्यालोकसहकृतचक्षुषः

---

* महत्त्वोद्भूतानभिभूतरूपवत्तेजस्त्वावच्छिन्नाभावरूपमिति परमार्थः ।

**यो भ्रमः । अतो नव द्रव्याणीति सिद्धम् । द्रव्यत्वजातिमत्त्वं गुणवत्त्वं**

---

नी. गौरवमत आवश्यकतेजोऽभावरूपत्वं सिध्यतीत्यपि बोध्यम् । मुक्तिसाधनीभूतपदार्थतत्त्वज्ञानं लक्षणं विना नोपपद्यत इत्यत आह । **द्रव्यत्वेति ।**

रा. का गतिरत आह । **तत्रेति** । उक्तबाधकतर्के सतीत्यर्थः । **द्रव्यत्वेति** । द्रव्यत्वस्य

नृ. तरप्रतियोगिकत्वबाधसहकृतत्वात् तादृशतेजस्त्वावच्छिन्नप्रतियोगिताकाभावरूपत्वं सिध्यतीति भावः । नन्वेवं सति नीलं तमश्चलतीति प्रतीतेः का गतिरित्यत आह । **तत्रेति** । तमसीत्यर्थः । सप्तम्यर्थो विशेष्यत्वं, तस्य प्रतीतिद्वयेऽप्यन्वयः । एवञ्च तमोविशेष्यको नीलं तमः इति प्रत्ययः, चलति तम इति प्रत्ययश्च इति फलितार्थः । **भ्रम इति** । भ्रम एवेत्यर्थः । तथा च नभोविशेष्यककिञ्चित्पदार्थप्रकारकचाक्षुषाभावरूपोपाधिवशात् जायमानत्वात् नीलं नभ इति प्रतीतेः भ्रमत्ववत्तमोविशेष्यककिञ्चित्पदार्थप्रकारकचाक्षुषाभावरूपोपाधिवशात् जायमानत्वात् नीलं तम इति प्रतीतेरपि भ्रमत्वमव्याहतम् । एवं लोहितः स्फटिक इति प्रतीतेः स्फटिके जपाकुसुमरूपोपाधिवशाज्जायमानत्वात् जपाकुसुमसमवेतलौहित्यावगाहित्वेन यथा भ्रमत्वं तथा चलति तम इति प्रतीतेरपि तेजोऽभावरूपतमसि स्वप्रतियोगिकत्वसम्बन्धेन तेजःस्वरूपोपाधिसम्बन्धवशादालोकादिरूपतेजस्समवेतक्रियाविषयकत्वेन भ्रमत्वमव्याहतमिति भावः । द्रव्यसामान्यलक्षणमनुक्त्वा विभागकरणमनुचितम् । लक्षणात्मकसाधारणधर्मज्ञानाभावे विशेषणधर्मप्रकारजिज्ञासानुदयेनाजिज्ञासितार्थाभिधानप्रयुक्तार्थान्तरदोषापत्तिरित्याशङ्क्य लक्षणप्रदर्शनेन स्वयं परिहरति । **द्रव्यत्वजातिमत्त्वमिति** । अत्र द्रव्यत्वं जातिरूपमिति स्फुटप्रतिपत्त्यर्थं जातिग्रहणम् । न तु तेन रूपेणापि तस्य लक्षणत्वं प्रयोजनाभावात् प्रमेयधूमत्वादिवत् द्रव्यत्वाभिन्नजातित्वस्य स्वसमानाधिकरणव्याप्यतावच्छेदकद्रव्यत्वत्वघटितत्वेन तस्य व्याप्यतानवच्छेदकतया इतरभेदानुमापकतावच्छेदकतानुपपत्तेश्च । न चेष्टापत्तिः । द्रव्यत्वस्य तेन रूपेण

प. कारणत्वाभावेनान्धकारे सुवर्णचाक्षुषापत्त्या सुवर्णभिन्नं यत्तेजः तद्भिन्नद्रव्यचाक्षुषत्वावच्छिन्नं प्रति आलोकसहकृतचक्षुषः कारणत्वाङ्गीकारावश्यकतया तेजश्चाक्षुषत्वावच्छिन्नं प्रति आलोकासहकृतस्यैव चक्षुषः कारणत्वं वाच्यम । तथा च सुवर्णभिन्नतेजोभिन्नद्रव्यचाक्षुषत्वावच्छिन्नं प्रत्यालोकसहकृतचक्षुषः कारणत्वावश्यकत्वेन च उक्तरीत्या भवन्मतेऽपि गौरवस्य दुष्परिहारत्वादस्माभिरपि तमोभिन्नतेजोभिन्नद्रव्यचाक्षुषत्वावच्छिन्नं प्रत्येवालोकसहकृतचक्षुषः कारणत्वाङ्गीकारेण तमसः आलोकसहकृतचक्षुर्ग्राह्यत्वाभावेऽपि क्षत्यभावादतिरिक्तद्रव्यत्वसिद्धिर्निष्प्रत्यूहैवेति वदन्ति । द्रव्यलक्षणमाह । **द्रव्यत्वेति** । समवायेन द्रव्यत्वजातिमत्त्वं बोध्यम् । तेन न कालिकादिविशेषणतया गुणादावतिव्याप्तिः । **ननु द्रव्य-**

नी. संयोगजनकतावच्छेदकतया द्रव्यत्वजातिसिद्धिरिति भावः । ननु लक्षणलक्ष्य-

रा. लक्षणत्वे लक्षणलक्ष्यतावच्छेदकयोः ऐक्यापत्तिः । तथात्वे चान्वयव्याप्तिज्ञानस्यैव अनुमितिहेतुत्वपक्षे सिद्धसाधनापत्त्या सामानाधिकरण्येन इतरभेदानुपपत्तिरिति

नृ. लक्षणत्वानुपपत्तेः व्यावर्तकत्वस्यैव लक्षणपदार्थत्वादिति हृदयम् । ननु द्रव्यत्वत्वे-नापि न तस्य व्यावर्तकत्वम् । तथा हि द्रव्यत्वलिङ्गकद्रव्यमितरभिन्नमित्यनुमितौ द्रव्यत्वं इतरभेदसमानाधिकरणं इति व्याप्तिज्ञानं करणं वाच्यम् । हेतुः साध्यसमा-नाधिकरण इति ज्ञानस्यैव व्याप्तिज्ञानत्वात् । एवञ्च पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वमिति प्राचीनैकदेशिमते तादृशव्याप्तिज्ञानस्य तुल्यवित्तिवेद्य तया द्रव्यत्वसमानाधिकरणः इतरभेद इति ज्ञानात्मकत्वेन तादृशज्ञानस्याभिमत-साध्यसिद्धिरूपत्वेनानन्तरमनुमित्यसम्भवात् न तस्य व्यावर्तकत्वरूपलक्षणत्वमित्यत आह । **गुणवत्त्वं वेति** । अत्र निर्गलितप्राचीनमतेऽन्वयसहचारज्ञानस्यैव अन्वय-व्याप्तिग्राहकतया द्रव्यं इतरभिन्नं द्रव्यत्वादित्यादौ द्रव्यमात्रस्य पक्षत्वेन दृष्टान्ताभा-वादन्वयसहचारज्ञानासंभवेन अन्वयव्याप्तिग्रहो न संभवति । किन्तु गुणादौ व्यतिरेक-सहचारज्ञानादितरत्वात्मकद्रव्यभिन्नत्वव्यापकाभावप्रतियोगि द्रव्यत्वमिति व्यतिरेक-व्याप्तिज्ञानमेव जायत इति । एतादृशज्ञानस्य साध्ये उक्तरीत्या हेतुरूपपक्षतावच्छेदक-सामानाधिकरण्यानवगाहित्वेन उद्देश्यानुमितिसमानाकारकज्ञानस्यानिष्पन्नत्वेन सिद्ध-साधनदोषाप्रसक्त्या तादृशानुमित्युत्पत्तौ बाधकाभावात् पक्षतावच्छेदकहेत्वोरैक्येऽपि हेतोर्न व्यावर्तकत्वरूपलक्षणत्वानुपपत्तिः । नवीनैः पक्षतावच्छेदकावच्छिन्नविशेष्यक-साध्यप्रकारकानुमितेरेवाङ्गीकृतत्वादुक्तरीत्या इतरभेदसमानाधिकरण इति ज्ञानस्य निष्पत्तावपि उद्देश्यानुमितिसमानाकारकद्रव्यं इतराभिन्नमिति ज्ञानस्य अनिष्पत्त्या सिद्धसाधनदोषाप्रसक्त्या पक्षतावच्छेदकहेत्वोरैक्येऽपि नवीनमते न सिद्धसाधनरूपदोष-प्रसक्तिः । वस्तुतस्तु प्राचीनैकदेशिमते द्रव्यमितरभिन्नं द्रव्यत्वादित्यादौ जायमानस्य

प. त्वस्यैव लक्षणत्वे इतरभेदानुमाने तस्यैव पक्षतावच्छेदकतया हेतुपक्षतावच्छेदकयो र्भेदासंभवेन सिद्धसाधनापत्तेरित्यरुचेराह । **गुणवत्त्वं वेति** । ननु कालिकसंबन्धेन गुणवत्त्वात्तत्रातिव्याप्तिरिति वाच्यम् । न च कालिकविशेषणतातिरिक्तसंबन्धेन तद्वत्त्वस्य विवक्षितत्वान्न दोष इति वाच्यम् । न च तथाप्येकं रूपं रसात् पृथक् इति व्यवहारेण रूपादेरप्येकत्वादिगुणवत्त्वात्तत्रातिव्याप्तिरिति वाच्यम् । समवायेन तद्वत्त्वस्य विवक्षितत्वात्समवायेन गुणे गुणानङ्गीकार इति न्यायेन रूपादेः समवायेन तद्वत्त्वासंभवात् । तथाप्युत्पन्नं द्रव्यं क्षणमगुणं तिष्ठतीति न्यायेन आद्यक्षणावच्छिन्नघटादेः समवायेन गुणवत्त्वाभावादव्याप्तेः । न च समवायेन गुणनिष्ठाधेयतानिरूपिताधिकरणत्वविवक्षणान्नाव्याप्तिरिति वाच्यम् । तथापि गुणनिष्ठसत्तात्वावच्छिन्नाधेयतामादाय कर्मादावतिव्याप्तेरिति चेन्न । सम-

वा द्रव्यसामान्यलक्षणम्। लक्ष्यैकदेशावृत्तित्वमव्याप्तिः। यथा गोः कपि-

---

नी. तावच्छेदकयोरभेद इत्यत आह। **गुणवत्त्वमिति। द्रव्यसामान्यलक्षणमिति।** एवं च सामान्यधर्मकथनेन न न्यूनतेति भावः। दूषणत्रयरहितधर्मस्यैव

रा. लक्षणान्तरमाह। **गुणवत्त्वं वेति। लक्ष्यैकदेश इति।** लक्ष्यैकदेशमात्रा-

नृ. द्रव्यत्वमितरभेदसमानाधिकरणमिति व्याप्तिज्ञानस्य तुल्यवित्तिवेद्यतया इतरभेदरूपसाध्ये द्रव्यत्वत्वावच्छिन्नसामानाधिकरण्यज्ञानात्मकत्वेऽपि इतरभेदे स्वरूपतः द्रव्यत्वसामानाधिकरण्यज्ञानस्यैवोद्देश्यतया तादृशज्ञानस्यानिष्पन्नत्वेन सिद्धसाधनदोषाप्रसक्त्या पक्षतावच्छेदकहेत्वोरैक्येऽपि द्रव्यत्वस्य न व्यावर्तकत्वरूपलक्षणत्वानुपपत्तिः। यदि च स्वरूपतः पक्षतावच्छेदकस्थलेऽपि साध्ये किञ्चिद्रूपेण पक्षतावच्छेदकसामानाधिकरण्यज्ञानस्यापि उद्देश्यत्वमङ्गीकृत्य सिद्धसाधनरूपदोषेण साध्ये स्वरूपतः पक्षतावच्छेदकसामानाधिकरण्यावगाह्यनुमितिः नाङ्गीक्रियते तदा घटः सत्तावान् जातिमत्त्वादित्यादौ जातिस्सत्तासमानाधिकरणेति ज्ञानस्य तुल्यवित्तिवेद्यतया सत्तारूपसाध्ये जातिसामानाधिकरण्यावगाहित्वेन तादृशज्ञानस्य साध्ये जातित्वेन घटत्वरूपपक्षतावच्छेदकसामानाधिकरण्यावगाहित्वावश्यकतया उक्तरीत्या उद्देश्यसमानाकारकज्ञानस्य निष्पन्नत्वेन तत्राप्यनुमित्यनुदयप्रसङ्गात्। न चेष्टापत्तिः। अनुभवविरोधात्तस्माद्द्रव्यमितरभिन्नं द्रव्यत्वादित्यादौ सर्वमतेऽपि सिद्धसाधनदोषाप्रसक्त्या तदुद्भावनं निपुणतरविवेचनाभावप्रयुक्तमिति प्रतिभाति। इदानीं प्रसङ्गसङ्गत्या लक्षणं वक्तुं लक्षणं द्वेधा विभज्य दर्शयति। **लक्षणस्येति।** अत्र लक्षणशब्देन वस्तुमात्रं गृह्यते। तद्द्विविधम्। असत्सच्चेति। तत्रादौ असल्लक्षणस्य लक्षणमाह। **त्रीणि दूषणानीति।** त्रयो दोषा इत्यर्थः। अत्र इतिशब्दार्थः अभेदः। तस्य दोषत्रयेऽन्वयः। तथा च अव्याप्त्यतिव्याप्त्यसंभवाभिन्नदोषत्रयान्यतमवत्त्वं असल्लक्षणस्य लक्षणमिति फलितम्। अत्राव्याप्त्यादिस्वरूपं क्रमेणाह। **लक्ष्यैकदेशावृत्तित्वमित्यादिना।** लक्ष्यतावच्छेदकसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वे सति लक्ष्यतावच्छेदकसमानाधिकरणत्वमित्यर्थः। **अव्याप्तिरिति।** अव्याप्तिस्वरूपमित्यर्थः। अत्रासंभवरूपदोषलक्ष्यैकशफवत्त्वादौ अतिव्याप्तिवारणाय विशेष्यदलम्। अतिव्याप्तिरूपदोषलक्ष्यशृङ्गित्वादौ अतिव्याप्तिवारणाय सत्यन्तमिति बोध्यम्। अव्याप्तिरूपदोषस्य लक्ष्यं दर्शयति। **यथा गोः कपिलत्वमिति।** गां लक्ष्यीकृत्य इतर-

प. वायसंबन्धावच्छिन्नगुणत्वावच्छिन्नाधेयतानिरूपिताधिकरणत्वस्य विवक्षितत्वान्न दोषः। केचित्तु गुणवत्त्वं निरवच्छिन्नगुणात्यन्ताभावानधिकरणत्वम्। तेनाद्यक्षणावच्छिन्नघटादौ नाव्याप्तिरिति वदन्ति। ननु नेदं लक्षणं लक्षणत्वाभावादित्यतो लक्षणं वक्तुं तदुपोद्घाततया अव्याप्त्यतिव्याप्त्यसंभवानां क्रमेण लक्षणानि वदिष्यन्नादौ अव्याप्तिलक्षणमाह। **लक्ष्यैकदेशेति।** लक्ष्यस्य एकदेशः

नी. लक्षणत्वस्य वक्ष्यमाणतया तज्ज्ञानं विशेषणीभूतदूषणत्रयरहितत्वज्ञानं विना न संभवति।

रा. वृत्तित्वमित्यर्थः । तथा च लक्ष्यवृत्तित्वे सति यत्किंचिल्लक्ष्यावृत्तित्वमव्याप्ति-

नृ. भेदानुमापकत्वेनाङ्गीकृतं गोत्वव्याप्यकपिलत्वजातिमत्त्वमित्यर्थः । अत्र कपिलत्व-

प. लक्ष्यैकदेशः। तस्मिन् लक्षणस्यावर्तनं लक्ष्यतावच्छेदकत्वेनाभिमतधर्मसमानाधिकरणाभावप्रतियोगित्वम् । तथा च लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वे सति लक्ष्यतावच्छेदकसामानाधिकरण्यं अव्याप्तेर्लक्षणम् । सल्लक्षणे गन्धादावतिव्याप्तिवारणाय सत्यन्तम् । असम्भविन्येकशफवत्त्वादावतिव्याप्तिवारणाय विशेष्यदळम् । ननु गन्धवतः पृथिवीत्वं लक्षणं इत्यादौ पृथिवीत्वे एतल्लक्षणस्यातिव्याप्तिः। पृथिवीत्वस्य कालिकसंबन्धेन लक्ष्यतावच्छेदकीभूतगन्धाधिकरणजलादिवृत्त्यभावप्रतियोगित्वात् । न च लक्ष्यतावच्छेदकनिष्ठाधेयतायां लक्ष्यतावच्छेदकतावच्छेदकसंबन्धावच्छिन्नत्वस्य विशेषणीयत्वान्न तत्रातिव्याप्तिरिति वाच्यम्। तथापि लक्ष्यतावच्छेदकीभूतगन्धनिष्ठगुणत्वावच्छिन्नाधेयतानिरूपिताधिकरणतावज्जलादिवृत्त्यभावप्रतियोगित्वात् पृथिवीत्वस्य तत्रातिव्याप्तेः। किञ्च गुणकर्मान्यत्वविशिष्टसत्तावतो द्रव्यत्वं लक्षणं इत्यादौ द्रव्यत्वस्य विशिष्टशुद्धयोरनतिरेकाल्लक्ष्यतावच्छेदकविशिष्टसत्तावद्गुणादिवृत्त्यभावप्रतियोगित्वात्तत्र अतिव्याप्तिश्चेति चेन्न। लक्ष्यतावच्छेदकतावच्छेदकसंबन्धावच्छिन्नलक्ष्यतावच्छेदकतावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निष्ठाभावप्रतियोगित्वस्य विवक्षितत्वाद्गुणादेर्लक्ष्यतावच्छेदकतावच्छेदकविशिष्टसत्तात्वावच्छिन्नाधिकरणत्वाभावान्न तत्रातिव्याप्तिः। अथ पृथिवीलक्षणभूते गन्धेऽतिव्याप्तिः। कालिकविशेषणतया गन्धाभावस्य निरुक्तलक्ष्यतावच्छेदकाधिकरणपृथिवीवृत्तित्वाद्गन्धस्य तत्प्रतियोगित्वात् । न च निरुक्ताधिकरणतावद्वृत्तितायामभावीयदैशिकविशेषणतासंबन्धावच्छिन्नत्वस्य विशेषणीयत्वाद्गन्धाभावस्य कालिकसंबन्धेन तत्र वृत्तित्वेऽपि दैशिकविशेषणतयाऽवृत्तित्वान्न तत्रातिव्याप्तिरिति वाच्यम् । एवमपि पदार्थसामान्यलक्षणत्वेनाभिमतसत्ताभाववत्वरूपाव्याप्तधर्मेऽव्याप्तिः। निरुक्तलक्ष्यतावच्छेदकाधिकरणद्रव्यगुणकर्मादावभावीयदैशिकविशेषणतया सत्तात्मकसत्ताभावाभावस्य अवृत्तेः। न च तादृशनिरुक्तलक्ष्यतावच्छेदकाधिकरणवृत्तितायां दैशिकविशेषणतासंबन्धावच्छिन्नत्वमपहाय लक्षणवत्ताग्रहविरोधितानियामकसंबन्धावच्छिन्नत्वस्य विशेषणीयत्वात् प्रकृते सत्तात्मकसत्ताभावाभावस्य लक्षणवत्ताग्रहाविरोधितानियामकीभूतसमवायसंबन्धेन निरुक्तलक्ष्यतावच्छेदकाधिकरणवृत्तित्वात्सत्ताभावे तत्प्रतियोगित्वसत्त्वान्नाव्याप्तिरिति वाच्यम् । तथापि पृथिवीलक्षणभूते गन्धेऽतिव्याप्त्यापत्तेः गन्धस्य निरुक्तलक्ष्यतावच्छेदकाधिकरणपृथिवीवृत्तिगन्धस्नेहोभयाभावपूर्वक्षणवृत्तित्वविशिष्टगन्धाभावप्रतियोगित्वात् । न च निरुक्तलक्ष्यतावच्छेदकाधिकरणवृत्त्यभावे

नी. दूषणत्रयरहिततत्त्वज्ञानं तु विशिष्य दूषणत्रयज्ञानाधीनम् । अभावबुद्धिं प्रति प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य तन्त्रत्वादित्याशयेन दूषणत्रयं दर्शयति ।

रा. रिति भावः । तेन नासंभवस्य गतार्थता । ननु लाघवात् लक्ष्यतावच्छेदकशू-

नृ. विशेष्यकनिरुक्ताव्याप्तिप्रकारकज्ञानस्य लक्ष्यतावच्छेदकगोत्वावच्छेदेन पक्षधर्मताज्ञान-

प. व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वस्य वैशिष्ट्यानवच्छिन्नप्रतियोगिताकत्वस्य च विशेषणीयत्वात् तयोरभावयोरतथात्वान्नातिव्याप्तिरिति वाच्यम् । तथा सति मूर्तलक्षणत्वेनाभिमतरूपगन्धोभयवत्त्वरूपाव्याप्तधर्मे सत्तावल्लक्षणत्वेनाभिमतविशिष्टसत्तावत्त्वरूपाव्याप्तधर्मे चाव्याप्तिः । रूपगन्धोभयाभावस्य विशिष्टसत्ताभावस्य च वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वाभावात् । किंच पृथिवीलक्षणगन्धेऽतिव्याप्तिः गन्धस्य निरुक्तलक्ष्यतावच्छेदकाधिकरणवृत्तितद्गन्धाभावप्रतियोगित्वात् । न च निरुक्तलक्ष्यतावच्छेदकाधिकरणतावन्निरूपितलक्षणवत्ताग्रहविरोधितानियामकसंबन्धावच्छिन्नवृत्तिताकाभावप्रतियोगितावच्छेदकलक्षणतावच्छेदकत्वेनाभिमतधर्मावच्छिन्नत्वस्य विवक्षितत्वान्न कोऽपि दोष इति वाच्यम् । तथापि पृथिवीलक्षणभूते गन्धेऽतिव्याप्तिः । गन्धस्य निरुक्तलक्ष्यतावच्छेदकाधिकरणवृत्तिसंयोगसंबन्धावच्छिन्नगन्धत्वावच्छिन्नप्रतियोगिताकाभावप्रतियोगितावच्छेदकधर्मावच्छिन्नत्वादिति चेन्न । तादृशाभावीयप्रतियोगितायां लक्षणतावच्छेदकसंबन्धावच्छिन्नत्वस्य निवेशनीयत्वान्नातिव्याप्तिः । तथा च लक्ष्यतावच्छेदकतावच्छेदकसंबन्धावच्छिन्नलक्ष्यतावच्छेदकतावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निरूपितलक्षणवत्ताग्रहविरोधितानियामकसंबन्धावच्छिन्नवृत्तिताश्रयीभूतलक्षणतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकाभाव-प्रतियोगितावच्छेदकलक्षणतावच्छेदकत्वेनाभिमतधर्मावच्छिन्नत्वे सति लक्ष्यतावच्छेदकसामानाधिकरण्यम् । ननु गन्धवतो लक्षणत्वेनाभिमतासंभवधर्मरूपजलत्वेऽतिव्याप्तिः । जलत्वस्य कालिकविशेषणतया लक्ष्यतावच्छेदकीभूतगन्धाधिकरणजलादिवृत्तित्वात् सत्यन्ताक्रान्तत्वाच्च । न च लक्ष्यतावच्छेदकनिष्ठाधेयतायां लक्ष्यतावच्छेदकतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशात् प्रकृते पृथिव्या एव लक्ष्यतावच्छेदकतावच्छेदकसमवायेन लक्ष्यतावच्छेदकगन्धाधिकरणत्वात् जलत्वस्य तद्वृत्तित्वाभावान्नातिव्याप्तिरिति वाच्यम् । एवमपि लक्ष्यतावच्छेदकीभूतगन्धनिष्ठगुणत्वावच्छिन्नाधेयतामादाय तत्रैवातिव्याप्तेः । किञ्च विशिष्टसत्तावतो लक्षणत्वेनाभिमतगुणत्वादावतिव्याप्तिः । विशिष्टसत्तायाः शुद्धसत्तायाश्चैक्यात् गुणस्य लक्ष्यतावच्छेदकीभूतविशिष्टसत्ताधिकरणत्वात् गुणत्वस्य तद्वृत्तित्वात् । न च आधेयतायां लक्ष्यतावच्छेदकतावच्छेदकावच्छिन्नत्वस्य निवेशात् गुणस्य लक्ष्यतावच्छेदकतावच्छेदकविशिष्टसत्तात्वाधिकरणत्वाभावान्नातिव्याप्तिरिति वाच्यम् । तथा सति गन्धवल्लक्षणत्वेनाभिमतजलत्वादावतिव्याप्तिः । जलत्वस्य कालिकसंबन्धेन निरुक्तलक्ष्यतावच्छेदकाधिकरणपृथिवीवृत्तित्वा-

नी. **लक्ष्यैकदेशावृत्तित्वमिति** । लक्ष्यतावच्छेदकत्वाभिमतसम्बन्धेन किञ्चिल्लक्ष्या
रा. न्यावृत्तित्वे सति लक्ष्यवृत्त्यभावाप्रतियोगित्वमेव वक्तुमुचितम् । न तूक्तदूषणत्रय
नृ. विघटकतया अव्याप्तिरूपदोषस्य दूषकत्वमिति बोध्यम् । लक्ष्यवृत्तित्वे सति अलक्ष्य
प. दिति चेन्न । वृत्तितायां लक्षणतावच्छेदकसंबन्धावच्छिन्नत्वेन विशेषणीयत्वात्, जलत्वस्य समवायेन तद्वृत्तित्वाभावात् । तथा च निरुक्तलक्षणतावच्छेदकधर्मवत्त्वे सति लक्ष्यतावच्छेदकतावच्छेदकसंबन्धावच्छिन्नलक्ष्यतावच्छेदकतावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निरूपितलक्षणतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वम् । अथ कथ गन्धवत्त्वादावतिव्याप्तिनिरासः । उक्ताव्याप्तिलक्षणस्य तत्र सत्त्वात् । तथा हि समवायसंबन्धावच्छिन्नगन्धत्वावच्छिन्नप्रतियोगिताकाभावस्योत्पत्तिकालावच्छेदेन निरुक्तलक्ष्यतावच्छेदकाधिकरणघटादिवृत्तितया गन्धवत्त्वस्य तत्प्रतियोगितावच्छेदकधर्मावच्छिन्नत्वात् । न च स्वप्रतियोग्यनधिकरणत्वस्य लक्ष्यतावच्छेदकाधिकरणे विशेषणीयत्वात् उत्पत्तिकालावच्छिन्नघटादेर्गन्धाधिकरणत्वान्नोक्तदोष इति वाच्यम् । तथापि पदार्थमात्रलक्षणत्वेनाभिमतसमवायेन ज्ञानवत्त्वरूपाव्याप्तिग्रस्तधर्मेऽव्याप्तिः । समवायसंबन्धावच्छिन्नज्ञानत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावस्य विषयतया प्रतियोगिभूतज्ञानाधिकरणलक्ष्यतावच्छेदकाधिकरणघटादिवृत्तित्वात । न च प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यधिकरणत्वस्य विवक्षणात् घटादेः प्रतियोगितावच्छेदकसमवायेन ज्ञानानधिकरणत्वान्न तत्राव्याप्तिरिति वाच्यम् । जातिमतः लक्षणत्वेनाभिमतगुणकर्मान्यत्वविशिष्टसत्त्वादावव्याप्तिः । विशिष्टसत्ताभावस्य सत्तारूपप्रतियोगिसामानाधिकरण्यात् । किञ्च सर्वस्याप्यभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिसमानाधिकरणतया स्वप्रतियोग्यनधिकरणलक्ष्यतावच्छेदकाधिकरणवृत्त्यभावस्याप्रसिद्ध्या असंभवापत्तेश्चेत् तत्त्वम् । स्वावच्छेदकसंबन्धावच्छिन्नस्वावच्छेदकावच्छिन्नानधिकरणताकलक्ष्यतावच्छेदकतावच्छेदकसंबन्धावच्छिन्नलक्ष्यतावच्छेदकतावच्छेदकावच्छिन्नाधिकरणतावन्निरूपितलक्षणवत्ताग्रहविरोधितानियामकसंबन्धावच्छिन्नवृत्तिताकाभावनिरूपिता या लक्षणतावच्छेदकसंबन्धावच्छिन्ना प्रतियोगिता, तदवच्छेदकलक्षणतावच्छेदकत्वाभिमतधर्मावच्छिन्नत्वे सति लक्ष्यतावच्छेदकसामानाधिकरण्यमव्याप्तिः। अत्र स्वपदद्वयं प्रतियोगितापरम् । इत्थं चाप्रसिद्धिनिबन्धनाव्याप्तिर्निरस्ता । द्रव्यलक्षणत्वेनाभिमतपृथिवीत्वादेरभावस्य पूर्वक्षणविशिष्टस्वाभावत्वावच्छिन्नप्रतियोगिताया लक्ष्यतावच्छेदकाधिकरणस्य स्वावच्छेदकावच्छिन्नाधिकरणतया स्वशब्देनाप्राप्त्या पृथिवीत्वत्वावच्छिन्नप्रतियोगिताया एव प्राप्तेः तत्र लक्षणसमन्वयः । अत्र पदार्थसामान्यलक्षणतया कथितेन समवायेन ज्ञानवत्त्वेऽव्याप्तिवारणाय स्वावच्छेदकसंबन्धावच्छिन्नेत्याद्यधिकरणताविशेषणम् । जातिमतो विशिष्टसत्त्वलक्षणेऽव्याप्तिवारणाय स्वावच्छेदकावच्छिन्नेति । तथा च लक्ष्यतावच्छेदकाधिकरणगुणादेर्विशिष्टसत्तात्यन्ता-

**लत्वम् । अलक्ष्ये लक्षणस्य वर्तनमतिव्याप्तिः । यथा गोः शृङ्गित्वम् । लक्ष्यमात्रावृत्तित्वमसंभवः । यथा गोरेकशफवत्त्वम् । एतद्दूषणत्रयरहितधर्मो लक्षणम् । स एवासाधारणधर्म इत्युच्यते । लक्ष्यतावच्छेदकसमनियतत्वमसाधारणत्वम् । व्यावर्तकस्यैव लक्षणत्वे व्यावृत्तावभि-**

---

नी. वृत्तित्वमित्यर्थः । **लक्ष्यमात्रेति** । मात्रपदं कृत्स्नार्थकं संबन्धविशेषावच्छिन्नलक्ष्यवृत्तित्वसामान्याभावस्फोरकम्। **एकशफवत्त्वमिति**। न चात्रालक्ष्यवृत्तित्वरूपातिव्याप्तेरपि सत्त्वात्सङ्कर इति वाच्यम्। दुष्टसङ्करेऽपि दोषासङ्कर इति न्यायात्। **एतद्दूषणत्रयरहित इति** । उक्तदूषणाभावत्रयविशिष्ट इत्यर्थः । नन्वसाधारणधर्मो लक्षणमिति हि

रा. रहितधर्मवत्त्वं गौरवादित्यतः । तथैवाह । **लक्ष्यतावच्छेदकसमनियतत्व-**

नृ. वृत्तित्वं इति लक्ष्यतावच्छेदकसमानाधिकरणत्वे सति लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसमानाधिकरणत्वमित्यर्थः । **अतिव्याप्तिरिति** । अतिव्याप्तिस्वरूपमित्यर्थः । अत्राव्याप्तिरूपदोषलक्ष्यकपिलात्वजातौ अतिव्याप्तिवारणाय विशेष्यभागः । असंभवदोषलक्ष्यैकशफवत्त्वादौ अतिव्याप्तिवारणाय सत्यन्तमिति बोध्यम् । तदुदाहरति । **यथेति । गोः शृङ्गित्वमिति** । गां लक्ष्यीकृत्य इतरभेदानुमापकत्वेन तात्पर्यविषयशृङ्गवत्त्वमित्यर्थः । **लक्ष्यमात्रावर्तनमिति** । लक्ष्यतावच्छेदकसमानाधिकरणभेदप्रतियोगितानवच्छेदकाभावप्रतियोगित्वमित्यर्थः । **असंभव इति** । असंभवस्वरूपमित्यर्थः । असंभवरूपदोषस्य लक्ष्यमुदाहरति। **यथेति । गोः एकशफवत्त्वमिति**। गां लक्ष्यीकृत्य इतरभेदानुमापकत्वेन तात्पर्यविषयैकशफत्वावच्छिन्नवत्त्वमित्यर्थः ।अत्रातिव्याप्तिरूपदोषस्य व्यापकसामानाधिकरण्यरूपव्याप्तिघटकव्यापकत्वांशग्रहविरोधितया असंभवरूपदोषस्य इतरभेदरूपसाध्यसमानाधिकरणव्यावर्तकरूपधर्मस्य तादृशव्याप्तिघटकसाध्यसामानाधिकरण्यांशग्रहविरोधितया चोभयोर्दूषकत्वं बोध्यम् । अस्म-

प. भावाधिकरणस्य सत्तारूपप्रतियोग्यधिकरणत्वेऽपि प्रतियोगितावच्छेदकावच्छिन्नविशिष्टसत्ताधिकरणत्वाभावान्नाव्याप्तिः । अनधिकरणत्वान्तसमुदितविशेषणेनोत्पत्तिकालावच्छेदेन घटादिवृत्तिगन्धात्यन्ताभावमादाय गन्धादौ आत्मनो ज्ञानादिलक्षणेऽव्याप्यवृत्तौ च नातिव्याप्तिः । संबन्धावच्छिन्नत्वान्तद्वितीयाधिकरणताविशेषणात् समवायेन ज्ञानवत्त्वं लक्ष्यतावच्छेदकीकृत्य कथिते आत्मत्वलक्षणेऽतिव्याप्तिरिति निरस्तम् । तत्रात्मत्वाभावस्य विषयतासंबन्धेन ज्ञानाधिकरणघटादिवृत्तित्वेऽपि समवायेन तदधिकरणावृत्तित्वात् । लक्ष्यतावच्छेदकतावच्छेदकेत्युक्त्या विशिष्टसत्त्वं लक्ष्यतावच्छेदकीकृत्य कथिते द्रव्यत्वेऽतिव्याप्तिरिति निरस्तम् । तत्र द्रव्यत्वाभावस्य सत्ताधिकरणवृत्तित्वेऽपि विशिष्टसत्ताधिकरणावृत्तित्वात् । लक्षणतावच्छेदकसंबन्धावच्छिन्नेति प्रति-

**नी.** सिद्धान्तः। तस्मात्कारणात्कथं दूषणत्रयरहितो धर्मो लक्षणमित्यत आह। **स एवेति**। **इत्युच्यत इति**। अभियुक्तैरिति शेषः। ननु साधारण्यस्य लक्ष्यालक्ष्यवृत्तित्वरूपतया तदभावरूपासाधारण्यस्याव्याप्त्यादिदोषग्रस्तधर्मेऽपि सत्त्वात्कथं दोषत्रय-

**रा.** **मिति**। समनियतत्वं च व्याप्यत्वे सति व्यापकत्वम्। व्याप्यत्वं च लक्ष्यतावच्छेदकशून्यावृत्तित्वम्। व्यापकत्वं च लक्ष्यवृत्त्यभावाप्रतियोगित्वम्। न चैवं पदार्थत्वादेः लक्ष्यतावच्छेदकस्थले तच्छून्याप्रसिद्धया न तस्य लक्षणत्वसंभव इति वाच्यम्।

**नृ.** द्गुरुचरणास्तु असंभवस्य पक्षतावच्छेदकावच्छिन्नग्रहविरोधितया दूषकत्वमाहुः। असल्लक्षणस्य लक्षणमुक्त्वा सल्लक्षणस्य लक्षणमाह। **एतदिति**। पूर्वोक्त इत्यर्थः। **दूषणत्रयरहित इति**। दोषत्रयान्यतमशून्य इत्यर्थः। **धर्म इति**। वस्तुत्वावच्छिन्नमित्यर्थः। धर्मत्वनिवेशप्रयोजनविरहात्। **लक्षणमिति**। सल्लक्षणशब्दप्रतिपाद्यमित्यर्थः। तथा च तादृशदोषत्रयान्यतमशून्यत्वं सल्लक्षणस्य लक्षणमिति भावः। नन्वसाधारणधर्मो हि लक्षणं सत् प्रकीर्तितमिति टीकाकारवचनेन असाधारणधर्मत्वस्यैव लक्षणलक्षणत्वप्रतिपादनात्तदुपेक्ष्य दोषरहितत्वस्य सल्लक्षणलक्षणत्वे बीजाभाव इत्यत आह। **स एवेति**। निरुक्तदोषत्रयरहित एवेत्यर्थः। **असाधारणधर्म इत्युच्यत इति**। असाधारणशब्देनापि तान्त्रिकैः व्यवह्रियत इत्यर्थः। एवकारेण दोषत्रयरहितान्यधर्मस्यासाधारणधर्मशब्दप्रतिपाद्यत्वव्यवच्छेदलाभः। एवञ्च द्रव्यगुणवत्त्वयोः समनियतत्वात् यथा द्रव्यमेव गुणिशब्देन व्यवह्रियते तथा दोषत्रयरहितत्वासाधारणत्वयोः समनियतत्वात्तत्रैव तादृशशब्देनापि व्यवहारस्सम्भवतीति फलितार्थः। तथा च लक्षणस्य लक्षणान्तरादूषकतया दोषत्रयरहितत्वासाधारणत्वयोरुभयोरपि सल्लक्षणीयव्यावहारिकलक्षणत्वे बाधकाभाव इति भावः। अत्र सल्लक्षणलक्षणे धर्मत्वनिवेशे प्रयोजनाभावात् असाधारणत्वमात्रमेव लक्षणं वाच्यम्। तदपि न सम्भवति। न साधारणं असाधारणं तस्य भावः इति

**प.** योगिताविशेषणेन संयोगसंबन्धावच्छिन्नगन्धाभावीयप्रतियोगितां वा पृथिवीपरमाणुवृत्तिकालिकसंबन्धावच्छिन्नगन्धाभावीयप्रतियोगितां वादाय गन्धवत्त्वलक्षणेऽतिव्याप्तिरिति निरस्तम्। तस्यास्समवायसंबन्धावच्छिन्नत्वात्। तथा च स्वावच्छेदकसंबन्धावच्छिन्नस्वावच्छेदकावच्छिन्नाधिकरणताकभिन्नलक्ष्यतावच्छेदकतावच्छेदकसंबन्धावच्छिन्नलक्ष्यतावच्छेदकतावच्छेदकावच्छिन्नाधिकरणतावन्निरूपितलक्षणवत्ताग्रहविरोधितानियामकसंबन्धावच्छिन्नवृत्तिताकाभावनिरूपितलक्षणतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितावच्छेदकलक्षणतावच्छेदकत्वाभिमतधर्मावच्छिन्नत्वे सति लक्ष्यतावच्छेदकतावच्छेदकसंबन्धावच्छिन्नलक्ष्यतावच्छेदकतावच्छेदकावच्छिन्नाधिकरणतावन्निरूपितलक्षणतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वमव्याप्तेर्लक्षणम्। केचित्तु। **लक्ष्यैकदेशावृत्तित्वमिति**। यत्किञ्चिल्लक्ष्यवृत्तित्वे सति यत्किञ्चिल्लक्ष्यावृत्तित्वं लक्षणमित्यर्थः। सल्लक्षणे-

नी. रहित एवासाधारण इत्याशङ्कां परिजिहीर्षुः असाधारणत्वमन्यादृशं निर्वक्ति । **लक्ष्यतावच्छेदकसमनियतत्वमिति** । लक्ष्यतावच्छेदकव्यापकत्वे सति लक्ष्यतावच्छेदकव्याप्यत्वमित्यर्थः । अव्याप्त्यसंभवग्रस्तयो र्वारणाय सत्यन्तम् ।

रा. तादृशस्थले अलक्ष्याप्रसिद्धया दूषणत्रयरहितधर्मवत्त्वरूपस्यापि तत्र तथात्वासंभवात् ।

नृ. व्युत्पत्त्या तस्य केवलान्वयिभिन्नत्वरूपत्वेन कपिलत्वादिरूपासल्लक्षणसाधारणत्वादत आह । **लक्ष्यतावच्छेदकसमनियतत्वमिति । असाधारणत्वमिति ।** असाधारणत्वशब्दार्थ इत्यर्थः । तथा च असाधारणत्वपदं न यौगिकम् । किन्तु पारिभाषिकमिति भावः । अत्र लक्ष्यतावच्छेदकसमनियतत्वं लक्ष्यतावच्छेदकव्याप्यत्वे सति लक्ष्यतावच्छेदकव्यापकत्वम् । लक्ष्यतावच्छेदकव्याप्यत्वं च न लक्ष्यतावच्छेदकवद्भिन्नावृत्तित्वम् । वाच्यत्वादिरूपकेवलान्वयिनि निरुक्तव्याप्यत्वाभावेन तद्घटितसमनियतत्वाभावादग्रे तत्रातिव्याप्तिरिति अभिधानस्यासाङ्गत्यापत्तेः । किन्तु स्वव्यापकलक्ष्यतावच्छेदककत्वमेव तद्वाच्यमत्र व्याप्यत्वदले व्यापकत्वदले च सम्बन्धविशेषधर्मविशेषनिवेशनं तत्प्रयोजनञ्च सुधीभिरूह्यम् । अतो नोक्तदोष इति प्राञ्चः । नवीनास्तु उक्तरीत्या समनियतत्वपरिष्कारे एतच्छरीरे लक्ष्यतावच्छेदकस्य द्विधा निवेशप्रसक्त्या गौरवापत्तेः स्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकलक्ष्यतावच्छेदकसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वरूपमेतद्वाच्यम् । लक्ष्यतावच्छेदकनिष्ठव्यापकत्वशरीरे लक्षणनिष्ठव्याप्यत्वशरीरे च सम्बन्धविशेषधर्मविशेषनिवेशनं तत्प्रयोजनं च स्वयमूह्यम् । अतो न कोऽपि दोष इति प्राहुः । ननु 'व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम् ।' इति भाष्यात् सावधारणप्रथमान्तव्यावृत्तिशब्देन व्यावृत्तिरेव लक्षणस्य प्रयोजनम् । व्यवहारो वेत्यत्र व्यवहारपदस्य व्यावृत्तिसहितव्यवहारलाक्षणिकतया व्यावृत्तिसहितव्यवहारः लक्षणस्य प्रयोजनमिति विकल्पार्थकवाशब्दसमभिव्याहाराद्विकल्पिकार्थो लभ्यते । अत्र

प. ऽतिव्याप्तिवारणाय विशेष्यदलम् । असंभविन्यतिव्याप्तिवारणाय सत्यन्तम् । वृत्तित्वं चोभयत्र लक्षणतावच्छेदकसंबन्धेन बोध्यम् । तेनासंभविलक्षणस्य कालिकसंबन्धेन लक्ष्यवृत्तित्वेऽपि नातिव्याप्तिः । न चैवं सल्लक्षणस्य यत्किञ्चित्संबन्धेन लक्ष्यावृत्तित्वेऽपि अतिव्याप्तिः । लक्ष्यावृत्तित्वं च लक्ष्यतावच्छेदकाधिकरणयत्किञ्चिद्वृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावो विवक्षितः । तेन गन्धादेरुत्पत्तिक्षणावच्छिन्नपृथिवीवृत्तित्वत्वावच्छिन्नाभावसत्त्वेऽपि नातिव्याप्तिः । तस्य यत्किञ्चित्पृथिवीवृत्तित्वत्वावच्छिन्नप्रतियोगिताकत्वाभावादुत्पत्तिक्षणांशस्याधिक्यात् । न चैवमपि भावलक्षणत्वेन कथिते सत्तादौ अव्याप्तलक्षणे अव्याप्तिः । तत्र लक्ष्यतावच्छेदकाधिकरणसामान्यादौ लक्षणतावच्छेदकसमवायेन वृत्तित्वाप्रसिद्धया तदभावाप्रसिद्धेः । द्रव्यादित्रये च सत्ताया वृत्तित्वस्यैव सत्त्वादिति वाच्यम् । लक्षणीयतादृशवृत्तित्वसामान्ये यत्किञ्चिल्लक्ष्यनिरूपितत्वाभावस्य

**नी.** अतिव्याप्तस्य वारणाय विशेष्यम् । धर्मपदं लक्षणताघटकसंबन्धेन व्यापकत्वादितात्पर्यग्राहकमिति भावः । अत्रेदं बोध्यम् । एतद्दोषा असाधारणत्वस्य विघटकाः । अतिव्याप्तौ व्याप्यत्वस्येतरयोश्च व्यापकत्वस्य च भङ्गात् । एतेषां दूषकताबीजं लक्षणेनेतरभेदसाधनेऽतिव्याप्तौ व्यभिचारः इतरयोश्च भागासिद्धिस्वरूपासिद्धी इति । लक्ष्यतावच्छेदकसमनियतत्वस्य लक्षणलक्षणत्वे लक्षणस्य व्यावृत्तिरेव प्रयोजनमिति मते व्यावर्तकस्यैव लक्षणलक्षणलक्ष्यतया व्यावृत्त्यादावतिव्याप्तिरित्याशङ्कां तन्मतानुसारेण निराकरोति । **व्यावर्तकस्यैवेति** । इतरभेदानुमितिजनकस्येत्यर्थः । इतरभेदविधेयकानुमितिजनकतावच्छेदकविषयताविशेषाश्रयस्येति यावत् । एतेन व्यावहारिकव्यवच्छेदः । लक्षणत्वे गवादिलक्षणत्वे उक्तलक्षणलक्षणलक्ष्यत्व इति यावत् । लक्ष्यत्व इति पाठे तु अयमेवार्थो बोध्यः । **व्यावृत्ताविति** । गवादीतर-

**रा.** वस्तुतस्तु स्वव्यापकलक्ष्यतावच्छेदकव्यापकत्वरूपसमनियतत्वस्य विवक्षितत्वेन न कोऽपि दोषः पदमादधातीति ध्येयम् । **व्यावर्तकस्यैवेति** । व्यावृत्तेरेव लक्षणप्रयोजनत्वपक्षे व्यावर्तकमेव लक्षणं व्यावृत्तिश्च इतरभेदानुमितिः । तथा च पृथिवीतरभेदस्यापि

**नृ.** व्यावृत्तिमात्रस्य लक्षणप्रयोजनत्वपक्षे गौरवं दर्शयितुमादौ व्यावृत्तिप्रयोजनकधर्ममात्रं लक्ष्यीकृत्य लक्षणमुपपादयति । **व्यावर्तकस्यैवेति** । **लक्षणत्व इति** । लक्षणत्वेन प्रामाणिकव्यवहारविषयत्वे इत्यर्थः । तथा च प्रामाणिकानां लक्षणत्वेन व्यवहारविषया ये तेषामेवेदृशलक्षणलक्ष्यत्वं वाच्यम् । प्रकृते व्यावर्तकधर्माणामेव लक्षणत्वेन प्रामाणिकव्यवहारविषयत्वे तन्मात्रवृत्तिव्यावर्तकत्वमेव लक्ष्यतावच्छेदकमङ्गीकार्यमिति व्यावर्तकत्वावच्छिन्नस्यासाधारणत्वं लक्षणमिति फलितमिति भावः । तस्मिन्पक्षे दोषमुद्भाव्य परिहरति । **व्यावृत्ताविति** । पृथिवीनिष्ठजलादिभेदरूपव्यावृत्ताविर्त्यर्थः । तथा च पृथिवीनिष्ठजलादिप्रतियोगिकभेदस्य न व्यावर्तकत्वम् । साध्यहेत्वोरैक्येन हेतुमान् पक्ष इत्याकारकपक्षधर्मताज्ञानस्यैव साध्यनिर्णयात्मकत्वेन प्रति-

**प.** विवक्षितत्वात् । प्रकृते सत्तानिष्ठसमवेतत्वसामान्ये जात्यादिनिरूपितत्वं नास्तीति नोक्तदोषः । दलद्वयेऽपि लक्ष्यतावच्छेदकतावच्छेदकसंबन्धेन लक्ष्यतावच्छेदकतावच्छेदकविशिष्टाधिकरणत्वं लक्ष्यपदेन विवक्षणीयम् । संबन्धनिवेशादसंभविलक्षणस्य शीतस्पर्शादेः कालिकतया लक्ष्यतावच्छेदकपृथिवीत्वाधिकरणजलादिवृत्तित्वेऽपि सल्लक्षणस्य गन्धादेः कालिकतया पृथिवीत्वाधिकरणवृत्तित्वाभावेऽपि च नातिव्याप्तिः । विशिष्टान्तनिवेशाच्च गुणकर्मान्यत्वविशिष्टसत्तावतो लक्षणे गुणत्वादावसंभविनि नातिव्याप्तिः । तस्य शुद्धसत्त्वाधिकरणवृत्तित्वेऽपि विशिष्टसत्ताधिकरणावृत्तित्वात् । नापि विशिष्टसत्तावतो लक्षणे द्रव्यत्वेऽतिव्याप्तिः । तस्य सत्ताधिकरणगुणावृत्तित्वेऽपि विशिष्टसत्ताधिकरणद्रव्यवृत्तित्वाभावविरहात् । एवं वृत्तित्वमपि लक्षणतावच्छेदकसंबन्धावच्छिन्नं ग्राह्यम् । तेन यन्निष्ठत्वमपहाय

नी. भेदे गोत्वादिरूपलक्ष्यतावच्छेदकसमनियतत्वस्य अभिधेयत्वप्रमेयत्वादौ पदार्थत्व समनियतत्वस्य च सत्त्वेनातिव्याप्तिवारणाय व्यावृत्तिभिन्नत्वमभिधेयत्वादिभिन्नत्वं च लक्षणे निवेशनीयमित्यर्थः । यद्यपि व्यावृत्तेरपि व्यावहारिकत्वस्य वक्ष्यमाणतया तेनैव रूपेण व्यावहारिकत्वेन संग्रहसंभवात्पृथगभिधानमनुचितम् । तथापि हेतुसाध्ययोरैक्ये हेतुमत्तानिश्चयकाले साध्यसंशयरूपपक्षताया असत्त्वेन नानुमितिरिति प्राचीनमते इतरभेदस्य व्यावर्तकत्वाभावेन तत्रातिव्याप्तिः । सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता इति सिद्धान्तिमते तु व्यावृत्तेरपि व्यावर्तकत्वेन लक्ष्यतया तत्र लक्षणसंगमनस्येष्टत्वेन नातिव्याप्तिरित्यावेदयितुं पृथक्कथनमिति ध्येयम् । ननु किमिदं नाम लक्षणलक्षणलक्ष्यतावच्छेदकं व्यावर्तकत्वम् । न तावत्सामान्यतो भेदानुमापकत्वम् । व्यावृत्त्यभिधेयत्वादेरपि यत्किञ्चिदुभयत्वावच्छिन्नप्रतियोगिताकभेदानुमापकतया त-

रा. पृथिवीत्वसमनियततया तत्र लक्षणलक्षणस्य अतिव्याप्तिः । तस्य च सिद्धसाधनापत्त्या पृथिवीतरभेदासाधकत्वेन तल्लक्षणालक्ष्यत्वादिति भावः । ननु सिद्धिसत्त्वेऽपि सिषाधयिषयानुमितिदर्शनात् स्वसाधकत्वमव्याहतमेवेति व्यावृत्तेः लक्ष्यत्वात् नातिव्याप्तिरित्यत आह । **अभिधेयत्वादौ चेति** । पदार्थसामान्यलक्षणस्य अभिधेयत्वादेः

नृ. वन्धकसत्त्वात् । तदुत्तरमनुमित्यनुपपत्त्या व्यावृत्तेः व्यावर्तकत्वासम्भवेन व्यावृत्तेः लक्ष्यतावच्छेदकशून्यतया तादृशव्यावृत्तौ लक्ष्यतावच्छेदकसमनियतत्वरूपलक्षणसत्त्वादतिव्याप्तिरिति भावः । व्यतिरेकिण्यतिव्याप्तिमुक्त्वा केवलान्वयिन्यतिव्याप्तिमाह । **अभिधेयत्वादौ चेति** । पदार्थत्वावच्छिन्ने पदार्थ इत्यादिव्यवहारानुमापकाभिधेयत्वादौ चेत्यर्थः । आदिना प्रमेयत्वादिपरिग्रहः । चकारात् उक्तव्यतिरेकिधर्मसमुच्चयः । तथा च पदार्थत्वशून्याप्रसिद्ध्या प्रमेयत्वादेः तद्व्यावर्तकत्वासम्भवेन व्यावर्तकत्वरूपलक्ष्यतावच्छेदकशून्यतया तत्र पदार्थत्वरूपलक्ष्यतावच्छेदकसमनियतत्वरूप-

प. यद्रूपावच्छिन्ननिवेशेन च गुणलक्षणे विशिष्टसत्त्वे असंभविनि नातिव्याप्तिः । न वा जातिमतो लक्षणे विशिष्टसत्त्वेऽव्याप्तिः । तदीयसत्तात्वावच्छिन्नवृत्तित्वस्य गुणादिनिरूपितत्वेऽपि विशिष्टसत्तात्वावच्छिन्नवृत्तित्वे गुणादिनिरूपितत्वविरहादिति व्याचख्युः । अतिव्याप्तिस्वरूपमाह । **अलक्ष्यवृत्तित्वमिति** । ननु अलक्ष्यवृत्तित्वं लक्ष्यतावच्छेदकाभाववद्वृत्तित्वम् । तथा चासंभविधर्मेऽतिव्याप्तिरिति चेन्न । लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावाप्रतियोगित्वे सति लक्ष्यतावच्छेदकाभाववद्वृत्तित्वस्य विवक्षितत्वात् । असंभविधर्मे सत्यन्ताभावान्नातिव्याप्तिः । सल्लक्षणे गन्धादावतिव्याप्तिवारणाय विशेष्यम् । अथ ज्ञानवतो लक्षणतया कथिते अतिव्याप्तिधर्मीभूतद्रव्यत्वेऽव्याप्तिः । द्रव्यत्वस्य विषयतया लक्ष्यतावच्छेदकीभूतज्ञानाधिकरणगुणादिवृत्त्यभावप्रतियोगित्वात् । एवं गन्धवतो लक्षणतया कथिते मू-

धेयत्वादौ चातिव्याप्तिरतस्तद्वारणाय तद्भिन्नत्वं धर्मविशेषणं देयम्।

---

नी. त्रातिव्याप्तिकथनासङ्गतेः । सर्वेषामपि व्यतिरेकिधर्माणां यत्किञ्चिद्व्यावर्तकतया असाधारण्यादिघटकव्यापकत्वादिवैयर्थ्यापाताच्च । नापि विशिष्य तत्तद्धर्मावच्छिन्नेतरभेदानुमापकत्वम् । तथा सति गोत्वावच्छिन्नेतरभेदानुमापकस्य सास्नादिमत्त्वस्य गोत्वसमनियतत्वं लक्षणमित्येवंरीत्या विशिष्य तत्तल्लक्षणस्य वक्तव्यतया गोत्वादिरूपलक्ष्यतावच्छेदकसमनियतत्वस्य गोत्वावच्छिन्नेतरभेदादिरूपव्यावृत्तावतिव्याप्तेः संभवेऽप्यभिधेयत्वादावतिव्याप्त्यलग्नकतापत्तेः गोत्वादिसमनियतत्वस्य तत्रासत्त्वादिति चेन्नैवम् । सास्नादिमत्त्वं पक्षीकृत्य गोत्वावच्छिन्नेतरभेदानुमापकत्वे साध्ये विशेषव्याप्तावन्वयदृष्टान्तालाभेन यद्यद्धर्मसमनियतं तत्तदवच्छिन्नव्यावर्तकमिति रीत्या सामान्यमुखेन व्याप्तेरभ्युपगन्तव्यतया तत्र सिद्धसाधनाप्रसिद्धिभ्यामव्यावर्तकयोर्व्यावृत्त्यभिधेयत्वयोस्तत्तद्धर्मसमनैयत्यरूपप्रकृतहेतोस्तत्तुल्यस्य वा हेतोः सत्त्वेन प्रकृतसाध्यस्य तत्तुल्यस्य वा साध्यस्यासत्त्वेन व्यभिचारः स्यात् । अतस्तद्दोषवारणाय तत्तद्धर्मावच्छिन्नेतरभेदरूपव्यावृत्तिभिन्नत्वमभिधेयत्वादिभिन्नत्वं च तादृशलक्षणे निवेशनीयमित्यभिप्रायकोऽयं ग्रन्थ इति न पूर्वोक्तदोषावसरः । अधिकविचारस्त्वन्यत्रानु-

रा. नेतरभेदसाधकत्वम् । इतराप्रसिद्धेः । तथा च तत्रैव पदार्थत्वरूपलक्ष्यतावच्छेदकस-

नृ. लक्षणसत्त्वादतिव्याप्तिरिति भावः । **तद्वारणायेति** । उक्तस्थलेऽतिव्याप्तिवारणायेत्यर्थः । **तद्भिन्नत्वमिति** । व्यतिरेकभिन्नत्वकेवलान्वयिभिन्नत्वोभयवत्त्वमित्यर्थः । **धर्मविशेषणमिति** । लक्ष्यतावच्छेदकसमनियतत्वविशेषणमित्यर्थः । **देयमिति** । आवश्यकमित्यर्थः । तथा च तादृशधर्मे निरुक्तभेदस्य विशेषणत्वे विशेषणविशेष्यभावे विनिगमनाविरहप्रयुक्तलक्षणत्रयोत्पत्तिप्रयुक्तगौरवभिया व्यावृत्तिभिन्नत्वकेवलान्वयिभिन्नत्वलक्ष्यतावच्छेदकसमनियतत्वैतत्त्रित्वावच्छिन्नमेव लक्षणं वाच्यमिति समुदायस्य लक्षणत्वाङ्गीकारप्रयुक्तगौरवमव्याहतमिति भावः । व्यावर्तकस्येव व्यावहारिकस्यापि

प. र्तत्वादावव्याप्तिः। मूर्तत्वस्य कालिकसम्बन्धेन लक्ष्यतावच्छेदकगन्धाधिकरणकालादिवृत्त्यभावप्रतियोगित्वात् । न च लक्ष्यतावच्छेदकनिष्ठाधेयतायां लक्ष्यतावच्छेदकतावच्छेदकसंबन्धावच्छिन्नत्वविशेषणदानात् गुणादेः समवायेन ज्ञानाधिकरणकाभावान्नाव्याप्तिरिति वाच्यम् । तथापि विशिष्टसत्तावतो लक्षणतया कथिते द्रव्यसामान्यान्यतरत्वादावव्याप्तिः । द्रव्यसामान्यान्यतरत्वस्य लक्ष्यतावच्छेदकीभूतविशिष्टसत्ताधिकरणगुणादिवृत्त्यभावप्रतियोगित्वात् । एवं गन्धवतो द्रव्यत्वं लक्षणं इत्यादौ द्रव्यत्वस्य लक्ष्यतावच्छेदकीभूतगन्धनिष्ठसत्त्वावच्छिन्नाधेयतानिरूपिताधिकरणतावद्गुणादिवृत्त्यभावप्रतियोगित्वात्तत्राव्याप्तिः । न च लक्ष्यतावच्छेदकनिष्ठाधेयतायां लक्ष्यतावच्छेदकतावच्छेदकावच्छिन्नेति विशेषणदानाद्गुणादेर्विशिष्टसत्तात्वावच्छिन्नाधिकरणत्वाभावाच्च नाव्याप्तिरिति वाच्यम् । एवमपि पृथिवीलक्षणतया कथितद्रव्यत्वादावव्य-

**व्यवहारस्यापि लक्षणप्रयोजनत्वे तन्न देयम् । व्यावृत्तेरपि व्यवहारसाध-**

---

नी. सन्धेयः । ननु लक्षणस्य व्यवहारोऽपि प्रयोजनम् । तेन रूपेण व्यवहर्तव्यज्ञानं विना तद्रूपावच्छिन्नबोधकशब्दरूपव्यवहारसंभवात् । एवं च व्यावहारिकलक्षणस्यापि लक्ष्यत्वात्तद्भिन्नत्वं विशेषणं न देयमित्याह ! **व्यवहारस्यापीति** । ननु व्यावृत्तानतिव्याप्यत्ववारणाय तद्भिन्नत्वमावश्यकम्। व्यावृत्तेर्व्यावहारिकत्वाभावादिभ्रमं वारयति । **व्यावृत्तेरपीति** । अपिना अभिधेयत्वादिपरिग्रहो दृष्टान्तलाभाय । नन्वाद्यक्षणा-

रा. मनियतत्वात् भवत्यतिव्याप्तिरिति भावः । **व्यवहारसाधनत्वादिति** । इयं

नृ. लक्षणत्वेन प्रामाणिकव्यवहारविषयत्वकल्पने नोक्तगौरवावकाश इत्याह । **व्यवहारस्यापीति** । अपिना व्यावृत्तेः परिग्रहः। **लक्षणप्रयोजनत्व इति**। लक्षणात्मकलिङ्गज्ञानज्ञाप्यत्व इत्यर्थः। **न देयमिति**। तद्भिन्नत्वविशेषणं न देयमित्यर्थः । अत्र हेतुमाह । **व्यावृत्तेरपीति** । अपिना व्यावर्तकगन्धादेः परिग्रहः। **व्यवहारसाधनत्वादिति** । व्यवहारानुमापकत्वादित्यर्थः । तथा च व्यावृत्तेरिव व्यवहारस्यापि लक्षणप्रयोजनत्वस्वीकारपक्षे व्यावर्तकस्येव व्यावहारिकस्यापि लक्षणत्वेन प्रामाणिकव्यवहारविषयत्वमवश्यं स्वीकार्यम् । एवञ्च घटः पृथिवीति व्यवहर्तव्यः, इतरभेदवत्त्वात् । एवं घटः पदार्थ इति व्यवहर्तव्यः अभिधेयत्वात् पटवदित्यादिसदनुमानात् सिद्धसाधनरूपदोषाभावेन व्यवहारविधेयकानुमित्युत्पत्त्या व्यावृत्तेः केवलान्वयिधर्मव्यवहारानुमापकत्वेन तयोरपि लक्षणत्वेन प्रामाणिकव्यवहारविषयत्वात् तत्साधारणस्य व्यावृत्तिव्यवहारान्यतरानुमापकत्वस्यैव लक्ष्यतावच्छेदकत्वं वाच्यम् । इत्थञ्च व्यावृत्तेः केवलान्वयिधर्मस्य च निरुक्तलक्ष्यतावच्छेदकाक्रान्ततया लक्ष्यत्वाभावेनातिव्याप्त्यतिप्रसक्तेः तद्भिन्नत्वनिवेशे प्रयोजनाभावात् अस्मिन् कल्पे लाघवमव्याहतमिति भावः । नन्वत्र व्यावर्तकत्वं इतरभेदानुमापकत्वं केवलभेदानुमापकत्वं वा । आद्येऽपि लक्ष्यतावच्छेदकतत्तद्धर्मावच्छिन्नप्रतियोगिताक-

प. प्तिः । द्रव्यत्वस्य कालिकसंबन्धेन निरुक्तलक्ष्यतावच्छेदकाधिकरणपृथिवीवृत्तिद्रव्यत्वाभावप्रतियोगित्वात् । न च निरुक्तलक्ष्यतावच्छेदकाधिकरणवृत्तितायां दैशिकविशेषणतासंबन्धावच्छिन्नत्वविशेषणदानान्नाव्याप्तिरिति वाच्यम् । तथापि पृथिवीलक्षणतया कथितरूपवत्त्वादावव्याप्तिः । रूपस्य निरुक्तलक्ष्यतावच्छेदकाधिकरणवृत्तिरूपस्नेहोभयाभावपूर्वक्षणवृत्तित्वविशिष्टरूपाभावप्रतियोगित्वात् । न च लक्ष्यतावच्छेदकसमानाधिकरणाभावे वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वविशेषणदानान्नाव्याप्तिरिति वाच्यम् । तथापि पृथिवीलक्षणतया कथितस्नेहजलत्वोभयवत्त्वरूपासंभविधर्मे सामान्यादिलक्षणतया कथितविशिष्टसत्ताद्यसंभविधर्मे चातिव्याप्तिः । स्नेहजलत्वोभयवत्त्वस्य विशिष्टसत्त्वादेश्च निरुक्तलक्ष्यतावच्छेदकाधिकरणवृत्तिवैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकाभावाप्रतियोगित्वात् । किञ्च पृथिवीलक्षण-

नी. वच्छिन्नद्रव्ये गुणवत्त्वस्यासत्त्वेऽपि कालान्तरावच्छिन्ने तत्र तत्सत्त्वमक्षतम् । एवं च

रा. पृथिवीति व्यवहर्तव्यस्वेतरभेदवत्त्वादित्येवंक्रमेण व्यावृत्तेः व्यवहारसाधकत्वं

नृ. भेदावच्छिन्नप्रतियोगिताकभेदवत्त्वं तादृशभेदाश्रयनिष्ठप्रतियोगिताकभेदवत्त्वं लक्ष्यतावच्छेदकतत्तद्धर्माश्रयप्रतियोगिकभेदावच्छिन्नप्रतियोगिताकाभेदवत्त्वं तादृशभेदाश्रयप्रतियोगिकभेदवत्त्वरूपं वा । न प्रथमद्वितीयपक्षौ। पदार्थत्वावच्छिन्नप्रतियोगिताकभेदाप्रसिद्धया तद्घटितेतरभेदानुमापकत्वरूपलक्ष्यतावच्छेदकस्य सुतरामप्रसिद्धया अभिधेयत्वादेः तच्छून्यत्वाभावात् तत्र लक्षणसत्त्वस्यातिव्याप्त्यसंपादकतया तदभिधानस्यासाङ्गत्यापत्तेः। न तृतीयः। तादृशधर्माश्रयप्रतियोगिताकभेदेत्यनेन घटत्वाद्यव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदग्रहणे अभिधेयत्वादेः तादृशभेदावच्छिन्नप्रतियोगिताकभेदव्यभिचारित्वेन तदनुमापकत्वरूपलक्ष्यतावच्छेदकस्य घटादिनि-

प. तया कथितरूपवत्त्वादावव्याप्तिश्च । रूपस्य लक्ष्यतावच्छेदकाधिकरणवृत्तितत्तद्रूपाभावप्रतियोगित्वात् । न च निरुक्तलक्ष्यतावच्छेदकाधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकलक्षणतावच्छेदकवत्त्वस्य विवक्षणादेव पृथिवीलक्षणतया कथितरूपादिस्थितरूपस्नेहोभयत्वस्य पूर्वक्षणविशिष्टरूपत्वादेश्च तादृशाभावप्रतियोगितावच्छेदकत्वेऽपि केवलरूपत्वस्य प्रतियोगितानवच्छेदकत्वात् रूपस्य तदवच्छिन्नत्वेनाव्याप्त्यभावाद्द्वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वरूपाभावविशेषणानिवेशात् पृथिवीलक्षणतया कथितस्नेहजलत्वोभयवत्त्वादौ सामान्यादिलक्षणतया कथितविशिष्टसत्त्वाद्यसंभविधर्मे चातिव्याप्त्यनवकाशान्न कोऽपि दोष इति वाच्यम् । तथापि पृथिवीलक्षणतया कथितस्नेहवत्त्वादावतिव्याप्तिः । स्नेहवत्त्वस्य निरुक्तलक्ष्यतावच्छेदकाधिकरणपृथिवीवृत्त्यभावप्रतियोगितानवच्छेदकगुणत्वात्मकधर्मवत्त्वात् । न च तादृशाभावप्रतियोगितानवच्छेदकप्रकृतलक्षणतावच्छेदकधर्मवत्त्वविवक्षणात् गुणत्वस्य प्रकृतलक्षणतावच्छेदकत्वाभावात्तमादाय न स्नेहादावतिव्याप्तिरिति वाच्यम् । तथापि पृथिवीलक्षणतया कथितगन्धाभाववत्त्वाद्यसंभविधर्मेऽतिव्याप्तिः । गन्धात्मकगन्धाभावाभावस्य निरुक्तलक्ष्यतावच्छेदकाधिकरणघटादौ दैशिकविशेषणतासंबन्धेनावर्तमानत्वाद्गन्धाभावत्वस्य तत्प्रतियोगितावच्छेदकत्वाद्गन्धाभावस्य तद्वत्त्वात् । न च वृत्तितायां लक्षणवत्ताग्रहविरोधितानियामकसंबन्धावच्छिन्नत्वविशेषणदानाद्गन्धात्मकगन्धाभावाभावस्य समवायेन निरुक्तलक्ष्यतावच्छेदकाधिकरणघटादिवृत्तित्वान्नातिव्याप्तिरिति वाच्यम् । तथापि पृथिवीलक्षणतया कथितद्रव्यत्वादावव्याप्तिः । द्रव्यत्वस्य लक्ष्यतावच्छेदकाधिकरणपृथिवीपरमाणुवृत्तिकालिकसंबन्धावच्छिन्नद्रव्यत्वत्वावच्छिन्नाभावप्रतियोगितावच्छेदकद्रव्यत्वत्ववत्त्वात् । घटादिवृत्तिसंयोगसंबन्धावच्छिन्नद्रव्यत्वत्वावच्छिन्नप्रतियोगिताकाभावप्रतियोगितावच्छेदकधर्मवत्त्वाच्च । न च अभावीयप्रतियोगितायां लक्षणतावच्छेदकसंबन्धावच्छिन्नत्वेन विशेषणीयत्वान्नाव्याप्तिरिति वाच्यम।

नत्वात् । ननु गुणवत्त्वं न द्रव्यलक्षणम्, आद्यक्षणावच्छिन्नघटे उत्पन्न-विनष्टघटे चाव्याप्तेरिति चेन्न । गुणसमानाधिकरणसत्ताभिन्नजाति-मत्त्वस्य विवक्षितत्वात् । नन्वेवमपि एकं रूपं रसात्पृथक् इति व्यव-हाराद्रूपादावतिव्याप्तिरिति चेन्न । एकार्थसमवायादेव तादृशव्यवहारोप-पत्तौ गुणे गुणानङ्गीकारात । गुणान्विभजते । रूपेति । द्रव्यकर्मभि-

---

नी. गुणाश्रयत्वलक्षणं साध्वित्यत आह । उत्पन्नविनष्टेति । यादृशद्रव्यारम्भकसंयोग-

रा. बोध्यम् । आदिना प्रमेयत्वादिसंग्रहः । आद्यक्षणावच्छिन्नेति । ननु आद्यक्षणाव-

नृ. च्छतद्व्यक्तित्वादावेव सत्त्वेन तच्छून्यत्वरूपालक्ष्यत्वस्याभिधेयत्वादौ सत्त्वादतिव्या-प्त्यभिधानसङ्गमेऽपि तादृशधर्माश्रयप्रतियोगिकभेदेत्यनेन घटपटोभयत्वादिरूपव्या-सज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदग्रहणपक्षे तादृशभेदस्य केवलान्वयितया तद-वच्छिन्नप्रतियोगिताकभेदाप्रसिद्ध्या तदनुमापकत्वरूपलक्ष्यतावच्छेदकस्य सुतरामप्र-सिद्धत्वेनाभिधेयत्वादौ लक्ष्यतावच्छेदकशून्यत्वरूपालक्ष्यत्वाभावात अतिव्याप्त्यभिधा-नासङ्गतेः दुर्वारत्वात् । नान्त्यः । लक्ष्यतावच्छेदकपदार्थत्वाश्रयनिष्ठप्रतियोगिताकभेदस्य घटत्वादिरूपाव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदरूपस्य घटपटोभयत्वादिरूप-व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदरूपस्य वा ग्रहणेऽपि तादृशभेदाश्रयनिष्ठ-कुड्यकुसूलोभयत्वावच्छिन्नप्रतियोगिताकभेदस्य केवलान्वयितया अभिधेयत्वादेरपि तद्व्याप्यत्वेन तदनुमापकत्वरूपलक्ष्यतावच्छेदकाक्रान्तत्वात् अलक्ष्यत्वाभावेनातिव्या-प्त्यभिधानासंगतेः । केवलभेदानुमापकत्वरूपव्यावर्तकत्वपक्षोऽप्ययुक्तः । अभि-धेयत्वादौ घटपटोभयत्वादिरूपव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदानुमापकत्व-संभवेनाभिधेयत्वादेरपि लक्ष्यतावच्छेदकाक्रान्तत्वेन तत्रातिव्याप्त्यभिधानासङ्गतेर्दुर्वा-रत्वात् इति चेदत्र प्राञ्चः । व्यावर्तकत्वं प्रतियोग्यवृत्तिभेदानुमापकत्वम् । नातः

प. एवमपि घटलक्षणतया कथितगन्धादावव्याप्तिः । गन्धस्य उत्पत्तिकालावच्छेदेन ल-क्ष्यतावच्छेदकाधिकरणघटादिवृत्तिगन्धाभावप्रतियोगितावच्छेदकधर्मवत्त्वात् ।एवं पृथि-वीलक्षणतया कथितसंयोगवत्त्वादावव्याप्तिः । संयोगस्य लक्ष्यतावच्छेदकाधिकरणघटा-दिवृत्तिसंयोगाभावप्रतियोगितावच्छेदकधर्मवत्त्वात् । न च लक्ष्यतावच्छेदकाधिकरण-स्य प्रतियोग्यनधिकरणत्वविशेषणदानात् घटलक्षणतया कथितगन्धवत्त्व-पृथिवीलक्ष-णतया कथितसंयोगवत्त्वादिस्थले गन्धाभावस्य संयोगाभावस्य च प्रतियोगिसमा-नाधिकरणत्वेन प्रतियोग्यनधिकरणलक्ष्यतावच्छेदकाधिकरणवृत्तित्वाभावात् नाव्याप्ति-रिति वाच्यम् । तथापि पृथिवीलक्षणतया कथितसमवायेन ज्ञानवत्त्वादसंभविधर्मेऽ-तिव्याप्तिः । ज्ञानाभावस्य विषयतया स्वप्रतियोगिसमानाधिकरणत्वेन लक्षणघटक-त्वासंभवेन अन्याभावस्यैव धर्तव्यतया ज्ञानवत्त्वादावेतल्लक्षणसत्त्वसंभवात् । न च

नी. जनकक्रियोत्पत्तितृतीयक्षणेऽवयवान्तरे तादृशसंयोगनाशिका क्रिया जाता तादृश-
टा. च्छिन्नघटस्य द्वितीयादिक्षणाद्यवच्छिन्नघटाभिन्नतया द्वितीयादिक्षणावच्छेदेन घटस्य

नृ. व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदानुमापकत्वमादायाभिधेयत्वादेः लक्ष्यतावच्छेदकाक्रान्तत्वप्रसक्तिः । न चैवमाकाशाभावाकाशभेदान्यतरत्वस्य केवलान्वयितावच्छेदकतया आकाशभेदस्य स्वप्रतियोग्यवृत्तिभेदस्वरूपतया चाभिधेयत्वादेः तादृशकेवलान्वयितावच्छेदकान्यतरत्वेन रूपेणाकाशभेदरूपप्रतियोग्यवृत्तिभेदानुमापकत्वरूपलक्ष्यतावच्छेदकाक्रान्ततयातिव्याप्त्यभिधानासङ्गतिः दुर्वारेति वाच्यम् । प्रतियोग्यवृत्तिभेदमात्रवृत्तिधर्मावच्छिन्नानुमापकत्वस्यैव व्यावर्तकत्वपदार्थत्वेन अभिधेयत्वादेः तादृशलक्ष्यतावच्छेदकानाक्रान्तत्वेन उक्तदोषाभावात् । न चैवमपि घटभेदपटभेदान्यतरत्वस्यापि केवलान्वयितावच्छेदकतया घटभेदस्य पटभेदस्य च प्रतियोग्यवृत्तित्वेन तादृशान्यतरत्वस्य प्रतियोग्यवृत्तिभेदमात्रवृत्तित्वात् तेन रूपेण घटभेदादिरूपप्रतियोग्यवृत्तिभेदानुमापकत्वरूपलक्ष्यतावच्छेदकाक्रान्तत्वमभिधेयत्वादेरक्षतमिति तद्दोषतादवस्थ्यमिति वाच्यम् । प्रतियोग्यवृत्तिभेदमात्रवृत्तिभेदत्वावच्छिन्नानुमापकत्वस्यैव व्यावर्तकपदार्थत्वात् । प्रकृते तादृशान्यतरत्वस्य तादृशभेदत्वरूपत्वाभावेनाभिधेयत्वादेः निरुक्तलक्ष्यतावच्छेदकतानाक्रान्ततया नोक्तदोषप्रसक्तिः । नन्वेवमपि जलादिप्रतियोगिकभेदरूपव्यावृत्तेरपि जलत्वावच्छिन्नप्रतियोगिताकभेदत्वस्य निरुक्तभेदत्वात्मकत्वात् तदवच्छिन्नानुमापकत्वेन लक्ष्यतावच्छेदकाक्रान्तत्वात् तत्रातिव्याप्त्यभिधानासङ्गतिः । न चैवं सिद्धसाधनप्रसक्तिः साध्यहेत्वोरैक्यादिति वाच्यम् । साध्यहेत्वोरैक्येऽपि जलादिप्रतियोगिकभेदनिष्ठसमुदायत्वस्यैव हेतुतावच्छेदकतया जलादिभेदत्वस्य साध्यतावच्छेदकतया च हेतुतावच्छेदकसाध्यतावच्छेदकयोः भेदात् न सिद्धसाधनप्रसक्तिरिति चेन्न । हेतुघटकप्रतियोगिप्रतियोगिकावृत्तित्वेन तादृशभेदत्वस्य विशेषणीयत्वात् । प्रकृते जलभेदत्वस्य तादृशस्य

प. प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणत्वविवक्षणाज्ज्ञानाभावस्य प्रतियोगितानवच्छेदकसमवायेन प्रतियोग्यनधिकरणलक्ष्यतावच्छेदकाधिकरणघटादिवृत्तित्वान्न तत्रातिव्याप्तिः इति वाच्यम् । एवमपि गुणलक्षणतया कथितविशिष्टसत्त्वाद्यसंभविधर्मेऽतिव्याप्तिः । विशिष्टसत्ताभावस्य प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिभूतविशिष्टसत्ताधिकरणगुणादिवृत्तित्वेन लक्षणघटकत्वासंभवेन अन्याभावस्यैव लक्षणघटकतया विशिष्टसत्त्वादावेतल्लक्षणसत्त्वसंभवादिति चेन्न । स्वावच्छेदकसंबन्धावच्छिन्नस्वावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणत्वस्य विवक्षणात् । गुणलक्षणतया कथितविशिष्टसत्तादिस्थले स्वपदद्वयस्य प्रतियोगितापरत्वात् । गुणादेः स्वपदार्थप्रतियोगितावच्छेदकीभूतविशिष्टसत्तात्वावच्छिन्नानधिकरणत्वात् । तथा च विशिष्टसत्ताभावस्य स्वावच्छेदकावच्छिन्नानधिकरणलक्ष्यतावच्छेदकाधिकरणगुणादिवृत्तित्वान्नातिव्याप्तिरिति ध्येयम् ।

नी. द्रव्य इत्यर्थः। नवीनाः पुनरसमवायिकारणस्य कार्यसहभावेन कारणतामवलम्ब्यो-

रा. गुणवत्त्वात् नाव्याप्तिः। न हीदं कालघटितम् येनोत्पत्तिक्षणावच्छेदेन गुण-

नृ. जलादिभेदसमुदायात्मकव्यावृत्तिघटकजलादिभेदप्रतियोगिजलादिरूपप्रतियोगिकभेद-वृत्तित्वात् व्यावृत्तावतिव्याप्त्यभिधानसङ्गतिः। यत्तु हेतुघटकावृत्तित्वेनैव तादृशभेदत्वं विशेषणीयं लाघवात् व्यावृत्तावतिव्याप्त्यभिधानसंगतिश्चेति। तन्न। तथा सति जलनिष्ठतद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदत्वस्यापि निरुक्तभेदत्वात्मकत्वात् हेतुघटकावृत्तित्वाच्च व्यावृत्तेः तदवच्छिन्नानुमापकत्वरूपलक्ष्यतावच्छेदकाक्रान्ततया तत्रातिव्याप्त्यभिधानासङ्गतेर्दुर्वारत्वात्। तथा च प्रतियोग्यवृत्तिभेदमात्रवृत्तिहेतुघटकप्रतियोगिप्रतियोगिकावृत्तिभेदत्वावच्छिन्नानुमापकत्वमेव व्यावर्तकत्वमिति फलितम्। एवं च न कश्चिद्दोष इत्याहुः। वस्तुतस्तु व्यावर्तकत्वमत्र तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्ननिरूपितव्याप्यत्वमेव। गन्धादेः जलादिनिष्ठतद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्ननिरूपितव्याप्तिमत्त्वात् लक्ष्यत्वोपपत्तिः। अभिधेयत्वादेः किञ्चिदपि तादृशभेदत्वं न व्यापकतावच्छेदकमिति यत्किञ्चित्तादृशभेदत्वावच्छिन्ननिरूपितव्याप्यत्वाभावात् अलक्ष्यत्वोपपत्तिः। न चैवमपि जलादिभेदरूपव्यावृत्तेरपि जलादिनिष्ठतद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्ननिरूपितव्याप्यत्वरूपलक्ष्यतावच्छेदकाक्रान्ततया तत्रातिव्याप्त्याभिधानमसंगतमिति वाच्यम्। हेतुघटकप्रतियोग्यवृत्तित्वेन तद्व्यक्तित्वस्य विशेषणीयत्वात्। प्रकृते जलादिनिष्ठतद्व्यक्तित्वस्य तादृशप्रतियोगिवृत्तित्वे घटादिनिष्ठतद्व्यक्तित्वेन तादृशतया तदवच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्ननिरूपितव्याप्यत्वस्य व्यावृत्तावभावात् तत्रातिव्याप्त्यभिधानं निराबाधमेव। इत्थं च न कोऽपि दोष इति प्रतिभाति। एतेन घटभेदत्वस्य तादृशभेदत्वरूपत्वात् व्यावृत्तिरूपहेतुघटकप्रतियोगिप्रतियोगिकावृत्तित्वाच्च व्यावृत्तावभिधेयत्वादौ च तद्धर्मावच्छिन्ननिरूपितव्याप्य-

प. तथा च स्वावच्छेदकसंबन्धावच्छिन्नस्वावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणताकाभिन्नलक्ष्यतावच्छेदकतावच्छेदकसंबन्धावच्छिन्नलक्ष्यतावच्छेदकतावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निरूपितलक्षणवत्ताग्रहविरोधितानियामकसंबन्धावच्छिन्नवृत्तिताकाभावनिरूपितलक्षणतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकलक्षणतावच्छेदकत्वाभिमतधर्मावच्छिन्नत्वे सति लक्ष्यतावच्छेदकाभाववद्वृत्तित्वमतिव्याप्तधर्मलक्षणम्। लक्ष्यतावच्छेदकाभाववद्वृत्तित्वं च लक्ष्यतावच्छेदकनिष्ठप्रतियोगिताकाभाववद्वृत्तित्वं वाच्यम्। तथा सति गन्धवतः पृथिवीत्वं लक्षणं इत्यादौ अतिव्याप्तिः। पृथिवीत्वस्य लक्ष्यतावच्छेदकीभूतगन्धस्नेहोभयाभावपूर्वक्षणवृत्तित्वविशिष्टस्वाभाववत्पृथिवीवृत्तित्वात्। न च प्रतियोगितायां व्यासज्यवृत्तिधर्मानवच्छिन्नत्ववैशिष्ट्यानवच्छिन्नत्वयोः दानात् तयोरभावयोः एतादृशप्रतियोगिकत्वाभावात् तावा-

नी. त्पन्नविनष्टं नाङ्गीकुर्वन्ति । गुणादावतिव्याप्तिवारणाय गुणसमानाधिकरणेति जाति-
रा. वत्त्वलक्षणमव्याप्तमिति वक्तुं शक्यत इत्यत आह । **उत्पन्नविनष्टेति** ।
नृ. त्वभ्रमदशायां तद्धर्मावच्छिन्नानुमापकत्वरूपव्यावर्तकत्वसत्त्वात् तयोरपि लक्ष्यत्वे-
नातिव्याप्त्यभिधानमसङ्गतम् । न च व्यावर्तकत्वं निरुक्तभेदत्वावच्छिन्नविधेयता-
शाल्यनुमितित्वावच्छिन्नकार्यतानिरूपितज्ञाननिष्ठकारणतानिरूपितविषयतासम्बन्धाव-
च्छिन्नावच्छेदकताश्रयव्याप्त्यादिमत्त्वरूपमेवेति व्यावृत्त्यादेः तादृशव्यावर्तकत्वाभा-
वात् तत्रातिव्याप्त्यभिधानं निराबाधमिति वाच्यम् । तथा सति गौरवापत्तेः
व्यावर्तकत्वस्य निरुक्तभेदत्वावच्छिन्ननिरूपितव्याप्यत्वपर्यवसिततया व्याप्त्यवच्छेद-
कत्वात्तद्विशेषणवैयर्थ्याच्चेति दूषणमपास्तम् । प्राचीनस्यापि निरुक्तभेदत्वावच्छिन्न-
निरूपितव्याप्यत्वरूपव्यावर्तकत्व एव तात्पर्यात् । परं तु प्राचीनमते गुरुभूतं व्याव-
र्तकत्वं निष्कृष्टकल्पे लघुभूतं तदिति बोध्यं इति दिक् । ननु द्रव्यत्वजातिमत्त्वं गुण-
वत्त्वं वेति ग्रन्थेन द्रव्यसामान्यस्य समवायेन गुणत्वावच्छिन्नमेव लक्षणमिति फलि-
तम् । तन्न सम्भवति । वक्ष्यमाणस्थले दोषादित्याशयेनाक्षिपति । **नन्विति** ।
**गुणवत्त्वमिति** । गुणत्वावच्छिन्नमित्यर्थः । न तु गुणाधिकरणत्वम् ।
वक्ष्यमाण आद्यक्षणावच्छिन्नघटादावव्याप्त्यभिधानासङ्गतेः । **न द्रव्यलक्षण-
मिति** । समवायसम्बन्धेन न द्रव्यनिष्ठेतरभेदानुमापकं इत्यर्थः । तत्र हेतुमाह ।
**आद्यक्षण इति** । आद्यक्षणावच्छेदेनेत्यर्थः । द्रव्ये अव्याप्तेरिति योजना ।
**अव्याप्तेरिति** । गुणस्यासत्त्वादित्यर्थः । तथा च गुणस्य लक्ष्यतावच्छेदकद्रव्यत्व-
समानाधिकरणाभावप्रतियोगित्वेन अप्रतियोगित्वघटितलक्ष्यतावच्छेदकसमानियत-
त्वाभावान्न तस्य लक्षणत्वं संभवतीति भावः । ननु उत्पत्तिक्षणावच्छेदेन द्रव्ये गुणा-
भावसत्त्वेऽपि प्रतियोगिवैयधिकरण्यघटितलक्ष्यतावच्छेदकव्यापकत्वस्याक्षततया न
तस्य लक्षणत्वानुपपत्तिः । अथवा गुणाधिकरणत्वस्यैव लक्षणत्वस्वीकारान्नोक्तस्थले

प. दाव तत्र नातिव्याप्तिरिति वाच्यम् । तथा सति रूपगन्धोभयवतो द्रव्यत्वं लक्षणं
इत्यादौ विशिष्टसत्तावल्लक्षणतया कथितसत्तादौ च लक्ष्यतावच्छेदकरूपगन्धोभयाभाव-
विशिष्टसत्ताभावयोः वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वाप्रसिद्ध्या अ-
व्याप्तेः, गन्धवतः पृथिवीत्वं लक्षणं इत्यादावतिव्याप्तेश्च पृथिवीत्वस्य तत्तद्गन्धव्य-
क्त्यभाववत्पार्थिववृत्तित्वात् । न च लक्ष्यतावच्छेदकतावच्छेदकावच्छिन्नप्रतियोगिता-
काभाववद्वृत्तित्वस्य विवक्षणान्न कोऽपि दोष इति वाच्यम् । तथापि पृथिवीत्वस्य
कालिकसंबन्धेन गन्धाभाववति पृथिवीपरमाणौ संयोगेन गन्धाभाववति घटादौ च
वृत्तित्वात्तत्रातिव्याप्तिः । न च प्रतियोगितायां लक्ष्यतावच्छेदकतावच्छेदकसंबन्धा-
वच्छिन्नत्वमिवेशान्नातिव्याप्तिः इति वाच्यम् । तथापि पृथिवीत्वस्य कालिकविशे-
षणतया निरुक्तलक्ष्यतावच्छेदकाभाववत्पृथिवीवृत्तित्वात्तथैवातिव्याप्तेः । न च

नी. विशेषणम् । सत्तामादायातिव्याप्तिवारणाय सत्ताभिन्नेति । द्रव्यगुणान्यतरत्वमादा-

रा. **एकार्थसमवायेनेति** । तथा च सामानाधिकरण्येनैव तादृशप्रतीतौ रूपादौ

नृ. अव्याप्तिरित्यत आह । **उत्पन्नविनष्टेति** । विनाशसामग्रीसमवहितावयवजन्य इत्यर्थः । तथा च तादृशद्रव्ये गुणाधिकरणत्वस्याप्यभावात् अव्याप्तिरिति भावः । ननु उत्पन्नविनष्टद्रव्ये मानाभावः द्रव्ये असमवायिकारणस्य कार्यसहभावेनैव हेतुतया घटाद्युत्पत्तिसमये कपालादिसंयोगसत्तायाः आवश्यकत्वात् असमवायिकारणनाशरूपकारणाभावेन द्वितीयक्षणे द्रव्यनाशासम्भवात् इति चेन्न । द्व्यणुकनाशं प्रत्यन्यथानुपपत्त्या असमवायिकारणनाशस्य हेतुत्वस्वीकारेऽपि प्राचीनैः समवायिकारणं विना क्षणद्वयं द्रव्यस्य स्थित्यापत्तिप्रसंगरूपदोषेणान्यत्र समवायिकारणनाशस्यैव हेतुत्वस्वीकारादिति घटाद्युत्पत्तिसमये कपालादिनाशे सति द्वितीयक्षणे घटादिनाशस्वीकारे बाधकाभावात् उत्पन्नविनष्टद्रव्यसिद्धिः । न चैवं सति समवायिकारणस्य कार्यसहभावेन हेतुत्वमिति नियमभङ्ग इति वाच्यम् । गुणादिरूपकार्ये तथा नियमेऽपि द्रव्ये तादृशनियमे मानाभावात् । न चैवं सति असमवेतभावकार्यानुत्पत्तिरिति भाष्यग्रन्थविरोध इति वाच्यम् । अव्यवहितपूर्वक्षणे समवायिकारणसत्त्वं विना समवायसंबन्धेन भावकार्यस्य नोत्पत्तिरिति तदर्थत्वान्नोक्तदोषः । ननु क्षणिकपदार्थस्वीकारे बौद्धमतप्रवेशापत्तिरिति चेन्न । न हि वयं पदार्थसामान्यस्य क्षणिकत्वं ब्रूमः येन तत्र प्रवेशः स्यात् । यदि तत्सिद्धान्तैकदेशग्रहणमात्रेण तन्मतप्रवेशः संपद्यते तदा 'अहिंसा परमो धर्म' इति तच्छास्त्रसिद्धाहिंसारूपधर्मस्य सर्वैरङ्गीकृतत्वेन सर्वेषामपि तन्मतप्रवेशापत्तेः । अत एव तर्कभाषाव्याख्यायां अन्त्यशब्दस्य स्वोत्तरोत्पन्नविशेषगुणरूपनाशकाभावात् नाशो न स्यादित्याक्षिप्यान्यत्र तस्य नाशकत्वेऽप्यन्त्यशब्दे स्वस्यैव नाशकत्वाभ्युपगमात् । न चैवं सति द्वितीयक्षणे तस्य नाशापत्तिरिति वाच्यम् । इष्टापत्तेरिति

प. निरुक्तलक्ष्यतावच्छेदकाभावनिष्ठाभावीयदैशिकविशेषणतासंबन्धावच्छिन्नाधेयतानिरूपिताधिकरणत्वविवक्षणात् पृथिव्या अभावीयदैशिकविशेषणतासंबन्धेन निरुक्तलक्ष्यतावच्छेदकाभाववत्त्वाभावान्न तत्रातिव्याप्तिरिति वाच्यम् । तथा सति गन्धाभाववतः प्रमेयत्वं लक्षणं इत्यादावव्याप्तेः । गन्धात्मकगन्धाभावाभावस्य दैशिकविशेषणतया वृत्तित्वाप्रसिद्ध्या अव्याप्त्यापत्तेः । न च लक्ष्यतावच्छेदकवत्ताग्रहविरोधितानियामकसंबन्धेन निरुक्तलक्ष्यतावच्छेदकाभाववत्त्वविवक्षणात् प्रकृते पृथिव्याः समवायेन गन्धाभावाभाववत्त्वात्प्रमेयत्वस्य च तद्वृत्तित्वान्नाव्याप्तिरिति वाच्यम् । तथापि पृथिवीलक्षणगन्धेऽतिव्याप्तेः । गन्धस्य निरुक्तलक्ष्यतावच्छेदकाभाववज्जलादौ कालिकविशेषणतया वृत्तित्वादिति चेत् इत्थमवबोधय । तादृशाभाववन्निरूपितवृत्तितायां लक्षणतावच्छेदकसम्बन्धावच्छिन्नत्व-

नो. यातिव्याप्तिवारणाय जातीति । समवायेन तादृशधर्मवत्त्वतात्पर्यग्राहकम् । अतः

रा. एकत्वादेः प्रकारतया भानात् , समवायेन गुणवत्त्वस्यैव द्रव्यलक्षणत्वात् नातिव्याप्तिरि-

नृ. अन्त्यशब्दस्य क्षणिकत्वप्रतिपादकगौरीकान्तभट्टार्योक्तिरपि सङ्गच्छते । तस्मात् प्राची-
नैकदेशिमते उत्पन्नविष्टघटस्सप्रमाण एव इति दिक् । **गुणसमानाधिकरणेति ।**
इदं च गुणत्वादिजातिमादाय गुणादावतिव्याप्तिवारणाय । अत्राधिकरणत्वं वृत्तित्वं च
समवायेन बोध्यम् । नातः कालिकादिना अधिकरणत्वं वृत्तित्वं चादाय दोषः । सत्ता-
जातिमादाय तत्रैवातिव्याप्तिवारणाय जातौ सत्ताभिन्नत्वनिवेशः । **जातिमत्त्वस्य
विवक्षितत्वादिति ।** तादृशजातिमत्त्वस्य लक्षणत्वेन तात्पर्यविषयत्वादित्यर्थः ।
अत्र जातित्वेन न जातेः प्रवेशः गौरवात् प्रयोजनाभावाच्च । किन्तु धर्मत्वेन सम-
वायेन तादृशधर्मवत्त्वं विवक्षणीयम् । नातः कालिकसंबन्धेन तादृशधर्मवत्त्वमादाया-
तिप्रसङ्गः । एतदभिप्रायेणैव जातिमत्त्वमिति बोध्यम् । **इति व्यवहारादिति ।** इत्या-
कारकप्रामाणिकव्यवहारबलात् तादृशव्यवहारोल्लिखितप्रत्ययबलाच्चेत्यर्थः । **रूपा-
दाविति ।** एकत्वादिगुणसिद्धाविति शेषः । **अतिव्याप्तिरिति ।** जातिघटित-
लक्षणस्याप्यतिव्याप्तिरित्यर्थः । **एकार्थसमवायेनेति ।** समवायघटितसामानाधि-
करण्येन आश्रयगतैकत्वस्वीकारेणैवेत्यर्थः । **तादृशव्यवहारोपपत्ताविति ।** एक-
मित्यादिव्यवहारस्य तदुल्लिखितप्रत्ययस्य च प्रामाण्यनिर्वाह इत्यर्थः । **गुणे गुणा-
नङ्गीकारादिति ।** गुणस्य समवायेन गुणवृत्तित्वानभ्युपगमादित्यर्थः । तथा च
तादृशव्यवहारस्य तदुल्लिखितप्रत्ययस्य च तादृशसामानाधिकरण्येनैव गुणे गुणव्य-
वस्थापकत्वात् तत्र साक्षात्संबन्धेन गुणसाधकप्रमाणान्तराभावाच्च गुणे समवायेन
गुणसत्त्वासिद्ध्या नोक्तलक्षणस्यात्रातिव्याप्तिरिति भावः । नन्वेकमित्यादिव्यवहारस्य
तादृशप्रत्ययस्य च तादृशसामानाधिकरण्येनाश्रयगतैकत्वादिविषयकत्वे एकरूपे तादृश-
संबन्धेनाश्रयगतबहुत्वस्यापि सत्त्वादिह रूपं वह्विति व्यवहारापत्तिः । न च तादृश-

प. निवेशाज्जलादौ समवायेन गन्धस्यावृत्तित्वान्नातिव्याप्तिः । तथा च लक्ष्यतावच्छे-
दकतावच्छेदकसम्बन्धावच्छिन्नलक्ष्यतावच्छेदकतावच्छेदकावच्छिन्नप्रतियोगिताकाभा-
ववन्निष्ठलक्ष्यतावच्छेदकवत्ताग्रहविरोधितानियामकसंबन्धावच्छिन्नाधेयतानिरूपिताधि-
करणतावन्निरूपितलक्षणतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वम् । अथ लक्ष्यतावच्छेदका-
भाववद्वृत्तित्वं इत्युक्ते यदि संयोगं लक्ष्यतावच्छेदकीकृत्य द्रव्यत्वं लक्षणीक्रियते
तदा तत्रातिव्याप्तिः स्यादिति चेन्न । अभावे व्याप्यवृत्तित्वविशेषणदानाद्-
व्यावच्छेदेन संयोगाभावस्य व्याप्यवृत्तित्वाभावेन द्रव्यस्य व्याप्यवृत्तिसंयो-
गाभाववत्त्वाभावात् गुणादेरेव तथात्वात्तत्र द्रव्यत्वस्यावृत्तित्वान्नातिव्याप्तिः । ननु
किमत्र व्याप्यवृत्तित्वम् । न तावत् स्वसमानाधिकरणात्यन्ताभावप्रतियोगिभि-
न्नत्वम् । तथा सति पदार्थत्वस्य संयोगवल्लक्षणत्वापत्तेः । संयोगाभावस्य

नी. कालिकादिसंबन्धेन तद्वत्त्वमादाय नातिव्याप्तिरिति भावः । **एवमपीति** । उक्त-

रा. ति भावः । एतच्चापाततः । एवं सति घटगतरूपे पटगतद्वित्वस्य सामानाधिकरण्यसं-

नृ. सामानाधिकरण्यमाश्रयमात्रवृत्तिधर्माणामेव संबन्ध इति स्वीक्रियते एवं च बहुत्वस्य एतद्रूपाश्रयमात्रवृत्तित्वाभावात् बहुत्वस्य तादृशसामानाधिकरण्यं न संबन्ध इति न तादृशव्यवहाराद्यापत्तिरिति वाच्यम् । तथा सति बहुत्वस्याकाशमात्रावृत्तितया बहुत्वनिरूपिततादृशसामानाधिकरण्यस्य शब्दनिष्ठस्य तत्संबन्धत्वाभावात् शब्दा बहव इति प्रामाणिकव्यवहाराद्यनुपपत्तेर्दुर्वारत्वादिति चेन्न । येन संबन्धेन यस्य विशिष्टबुद्धिः प्रामाणिकी तस्यैव तत्संबन्धत्वं नान्यस्येति नियमात् । प्रकृते तद्रूपं बह्विति प्रामाणिकप्रत्ययाभावात् तद्रूपे बहुत्वसामानाधिकरण्यस्य संबन्धत्वानभ्युपगमात् न तद्रूपं बह्विति व्यवहाराद्यापत्तिः । शब्दविशेष्यकबहुत्वप्रकारकप्रामाणिकप्रत्ययबलात् शब्दनिष्ठबहुत्वसामानाधिकरण्यस्य बहुत्वसंबन्धत्वस्वीकारेण शब्दाः बहव इति व्यवहाराद्युपपत्तिः । अत एव स्फटिकादिभिन्ने सत्यपि लौहित्यस्य स्वाश्रयसंयोगः न संबन्धः किन्तु स्फटिकादावेवेति सिद्धान्तवागीशभट्टाचार्योक्तिरपि सङ्गच्छते । तस्मान्नोक्तदोषः । वस्तुतस्तु एकार्थसमवायेनैवेति वाक्यघटकैवकारस्याप्यर्थकतयानुक्तसमुच्चायकापिशब्देन तद्व्यक्तित्वरूपपारिभाषिकैकत्वमेव गृह्यते । एवं च अपेक्षाबुद्धिविशेषविषयत्वरूपद्वित्वादिकमादाय यथा द्वे रूपे इत्यादिव्यवहाराद्युपपत्तिः तथैव तद्व्यक्तित्वरूपतादृशैकत्वादिकमादाय एकं रूपमित्यादिव्यवहाराद्युपपत्तिरिति न कश्चिद्दोषः । दीपिकाकारस्यापि अत्रैव निर्भर इति प्रतिभाति । **गुणं विभजत इति** । उद्देशक्रमानुसारादित्यादिः । अत्र गुणसामान्यलक्षणमनुक्त्वा विभागासंभवात् न्यूनताभङ्गाय स्वयं लक्षणमाह । **द्रव्यकर्मभिन्नत्वे सतीति** । द्रव्यभिन्नत्वे सति कर्मभिन्नत्वे सतीत्यर्थः । यथाश्रुते द्रव्यकर्मोभयत्वावच्छिन्नभेदस्यापि द्रव्यकर्मभिन्नत्वरूपशब्दप्रतिपाद्यत्वेन तादृशभेदघटितलक्षणस्य द्रव्यादावपि सत्त्वात् अतिव्याप्त्यापत्तेः ।

प. स्वाधिकरणद्रव्यवृत्तिसंयोगात्मकस्वाभावप्रतियोगित्वात् । अथ स्वप्रतियोगिकाभावासामानाधिकरण्यं व्याप्यवृत्तित्वम् । तथा च गुणादिवृत्तेः संयोगाभावस्य गुणावच्छेदेन संयोगसामानाधिकरण्याभावान्न पदार्थत्वेऽव्याप्तिः । न च दीधितिकारमते सामानाधिकरण्यस्याव्याप्यवृत्तित्वनिषेधात्कथं एतादिति वाच्यम् । संयोगाभावे गुणावच्छेदेन संयोगसामानाधिकरण्यमिति सार्वजनीनप्रतीतेरव्याप्यवृत्त्येव सामानाधिकरण्यमिति सार्वभौममतस्यैव सम्यक्त्वात् । तथा च नाव्याप्तिरिति चेन्न । तथा सति द्रव्यत्वस्य संयोगवल्लक्षणत्वानुपपत्तेः गुणावच्छेदेन संयोगसामानाधिकरण्याभाववत एव संयोगाभावस्य लक्ष्यतावच्छेदकीभूतसंयोगाधिकरणवृत्तित्वात् तद्वद्वृत्तित्वाद्द्रव्यत्वस्य इति चेत् उच्यते । लक्ष्यतावच्छेदकाधिकरणावच्छेदेन स्वाभावसामानाधिकरण्याभाववान्योऽभावस्तद्वद्वृत्तित्वमर्थः । संयोगाधि-

नी. विवक्षया अव्याप्तिवारणेऽपि । **एकार्थसमवायादेवेति** । एकस्मिन्नर्थे समवायेन

रा. बन्धेन सत्त्वात इमे रूपे इत्यपि घटगतरूपतात्पर्येण प्रयोगः स्यात् । एकं रूपं

नृ. **सामान्यवानिति** । सामान्याधिकरणमित्यर्थः । एवं च द्रव्यभिन्नत्वकर्मभिन्नत्वसामान्याधिकरणत्वैतत्त्रित्वावच्छिन्नं लक्षणमिति पर्यवसितम् । एतेन ईदृशलक्षणघटकधर्मत्रयस्य विशेषणविशेष्यभावविनिगमनाविरहप्रयुक्तलक्षणत्रयापत्तिः तादृशधर्मत्रयस्य त्रित्वेन लक्षणत्वे त्रित्वावच्छिन्नस्य एकसंबन्धेनावर्तमानतया लक्षणतावच्छेदकसंबन्धाप्रसिद्धिरिति दूषणस्यानवकाशः । अस्मद्गुरुचरणास्तु द्रव्यकर्मभिन्नत्वे सतीति । द्रव्यकर्मासमवेतत्वविशिष्ट इत्यर्थः । एवं च द्रव्यासमवेतत्वकर्मासमवेतत्वैतदुभयाविशिष्टसामान्यवत्त्वं लक्षणमिति फलितं अतो नोक्तदोष इति व्याचकुः । लघुलक्षणमाह । **गुणत्वजातिमानिति** । अत्र गुणत्वं जातिरेवेति स्फुटीकरणाय जातिग्रहणं न तु गुणत्वजातित्वेनापि लक्षणत्वं लक्षणतावच्छेदककोटौ जातित्वप्रवेशे गौरवात् प्रयोजनाभावाच्च । न च जातित्वानङ्गीकारेऽपि क्षतिविरहः रूपादिसंस्कारान्तान्यतमत्वरूपगुणत्वस्यैव लक्षणत्वसंभवादिति वाच्यम् । तथा सति गुणत्वं नाम सामान्यविशेष इति भाष्यविरोधापत्तिरिति ध्येयम् । अस्मद्गुरुचरणास्तु गुणत्वजातिमत्त्वमिति गुणत्ववत्त्वमित्यर्थः । जातिग्रहणं समवायेन तस्य लक्षणत्वलाभायेति व्याचकुः । ननु गुणत्वजातौ किं मानमिति चेत् अत्र प्राञ्चः । गुण इत्यनुगतप्रतीत्या रूपादिषु जातिरूपतया गुणत्वसिद्धिरित्याहुः । तन्न । पामराणां रूपादिसंस्कारान्तेषु गुणत्वग्रहाभावात् तेषां जातिरूपतया गुणत्वासिद्धिप्रसङ्गात् । दीधितिकारप्रभृतयस्तु गुणपदशक्यतावच्छेदकतया गुणत्वशक्यजातिसिद्धिः । असति बाधके शक्यतावच्छेदकतया जातिसिद्धेः निष्प्रत्यूहत्वात् । न चैवं विभुपदादृष्टपदशक्यतावच्छेदकतया विभुत्वादृष्टत्वजातिसिद्ध्यापत्तिरिति वाच्यम् । विभुत्वस्य शक्यतावच्छेदकत्वेऽपि भूतत्वेन साङ्कर्येण विनिगमनाविरहेण च विभुत्वभूतत्वयोर्जातित्वासंभवात् । एवमदृष्टपदस्य नानार्थकत्वेन

प. करणावच्छेदेन संयोगाभावे संयोगसामानाधिकरण्याभावान्नाव्याप्तिः । संयोगाधिकरणावच्छेदेन तत्सामानाधिकरण्याच्च नातिव्याप्तिः । एवं च प्रकृते लक्ष्यतावच्छेदकीभूतसंयोगाधिकरणद्रव्यावच्छेदेन लक्ष्यतावच्छेदकाभावात्मकसंयोगाभावस्य संयोगात्मकस्वाभावासामानाधिकरण्याभावान्नाव्याप्तिः । द्रव्यत्वाधिकरणावच्छेदेनैव स्वाभावसामानाधिकरण्यवत्तया गुणादेरेव तादृशस्वाभावसामानाधिकरण्याभावरूपव्याप्यवृत्तित्वाश्रयलक्ष्यतावच्छेदकसंयोगाभाववत्तया तत्र द्रव्यत्वस्यावृत्तित्वान्नातिव्याप्तिः । नन्वेवमपि संयोगवल्लक्षणतया कथिते पदार्थत्वेऽव्याप्तिः । संयोगाभावस्य लक्ष्यतावच्छेदकीभूतसंयोगाधिकरणद्रव्यावच्छेदेन संयोगसामानाधिकरण्याभाववत्त्वाभावेन लक्ष्यतावच्छेदकाधिकरणावच्छेद्यस्वप्रतियोगिकाभावसामानाधिकरण्याभावविशिष्टलक्ष्यतावच्छेदकाभावाप्रसिद्ध्या तद्घटितलक्षणस्य सुतरां अप्रसिद्धत्वादिति चेन्न ।

नी. सत्त्वादेवेत्यर्थः । **गुणानङ्गीकारादिति** । कॢप्तेन समवायघटितसामानाधिकरण्येनैव गुणवत्ताव्यवहारोपपत्तौ तत्राकॢप्तगुणवत्त्वकल्पनं न संभवति गौरवादिति

रा. रसात् पृथगितिवत् रूपं रूपात् पृथगिति प्रयोगः स्यात् । रूपावधिकपृथक्त्वस्य रूपे सामानाधिकरण्यसंबन्धेन सत्त्वात् । परन्तु एकं रूपमित्यादौ एकत्वं तन्मात्रविषयकज्ञानविशेष्यत्वमेव । एवं पृथक्त्वमपि अन्योन्याभाव एव इति न कश्चिद्दोष

नृ. धर्मत्वाधर्मत्वयोरेव तत्पदशक्यतावच्छेदकत्वात् नोभयसाधारणैकजातिसिद्धिः । अन्यथा सैन्धवपदशक्यतावच्छेदकतया लवणाश्वसाधारणैकजातिसिद्ध्यापत्तेः । न चादृष्टपदस्य नानार्थकत्वे मानाभाव इति वाच्यम् । सर्वेषामप्यदृष्टपदानां धर्मत्वादिनैव बोधस्यानुभवसिद्धतयानुभवस्यैव प्रमाणत्वात् । अत एवादृष्टशब्द एवेति गुणविभागकारिकास्थादृष्टपदेन धर्माधर्मौ संगृह्य एते गुणाश्चतुर्विंशतिसंख्याका इति मुक्तावल्यां विश्वनाथपञ्चाननोक्तिरपि संगच्छते इत्याहुः । गुरुचरणास्तु—निर्गुणे क्रियासामान्यानुत्पत्त्या द्रव्यारम्भानुगुणक्रियानुत्पत्त्या वा क्रियां प्रति द्रव्यानुगुणक्रियां प्रति वा गुणत्वेन हेतुत्वावश्यकतया कारणतावच्छेदकतया गुणत्वजातिसिद्धिरिति व्याचक्रुः । वस्तुतस्तु गुणत्वप्रकारकबुद्धिं प्रति गुणत्वज्ञानत्वेन हेतुतया कारणतावच्छेदकघटकतया सिद्धगुणत्वस्य व्यक्त्यैक्यादिरूपजातिबाधकाभावात् जातित्वसिद्धौ तादृशगुणत्वस्य सकलपुरुषेषु मध्ये कस्यचित् पुरुषस्य रूपादिसंस्कारान्तघटकेषु केषुचित् अन्यस्यापि तादृशेषु केषुचित् गुणेषु गुणव्यवहारसम्भवेन विनिगमनाविरहात् तेषु सर्वेष्वपि तादृशगुणत्वसिद्धिः निराबाधा श्रौतात्मव्यवहारबलात् सुखसमवायिकारणतावच्छेदकतया सिद्धात्मत्वजातेरीश्वरसाधारण्यवदिति प्रतिभाति । **मूले रूपेत्यादि** । अत्रापि संस्कारपदस्य रूपादिसंस्कारान्तान्यतमत्वावच्छिन्ने लक्षणा । रूपादिपदानि तात्पर्यग्राहकाणि । चतुर्विंशतिर्गुणा इत्यस्य चतुर्विंशतिसंख्यापर्याप्त्यधिकरणगुणविभाजक-

प. स्वनिष्ठप्रतियोगिताकाभावसामानाधिकरण्याभावावच्छेदकलक्ष्यतावच्छेदकाभाववद्वृत्तित्वस्यैव विवक्षितत्वादिति । ननु गन्धवतः पृथिवीत्वं लक्षणं इत्यादौ उत्पत्तिकालावच्छेदेन घटादेर्लक्ष्यतावच्छेदकगन्धाभाववत्त्वात्तद्वृत्तित्वात् पृथिवीत्वस्य तत्रातिव्याप्तिरिति चेत् भ्रान्तोऽसि । अभावे व्याप्यवृत्तित्वविशेषणात् तत्रातिव्याप्त्यनवकाशात् गन्धाभावस्य कालिकाव्याप्यवृत्तित्वेनोत्पत्तिकालावच्छिन्नघटादेर्व्याप्यवृत्तिगन्धाभाववत्त्वाभावात् । यद्वा अभावे प्रतियोगिवैयधिकरण्यनिवेशादुत्पत्तिकालावच्छेदेन गन्धाभावस्य प्रतियोगिसमानाधिकरणत्वान्नातिव्याप्तिः । अथवा लक्ष्यतावच्छेदकाभाववद्वृत्तित्वं इत्यस्य लक्ष्यतावच्छेदकानधिकरणवृत्तित्वं इति विवक्षणात अधिकरणताया व्याप्यवृत्तित्वाद्भेदस्य व्याप्यवृत्तित्वाच्च नोक्तदोषः । वृत्तित्वं तु लक्षणतावच्छेदकसंबन्धेन बोध्यम् । तेन गन्धस्य कालिकादिसंबन्धेन जलवृत्तित्वेऽपि न

**न्नत्वे सति सामान्यवान् गुणः । गुणत्वजातिमान्वा । ननु लघुत्वकठिनत्वमृदुत्वादीनां विद्यमानत्वात् कथं चतुर्विंशतिर्गुणा इति चेन्न ।**

---

**नी.** भावः । **सामान्यवानिति** । समवायेन सामान्यवत्त्वं बोध्यम् । तेन कालिकादिसंबन्धेन तद्वति ध्वंसे नातिव्याप्तिः । गुण इति लक्ष्यनिर्देशः । लाघवादाह । **गुणत्वजातिमान्वेति** । यद्यपि लक्षणलक्ष्यतावच्छेदकयोरभेदः तथापि लक्षणेनेतरभेदे साध्ये हेतौ साध्यसामानाधिकरण्यनिश्चयेऽपि हेतुधर्मितावच्छेदकसाध्यनिश्चयस्य अनियतत्वाभिप्रायेणेदं लक्षणमिति संक्षेपः । एवमग्रेऽपि बोध्यम् । गुणत्वजातिसिद्धिस्तु गुणपदशक्यतावच्छेदकतयेति गुणदीधितौ भट्टाचार्याः । न चैवं विभुपदशक्यतावच्छेदकतया विभुत्वजातिः सिध्येदिति वाच्यम् । भूतत्वसंकरस्य

**रा.** इत्यवधेयम् । **द्रव्यकर्मभिन्नेति** । लाघवादाह । **गुणत्वेति** । व्यतिरेकव्याप्ति-

**नृ.** धर्मवन्त इत्यर्थः । तथा च रूपादिसंस्कारान्तान्यतमाभिन्नाः चतुर्विंशतित्वसंख्यापर्याप्त्यधिकरणगुणधर्मवन्त इत्यर्थलाभान्नोक्तदोषः । परन्तु रूपरसगन्धस्पर्शाः संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धयः सुखदुःखेच्छाद्वेषप्रयत्नाश्चेति कणादसूत्रविरुद्धत्वात् सूत्रस्थचशब्देन गुरुत्वद्रवत्वस्नेहसंस्कारधर्मशब्दाः समुच्चीयन्ते इति प्रशस्तपादभाष्याविरुद्धत्वाच्चैतादृशगुणविभागे बीजाभाव इत्येव दोष इति बोध्यम् । अत्र बहूनां गुणविभाजकधर्माणां सत्त्वात् तेषु कथं चतुर्विंशतित्वसंख्यापर्याप्तिरित्याक्षिपति दीपिकायाम् । **नन्वित्यादिना** । **लघुत्वमृदुत्वकठिनत्वादीनामिति** । लघुत्वत्वादिरूपगुणविभाजकधर्मावच्छिन्नानामित्यर्थः । आदिना वक्रत्वत्वावच्छिन्नपरिग्रहः । **विद्यमानत्वादिति** । प्रमितत्वादित्यर्थः । **कथं चतुर्विंशतिर्गुणा इति** । कथं चतुर्विंशतित्वसंख्यापर्याप्त्यधिकरणगुणविभाजकधर्मवन्त इत्यर्थः । गुणविभाजकधर्मेषु कथं चतुर्विंशतित्वसंख्यापर्याप्तिरिति यावत् ।

**प.** क्षतिः । ननु पदार्थविभाजकोपाधिमत्त्वं सतो लक्षणं इत्युक्ते सामान्यादावतिव्याप्तिर्न स्यात् । सामान्यत्वरूपपदार्थविभाजकोपाधेः समान्यादिवृत्तित्वेऽपि लक्षणतावच्छेदकीभूतसमवायसंबन्धेनावृत्तेरसंभवापत्त्या स्वरूपसम्बन्धस्य लक्षणतावच्छेदकत्वासंभवादिति चेन्न । यदा समवायत्वेन समवायस्य लक्षणतावच्छेदकत्वमभिमन्यते तदाऽतिव्याप्तिर्नास्त्येव । यदा तु समवायस्वरूपसाधारणविभाजकतावच्छेदकत्वेन रूपेण समवायत्वस्य लक्षणतावच्छेदकत्वमभिमन्यते तदा भवत्येवातिव्याप्तिः । एवं यत्र समवायस्यैव लक्षणतावच्छेदकत्वं तदा नातिव्याप्तिः । यदा समवायस्वरूपान्यतरस्य तदा अतिव्याप्तिः । यदि च प्रथमदलानुसरणे सत्ताभाववतः लक्षणत्वेनाभिमते द्रव्यत्वाभावादौ अतिव्याप्तधर्मेऽव्याप्तिः तत्र लक्ष्यतावच्छेदकीभूतसत्ताभावाधिकरणसामान्यादिनिरूपितलक्षणवत्ताग्रहविरोधितानि-

**लघुत्वस्य** गुरुत्वाभावरूपत्वान्मृदुत्वकठिनत्वयोः अवयवसंयोगविशेष-त्वात्। कर्म विभजते। **उत्क्षेपणेति**। संयोगभिन्नत्वे सति संयोगासमवायि-

---

नी. बाधकस्य सत्त्वेन तस्य जातित्वासंभवात् जातित्वेनाभिमतसंकरस्यैव जातित्वबाधकत्वात्। तथा चोक्तं द्रव्यकिरणावल्यामुदयनाचार्यैः—'व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः। रूपहानिरसंबन्धो जातिबाधकसंग्रहः॥' इति। व्यक्तेरभेदः स्वाश्रयव्यक्तेरैक्यमाकाशत्वादेर्जातित्वे बाधकम्। व्यक्तेस्तुल्यत्वं अन्यूनानतिरिक्तव्यक्तिकत्वं घटत्वकलशत्वाद्योर्भिन्नजातित्वे। संकरः परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र समावेशः भूतत्वमूर्तत्वादेर्जातित्वे। अनवस्थितिः अनवस्था जातेः जातिमत्त्वे। रूपहानिः स्वतोव्यावर्तकत्वात्मकरूपहानिः विशेषस्य जातिमत्त्वे। असंबन्धः असमवेतत्वमभावादेर्जातिमत्त्व इति संक्षेपः। लघुत्वादीनां प्रामाणिकत्वेऽपि क्लृप्तेष्वन्तर्भावो न्याय्य इति समाधत्ते। **लघुत्वस्येति**। संयोगासमवायिकारणे

रा. ज्ञानस्यापि अनुमितिहेतुत्वोपगमात् नोक्तसिद्धसाधनावकाश इति भावः। **लघुत्वस्येति**। न च गुरुत्वमेव लघुत्वाभावरूपं किन्नेष्यत इति वाच्यम्। गुरुत्वस्य पतनासमवायिकारणतया गुरुत्वस्यावश्यकत्वात्। **अवयवसंयोगेति**। दृढतरावयवसंयोगः का-

नृ. तथा च गुणस्य चतुर्विंशतिधा विभागोऽयुक्त इति भावः। **अवयवसंयोगविशेषरूपत्वादिति**। इदं च नवीनैकदेशिमतमाश्रित्य उक्तम्। सिद्धान्ते तु मृदुत्वकठिनत्वयोः स्पर्शविशेषरूपत्वादिति बोध्यम्। एतेन मृदुत्वकठिनत्वयोः गुणान्तरत्वमेव। संयोगविशेषरूपत्वे च चक्षुर्ग्राह्यत्वापत्तेरिति दूषणस्य नावकाशः। इदमुपलक्षणम्। वक्रत्वस्यावयवसंयोगविशेषरूपत्वादित्यपि बोध्यम्। **कर्म विभजत इति**। उद्देशक्रमानुसारादित्यादिः। अत्र न्यूनतापरिहाराय स्वयं कर्मलक्षणमाह। **संयोगभिन्नत्वे सतीति**। संयोगभिन्नत्वसंयोगासमवायिकारणत्वैतदुभयं लक्षणं इत्यर्थः।

प. यामकीभूतसमवायसंबन्धावच्छिन्नवृत्तित्वस्य अप्रसिद्धत्वादिति मन्यसे तदा त्यज्यतां एतद्दलानुसरणम्। न चैवं सति लक्ष्यतावच्छेदकानधिकरणवृत्तित्वमात्रोक्तौ असंभवविधर्मे एकशफत्वादावतिव्याप्तिः। अव्याप्तनीलपशुत्वादावतिव्याप्तिश्चेति न वाच्यम्। एकशफत्वादावसंभवातिव्याप्त्यात्मकदोषोद्भावनस्य नीलपशुत्वादावतिव्याप्त्यादिदोषोद्भावनस्य तुल्यत्वादिति विभावनीयम्। यद्वा असंभविन्यतिव्याप्तिवारणाय लक्ष्यवृत्तित्वं देयमित्यलं पल्लवतल्लजकल्पानल्पजल्पनेन। असंभवलक्षणमाह। ***लक्ष्यमात्रावर्तनमिति**। लक्ष्यतावच्छेदकव्यापकाभावप्रतियोगित्वं लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावाप्रतियोग्यभावप्रतियोगित्वमिति निर्गलितार्थः। लक्ष्यं दर्शयति। †**यथा गोरेकशफवत्त्वमिति**। भवति हि एकशफवत्त्वादौ लक्ष्यतावच्छेदकगोत्वाधिकरणवृत्तिरभावः न तावदेकशफवत्त्वाभावा-

---

*† अनयोर्मूलं १२१ पृष्ठे द्रष्टव्यम्।

**कारणं कर्म कर्मत्वजातिमद्वा । भ्रमणादीनामपि गमने अन्तर्भावान्न पञ्चत्व-**

---

**नी.** संयोगेऽतिव्याप्तिवारणाय संयोगभिन्नत्वे सतीति । संयोगसमवायिकारणद्रव्येऽति-व्याप्तिवारणाय असमवायीति । भ्रमणादीनामित्यादिना रेचनस्पन्दनोर्ध्वज्वलनति-र्यग्गमनानां संग्रहः । **गमनेऽन्तर्भावादिति** । न चोत्क्षेपणादीनामपि गमने-ऽन्तर्भावोऽस्त्विति शङ्क्यम् । स्वतन्त्रेच्छस्य नियोगपर्यनुयोगानर्हस्य मुनेः संमतत्वा-

**रा.** ठिन्यम् । शिथिलावयवसंयोगः मृदुत्वम् । मृदुत्वत्वं दृढत्वत्वं तद्गतजातिविशेषः स्पार्श-

**नृ.** संयोगेऽतिव्याप्तिवारणाय भिन्नत्वान्तम् । घटादावतिव्याप्तिवारणाय कारणत्वान्तम् । लघुलक्षणमाह । **कर्मत्वजातिमदिति** । तत्रापि जातिग्रहणस्य प्रयोजनं पूर्ववत् । अत्रापि मूले बहुवचनान्तगमनशब्दस्य उत्क्षेपणादिगमनान्तान्यतमत्वाद्यवच्छिन्नमर्थः । उत्क्षेप-णादिपदानि तात्पर्यग्राहकाण्येव । तत्र पञ्चकर्माणीत्यत्र पञ्चपदसमभिव्याहृतकर्मपदस्य पञ्चत्वसङ्ख्यापर्याप्त्यधिकरणकर्मविभाजकधर्मावच्छिन्नामित्यर्थः । एवं च उत्क्षेपणादि-गमनान्तान्यतमाभिन्नानि पञ्चत्वसंख्यापर्याप्त्यधिकरणकर्मविभाजकधर्मावच्छिन्नानीति वाक्यार्थबोधः । ननु कर्मविभाजकधर्माणां बहूनां सत्त्वात् तेषु कथं पञ्चत्वसंख्यापर्या-प्तिरित्याशङ्कां परिहरति दीपिकायाम् । **भ्रमणादीनामपीति** । एवार्थकोऽपि-शब्दः अन्तर्भावादित्युत्तरं योज्यः । भ्रमणरेचनस्पन्दनोर्ध्वज्वलनतिर्यग्गमनानामि-त्यर्थः । **गमनेऽन्तर्भावादिति** । गमनत्वाश्रयत्वादेवेत्यर्थः । **न पञ्चत्वाविरोध इति** । कर्मविभाजकधर्माणां न पञ्चत्वसंख्यापर्याप्त्यधिकरणत्वभङ्ग इत्यर्थः । तथा च परस्परवैयधिकरण्यापन्नानामेव विभाजकता वाच्या । अन्यथा घटत्वादीनामपि द्रव्यविभाजकतापत्तेः । एवं च भ्रमणत्वादीनां गमनत्ववैयधिकरण्याभावात् न तेषां विभाजकत्वसंभव इति भावः । उत्क्षेपणत्वादीनामपि गमनत्वाश्रयत्वादुत्क्षेपणत्वादीना-मपि गमनत्ववैयधिकरण्याभावात् तेषामपि कर्मविभाजकत्वानुपपत्तिरिति चेन्न ।

**प.** भावः, किन्तु गोत्वाभावाभावः, तद्प्रतियोग्येकशफवत्त्वाभावः, तत्प्रतियोग्येकशफव-त्त्वमिति लक्षणसंगतिः । न च शते पञ्चाशत् इति न्यायेन एकशफवत्त्वमपि गवि संभवतीति वाच्यम् । द्विशफशून्यत्वस्य तदर्थत्वात् । न चैवमेकशफवत्त्वस्य अश्वा-दिलक्षणत्वानुपपत्तिः गवादावतिव्याप्तेः । द्विशफशून्यत्वस्य तदर्थत्वे अश्वेऽप्यसंभवः । अश्वस्य चतुःशफवत्त्वादिति वाच्यम् । शफद्वयशून्याङ्घ्रिकत्वस्य तदर्थत्वात् । गोरङ्घ्रे-र्द्विशफवत्त्वात् । न च भग्नैकशफाङ्घ्रिकायां गव्यतिव्याप्तिरिति वाच्यम् । शफद्वयव-दङ्घ्रिकावृत्तिजातिमत्त्वस्य विवक्षितत्वात् । ननु गुणत्वजातिमादायातिव्याप्तिः द्रव्यत्व-व्याप्यत्वविशेषणे जलत्वजातिः पृथिवीत्वव्याप्यत्वविशेषणे घटत्वजातिरिति चेत् शफद्वयवदङ्घ्रिकावृत्तिस्ववृत्तिजातिमत्त्वस्य विवक्षितत्वादित्यलं पल्लवितेन । प्रसक्तानु-प्रसक्तया प्रकृतमनुसरामः । अथ गोलक्षणत्वेनाभिमतैकशफवत्त्वादावव्याप्तिः ।

**विरोधः। सामान्यं विभजते। परमिति। परमधिकदेशवृत्ति ।अपरं न्यूनदे-**

नी. दिति भावः । **परमित्यादि** । सामान्यलक्षणं परं मूलकृतैव वक्ष्यत इति न न्यूनतेति

रा. नप्रत्यक्षसिद्धः। न चैवं मृदुत्वकठिनत्वयोः त्वचेव चक्षुषा ग्रहणप्रसङ्गः। संयोगस्य द्वीन्द्रिय-

नृ. सूत्रभाष्यग्रन्थानुसारेण ग्रन्थकर्तृत्वपारतन्त्र्यविशिष्टानामस्मदादीनां परस्परवैयधिकरण्यापन्नानामेव विभाजकतेति तदुक्तनियमाङ्गीकारस्यावश्यकत्वेऽपि स्वतन्त्राणां तत्सूत्रतद्भाष्यकाराणां तादृशनियमाङ्गीकारस्यानावश्यकत्वात् । अन्यथा तेषामपि अस्वातन्त्र्यापत्तेः । एवं च तेषां नियोगपर्यनुयोगानर्हतया गमनत्वसामानाधिकरण्यापन्नोत्क्षेपणत्वादिना कृतस्य कर्मविभागस्यादोषत्वादिति । **मूले परमपरञ्चेति** । चरमपदलक्षणया परापरान्यतराभिन्नमित्यर्थः । **द्विविधमिति** । द्वे विधे यस्येति व्युत्पत्त्या सामान्यविभाजकप्रकारद्वयान्यतरविशिष्टमित्यर्थः । **दीपिकायां सामान्यमिति** । क्रमप्राप्तमित्यादिः । अत्र नित्यत्वे सति अनेकसमवेतत्वं सामान्यस्य लक्षणमिति बोध्यम् । ननु सामान्यस्य अद्रव्यतया दैशिककालिकपरत्वापरत्वानाश्रयत्वात् परमपरञ्चेति सामान्यस्य विभागकरणमनुपपन्नमित्याशङ्कां पारिभाषिकपरत्वादिनिर्वचनेन परिहरति दीपिकायाम् । **परमधिकदेशवृत्तीति** । व्यापकमित्यर्थः । **अपरं न्यूनदेशवृत्तीति** । व्याप्यमित्यर्थः । अत्र निखिलजातिघटकप्रत्येकनिरूपितव्यापकताश्रयत्वात् सत्तायाः सकलजात्यपेक्षया व्यापकत्वं स्वसमानाधिकरणनिखिलजातिघटकप्रत्येकनिरूपितव्यापकताश्रयत्वात् । घटत्वादीनां स्वसमानाधिकरणनिखिलजात्यपेक्षया अपरत्वम् । द्रव्यत्वादीनां च स्वसमानाधिकरणसत्तानिरूपितव्याप्यत्वात् सत्ताभिन्नस्वसमानाधिकरणनिखिलजातिघटकप्रत्येकनिरूपितव्यापकत्वाश्रयत्वाच्च परत्वमपरत्वं च स्वीकार्यमित्याशय इति बोध्यम् । ननु सत्तायाः सकलजात्यपेक्षया परत्वमनुपपन्नं भावत्वप्रमेयत्वादिजातिनिरूपितव्यापकत्वाभावादित्याशङ्कां

प. एकशफवत्त्वस्य कालिकविशेषणतया लक्ष्यतावच्छेदकगोत्वाधिकरणाश्वादिवृत्त्येकशफवत्त्वाभावाभावप्रतियोग्येकशफवत्त्वाभावप्रतियोगित्वात् । न च समवायेन लक्ष्यतावच्छेदकाधिकरणत्वस्य वाच्यत्वादश्वादेः समवायेन गोत्वानधिकरणत्वात् नाव्याप्तिरिति वाच्यम् । अभावलक्षणतया कथितगन्धवत्त्वादावव्याप्तिः स्यात् । समवायेन लक्ष्यतावच्छेदकीभूताभावत्वाधिकरणत्वस्याप्रसिद्धत्वात् । न च लक्ष्यतावच्छेदकतावच्छेदकसंबन्धेन लक्ष्यतावच्छेदकाधिकरणत्वस्य विवक्षणादभावस्य स्वरूपसंबन्धेनाभाववत्त्वाधिकरणत्वान्नाव्याप्तिरिति वाच्यम् । विशिष्टसत्तावल्लक्षणत्वेन कथितगुणत्वादावव्याप्तेः । गुणत्वस्य विशिष्टसत्तायाः शुद्धसत्तानतिरेकात् लक्ष्यतावच्छेदकसत्ताधिकरणगुणादिवृत्तिगुणत्वाभावाभावप्रतियोगिगुणत्वाभावप्रतियोगित्वात् । न च लक्ष्यतावच्छेदकतावच्छेदकरूपेण लक्ष्य-

**शवृत्ति । सामान्यादिचतुष्टये जातिर्नास्ति । विशेषं विभजते । नित्येति । पृथिव्यादिचतुष्टयपरमाणवः आकाशादिपञ्चकं च नित्य-**

---

**नी.** ध्येयम् । सत्ताया द्रव्यत्वापेक्षया अधिकदेशवृत्तित्वेन परत्वमेव । घटत्वादीनां न्यून-देशवृत्तित्वेन अपरत्वमेव । द्रव्यत्वादीनां सत्तातोऽपरत्वम् घटत्वादितः परत्व-

**रा.** ग्राह्यत्वात् इति वाच्यम् । संयोगत्वेन तस्य द्वीन्द्रियग्राह्यत्वेऽपि अभिघातत्वादीनामिव तादृशवैजात्यस्यापि फलबलेन चक्षुरग्राह्यत्वादिति भावः । समवायस्येत्यस्य समवाय इत्यादिः । अन्यथा घटादौ समवायभेदसत्त्वात् असङ्गत्यापत्तेः । न चैवमपि घटसमवायोभयभेदसत्त्वात् असङ्गतिः दुर्वारैव । समवायत्वावच्छिन्न-भेदो नास्तीत्यर्थकत्वे तु समवायस्यैकत्वाभावेऽपि समवाये समवायत्वावच्छिन्नभे-दासत्त्वात् समवायस्तु एक एवेति ग्रन्थस्यावतरणाविरोध इति वाच्यम् । व्यासज्यवृ-

**नृ.** परिहरति । **सामान्यादिचतुष्टय इति** । सामान्याद्यभावान्तान्यतमत्वावच्छिन्न इत्यर्थः । **जातिर्नास्तीति** । जातिर्न तिष्ठतीत्यर्थः । तथा च द्रव्यादिर्भावो द्रव्यादिः प्रमेयः इत्यनुगतप्रतीत्या भावत्वप्रमेयत्वाद्यनुगतधर्मसिद्धावप्यसंबन्धरूपजातिबाधक-सत्त्वात् न तेषां जातित्वम् । द्रव्यादिपञ्चस्वनुगतप्रतीतिरेव नास्ति । समवायस्यैकव्य-क्तित्वात् समवायत्वं न जातिः । रूपहानिरूपजातिबाधकसत्त्वात् विशेषत्वं न जातिः । अनवस्थितिरूपजातिबाधकसत्त्वात् सामान्यत्वं न जातिः । एवं च सत्ता-पेक्षया अधिकदेशवृत्तिजात्यभावात् सत्ताव्यधिकरणजात्यभावाच्च सत्तायास्सकलजात्य-पेक्षया व्यापकत्वं निराबाधमेवेति भावः । **विशेषं विभजत इति** । क्रमप्राप्त-मित्यादिः । नित्यद्रव्याणि कानीत्याशङ्कायामाह । **पृथिव्यादीति** । **मूले अनन्ता एवेति** । आश्रयव्यक्तिभेदेन भिन्ना इत्यर्थः । तथा च विशेषः नानेक-समवेतः इति भावः । अत्र एकमात्रसमवेतत्वे सति सामान्यशून्यत्वं विशेषलक्षणं-

**प.** तावच्छेदकाधिकरणत्वस्य विवक्षणात् गुणादेः विशिष्टसत्तात्वावच्छिन्नानधिकरण-त्वात् द्रव्यस्यैव तथात्वात् नाव्याप्तिरिति वाच्यम् । एवमपि जललक्षणतया कथितगन्धवत्त्वादावव्याप्तिः स्यात् । गन्धस्य निरुक्तलक्ष्यताधिकरणजलादिनिरूपि-तकालिकसंबन्धावच्छिन्नवृत्तिताश्रयीभूतगन्धाभावाभावप्रतियोगिगन्धाभावप्रतियोगि-त्वात् । न च निरुक्तलक्ष्यतावच्छेदकाधिकरणनिरूपितवृत्तितायां दैशिकविशेषणतासं-बन्धावच्छिन्नत्वनिवेशात् जललक्षणगन्धवत्त्वादिस्थले निरुक्तसंबन्धेन लक्ष्यतावच्छे-दकाधिकरणे गन्धाभावाभावस्य वृत्त्या अन्याभावस्यैव धर्तव्यतया गन्धाभावस्य तदप्रतियोगित्वात्, गन्धस्य तत्प्रतियोगित्वात् लक्षणसंगतिरिति वाच्यम् । तथापि पृथिवीलक्षणगन्धेऽतिव्याप्तिः । निरुक्तलक्ष्यतावच्छेदकाधिकरणघटादौ दैशिकविशेष-णतासंबन्धेन गन्धाभावाभावस्यावृत्तितया गुणत्वाभावस्यैव वृत्तितया गन्धाभावस्य

द्रव्याणि। समवायस्य भेदो नास्तीत्याह। **समवायस्त्विति।** अभावं विभजते। **प्रागभावेति।** तत्रोद्देशक्रमानुसारात् प्रथमं पृथिव्या लक्षणमाह।

---

नी. मिति विवेकः। **समवायस्य भेदो नास्तीति।** न च समवायस्याभेदे स्पर्शसमवायवति वायौ रूपवत्ताप्रतीतिः स्यादिति शङ्क्यम्। रूपसमवायसत्त्वेऽपि रूपाभावेन तथा प्रतीतेरभावादिति दिक्। पृथिवीलक्षणस्य प्राथम्ये बीजमाह। **तत्रेति।**

रा. त्तिधर्मानवच्छिन्नसमवायनिष्ठभेदो नास्तीत्यर्थकत्वात्। **मूले समवायस्त्वेक एवेति।** एवकारस्तु समवायनिष्ठभेदप्रतियोगितानवच्छेदकरूपैकत्वस्य एकपदार्थैकदेशे

नृ. मिति बोध्यम्। **दीपिकायां समवायस्य भेदो नास्तीत्याहेति।** समवायस्य विभाजकधर्मो नास्तीत्याहेत्यर्थः। अत्र नित्यत्वे सति संबन्धत्वं वक्ष्यमाणसमवायलक्षणमिति बोध्यम्। **मूले अभावश्चतुर्विध इति।** चतुष्ट्वसंख्यापर्याप्त्यधिकरणाभावविभाजकधर्मान्यतमवानित्यर्थः। **प्रागभाव इत्यादि।** अत्रापि चरमपदलक्षणया प्रागभावाद्यन्योन्याभावान्तान्यतमत्वावच्छिन्नलाभः। तथा च तादृशान्यतमाभिन्नचतुष्ट्वसंख्यापर्याप्त्यधिकरणाभावविभाजकधर्मान्यतमवानिति वाक्यार्थः फलितः। अत्र ग्रन्थान्तरे संसर्गाभावत्वान्योन्याभावत्वाभ्यामादौ विभागः अनन्तरं संसर्गाभावस्य प्रागभावत्वादिधर्मैः त्रेधा विभागो दृष्टः। तथापि प्रागभावत्वादिना विभागस्यावश्यकत्वे किमन्तर्गडुना संसर्गाभावत्वेन विभजनेनेत्याशयेन मूलकृता तथा विभागो न कृत इति ध्येयम्। अस्मद्गुरुचरणास्तु परमपरं चेति द्विविधं सामान्यमित्यत्र परापरशब्दयोः भावप्रधाननिर्देशात् परत्वमपरत्वं चेत्यर्थः। इतिशब्दस्याभेदोऽर्थः। द्विविधमिति बहुव्रीहिघटकचरमपदस्य प्रकारद्वयान्यतरविशिष्टे लक्षणा। पूर्वपदं तात्पर्यग्राहकम्। तथा च परत्वापरत्वाभिन्नप्रकारद्वयान्यतरविशिष्टं सामान्यमिति वाक्यार्थः फलितः। एवं च अभावश्चतुर्विध इत्यत्रापि बहुव्रीहिघटकोत्तरपदस्य प्रकारचतुष्टयान्यतमविशिष्टो लक्षणयार्थः। पूर्वपदं तात्पर्यग्राहकम्। **प्रागभावेत्यादि।**

प. तदप्रतियोगित्वात् गन्धस्य प्रतियोगित्वादिति चेन्न। निरुक्तलक्ष्यतावच्छेदकाधिकरणनिरूपितलक्षणतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वस्य विवक्षणात्। प्रकृते पृथिवीलक्षणगन्धस्य लक्ष्यतावच्छेदकपृथिवीत्वाधिकरणघटादिनिरूपितलक्षणतावच्छेदकसमवायसंबन्धावच्छिन्नवृत्तिताकगन्धाभावाभावाप्रतियोगित्वान्नातिव्याप्तिः। ननु जललक्षणतया कथितगन्धेऽव्याप्तिः, गन्धस्य निरुक्तलक्ष्यतावच्छेदकाधिकरणजलादिवृत्तिगन्धाभावपटोभयाभावपूर्वक्षणविशिष्टगन्धाभावाभावप्रतियोगिगन्धाभावप्रतियोगित्वात्। न च लक्ष्यतावच्छेदकसमानाधिकरणाभावे वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वविशेषणदानान्निरुक्ताभावयोः एतादृशत्वाभावान्नाव्याप्तिरिति वाच्यम्। तथापि पृथिवीलक्षणतया कथितगन्धाभावेऽव्याप्तिः। गन्धाभावाभावस्य लक्ष्यतावच्छेदकपृथिवीत्वाधिकरणघटादिवृत्तिगन्धात्मकगन्धाभा-

**तत्रेति । नाम्ना पदार्थसंकीर्तनमुद्देशः । उद्देशक्रमे च सर्वत्रेच्छैवं निया-**

---

नी. पृथिव्यादिमध्य इत्यर्थः । गन्धसमवायिकारणतावच्छेदकतया पृथिवीत्वजातिसिद्धिरिति बोध्यम् । **नाम्नेति** । तृतीयार्थोऽभेदः सङ्कीर्तने प्रतिपादकशब्देऽन्वेति । तथा च वस्तुप्रतिपादको नाममात्रमुद्देश इति लक्षणं पर्यवस्यति । अत्र घट इति पदेऽतिव्याप्ति-वारणाय वस्तुपदं लक्षणीयवस्तुपरम् । लक्षणीयस्य पृथिव्यादेः सामान्यतः प्रतिपादक-

रा. एकत्वे लाभाय । समवायस्य नानात्वे तु समवायनिष्ठमेकत्वं समवायान्तरनिष्ठभेदप्रतियो-गितावच्छेदकमेव स्यादिति समवायस्य एकत्वादेव समवाये व्यासज्यवृत्तिधर्मानवच्छि-

नृ. अत्र चतुर्णां पदानां भावप्रधाननिर्देशात् प्रागभावत्वादिकमर्थः । इतिशब्दस्याभेदोऽर्थः। तथा च प्रागभावत्वप्रध्वंसाभावत्वात्यन्ताभावत्वान्योन्याभावत्वाभिन्नप्रकारचतुष्टयान्य-तमविशिष्टाभिन्नोऽभाव इति फलित इति व्याचक्रुः । **दीपिकायां अभावं विभ-जत इति** । क्रमप्राप्तमित्यादिः । अत्र द्रव्यादिसमवायान्यतमत्वावच्छिन्नप्रतियोगिता-कभेदवत्त्वं अभावसामान्यलक्षणं इति बोध्यम् । अत्र द्रव्यादीनां यथासंभवं विभागा-नन्तरं आदौ पृथिव्या लक्षणाभिधाने बीजमाह । **तत्रेति** । सप्तपदार्थघटकनवद्रव्येषु मध्ये इत्यर्थः । **उद्देशक्रमानुसारादिति** । विभागवाक्ये पृथिव्युपस्थापकपदस्यैव प्राक् निर्दिष्टत्वानुसारादित्यर्थः । प्रथमोपस्थितत्वरूपलाघवादिति फलितार्थः । **प्रथममिति** । जलादिलक्षणात् प्राक् इत्यर्थः । **लक्षणमिति** । व्यावर्त-कलक्षणमित्यर्थः । ननु विभागवाक्ये जलादेरेव प्राङ्निर्देशः कुतो न कृतः । न च सूत्रकृता विभागवाक्ये पृथिव्या एव प्राक् निर्दिष्टत्वात् तदनुरोधेन मूलकृतापि प्रथमं पृथिव्येव निर्दिष्टेति वाच्यम् । सूत्रकृतापि प्रथमतः पृथिव्या निर्देशे नियामकाभाव इत्यत आह । **उद्देशक्रमे चेति** । सर्वत्रोद्देशक्रम इति योजना । **इच्छैव नियामिकेति** । तथा च तेषां सर्वज्ञत्वात् स्वेच्छयैव द्रव्यगुणादि-

प. वाभावनिष्ठतत्तद्व्यक्तित्वावच्छिन्नाभावप्रतियोगिगन्धाभावाभावप्रतियोगित्वात् । एवं गन्धाभावस्य निरुक्तलक्ष्यतावच्छेदकाधिकरणघटादिवृत्तिसंयोगसंबन्धावच्छिन्नगन्धा-त्मकगन्धाभावाभावत्वावच्छिन्नप्रतियोगिताकाभावप्रतियोगिगन्धाभावाभावप्रतियोगि-त्वात्तत्रैवाव्याप्तेः । न च निरुक्तलक्ष्यतावच्छेदकाधिकरणवृत्त्यभावीयदैशिक-विशेषणतावच्छिन्नप्रतियोगिताकाभावप्रतियोगितानवच्छेदकधर्मवदभावप्रतियोगित्व-स्य विवक्षणाज्जललक्षणतया कथितगन्धादिस्थले गन्धाभावपटोभयत्वपूर्वक्षणवि-शिष्टगन्धाभावत्वयोः तादृशाभावप्रतियोगितावच्छेदकत्वेऽपि शुद्धगन्धाभावत्वस्य प्रतियोगितानवच्छेदकतया तद्वदभावप्रतियोगित्वात् गन्धस्य नाव्याप्तिः । एवं पृथिवीलक्षणतया कथितगन्धाभावादिस्थले गन्धात्मकगन्धाभावाभाव-निष्ठतत्तद्व्यक्तित्वादेः अभावप्रतियोगितावच्छेदकत्वेऽपि शुद्धगन्धाभावाभावत्वस्य

मिका । ननु सुरभ्यसुरभ्यवयवारब्धे द्रव्ये परस्परविरोधेन गन्धानुत्पादादव्याप्तिः । न च तत्र गन्धप्रतीत्यनुपपत्तिरिति वाच्यम् । अवयवगन्धस्यैव तत्र प्रतीतिसंभवेन चित्रगन्धानङ्गीकारात्

नी. प्रमेयपदेऽतिव्याप्तिवारणाय नामपदं लक्ष्यतावच्छेदकावच्छिन्नपरम् । लक्षणवाक्ये नामसत्त्वादतिव्याप्तिवारणाय मात्रपदमिति ध्येयम् । आरब्धे जन्ये । **परस्परविरोधेनेति** । सुरभिगन्धं प्रति असुरभिगन्धस्यासुरभिगन्धं प्रति सुरभिगन्धस्य प्रतिबन्धकत्वेनेत्यर्थः । **प्रतीत्यनुपपत्तिरिति** । अतश्चित्रगन्ध एवाप्रतिवध्यः स्वीकार्य इति भावः । **अवयवगन्धस्येति** । स्वाश्रयसमवेतत्वसंबन्धेनेत्यर्थः । तुष्यतु

रा. त्वसमवायनिष्ठप्रतियोगिताकभेदो नास्तीत्यर्थः । तन्निष्ठभेकत्वं समवायनिष्ठभेदप्रतियोगि-

नृ. विभागे तथा निर्देशः तैः कृत इति तत्र पर्यनुयोगो न कार्य इति भावः । तत्र गन्धवतीति मूलात् गन्धवत्त्वं गन्धाधिकरणत्वं वा पृथिवीलक्षणमिति लब्धम् । तदनुपपन्नमित्याक्षिपति । **नन्विति** । **परस्परविरोधेनेति** । सुरभ्यसुरभ्योरेकत्र वर्तमानत्वासंभवेनेत्यर्थः । तयोर्दैशिकाव्याप्यवृत्तित्वाभावादित्याशयः । **गन्धानुत्पादादिति** । गन्धसामान्यस्य उत्पत्त्यसंभवादित्यर्थः । **अव्याप्तिरिति** । गन्धाधिकरणत्वस्य लक्षणस्यापीत्यादिः । **गन्धप्रतीत्यनुपपत्तिरिति** । तादृशद्रव्य इत्यादिः । गन्धप्रकारकप्रमानुपपत्तिरित्यर्थः । तथा च सुरभ्यादिगन्धोत्पत्त्यसंभवेऽपि तादृशप्रमान्यथानुपपत्त्या चित्रगन्धाङ्गीकारस्यावश्यकतया नोक्ताव्याप्त्यवकाश इति भावः । **अवयवगन्धस्येति** । कपालादिसमवेतसर्वानुमतसौरभ्यादेरेवेत्यर्थः । एवकारेणावयविनि गन्धो व्यवच्छिद्यते । **तत्रेति** । तादृशघटादावित्यर्थः । **प्रतीतिसंभवेनेति** । गन्धवानिति प्रमात्मकप्रतीतिविषयत्वौचित्येनेत्यर्थः । **चित्रगन्धानङ्गीकारादिति** । चित्रगन्धस्यालीकत्वादित्यर्थः । तथा च तादृशघटादिविशेष्यकप्रमितौ समवायघटितसामानाधिकरण्यसंबन्धेन कुसुमावयवसमवेतसौरभ्यादे-

प. प्रतियोगितानवच्छेदकतया तद्वदभावप्रतियोगित्वाद्गन्धाभावस्य नाव्याप्तिः । लक्ष्यतावच्छेदकसमानाधिकरणाभावीयप्रतियोगितायां दैशिकविशेषणतासंबन्धावच्छिन्नत्वदानात्पृथिवीलक्षणतया कथितगन्धाभावादिस्थले निरुक्तलक्ष्यतावच्छेदकाधिकरणघटादौ अभावीयविशेषणतया गन्धात्मकाभावाभावस्यावृत्तेः तेन संबन्धेन अन्याभावस्यैव संभवात् प्रतियोगितानवच्छेदकत्वात् गन्धाभावाभावत्वस्य तद्वदभावप्रतियोगित्वात् गन्धाभावस्य नाव्याप्तिरिति वाच्यम् । तथापि सामान्यादिचतुष्टयस्य सामान्याभाववत्त्वं लक्षणमित्यादावतिव्याप्तिः । निरुक्तलक्ष्यतावच्छेदकाधिकरणसामान्यादिवृत्तिः योऽभावः इत्युक्तौ अभावीयदैशिकविशेषणतासंबन्धेन सामान्याभावाभावत्वावच्छिन्नप्रतियोगिताकाभावो नायाति । सामान्यात्मकसामान्याभावाभावत्वावच्छिन्नप्रतियोगितायाः समवायसंबन्धावच्छिन्नत्वेनाभावीयदैशिकविशेषणतासंबन्धाव-

किं चोत्पन्नविनष्टघटादावव्याप्तिरिति चेन्न । गन्धसमानाधिकरणद्रव्यत्वापरजातिमत्त्वस्य विवक्षितत्वात् । ननु जलादावपि गन्धप्रतीतिरिति चेन्न । अन्वयव्यतिरेकाभ्यां पृथिवीगन्धस्यैव तत्र भानाङ्गीकारात् । ननु कालस्य सर्वाधारतया सर्वेषां लक्षणानां कालेऽतिव्याप्तिरिति चेन्न ।

---

नी. दुर्जन इति न्यायमङ्गीकृत्याह । **किं चेति** । जलत्वादिकमादायातिव्याप्तिवारणाय गन्धसमानाधिकरणेति । सत्तावारणाय द्रव्यत्वापर इति द्रव्यत्वन्यूनवृत्त्यर्थकम् ।

रा. तानवच्छेदकमेवेति भावः । **सर्वाधारतेति** । सर्वाधारताप्रयोजके दिक्कृतकालि-

नृ. रेव प्रकारत्वसम्भवात् प्रमाणान्तरस्याभावाच्च चित्रगन्धस्याप्रामाणिकतया तादृशघटादावुक्तलक्षणस्याव्याप्तिर्दुर्वारेति भावः । प्राञ्चस्तु—एतावता गन्धस्य दैशिकाव्याप्यवृत्तित्वानङ्गीकर्तृप्राचीनमते अव्याप्तिमुक्त्वा गन्धस्य दैशिकाव्याप्यवृत्तित्वाङ्गीकर्तृनवीनमते नानागन्धवदवयवारब्धद्रव्ये अव्याप्यवृत्तिसौरभ्यादिसमुदायस्य उत्पत्तिसम्भवेन अव्याप्त्यप्रसक्तेः तन्मतेऽपि स्थलविशेषे अव्याप्तिमाह किञ्चेत्युत्तरग्रन्थमवतारयन्ति । तदसत् । नवीनमते उत्पन्नविनष्टद्रव्याङ्गीकारासम्भवस्य दर्शितत्वात् किञ्चेति उत्तरग्रन्थस्य तन्मताभिप्रायकत्वासम्भवात् । केचिदत्र प्राचीनाः—उक्तस्थलविशेषेऽप्यव्याप्तिमाह किञ्चेत्यवतारयन्ति । वस्तुतस्तु—ननु सुरभ्यसुरभ्यवयवारब्धद्रव्ये नाव्याप्तिः । तत्र गन्धस्वीकारात् । तथा हि । तादृशघटादिविशेष्यकसौरभ्यप्रकारकप्रत्ययः परम्परासम्बन्धेन नावयवगन्धविषयकः । तथा सति नानागन्धवत्त्र्यणुकचतुष्टयादिजन्यचतुरणुकादिविशेष्यकगन्धप्रमानुपपत्तिः । त्रसरेणौ रूपं विहाय सर्वेषां गुणानामयोग्यत्वेन त्रसरेणुसमवेतगन्धस्य विषयत्वासंभवात् । त्रसरेणुगन्धस्यापि योग्यत्वमङ्गीकृत्य चतुरणुकादिविशेष्यकगन्धप्रत्ययोपपादने नानागन्धवद्द्व्यणुकत्रयारब्धत्र्यणुके गन्धप्रतीत्यनुपपत्तिः दुर्वारा । द्व्यणुकगन्धस्यातीन्द्रियत्वेन तद्विषयकत्वेन तादृश-

प. च्छिन्नत्वाभावात् । किन्तु तत्संबन्धावच्छिन्नप्रतियोगिताकान्याभाव एव लक्षणघटकः । तदीयप्रतियोगितानवच्छेदकत्वात् सामान्याभावाभावत्वस्य तद्वदभावप्रतियोगित्वस्य सामान्यादौ सत्त्वात् । न च तादृशाभावीयप्रतियोगितायां लक्षणवत्ताग्रहविरोधितानियामकसंबन्धावच्छिन्नत्वविशेषणदानात् सामान्यादिलक्षणसामान्याभावादिस्थले निरुक्तलक्ष्यतावच्छेदकाधिकरणसामान्यादौ लक्षणवत्ताग्रहविरोधितानियामकीभूतसमवायसंबन्धावच्छिन्नसामान्याभावाभावत्वावच्छिन्नप्रतियोगिताकाभावस्यैव सत्त्वान्नातिव्याप्तिरिति वाच्यम् । तथापि पृथिवीलक्षणगन्धेऽतिव्याप्तिः । गन्धाभावस्य निरुक्तलक्ष्यतावच्छेदकसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वेऽपि प्रमेयत्वस्यानवच्छेदकत्वात् तद्वद्गन्धाभावप्रतियोगित्वस्य गन्धे सत्त्वादिति चेन्न । तादृशप्रतियोगितानवच्छेदकलक्षणाभावत्वरूपधर्मवदभावप्रतियोगित्वविवक्षणात् प्रमेयत्व-

नी. तेन द्रव्यत्वव्युदासः । **गन्धप्रतीतिरिति** । सुरभि जलमित्यादिप्रतीतिरित्यर्थः । **पृथिवीगन्धस्येति** । स्वाश्रयसंयुक्तत्वसंबन्धेनेत्यर्थः । तत्र जलादौ । यथाश्रुतग्राही

रा. कविशेषणते तद्भिन्नसमवायादिनेत्यर्थः । तथा च येन संबन्धेन यत्र लक्षणत्वेनाभिमतं

नृ. प्रत्ययोपपादनासम्भवात् । तस्मात् चित्ररूपवत् चित्रगन्धमप्यङ्गीकृत्य तादृश-त्र्यणुकादौ गन्धप्रत्ययस्य उपपादनीयतया चित्रगन्धाङ्गीकारस्यावश्यकत्वेन नानाग-न्धवदवयवारब्धघटादावपि कारणसत्त्वात् चित्रगन्धाङ्गीकारस्यावश्यकत्वमेवेति एवं न तत्राव्याप्तिरित्याशयेन स्थलान्तरेऽव्याप्तिमाह । **किं चेति** । एवं तत्त्वम् । **उत्पन्नविनष्टघटादाविति** । प्राचीनैकदेश्यनुमततादृशघटादावित्यर्थः । आदि-पदात् उत्पन्नविनष्टपृथिवीमात्रपरिग्रहः । **अव्याप्तिरिति** । तत्र गन्धाधिकरणत्वस्या-प्यभावादिति भावः । **गन्धसमानाधिकरणेत्यादि** । गन्धाधिकरणवृत्तिः द्रव्य-त्वापरा या जातिः तद्वत्त्वस्य गन्धवती पृथिवीति लक्षणवाक्यतात्पर्यविषयत्वादि-त्यर्थः । अत्र जलत्वादिकमादाय जलादावतिव्याप्तिवारणाय गन्धसमानाधिकरणेति । गन्धाधिकरणत्वं तद्वृत्तित्वं च समवायेन विवक्षणीयम् । तेन कालिकेन गन्धाधि-करणजलादौ वर्तमानं समवायेन गन्धाधिकरणपृथिव्यां कालिकेन वर्तमानं च जल-त्वादिकमादाय नातिव्याप्तिः । सत्तादिकमादाय तत्रैवातिव्याप्तिवारणाय द्रव्यत्वा-परेति । अत्र द्रव्यत्वापरत्वं द्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वे सति द्रव्यत्वसमानाधिकरणत्वरूपं न तु द्रव्यत्वाभाववदवृत्तित्वरूपम् । द्रव्यत्वस्यापि तादृ-शत्वेन तद्दोषतादवस्थ्यात् । द्रव्यत्वापरजातिमत्त्वं समवायेन वाच्यम् । तेन कालिक-संबन्धेन पृथिवीत्वमादाय न तद्दोषतादवस्थ्यम् । एतल्लाभायैव जातिमत्त्वमित्युक्तम् । न तु जातित्वेनापि निवेशः गौरवात् प्रयोजनाभावाच्च । यत्तु घटाकाशसंयोगिवारणाय तन्निवेश आवश्यक इति तन्मन्दम् । धर्मे जातित्वघटकनित्यत्वनिवेशेनैव अपरत्व-शरीरघटकावच्छेदकत्वे निरवच्छिन्नत्वनिवेशेनैव वा सामञ्जस्येऽपि विशिष्टजाति-

प. स्य तादृशप्रतियोगितानवच्छेदकत्वेऽपि लक्षणाभावत्वरूपत्वाभावान्नातिव्याप्तिः ननु पृथिवीलक्षणे गन्धेऽतिव्याप्तिः उत्पत्तिकालावच्छेदेन निरुक्तलक्ष्यतावच्छेदकपृथि-वीत्वाधिकरणघटादौ गन्धात्मकगन्धाभावाभावस्य असत्त्वादन्याभावस्यैव वाच्यतया गन्धाभावत्वस्य तत्प्रतियोगितानवच्छेदकत्वात् तद्वद्गन्धाभावप्रतियोगित्वस्य गन्धे सत्त्वादिति चेन्न । पृथिव्या गन्धवत्त्वं लक्षणमित्यादौ गन्धवत्त्वपदस्य गन्धाधिकरण-त्वपरत्वावश्यकत्वात् प्रकृते उत्पत्तिकालावच्छेदेन लक्ष्यतावच्छेदकाधिकरणघटादौ गन्धाधिकरणत्वात्मकगन्धाधिकरणत्वाभावाभावस्य सत्त्वेन अतिव्याप्त्यनवकाशात् । तथा च लक्ष्यतावच्छेदकतावच्छेदकसंबन्धावच्छिन्नलक्ष्यतावच्छेदकतावच्छेदका-वच्छिन्नाधेयतानिरूपिताधिकरणतावन्निरूपितलक्षणतावच्छेदकसंबन्धावच्छिन्नवृत्तिता-कलक्षणवत्ताग्रहविरोधितानियामकसंबन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगितानव-

नी. शङ्कते । नन्विति । अनुगतरूपेण लक्षणताघटकसंबन्धानिवेश्य कालादावति-
व्याप्तिं वारयति । **सर्वाधारेति** । वस्तुतस्तु समवायादीनां समवायत्वादिनैव
रा. तेन संबन्धेन तस्यालक्ष्यवृत्तित्वमेवातिव्याप्तिसम्पादकं न त्वन्यसंबन्धेनेति भावः ।
नू. निवेशे गौरवात् । न चैवमपि मूर्तत्वजात्यभ्युपगमपक्षे तस्या अपि तादृशजातित्वमा-
दायातिव्याप्तिर्दुर्वारेति वाच्यम् । मूर्तत्वान्यत्वेनापि तादृशजातेः विशेषणीयत्वात् ।
वस्तुतस्तु द्रव्यत्वापरजातिः न तत्त्वेन निवेशः गौरवात् प्रयोजनाभावाच्च । किन्तु
जलासमवेतत्वेन । तथा च गन्धसमानाधिकरणजलासमवेतजातिमत्त्वमिति लक्षणं
फलितम्। अतो न कश्चिद्दोष इति प्रतिभाति । ननु सुगन्धि सलिलं सुरभिस्समीरणः इत्या-
द्यनुभवात् जलादावपि गन्धसिद्ध्या निरुक्तलक्षणं जलादावतिव्याप्तमित्याशयेन शङ्क-
ते । **नन्वित्यादिना** । स्फटिके जपाकुसुमसमवेतलौहित्यस्येवान्वयव्यतिरेकाभ्यां
पुष्पादिरूपोपाधिसमवेतगन्धस्यैव स्वसमवायिसंयुक्तत्वसंबन्धेन तत्र भानाङ्गीकारात् ।
अन्यथा तादृशोपाधिसंबन्धशून्यकालेऽपि तत्र तादृशानुभवापत्तेः । एवं न
कश्चिद्दोषः इत्याशयेन परिहरति । **अन्वयव्यतिरेकाभ्यामित्यादि** । इदमुप-
लक्षणम् । पृथिवीत्वजातिमत्त्वमपि पृथिव्याः लक्षणम् । न च तादृशजातौ माना-
भाव इति वाच्यम् । गन्धसमवायिकारणता किञ्चिद्धर्मावच्छिन्ना कारणता-
त्वात् दण्डनिष्ठघटकारणतावत् इत्यनुमानस्यैव प्रमाणत्वात् । तस्मात् तादृ-
शकारणतावच्छेदकतयानुगतधर्मसिद्धौ व्यक्त्यैक्यादिरूपजातिबाधकाभावे जातिरूप-
तयैव एतादृशधर्मः सिध्यति । तदेव पृथिवीत्वमित्युच्यते इति न किंचिदनुपप-
न्नम् । एवं जलादिप्रतियोगिकचतुर्दशभेदत्वावच्छिन्नं पृथिव्याः व्यावहारिकलक्षणं
इत्यपि बोध्यम् । येन येन संबन्धेन यो यो यस्य यस्य व्यावर्तकः व्यावहारिको वा तस्य
तस्य तेन तेन संबन्धेन तद्धर्मवत्त्वं लक्षणमिति व्यवस्थापयितुं आदौ आक्षिपति ।
**नन्विति** । **तथापीति** । पृथिवीलक्षणस्योक्तरीत्याऽव्याप्त्यतिव्याप्तिवारणेऽपीत्यर्थः ।
**कालस्येति** । महाकालस्येत्यर्थः । **सर्वाधारतयेति** । कालिकसंबन्धेन

प. च्छेदकलक्षणाभावात्मकधर्मवदभावप्रतियोगित्वमसंभवधर्मलक्षणमिति ध्येयम् ।
यद्वा लक्ष्यतावच्छेदकव्यापकेत्यस्य लक्ष्यतावच्छेदकसमानाधिकरणान्योन्याभावप्रति-
योगितानवच्छेदकेति विवक्षणात् पृथिव्या गन्धवत्त्वं लक्षणमित्यादौ निरुक्त-
लक्ष्यतावच्छेदकाधिकरणोत्पत्तिकालावच्छिन्नघटादौ गन्धाभाववद्भेदस्यैव सत्त्वेन
अतिव्याप्त्यनवकाश इति वेदितव्यम् । केचित्तु लक्ष्यमात्रावर्तनमिति लक्ष्यवृत्त्यभाव-
प्रतियोगित्वं तदर्थः । ननु अव्याप्तलक्षणे नीलपशुत्वादावतिव्याप्तिः । न च
मात्रपदस्य निविष्टतया तस्य कृत्स्नार्थकत्वाद्यावल्लक्ष्यवृत्त्यभावप्रतियोगित्वस्य
तदर्थत्वान्नीलपशुत्वादेः यत्किंचिल्लक्ष्यवृत्तित्वेन यावल्लक्ष्यवृत्त्यभावप्रतियोगित्वा-
भावात् नातिव्याप्तिरिति वाच्यम् । तथापि एतत्पटात्मकैकवृत्तिलक्षणतया
कथितघटत्वादावव्याप्तिः । तत्र यावल्लक्ष्याप्रसिद्ध्या तद्वृत्त्यभावप्रतियोगित्वस्य

सर्वाधारताप्रयोजकभिन्नसंबन्धेन लक्षणत्वस्य विवक्षितत्वात्। पृथिवीं विभजते। **सा द्विविधेति**। नित्यत्वं ध्वंसाप्रतियोगित्वम्। अनित्यत्वं ध्वंसप्रतियोगित्वम्। प्रकारान्तरेण विभजते। **पुनरिति**। आत्मनो भोगायतनं शरीरम्। यदवच्छिन्नात्मनि भोगो जायते तद्भोगायतनम्। सुखदुःखसाक्षात्कारो भोगः। शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वमिन्द्रियत्वम्। शरीरेन्द्रियभिन्नो विषयः। एवं च गन्धवच्छरीरं पार्थिवशरीरम्, गन्धवदिन्द्रियं पार्थिवेन्द्रियम्, गन्धवान् विषयः पार्थिवविषय इति तत्तल्लक्षणं बोध्यम्। पार्थिवशरीरं दर्शयति। **शरीरमिति**। इन्द्रियं

---

**नी.** संसर्गतया तेनैव रूपेण तत्तत्संबन्धस्य तत्तल्लक्षणघटकत्वं बोध्यम्। नित्यपृथिवीत्वादि-

**रा.** तेन सास्नादिमत्त्वस्य गोलक्षणत्वेऽपि सास्नादेश्च सर्वाधारताप्रयोजकसंबन्धभि-

**नृ.** इत्यादिः। एतेन महाकाले कालिकसंबन्धेन सकललक्षणानां सत्त्वमाविष्कृतम्। **सर्वेषां लक्षणानामिति**। उक्तवक्ष्यमाणव्यावर्तकव्यावहारिकसकललक्षणानामित्यर्थः। **काल इति**। तत्तल्लक्षणलक्ष्यतावच्छेदकतत्तद्धर्मशून्यमहाकाल इत्यर्थः। **अतिव्याप्तिरिति**। कालिकसंबन्धेन वर्तमानत्वप्रयुक्तातिव्याप्तिरूपदोषग्रस्तत्वमित्यर्थः। तथा च सर्वेषां लक्षणानां दुष्टत्वात् व्यावर्तकत्वव्यावहारिकत्वान्यतरस्वरूपप्रयोजनवत्त्वं न संभवतीति भावः। **सर्वाधारतेत्यादि**। यस्य यस्य येन येन संबन्धेन यो यो व्यावर्तको व्यावहारिको वा तस्य तस्य तेन तेन संबन्धेन तत्तद्धर्मवत्त्वस्यैव लक्षणत्वेन तात्पर्यविषयत्वादित्यर्थः। तथा च महाकाले तेन तेन संबन्धेन तत्तल्लक्षणाभावात् न तेषामतिव्याप्तिरूपदोषवत्त्वम्। अतो नोक्तानुपपत्तिरिति भावः।

**प.** सुतरामप्रसिद्धत्वात्। न च यावत्पदस्य संभावितपरत्वान्नाव्याप्तिः। तथा सति एतद्घटलक्षणतया कथितैतत्संयोगेऽतिव्याप्तिः। एतत्संयोगस्य एतद्घटरूपैकव्यक्तिवृत्त्यभावप्रतियोगित्वात्। न च स्वानाधिकरणवृत्तिलक्ष्यतावच्छेदकत्वाभिमतधर्माधिकरणवृत्त्यभावप्रतियोगित्वस्य विवक्षितत्वात् स्वपदस्य लक्षणपरत्वात् एतद्घटलक्षणैतत्संयोगादिस्थले संयोगाभावस्य लक्ष्यतावच्छेदकाधिकरणवृत्तित्वेऽपि स्वपदार्थलक्षणभूतैतत्संयोगाधिकरणवृत्तित्वेन तदनधिकरणवृत्तित्वाभावान्नातिव्याप्तिरिति वाच्यम्। एवमपि अधिकरणभेदेन अभावभेदे मानाभावेन स्वानधिकरणीभूतगुणादिवृत्तिसंयोगात्यन्ताभावस्य घटादिवृत्तिसंयोगात्यन्ताभावस्य च एकत्वात्तादृशाभावप्रतियोगित्वस्य घटादिसंयोगे सत्त्वेन अतिव्याप्तेर्वज्रलेपायितत्वादिति चेन्न। स्वप्रतियोग्यनधिकरणयावल्लक्ष्यतावच्छेदकाधिकरणकाभावप्रतियोगित्वस्य विवक्षि-

दर्शयति । **इन्द्रियमिति** । गन्धग्राहकमिति प्रयोजनम् । घ्राणमिति संज्ञा । नासाग्रेत्याश्रयोक्तिः । एवमुत्तरत्र ज्ञेयम् । पार्थिवविषयं दर्शयति । **मृत्पाषाणादीति** । अपां लक्षणमाह । **शीतेति** । उत्पन्नविनष्टजलेऽव्याप्तिवारणाय शीतस्पर्शसमानाधिकरणद्रव्यत्वापरजातिमत्त्वं विवक्षितम् । "शीतं शिलातलम्" इत्यादौ जलसंबन्धादेव शीतस्पर्शभानमिति नातिव्याप्तिः । अन्यत्सर्वं पूर्वरीत्या व्याख्येयम् । तेजसो लक्षणमाह । **उष्णस्पर्शवदिति** । 'उष्णं जलम्' इति प्रतीतेस्तेजःसंयोगानुविधायित्वान्नातिव्याप्तिः । विषयं विभजते । **भौमेति** । ननु 'सुवर्णं पार्थिवं पीत-

---

नी. रूपलक्षणगतं नित्यत्वादि दर्शयति । **नित्यत्वमिति** । **प्रकारान्तरेणेति** ।

रा. भ्रसंयोगादिना भूतलवृत्तित्वेऽपि नातिव्याप्तिरिति ध्येयम् । **पीतत्वादिति** । ननु

नृ. प्राञ्चस्तु सर्वाधारताप्रयोजकभिन्नसंबन्धेन इति कालिकविशेषणतादिविशेषणताभिन्नसंबन्धेन इत्यर्थः इत्याहुः । तदसत् । निरुक्तविशेषणताभिन्नसंबन्धत्वावच्छिन्नसांसर्गिकविषयताशालिप्रतीत्यभावेन तेन रूपेण संसर्गतायां मानाभावात् । न च तादृशविशेषणताभिन्नत्वविशिष्टसंबन्धत्वोपलक्षितानां समवायादीनां संसर्गत्वे तात्पर्यान्नोक्तदोष इति वाच्यम् । तादृशसकलसंबन्धेन कस्यापि लक्षणसंबन्धस्यावर्तमानतया असंभवापत्तेः । तादृशसंबन्धत्वोपलक्षितसमवायादिरूपयत्किञ्चित्संबन्धेन गन्धवत्त्वादिरूपलक्षणानां वर्तमानत्वेऽपि गन्धाधिकरणत्वादिरूपलक्षणानां अवर्तमानतया तेषामसंभवरूपदोषग्रस्तत्वस्य दुर्वारत्वात् । तस्मात् अस्मदुक्तरीत्यैव दोषो वारणीय इति दिक् । **पृथिवीं विभजत इति** । श्रोतृसमवेतजिज्ञासाविशेषनिवृत्त्यर्थं इत्यादिः । अत्र पृथिवीपदसमभिव्याहृतद्वितीयायाः सविषयार्थकधातुसमभिव्या-

प. तत्वात् एतत्संयोगाभावस्य एतादृशत्वाभावान्नातिव्याप्तिः । यद्वा । स्वप्रतियोग्यधिकरणलक्ष्यतावच्छेदकाधिकरणकभिन्नाभावप्रतियोगित्वम् । नाप्रसिद्धिः । स्वपदस्य तादृशाभावव्यक्तिपरिचायकत्वात् । यद्वा स्वाधिकरणलक्ष्यतावच्छेदकाधिकरणकभिन्नत्वम् । स्वपदं लक्षणपरम् । स्वपदस्य परिचायकत्वाच्च नाप्रसिद्धिः । यद्वा । लक्ष्यतावच्छेदकाधिकरणनिष्ठाधिकरणतानिरूपकत्वाभाववत्त्वम् । यद्वा लक्ष्यतावच्छेदकाधिकरणनिष्ठभेदप्रतियोगितावच्छेदकत्वं वा असंभविधर्मलक्षणमिति । अत्र सर्वत्रापि संबन्धविशेषनिवेशो यथायोग्यं सुधीभिर्विभावनीय इति व्याचख्युः । लक्षणस्वरूपं निरूपयति । * **एतद्दूषणेत्यादिना** । उक्तदूषणत्रयरहितो धर्म इत्यर्थः । ननु दूषणत्रयरहितधर्म इत्यनेन त्रित्वावच्छिन्नाभावो लक्ष्यते । तच्चायुक्तं, एकदूषणदूषितस्य त्रित्वावच्छिन्नाविशिष्टतया सल्लक्षणत्वापत्तेरिति चेन्न ।

---

* अस्य मूलं १२१ पृष्ठे द्रष्टव्यम् ।

नी. पृथिवीमित्यनुषज्यते । अत्र नित्यपृथिव्याः शरीरेन्द्रियभिन्नत्वरूपविषयलक्षणाक्रान्त-

रा. विद्युदादौ पीतत्वं व्यभिचारि । न च विद्युदादौ पीतत्वं औपाधिकं न तु वास्त-

नृ. हारबलात् विषयत्वमर्थः । विपूर्वकभजधातुः अवान्तरधर्मप्रकारकज्ञानानुकूलव्यापार-वाचकः । आख्यातार्थः कृतिः । तत्र प्रकृत्यर्थपृथिवीत्वावच्छिन्नस्याधेयतासंबन्धेन निरूपितत्वसंबन्धेन वा द्वितीयार्थेऽन्वयः । तस्य निरूपकतासंबन्धेन स्वरूपसंबन्धेन वा व्युत्पत्तिवैचित्र्यात् धात्वर्थैकदेशे अन्वयः । विशिष्टधात्वर्थस्यानुकूलतासंबन्धेनाख्यातार्थे अन्वयः । तस्य समवायसंबन्धेन प्रथमान्तपदार्थे अन्वयः । उक्तान्वयरीत्या शाब्दबोध ऊह्यः । तथा च प्रकृते लक्षणवाक्यात् लक्षणात्मकासाधारणधर्मज्ञाने जाते साधारणधर्मप्रकारकज्ञानस्य विशेषधर्मजिज्ञासां प्रति हेतुतया तादृशकारणबलात् कतिविधा पृथिवीति विशेषधर्मप्रकारकजिज्ञासोत्पत्त्या श्रोतुः तादृशजिज्ञासानिवृत्त्यर्थं सा द्विधेति मूलकृता विभागः कृतः इत्याशयप्रकाशनाय पृथिवीं विभजत इत्युक्तवान् दीपिकाकार इति प्रतिभाति । प्राञ्चस्तु उक्तलक्षणलक्षितस्यानित्यत्वे अवयवानवस्थापत्तिः । नित्यत्वे कार्यस्य गन्धवतः द्रव्यान्तरत्वापत्तिः । अत आह । सा द्विधेति मूलमवतारयन्ति । एतन्मते पृथिव्याः विभुत्वाणुत्वविचारवत् नित्यत्वानित्यत्वविचारस्यापि अजिज्ञासितार्थाभिधानरूपत्वेनार्थान्तरदोषप्रसङ्गः । एतद्ग्रन्थस्यास्मदुक्तार्थाभिप्रायकत्वस्वीकारे तु नैष दोष इति । **मूले सा द्विविधेति** । अत्र बहुव्रीहिघटकविधाशब्दस्य प्रकारद्वयान्यतरविशिष्टे लक्षणा । द्विशब्दः तात्पर्यग्राहकः । बहुव्रीहावुत्तरपदस्य लाक्षणिकतायाः अनादितात्पर्यविषयत्वात् । **नित्यानित्या चेति** । नित्यत्वं अनित्यत्वं चेत्यर्थः । इतिशब्दोऽभेदार्थकः । तथा च नित्यत्वानित्यत्वाभिन्नप्रकारद्वयान्यतरविशिष्टा पृथिवीति वाक्यार्थः । तत्र का पृथिवी नित्यत्वविशिष्टा का वा अनित्यत्वविशिष्टेति आकाङ्क्षायाम् । **नित्या परमाणुरूपेत्यादि** । परमाणुरूपा पृथिवी नित्यत्वप्रकारविशिष्टा । परमाणुभिन्ना

प. तत्तद्दूषणाभावकूटवत्त्वस्यैव विवक्षितत्वादिति । एतान्येव दूषणानि हेत्वाभासे भागासिद्धव्यभिचारविरोधा इति गीयन्ते । ननु असाधारणधर्मो हि लक्षणमिति सर्वजनसिद्धम् । तत्कथं तादृशदूषणरहितधर्म इत्यत आह । ***स एवेति** । तादृशदूषणत्रयरहितधर्म एवेत्यर्थः । एवकारेण दूषणविशिष्टस्य असाधारणत्वव्यवच्छेदः । **†इत्युच्यत इति** । इति वाक्येन उच्यते पण्डितैरिति शेषः । असाधारणत्वं असाधारणत्वविशिष्टधर्मत्वम् । अत्र विशिष्टज्ञाने विशेषणज्ञानस्य हेतुतया असाधारणत्वज्ञानं विना तज्ज्ञानासंभव इत्यत आह । **लक्ष्यतावच्छेदकेति‡** । लक्ष्यतावच्छेदकव्यापकत्वे सति लक्ष्यतावच्छेदकव्याप्यत्वम् । लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावाप्रतियोगित्वे सति लक्ष्यतावच्छेदकाभाववदवृत्तित्वमिति तदर्थः । समनियतशब्दस्य व्याप्यव्यापकभावपरत्वात् । ननु लक्ष्यतावच्छेदकसमनियतत्वं असाधारणत्वमित्य-

*†‡ एषां मूलानि १२१ पृष्ठे द्रष्टव्यानि ।

नी. त्वेन विषयान्तर्गतत्वमिति पृथिव्यास्त्रिविधत्वम् । अत एव मूले पुनस्त्रिविधेत्युक्तिः

रा. विकर्ममिति वाच्यम् । सुवर्णेऽपि तस्यौपाधिकत्वसंभवादित्यस्वरसादाह ।

नृ. द्व्यणुकादिः सर्वा पृथिवी अनित्यत्वप्रकारविशिष्टेत्यर्थः । तत्र नित्यत्वादिपदार्थं निर्व- क्ति दीपिकायाम् । **नित्यत्वं ध्वंसाप्रतियोगित्वमिति** । ध्वंसप्रतियोगिव्यक्तयो यावत्यः तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वं तावदन्यतमत्वावच्छिन्न- प्रतियोगिताकैकभेदवत्त्वमिति वाऽर्थः । अतो ध्वंसस्य प्रतियोगिव्यक्तिभेदेन भिन्न- तया एकैकध्वंसप्रतियोगिभिन्नत्वरूपध्वंसाप्रतियोगित्वस्य ध्वंसान्तरप्रतियोगिसाधारण- त्वेऽपि न क्षतिः । इदमुपलक्षणम् । महाकालवृत्त्यभावसमानाधिकरणकालिकविशेष- णतात्वावच्छिन्नप्रतियोगिताकाभाववत्त्वरूपमनुगतं सुज्ञेयं नित्यत्वमित्यपि बोध्यम् । **ध्वंसप्रतियोगित्वमिति** । यावन्ति ध्वंसप्रतियोगित्वानि तावदन्यतमत्वावच्छि- न्नवत्त्वं इत्यर्थः । तेन ध्वंसव्यक्तिभेदेन प्रतियोगिव्यक्तिभेदेन च प्रतियोगितानां भिन्नत्वादेकैकवृत्तितादृशप्रतियोगितायाः अन्यत्रावृत्तित्वेऽपि न क्षतिः । वस्तुतस्तु स्वरूपकालिकोभयसंबन्धेनाभावत्ववत्त्वं सकलध्वंसानुगतं ध्वंसत्वम् । अभावत्वस्यानु- गतत्वात् । तादृशध्वंसत्वाश्रयप्रतियोगित्वं स्वीयकालिकदैशिकविशेषणत्वाश्रयप्रतियो- गित्वसंबन्धेनाभावत्ववत्त्वं पर्यवसितं अनित्यत्वम् । एवं च नाननुगमो न वा दुर्ज्ञेय- त्वमिति प्रतिभाति । पुनस्त्रिविधेति मूले या द्विविधा सैव त्रिविधेत्यर्थो लभ्यते । तत्र पूर्वविभाजकधर्मद्वयघटितधर्मत्रयमादाय त्रैविध्यशङ्का। निराकर्तुं तादृशग्रन्थ- मवतारयति दीपिकायाम् । **प्रकारान्तरेणेति** । पूर्वविभाजकधर्मभिन्नधर्मेणेत्यर्थः । तथा च पृथिवीसामान्यस्यैव द्वैविध्येन त्रैविध्येन च विभाग इति भावः । प्राञ्चस्तु पुनस्त्रिविधेति कार्यरूपपृथिवी प्रकारत्रयान्यतमविशिष्टेत्यर्थः । तस्या एवाव्यवहितपूर्वो- पस्थितिविषयत्वादित्याहुः । तन्न । साक्षात्परम्परासाधारणोपभोगसाधनत्वरूपवि- षयत्वस्य द्व्यणुकादाविव परमाणुष्वपि सत्त्वात् । तेषां तदप्रतिपादनेन मूलकारस्य

प. नेनैव तादृशार्थतालाभे दूषणत्रयरहितधर्म इत्यनेन एतादृशार्थालाभात्कथं दूषणत्रयरहि- तधर्म एवासाधारणधर्म इत्युच्यत इत्युक्तमिति चेत् शृणु। दूषणत्रयं नाम अव्याप्त्यति- व्याप्त्यसंभवाः । तत्र अव्याप्तिर्नाम लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियो- गित्वम् । तादृशदोषो नास्तीत्यनेन लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावाप्रतियो- गित्वांशलाभः । अतिव्याप्तिर्नाम लक्ष्यतावच्छेदकाभाववद्वृत्तित्वम् । तादृशदोषो नास्तीत्यनेन लक्ष्यतावच्छेदकाभाववदवृत्तित्वरूपव्याप्यत्वांशलाभ इत्यवबोधय । पृथिवीलक्षणभूतगन्धस्य लक्ष्यतावच्छेदकपृथिवीत्वसमानाधिकरणात्यन्ताभावाप्रतियो- गित्वात् लक्ष्यतावच्छेदकपृथिवीत्वाभाववज्जलाद्यवृत्तित्वाल्लक्षणसंगतिः । ननु एतस्यैव लक्षणसामान्यलक्षणत्वे पदार्थसामान्यलक्षणप्रमेयत्वादावव्याप्तिः स्यात् । अथवा अग्रे ग्रन्थकृता वक्ष्यमाणाभिधेयत्वादावतिव्याप्तिकथनमसंगतमेव स्यात् । अत्र

त्वाद्गुरुत्वात् हरिद्रावत' इति चेन्न । अत्यन्तानलसंयोगे सति घृतादौ

---

नी. संगच्छत इति ध्येयम् । केचित्तु अनित्यपृथिव्या एव त्रैविध्यं दर्शयन्ति । उद्देशक्रमानुसारेण प्रथमं शरीरलक्षणमाह । **आत्मन इति** । आयतनमवच्छेदकम् । तथा च मि-

रा. **गुरुत्वादिति** । गुरुत्वं तु क्वापि तेजसि नौपाधिकमनुभूयत इति न तत्र तच्छङ्कावकाशं

नृ. न्यूनतापत्तेः । **मूले शरीरेन्द्रियविषयभेदादिति** । अत्र द्वन्द्वोत्तरं विद्यमानभेदशब्दस्य भिद्यते व्यावर्त्यते अनेनेति व्युत्पत्त्या असाधारणधर्मोऽर्थः । एवं च द्वन्द्वोत्तरश्रूयमाणभेदशब्दस्य द्वन्द्वप्रतिपाद्यतावच्छेदकैकैकधर्मावच्छिन्नान्वयस्यानादितात्पर्यविषयतया योग्यतया च शरीरनिष्ठो भेदः इन्द्रियनिष्ठो भेदः विषयनिष्ठो भेदः इत्यर्थलाभः । तथा च शरीरादिनिष्ठासाधारणधर्मस्य शरीरत्वेन्द्रियत्वविषयत्वात्मकतया पञ्चम्यन्तशरीरेन्द्रियविषयभेदशब्देन शरीरत्वेन्द्रियत्वविषयत्वानि लभ्यन्ते । तदुत्तरपञ्चम्या धान्येन धनवानित्यत्र तृतीयायाः अभेदार्थकत्ववत् प्रकृते अभेदार्थकत्वं स्वीक्रियते । तस्य त्रिविधेत्यत्र प्रकारत्रयेऽन्वयः । इत्थं च शरीरत्वेन्द्रियत्वविषयत्वाभिन्नप्रकारत्रयान्यतमविशिष्टा पृथिवीति वाक्यार्थः । एवमुत्तरत्राप्यर्थो द्रष्टव्यः । प्राञ्चस्तु शरीरेन्द्रियविषयभेदादिति शरीरादिशब्दानां भावप्रधाननिर्देशाच्छरीरत्वेन्द्रियत्वविषयत्वानि लभ्यन्ते । द्वन्द्वोत्तरश्रूयमाणभेदशब्दस्यान्योन्याभावोऽर्थः । पञ्चम्याः प्रयोज्यत्वमर्थः । तस्य प्रकारत्रयेऽन्वयः । तथा च शरीरत्वेन्द्रियत्वविषयत्वभेदप्रयोज्यप्रकारत्रयान्यतमविशिष्टा पृथिवीति वाक्यार्थः । शरीरत्वादिधर्माणां परस्परभेदसत्त्व एव पृथिव्याः प्रकारत्रयवत्त्वम् । तेषां भेदाभावे प्रकारत्रयवत्त्वाभाव इति तत्सत्ताधीनसत्ताकत्वरूपं तत्प्रयोज्यत्वं प्रकारत्रयवत्त्वस्य निराबाधमित्याहुः । अत्र पार्थिवशरीरादीनां लक्षणानुक्तेः मूलकारस्य न्यूनतेति तत्परिहाराय स्वयं लक्षणानि वक्तव्यानि । तत्र पार्थिवशरीरादिलक्षणानां शरीरसामान्यादिलक्षणघटिततया आदौ शरीरादिसामान्यानां क्रमेण लक्षणान्याह । **आत्मन इत्यादिना** । अत्र पृथिवीत्वा-

प. व्यापकत्वांशसंभवेऽपि प्रमेयत्वाभिधेयत्वादेः केवलान्वयित्वेन व्याप्यत्वांशासंभवादिति चेन्न । लक्ष्यतावच्छेदकव्याप्यत्वमित्येतस्य स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिलक्ष्यतावच्छेदककत्वमिति अर्थकरणान्न काप्यनुपपत्तिः । ननु लक्ष्यतावच्छेदकत्वस्य द्वेधा भानगौरवापत्तिरिति चेन्न । लक्ष्यतावच्छेदकसमनियतत्वमित्यस्य स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिलक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावाप्रतियोगित्वमित्यर्थस्वीकारान्न गौरवावकाशः । स्वपदं लक्षणपरम् । ननु ज्ञानवत्त्वमात्मनो लक्षणमित्यादावव्याप्तिः आत्मत्वरूपलक्ष्यतावच्छेदकस्य विषयतासंबन्धेन स्वशब्दार्थज्ञानाधिकरणघटादिवृत्त्यभावप्रतियोगित्वात् । एवं विशिष्टसत्तावत्त्वं द्रव्यस्य लक्षणमित्यादौ द्रव्यत्वस्य विशिष्टसत्ताधिकरणगुणादिवृत्त्यभावप्रतियोगित्वादव्याप्तिः । न च स्वावच्छेदकसंबन्धावच्छिन्नस्वावच्छेदकावच्छिन्नाधिकरणतावद्वृत्त्यभावाप्रतियोगित्व-

नी. क्षितं यादृशं लक्षणं संपन्नं तादृशमाह । **यदवच्छिन्नेति** । सुखदुःखसाक्षात्कारावच्छेदकमिति यावत् । अत्रान्त्यावयवित्वे सतीति विशेषणं देयम् । तेन पादादीनामवच्छे-

रा. इति भावः । यद्यपि गुरुत्वं जले पार्थिवत्वव्यभिचारि तथापि स्नेहासमानाधिकरण-

नृ. दिना साङ्कर्येण शरीरत्वस्य जातित्वाभावात् तद्वत्त्वस्य लक्षणत्वं न संभवतीति तदुपेक्ष्य लक्षणान्तरं अनुसृतमिति ध्येयम् । इदं च आत्मसमवेत एव भोग इति स्फुटीकरणाय उक्तम् । न तु तस्यापि लक्षणे प्रवेशः व्यर्थत्वात् । उक्तमेव प्रकाशयति । **यदवच्छिन्नेति** । यद्विशिष्टेत्यर्थः । आत्मनीत्यत्र सप्तम्याः निरूपितत्वमर्थः । तस्य जायत इत्यत्र धात्वर्थोत्पत्तावन्वयः । **भोगो जायत इति** । समवायसंबन्धावच्छिन्नोत्पत्तिमान् भोग इत्यर्थः । तथा च यद्विशिष्टात्मनिरूपितसमवायसंबन्धावच्छिन्नोत्पत्तिमान् भोग इति फलितार्थः । **तद्भोगायतनमिति** । तदेव भोगावच्छेदकमित्यर्थः । भोगपदार्थमाह । **सुखेति** । सुखदुःखान्यतरनिष्ठलौकिकविषयताशालिसाक्षात्कार इत्यर्थः । एतेन ईश्वरसाक्षात्कारस्य सर्वविषयकत्वेन सुखदुःखादिविषयकतया तस्यापि भोगपदार्थत्वात् भोगत्वावच्छेदेन जननान्वयासंभवात् तदवच्छेदकाप्रसिद्धेश्च बाधवारणाय शरीरलक्षणस्यासंभववारणाय चात्मपदस्य जीवपरत्वमङ्गीकृत्य तस्य शरीरलक्षणघटकतामङ्गीकृत्य वा भगवज्ज्ञानस्य जीवसमवेतत्वाभावात् जीवसमवेतभोगत्वावच्छेदेन जननान्वयासंभवाच्च न बाधः । एवं च जीवसमवेतभोगावच्छेदकत्वं शरीरलक्षणं पर्यवसितमिति नासंभवप्रसक्तिरिति कैश्चिदुक्तं प्रत्युक्तमीश्वरसाक्षात्कारस्य लौकिकविषयत्वाभावात् । प्राञ्चस्तु साक्षात्कारपदं जन्यसाक्षात्कारपरमित्याहुः । अत्र लौकिकविषयताशालिसाक्षात्कारावच्छेदकत्वमेव लक्षणमुचितम् । लौकिकविषयतायाः सुखादिवृत्तित्वनिवेशे प्रयोजनाभावात् । यद्वा तादृशसाक्षात्कारस्य लौकिकविषयताशालिसाक्षात्कारत्वेनापि न निवेशः गौरवात् प्रयोजनाभावाच्च । किन्तु मानसत्वेन मानसत्वावच्छिन्नावच्छेदकत्वं लक्षणमिति फलितम । एवं च न

प. स्य विवक्षितत्वात् स्वावच्छेदकपदस्य लक्षणतावच्छेदकपरत्वात् तत्र नाव्याप्तिरिति वाच्यम् । गन्धवत्त्वं पृथिवीलक्षणमित्यादौ पृथिवीत्वस्य कालिकसंबन्धेन निरुक्तस्वाधिकरणपृथिवीवृत्तिपृथिवीत्वाभावप्रतियोगित्वादव्याप्तेः । न च निरुक्तस्वाधिकरणवृत्तितायां अभावीयदैशिकविशेषणतासंबन्धावच्छिन्नत्वदानात्पृथिवीत्वाभावस्य तेन संबन्धेन तत्रावृत्तित्वान्नाव्याप्तिरिति वाच्यम् । गन्धवतः पृथिवीत्वं लक्षणमित्यादौ गन्धरूपलक्ष्यतावच्छेदकस्य पृथिवीत्वाधिकरणवृत्तिगन्धस्नेहोभयाभावपूर्वक्षणविशिष्टगन्धाभावप्रतियोगित्वादव्याप्तिः । न चाभावे व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकवैशिष्ट्यानवच्छिन्नप्रतियोगिताकत्वयोर्दानान्नाव्याप्तिरिति वाच्यम् । तथापि तत्तद्गन्धाभावमादाय तत्रैवाव्याप्तिः । न च निरुक्तस्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकधर्मत्वस्य विवक्षितत्वादुभयत्वादेः प्रतियोगितावच्छेदकत्वान्नाव्या-

**नी.** दकत्वेऽपि तत्र नातिव्याप्तिः । शरीरत्वं न जातिः, पृथिवीत्वादिना संकरात् । तथा इन्द्रियत्वं न जातिरित्याशयेनाह । **शब्देतरोद्भूतेति ।** आत्मादावतिव्याप्तिवारणाय सत्यन्तम् । श्रोत्रेऽव्याप्तिवारणाय शब्देतरेति । चक्षुरादौ विशेषगुणस्यानुद्भूतरूपादेः सत्त्वेनाव्याप्तिवारणायोद्भूतेति । उद्भूतत्वं न जातिः शुक्लत्वादिना साङ्कर्यात् ।

**रा.** त्वेन विशेषणीयत्वात् नैव दोषः । केचित्तु पार्थिवमित्यस्य पार्थिवमेवेत्यर्थः । सर्व-

**नृ.** कोऽपि दोष इति प्रतिभाति । इदमुपलक्षणम । चाक्षुषत्वाद्यवच्छिन्नावच्छेदकत्वं सुखत्वाद्यवच्छिन्नावच्छेदकत्वं च तल्लक्षणमित्यपि बोध्यम् । अस्मद्गुरुचरणास्तु सुखदुःखसाक्षात्कारेति साक्षात्कृतं सुखं दुःखं चेत्यर्थः । तथा च सुखाद्यवच्छेदकत्वं शरीरलक्षणमिति फलितम् । सुखादीनां साक्षात्कारविषयत्वप्रतिपादनं सुखादौ प्रत्यक्षप्रमाणोपन्यासार्थं न तस्यापि लक्षणघटकता व्यर्थत्वात् । एवं च न कश्चिद्दोष इति व्याचक्रुः । इन्द्रियसामान्यलक्षणमाह । **शब्देतरोद्भूतेति ।** शब्देतरे ये उद्भूतविशेषगुणाः तदनाश्रयत्वे सतीत्यर्थः । **ज्ञानकारणेति ।** ज्ञानकारणीभूतः यो मनस्संयोगः तदाश्रयत्वमित्यर्थः । अत्र आत्मादावतिव्याप्तिवारणाय सत्यन्तम् । श्रोत्रेन्द्रियेऽव्याप्तिवारणाय सत्यन्तदले शब्देतरेति । घ्राणादावव्याप्तिवारणाय उद्भूतेति । उद्भूतत्वं न जातिः शुक्लत्वादिना साङ्कर्यात् । न च शुक्लत्वादिव्याप्यं नानैव उद्भूतत्वं अतो नोक्तदोष इति वाच्यम् । तथा सति व्यतिरेकव्यभिचारेण चाक्षुषत्वावच्छिन्नं प्रत्युद्भूतत्वविशिष्टरूपत्वेन हेतुत्वभङ्गप्रसङ्गात् । किन्तु शुक्लत्वादिव्याप्यमनुद्भूतत्वं नाना तदभावकूटश्चोद्भूतत्वमिति स्वीकार्यम् । एवं च तादृश उद्भूतगुणः संयोगादिरपीति तदनाश्रयत्वाभावात् असंभववारणाय विशेषेति । तत्त्वञ्चाग्रे स्वयमेव वक्ष्यति । कालादावतिव्याप्तिवारणाय विशेष्यदलम् । तद्घटकज्ञानकारणेत्यपि तद्वारणाय । कालादावुद्भूतरूपाभावचाक्षुषं प्रति चक्षुस्संयुक्तविशेषणतायाः सन्निकर्षतया तद्घटकचक्षुस्संयोगस्यापि हेतुत्वेन तत्रातिव्याप्तिवारणाय मनः-

**प.** प्तिरिति वाच्यम् । पृथिवीत्वं घटस्य लक्षणमित्यादौ घटत्वस्य तादृशाभावप्रतियोगितावच्छेदकत्वेऽपि प्रमेयत्वस्य अनवच्छेदकत्वात्तद्वत्त्वाद्घटत्वस्य तादृशघटत्वसमानाधिकरणाभावाप्रतियोगित्वस्य पृथिवीत्वे सत्त्वादतिव्याप्तिः । न च पृथिवीत्वाभाव प्रतियोगितानवच्छेदकं यल्लक्ष्यतावच्छेदकतावच्छेदकमिति विवक्षणात्प्रमेयत्वस्यावच्छेदकत्वेऽपि लक्ष्यतावच्छेदकतावच्छेदकत्वाभावान्नातिव्याप्तिरिति वाच्यम् । तथापि गन्धवतः पृथिवीत्वं लक्षणमित्यादौ गन्धत्वस्य पृथिवीत्वाधिकरणवृत्तिसंयोगसंबन्धावच्छिन्नगन्धत्वावच्छिन्नाभावप्रतियोगितावच्छेदकत्वादव्याप्तिः । न च तादृशाभावे लक्ष्यतावच्छेदकतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकत्वविशेषणदानान्नाव्याप्तिरिति वाच्यम् । एवमपि संयोगवतः द्रव्यत्वं लक्षणमित्यादावव्याप्तेः । संयोगत्वस्य द्रव्यत्वाधिकरणवृत्त्यभावप्रतियोगितावच्छेदकत्वादिति चेन्न । न च निरुक्तस्वाधिकरणस्य

**नी.** न च शुक्लत्वादिव्याप्यं नानैवोद्भूतत्वमिति वाच्यम् । चाक्षुषादावुद्भूतरूपत्वादिना कारणत्वानुपपत्तेः। किन्तु शुक्लत्वादिव्याप्यमनुद्भूतत्वं नाना तदभावकूटवत्त्वमुद्भूतत्वम्। तच्च संयोगादावपि । तथा शब्देतरोद्भूतगुणं संयोगमादाय असंभववारणाय विशेषेति । कालादावतिव्याप्तिवारणाय विशेष्यदलम् । तत्रैवातिव्याप्तिवारणाय ज्ञानकार-

**रा.** वाक्यानां असति बाधके सावधारणत्वात् । एवकारेण तेजस्त्वव्यवच्छेदः । तथा च

**नृ.** पदम् । नन्वात्मभिन्नत्वविशेषणेनैवात्मनि अतिव्याप्तिवारणे गुरुभूतसत्यन्तनिवेशनं व्यर्थमिति चेत् अत्र केचित् । प्राचां मते सुषुप्तौ ज्ञानोत्पत्तिवारणाय चर्ममनस्संयोगस्य रुधिरमनस्संयोगस्य मांसमनस्संयोगस्य इत्यादेः मतभेदेन हेतुत्वस्यावश्यकतया अनन्ततत्तद्भेदघटितलक्षणकरणे गौरवमित्याशयेन सत्यन्तदलं उपात्तमित्याहुः। अस्मद्गुरुचरणास्तु शब्देतरोद्भूतविशेषगुणत्वस्य तादृशविशेषगुणाश्रयत्वत्वस्य चैकस्याभावात् तादृशगुणाश्रयव्यक्तयो यावत्यः तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वमेव सत्यन्तार्थो वाच्यः । तादृशानन्तभेदकूटनिवेशापेक्षया आत्मत्वरुधिरत्वमांसत्वचर्मत्वादिरूपानुगतधर्मावच्छिन्नप्रतियोगिताककतिपयभेदकूटनिवेशनमेवोचितं लाघवात्। सत्यन्तदलस्यापि तादृशविशेषगुणाश्रयत्वोपलक्षितव्यक्तिनिष्ठनिरुक्तानुगततत्तद्धर्मावच्छिन्नप्रतियोगिताकभेदकूटार्थकत्वसम्भवाच्च । तथा च तादृशानुगततत्तद्धर्मावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वमेव सत्यन्तार्थः । अथवा तादृशगुणाश्रयत्वोपलक्षितार्थनिष्ठा या उद्भूतस्पर्शत्वावच्छिन्नावच्छेदकताकप्रतियोगिता तन्निरूपकभेद आत्मत्वावच्छिन्नप्रतियोगिताकभेद एतदुभयवत्त्वं सत्यन्तार्थ इति नोक्तातिव्याप्तिः न वा गौरवमिति व्याचक्रुः । ननु कालादिमनस्संयोगस्यापि कालविधया ज्ञानकारणत्वात् तदाश्रयकालादावतिव्याप्तिर्दुर्वारैवेति चेदत्र प्राञ्चः । ज्ञानकारणत्वं ज्ञाननिष्ठकालिकसम्बन्धानवच्छिन्नकार्यतानिरूपितकारणतावत्त्वरूपम् । एवं च कालादिनिष्ठकारणतायाः कालिकसंबन्धावच्छिन्नकार्यतानिरूपितत्वान्न दोषः । कालिकसंबन्धेन

**प.** प्रतियोग्यनधिकरणत्वविशेषणदानात् संयोगाभावस्य प्रतियोगिसमानाधिकरणत्वान्नाव्याप्तिः । अथ विशिष्टसत्तावतः जातिमत्त्वं लक्षणमित्यादौ विशिष्टसत्ताभावस्य प्रतियोगिभूतसत्ताधिकरणगुणादिवृत्तित्वात्तस्य लक्षणघटकत्वासंभवेन अन्याभावस्यैव धर्तव्यत्वात् विशिष्टसत्तात्वस्य तत्प्रतियोगितानवच्छेदकत्वात् तदवच्छिन्नसमानाधिकरणाभावाप्रतियोगित्वस्य जातिमत्त्वे सत्त्वादतिव्याप्त्यापत्तिः । न च प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणत्वस्य विवक्षितत्वात् विशिष्टसत्ताभावस्य प्रतियोगितावच्छेदकीभूतविशिष्टसत्तात्वावच्छिन्नप्रतियोग्यनधिकरणस्वशब्दार्थजातिमत्त्वाधिकरणगुणादिवृत्तित्वाद्विशिष्टसत्तात्वस्य प्रतियोगितावच्छेदकत्वेऽपि प्रतियोगितानवच्छेदकत्वाभावान्नातिव्याप्तिरिति वाच्यम् । एवमपि द्रव्यत्वं ज्ञानवतः समवायेन लक्षणमित्यादौ समवायसंबन्धावच्छिन्नज्ञानाभावस्य विषयतया प्रति-

**नी.** णेति । प्राचीनमते विषयेन्द्रियावयवसंयोगस्य प्रत्यक्षकारणतया तदाश्रयस्य इन्द्रियावयवस्य, नवीनमते कालादौ रूपाभावप्रत्यक्षे सन्निकर्षघटकतया कारणीभूतचक्षुस्संयोगाश्रयस्य कालादेश्च वारणाय मनः पदम् । न चात्मान्यत्वे सतीत्यनेनैवात्मनि

**रा.** सुवर्णं पार्थिवं न तैजसमिति उपधेयोपधायकभावावधारणादित्यर्थः । यथाश्रुतं असंगति

**नृ.** कार्यं प्रति तादात्म्येन कालस्य हेतुत्वादित्याहुः । अत्र उक्तरीत्यातिव्याप्तिवारणाय ज्ञानकारणसंयोगाश्रयत्वं ज्ञाननिष्ठकार्यतानिरूपितव्यापारसम्बन्धावच्छिन्नकारणत्वरूपं वाच्यम् । कालादेः तादृशकारणत्वाभावादेव अतिव्याप्त्यप्रसक्तेः मनःपदं व्यर्थम् । आत्मरुधिरादिषु तादृशकारणत्वाभावादेवातिव्याप्त्यप्रसक्तेः सत्यन्तदलं व्यर्थम् । न च आलोकस्य संयोगसंबन्धेन चाक्षुषहेतुतया तत्रातिव्याप्तिरिति वाच्यम् । चाक्षुषे आलोकस्य तत्संयोगस्य च हेतुत्वे मानाभावात । अ यथा चक्षुरादिवत् आलोकस्यापि प्रत्यक्षप्रमाणत्वापत्तेः । तस्मात् आलोकसंयोगस्य हेतुत्वे आलोकस्यान्यथासिद्धत्वमेव आलोकस्य संयोगसंबन्धेनैव हेतुत्वे तादृशसंयोगस्य न व्यापारत्वमित्येव स्वीकार्यम् । एवं च ज्ञाननिष्ठकार्यतानिरूपितव्यापारसंबन्धावच्छिन्नकारणत्वमिन्द्रियसामान्यलक्षणमिति फलितं अतो न कश्चिद्दोष इति प्रतिभाति । अधिकं त्वस्मत्कृतमुक्तावलीप्रभायामनुसन्धेयमिति दिक् । **शरीरेन्द्रियभिन्न इति ।** शरीरेन्द्रिययोः भिन्न इत्यर्थः । शरीरेन्द्रिये भिन्ने यस्येति वा विग्रहः । अन्योन्याभावविशिष्टार्थकभिन्नशब्दयोग एव पञ्चमीविधानात् प्रकृते भिन्नशब्दस्य धर्मविशेषविशिष्टार्थकत्वेन षष्ठीसमासे बहुव्रीहिसमासे वा बाधकाभावात् । तथा च शरीरेन्द्रियवृत्तिधर्मविशिष्टो विषय इत्यर्थः । तात्पर्यवैचित्र्यात् षष्ठ्यर्थवृत्तित्वस्य भिन्नपदार्थैकदेशधर्मेऽन्वयसंभवात् । एवं साक्षात्परम्परासाधारणोपभोगसाधनत्वं विषयतासामान्यं वा विषयसामान्यलक्षणमिति फलितम् । प्राञ्चस्तु केवलविषयत्वस्य शरीरादिसाधारणतया शरीरत्वादिवैयधिकरण्याभावेन परस्परवैयधिकरण्यापन्नानामेव विभाजकधर्मत्वमिति नियमान्न तस्य

**प.** योगिसमानाधिकरणत्वे तस्य लक्षणघटकत्वासंभवेन अन्याभावस्यैव लक्षणघटकत्वात् ज्ञानत्वस्य तत्प्रतियोगितानवच्छेदकत्वात् तदवच्छिन्नसमानाधिकरणाभावाप्रतियोगित्वस्य द्रव्यत्वे सत्त्वादतिव्याप्तिरिति चेन्न । प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणत्वस्य विवक्षणात् द्रव्यत्वम् ज्ञानवतः समवायेन लक्षणमित्यादौ समवायसंबन्धावच्छिन्नज्ञानत्वावच्छिन्नाभावस्य प्रतियोगितावच्छेदकीभूतसमवायसंबन्धेन प्रतियोग्यनधिकरणद्रव्यत्वाधिकरणपृथिव्यादिवृत्तित्वेन ज्ञानत्वस्य प्रतियोगितावच्छेदकत्वेन प्रतियोगितानवच्छेदकत्वाभावान्नातिव्याप्तिः । तथा च प्रतियोगितावच्छेदकसंबन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरण-स्वावच्छेदकसंबन्धावच्छिन्नस्वावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निरूपि-ताभावीयदैशिकविशेषणतासंबन्धावच्छिन्नवृत्तिताश्रयीभूताभावनिरूपितलक्ष्यतावच्छे-

नी. व्यभिचारवारणसंभवे किं गुरुतरशब्देतरोद्भूतविशेषणेनेति वाच्यम् । तथा सति चर्ममनःसंयोगस्य ज्ञानमात्रं प्रति हेतुत्वात् तत्रातिव्याप्तेरित्यलं विस्तरेण । **एवं चेति।** तत्तदर्थस्य शरीरादिसामान्यलक्षणत्वेनेत्यर्थः । ननु गन्धवत्त्वप्रवेशेनैव तल्लक्षणस्य

रा. बाधके इत्यस्य व्यर्थत्वापत्तेः कारणतावच्छेदककोटौ प्रतिबन्धकाभाववैशिष्ट्यस्य अ-

नृ. विभाजकत्वमित्यत आह शरीरेन्द्रियभिन्न इति । शरीरत्वाद्यवच्छिन्नप्रतियोगिताकभेद-द्वयविशिष्टविषयत्ववानित्यर्थः । तथा च तादृशभेदद्वयविशिष्टविषयत्वस्य शरीरेन्द्रिय-साधारणत्वाभावात् नोक्तदोष इत्याहुः । तच्चिन्त्यम् । प्रमाणप्रमेयेत्यादिसूत्रविरो-धापत्त्या तादृशनियमे मानाभावात् । तादृशनियमाङ्गीकारेऽपि प्रशस्तपादाचार्य-कर्तृकशरीरेन्द्रियविषयभेदादितिविभागवाक्यस्य पर्यनुयोगानर्हत्वात् । शरीरेन्द्रियविषय-भेदादिति मूले केवलविषयत्वस्यैव विभाजकत्वेन उक्तत्वेन तादृशभेदद्वयविशिष्टविष-यत्वस्य मूलकारस्य तात्पर्यविषयत्वाच्च । अत एव शरीरेन्द्रिययोः विषयत्वेऽपि भेदेनोक्तिः शिष्यबुद्धिवैशद्यार्थमिति मन्तव्यमिति मुक्तावल्यां विश्वनाथपञ्चाननोक्तमपि सङ्गच्छते । अन्यथा निरुक्तभेदद्वयविशिष्टविषयत्वरूपविभाजकधर्मस्य शरीरादिसाधारण्यापत्ते-रिति दिक् । शरीरादिसामान्यलक्षणान्युक्त्वा पार्थिवशरीरादिलक्षणान्याह । **एवं चेति ।** शरीरादिसामान्यलक्षणेषु ज्ञातेषु चेत्यर्थः । **गन्धवच्छरीरमिति** । गन्धव-न्निष्ठनिरुक्तशरीरत्वं पार्थिवशरीरस्य लक्षणमित्यर्थः । एवमुत्तरत्राप्यूह्यम् । **एवमुत्तरत्रापि तत्तल्लक्षणं बोध्यमिति** । पृथिवीशरीरलक्षणवत् जला-दिशरीरादौ लक्षणं ज्ञेयमित्यर्थः । **पृथिवीशरीरं दर्शयतीति** । पृथिवी-शरीरस्वरूपं दर्शयतीत्यर्थः । एवमुत्तरत्रापि । **मूले शरीरमस्मदादीना-मिति** । पार्थिवस्वरूपमित्यर्थः । अस्मच्छब्देन योनिजपरिग्रहः । आदि-पदेन अयोनिजस्वेदजोद्भिज्जयोः परिग्रहः । न च शरीरस्य पाञ्चभौतिकत्वात् कथं पार्थिवत्वमिति वाच्यम् । अस्मदादिशरीरस्य पृथिवीसमवायिकारणकत्वेन पार्थिवत्वो-

प. दकतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकलक्ष्यतावच्छेदकतावच्छेदकधर्म-वल्लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम् । ननु ज्ञानवतः आत्म-त्वं लक्षणमित्यादौ स्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकज्ञानत्वरूप-लक्ष्यतावच्छेदकतावच्छेदकविशिष्टस्य ज्ञानस्य विषयतासंबन्धेन अधिकरणीभूतघटा-दिवृत्त्यात्मत्वाभावप्रतियोगित्वस्य आत्मत्वे सत्त्वादव्याप्तिः । न च निरुक्ताभाव-प्रतियोगितानवच्छेदकलक्ष्यतावच्छेदकतावच्छेदकविशिष्टलक्ष्यतावच्छेदकाधिकरणत्व-स्य लक्ष्यतावच्छेदकतावच्छेदकसंबन्धेन विवक्षितत्वादात्मत्वस्य समवायेन ज्ञानाधि-करणवृत्त्यभावप्रतियोगित्वाभावान्नाव्याप्तिरिति वाच्यम् । एवमपि पृथिवीलक्षणगन्धे-ऽव्याप्तिः । गन्धस्य कालिकसंबन्धेन निरुक्तलक्ष्यतावच्छेदकाधिकरणवृत्तिगन्धाभाव-प्रतियोगित्वात् । न च निरुक्तलक्ष्यतावच्छेदकाधिकरणवृत्तितायां अभावीयदैशिकवि-

**नी.** सामञ्जस्ये गन्धग्राहकत्वनिवेशनमनुचितम्, एवं च इन्द्रियं गन्धग्राहकम् इति मूलमनुचितमित्याशङ्कां परिजिहीर्षुस्तन्मूलं तत्प्रयोजनकथनपुरःसरतया व्याचष्टे । **गन्ध-**

**रा.** निवेशात् सामग्रीमध्य एव प्रतिबन्धकाभावस्यापि प्रविष्टत्वेन प्रतिबन्धकसत्त्वे कार्या-

**नृ.** पपत्तेः । न च तच्छरीरस्य पृथिवीसमवायिकारणकत्वे किं मानमिति वाच्यम् । स्वेदोष्णादेरत्र कालेऽपि उपलभ्यमानगन्धस्यैव प्रमाणत्वादिति । **इन्द्रियं गन्धग्राहकमिति** । न च घ्राणेन्द्रिये मानाभाव इति वाच्यम् । गन्धसाक्षात्कारो मनोभिन्नेन्द्रियकरणकः मानसेतरसाक्षात्कारत्वात् चाक्षुषवत् इत्यनुमानस्यैव मानत्वात् । एवं गन्धपदस्थाने रसादिपदं निक्षिप्य रसनादीन्यग्रे साधनीयानि । गन्धग्राहकमित्यनेन तस्य पार्थिवत्वे प्रमाणं सूचितम् । तथा हि घ्राणमिन्द्रियं पार्थिवं चाक्षुषनिष्ठलौकिकविषयतासंबन्धावच्छिन्नकार्यतानिरूपितकारणताशून्यत्वे सति घ्राणजनितलौकिकविषयतासंबन्धत्वाच्छिन्नकार्यतानिरूपितद्रव्यत्वसमानाधिकरणकारणतावत्त्वात् वाय्वानीतसुरभिभागवदित्यनुमानात्पृथिवीत्वसिद्धिः । अत्र आत्मादौ व्यभिचारवारणाय विशेष्यदळम् । घ्राणस्यापि कालोपाधिविधया चाक्षुषकारणत्वा दसिद्धिवारणाय सत्यन्तघटककार्यतायां लौकिकविषयतासंबन्धत्वनिवेशः । नवशरावगन्धाभिव्यञ्जकजलादौ व्यभिचारवारणाय विशेषणदळम् । कालादेरपि कालोपाधिविधया घ्राणजकारणत्वाद्व्यभिचारवारणाय विशेष्यदलघटककार्यतायां लौकिकविषयतासंबन्धावच्छिन्नत्वनिवेशः । घ्राणेन्द्रियसन्निकर्षे व्यभिचारवारणाय कारणतायां द्रव्यसामानाधिकरण्यनिवेशः। अनयैव दिशा घ्राणपदस्थाने रसनादिपदानि निक्षिप्य रसनचक्षुस्त्वचां जलत्वादिकं साधनीयमिति दिक् । **नासाग्रवर्तीति** । अग्रावच्छेदेन नासावर्तीत्यर्थः । एवमुत्तरत्रापि । पृथिवीविषयस्वरूपमाह । **विषयो मृत्पाषाणादिरिति** । आदिपदेन पृथिवीमात्रपरिग्रहः । इन्द्रियं गन्धग्राहकमिति मूलस्य लक्षणपरत्वभ्रमनिराकरणाय तादृशमूलप्रतिपाद्यविशेषणानां प्रत्येकप्रयोजनमाह दीपिकायाम् । **गन्धग्राहक-**

**प.** शेषणतासंबन्धावच्छिन्नत्वदानान्नाव्याप्तिरिति वाच्यम् । एवमपि तत्रैवाव्याप्तेः । गन्धस्य निरुक्तलक्ष्यतावच्छेदकाधिकरणवृत्तिगन्धस्नेहोभयाभावपूर्वक्षणविशिष्टगन्धाभावतत्तद्गन्धाभावसंयोगसंबन्धावच्छिन्नगन्धाभावप्रतियोगित्वात् । न च निरुक्तलक्ष्यतावच्छेदकाधिकरणवृत्तिलक्षणतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकाभावप्रतियो - गितानवच्छेदकधर्मावच्छिन्नत्वस्य विवक्षणान्नोक्तदोषावकाश इति वाच्यम् । नीलगोत्वं गोर्लक्षणमित्यादौ नीलगोत्वत्वस्य निरुक्तलक्ष्यतावच्छेदकगोत्वाधिकरणश्वेतगोवृत्त्यभावप्रतियोगितावच्छेदकत्वेऽपि प्रमेयत्वस्य तदनवच्छेदकत्वात् तदवच्छिन्नत्वस्य नीलगोत्वे सत्त्वादतिव्याप्त्यापत्तेः । न च प्रतियोगितानवच्छेदकं यल्लक्षणतावच्छेदकमिति विवक्षणात् प्रमेयत्वस्य तादृशप्रतियोगितानवच्छेदकत्वेऽपि लक्षणतावच्छेदकत्वाभावान्नातिव्याप्तिरिति वाच्यम् । संयोगित्वं द्रव्यस्य लक्षणमित्यादौ

नो. **ग्राहकमिति** । उत्तरत्र 'इन्द्रियं रसग्राहकम्' इत्यादौ । **शीतस्पर्शसमानाधि-**
रा. नुत्पादात् । अथवा असति प्रतिबन्धक इत्यस्य अवधारणादिल्यन्वयः । प्रतिबन्धकस-
नृ. **मितीत्यादिना । अपां लक्षणमाहेति** । क्रमप्राप्तानां इत्यादिः । **मूले शीत-
स्पर्श इत्यादि** । अत्र जलत्वं लक्ष्यतावच्छेदकं सा जातिः जन्यशीतजनकतावच्छे-
दकतया सिद्धजन्यजलमात्रवृत्तिवैजात्यमादाय तदवच्छिन्नजनकतावच्छेदकत्वेन पर-
माणुसाधारणतया सिद्ध्यति । सा च जलान्त्यावयविन्यपि स्वीक्रियते । अन्त्यावय-
विनोऽनित्यत्वेन नित्यस्येत्यादिनियमभङ्गाभावात् । अनयैव दिशा तेजस्त्वादि-
जातिसिद्धिरप्यूह्या । शीतत्वं स्पर्शत्वव्याप्यजातिविशेषः प्रत्यक्षसिद्धः । तदव-
च्छिन्नवत्त्वमेव लक्षणम् । न तु स्पर्शत्वस्यापि प्रवेशः, व्यर्थत्वात् । परं तु
शीतत्वं स्पर्शत्वव्याप्यमिति स्फुटीकरणाय स्पर्शपदमुपात्तमिति ध्येयम् ।
**दीपिकायामुत्पन्नविनष्टजल इति** । द्वितीयक्षणवृत्तिध्वंसप्रतियोगिजलमि-
त्यर्थः । **द्रव्यत्वापरजातीति** । द्रव्यत्वव्याप्यजातिरित्यर्थः । अत्र जातेः
द्रव्यत्वव्याप्यत्वेन न निवेशः मूर्तत्वजात्यभ्युपगमपक्षे तद्दोषतादवस्थ्यात् न तस्य साक्षात्
तद्व्याप्यत्वरूपत्वं अतिगौरवापत्तेः । किं तु पृथिव्यसमवेतत्वेन निवेशः । एवं च
पृथिव्यसमवेतशीतस्पर्शसमानाधिकरणजातिमत्त्वं लक्षणमिति फलितम् । अतो न
कश्चिद्दोषः इति बोध्यम् । यथाश्रुतपरिष्कृतलक्षणस्य पृथिव्यादावतिव्याप्तिसंपादकभ्रमं
निराकरोति । **शीतं शिलातलमित्यादाविति** । अत्र सप्तम्यर्थो निरूपितत्वम् ।
तस्य भानपदार्थे विषयत्वेऽन्वयः । आदिना शीतं सुवर्णं शीतो वायुरिति प्रतीति
परिग्रहः । **जलसंबन्धादेवेति** । जलरूपोपाधिसंबन्धवशादेवेत्यर्थः । एवकारेण
तादृशविषयत्वे स्वाभाविकत्वव्यवच्छेदः । तथा च शीतं शिलातलमित्यादिप्रतीतेः
जलरूपोपाधिसंयोगसत्तानियतसत्ताकत्वात् जलनिष्ठशीतस्य स्वसमवायिसंयोगसं-
बन्धेन तादृशप्रतीतिविषयत्वाभ्युपगमेनैव उपपत्तेः तत्र समवायेन शीतस्पर्शसाधक-
प. संयोगत्वस्य निरुक्तलक्ष्यतावच्छेदकद्रव्यत्वाधिकरणवृत्तिसंयोगाभावप्रतियोगितावच्छे-
दकत्वादव्याप्त्यापत्तेरिति चेन्न । निरुक्तलक्ष्यतावच्छेदकाधिकरणवृत्तितायां व्याप्य-
वृत्तित्वविशेषणदानात् संयोगाभावस्य व्याप्यवृत्तित्वाभावान्नाव्याप्तिः । तथा च
प्रतियोगितावच्छेदकसंबन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नानधिकरणस्वावच्छे-
दकसंबन्धावच्छिन्नस्वावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निरूपिताभावीय-
दैशिकविशेषणतासंबन्धावच्छिन्नवृत्तिताश्रयीभूतलक्ष्यतावच्छेदकतावच्छेदकसंबन्धाव-
च्छिन्नप्रतियोगिताकाभावप्रतियोगितानवच्छेदकलक्ष्यतावच्छेदकतावच्छेदकविशिष्टल-
क्ष्यतावच्छेदकनिरूपितलक्ष्यतावच्छेदकतावच्छेदकसंबन्धावच्छिन्नाधिकरणतावन्निरू-
पिताभावीयदैशिकविशेषणतासंबन्धावच्छिन्नव्याप्यवृत्तिताकाभावनिरूपितलक्षणताव-
च्छेदकसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकलक्षणतावच्छेदकधर्मावच्छिन्नत्वमेव ल-

द्रवत्वनाशदर्शनेन , जलमध्यस्थघृतादौ तन्नाशादर्शनेन च असति प्रतिबन्धके पार्थिवद्रवत्वनाशाग्निसंयोगयोः कार्यकारणभावावधारणात्सुवर्णस्य अत्यन्तानलसंयोगे सत्यनुच्छिद्यमानद्रवत्वाधिकरणत्वेन पार्थिवत्वाऽनुपपत्तेः पीतद्रव्यद्रवत्वनाशप्रतिबन्धकतया द्रवद्रव्यान्तरसिद्धौ नैमित्तिकद्रवत्वाधिकरणतया जलत्वानुपपत्तेः रूपवत्तया वाय्वादिष्वनन्तर्भावात्तैजस्त्वसिद्धिः। तस्योष्णस्पर्शभास्वररूपयोरुपष्टम्भकपार्थिवरूपस्पर्शाभ्यां प्रतिबन्धादनुपलब्धिः । तस्मात् सुवर्णं तैजसमिति सिद्धम् ।

---

नी. **करणेति** । तत्र विशेषणप्रयोजनं पूर्वोक्तरीत्या ऊह्यम् । जलत्वजातिसिद्धिस्तु स्नेहजनकतावच्छेदकतयेति ध्येयम् । **अन्यत्सर्वं पूर्वरीत्येति** । नित्यत्वादिकं जलशरीरादिलक्षणं च गन्धवत्त्वस्थाने शीतस्पर्शवत्त्वं निवेश्य पृथिवीनिरूपणोक्तरी-

रा. त्वदशायां नियतान्वयज्ञानासंभवेन कार्यकारणभावनिश्चयासंभवादिति भावः ।

नृ. प्रमाणाभावात् न तत्रातिव्याप्तिरिति भावः । **अन्यत्सर्वमिति** । नित्यत्वादिस्वरूपं जलीयशरीरादीनां लक्षणं चेत्यर्थः । **पूर्वरीत्या व्याख्येयमिति** । पृथिव्या इवोह्यमित्यर्थः । ननु जलशरीरसत्त्वे चक्षुषा कुतो न गृह्यत इत्यत आह । **मूले वरुणलोक इति** । तथा च दूरस्थत्वान्न प्रत्यक्षविषय इति भावः । न च तच्छरीरस्य जलत्वे मानाभाव इति वाच्यम् । जलत्वं शरीरसमवेतं स्वसमवेतत्वस्वसमवेतसमवेतत्वोभयसंबन्धेन परमाणुविशिष्टत्वे सति जातित्वात् पृथिवीत्ववत् इत्यनुमानस्यैव प्रमाणत्वात् । अनयैव दिशा तेजस्त्वादिजातेरपि शरीरवृत्तित्वमनुमेयम् । जलादिशरीराणां ताल्वादिवाग्व्यापाराभावेऽपि पृथिवीत्वाभावेऽपि पार्थिवभागोपष्टम्भात् उपभोगक्षमत्वम् । जलादिसमवायिकारणकत्वात् जलत्वादिकमिति हृदयम् । **तेजसो**

प. क्ष्यतावच्छेदकसमनियतत्वमिति लक्षणलक्षणमवधेयम इति दिक् । ननु सप्रयोजनं हि लक्षणम् । प्रयोजनञ्च व्यावृत्तिरेव । व्यवहारस्यान्यथासिद्धत्वाच्छब्दप्रयोगरूपस्य व्यवहारस्य कण्ठताल्वादिव्यापारेणापि संभवात् । सयुक्तिकं चैतत् । आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रुत्या कृतात्मश्रवणस्य मनसः अहंकारबोध्यत्वेन [!] सच्चिदात्मनः इतराभिन्नत्वेनानुमितिः । सा च पूर्वोक्तासाधारणधर्मसाध्येति व्यावृत्तेः मुख्यप्रयोजनतयाश्रितत्वेन सैव प्रयोजनमिति अवसीयते । न तु व्यवहारः अन्यथासिद्धत्वात् । न च आत्मनः इतराभिन्नत्वेन अनुमितेर्मुख्यत्वेऽपि भेदप्रतियोगीतरपदार्थानां परस्परभेदानुमितेर्न मुख्यत्वमिति वाच्यम् । यतः दहनगुञ्जापुञ्जयोः परस्परं भेदविवेकशून्यानां दहनगुञ्जापुञ्जाविति निश्चय इव इतरभेदप्रतियोगिनां परस्परं भेदाज्ञाने परस्परं निश्चयो न संभवति । तदभावे च आत्मनः

नी. त्येत्यर्थः । एवमग्रेऽप्यूह्यम् । **मूले अबिन्धनमिति** । अद्भिः इन्धनं दीपनं यस्य तदित्यर्थः । **भुक्तस्येति** । भुक्तस्यौदनादेः परिणामः परिपाकः, तत्र हेतुरित्यर्थः । **आकरजमिति** । आकरः खनिः तत्र जातमित्यर्थः । सुवर्णस्य तैजसत्वं व्यवस्थापयितुं शङ्कते ।

रा. **पार्थिवत्वानुपपत्तेरिति** । सुवर्णं न पार्थिवं अत्यन्तानलसंयोगे सत्यनुच्छिद्यमा-

नृ. **लक्षणमाहेति** । क्रमप्राप्तस्येत्यादिः । अत्राप्युत्पन्नविनष्टतेजस्यव्याप्तिवारणाय उष्णसमानाधिकरणजलासमवेतजातिमत्त्वं उष्णस्पर्शवत्त्वमित्यनेन विवक्षणीयम् । एवमेव वायुलक्षणमपि परिष्करणीयम् । अन्यथा उत्पन्नविनष्टवायावव्याप्तिरिति बोध्यम् । यथाश्रुतपरिष्कृततेजोलक्षणस्य जलादावतिव्याप्तिशङ्कामपि तत्रातिव्याप्तिसंपादकप्रतीतेः परम्परासंबन्धेन उष्णस्पर्शविषयकत्वव्यवस्थापनेन परिहरति । **उष्णं जलमित्यादिप्रतीतेरिति** । आदिना उष्णो वायुः उष्णमयोगोलकमित्यादिप्रतीतेः परिग्रहः । **तेजस्संबन्धानुविधायित्वादिति** । तेजोरूपोपाधिसंयोगसत्तानियतसत्ताकत्वादित्यर्थः । **नातिव्याप्तिरिति** । तथा च तादृशप्रतीतेः सोपाधिकत्वेन लोहितः स्फटिक इतिवत् स्वसमवायिसंयोगसंबन्धेन उपाधिगतोष्णस्पर्शविषयत्वेनैव उपपत्तेः जलादौ समवायेनोष्णस्पर्शसाधकप्रमाणाभावेन न तत्रातिव्याप्तिरिति भावः । **मूले विषयश्चतुर्विध इति** । प्रकारचतुष्टयान्यतमविशिष्टस्तेजोविषय इत्यर्थः । **भौमेत्यादि** । भूमौ भवं भौमं दिवि भवं दिव्यं उदरे भवं औदर्यं आकरे जायत इत्याकरजं इति व्युत्पत्तिः बोध्या । भौमं दर्शयति । **वह्न्यादीति** । आदिना प्रदीपादेः परिग्रहः । इदं तु काष्ठतैलादिरूपपार्थिवेन्धनकमिति बोध्यम् । दिव्यं दर्शयति । **अबिन्धनमित्यादि** । दिव्यं विद्युदादि अबिन्धनमिति योजना । आपः इन्धनं उद्दीपकं यस्येत्यर्थः । आदिना उल्काबडवानलपरिग्रहः । औदर्यं दर्शयति । **भुक्त-**

प. इतरभिन्नत्वेनानुमितिरेव नोत्पद्येत । तस्मात् व्यावृत्तेः लक्षणैकसाध्यतया लक्षणस्य व्यावृत्तिरेव प्रयोजनमित्येवं च व्यावहारिकस्य अतथात्वेनालक्ष्यतया तत्र चान्यत्र चातिप्रसक्तिं तत्समाधानञ्चाह । ***व्यावर्तकस्यैवेत्यादिना** । एवकारेण व्यावहारिकव्यवच्छेदः । लक्षणत्वे उक्तासाधारणधर्मत्वस्य लक्षणत्व इत्यर्थः । यद्वा व्यावर्तकस्यैव लक्षणत्वव्यावर्तकस्यैव उक्तासाधारणधर्मत्वस्य लक्षणत्व इत्यर्थः । तथा च व्यावहारिकस्यालक्ष्यतया तत्रातिव्याप्तिरिति भावः । †**व्यावृत्ताविति** । अतिव्याप्तिवारणाय तद्भिन्नत्वं धर्मविशेषणं देयमित्यन्वयः । व्यावर्तकस्य व्यावृत्तिघटिततया प्रथमोपस्थितत्वेन व्यावृत्तेः प्रथममुक्तिः । यद्यपि व्यावहारिकत्वेन उभयोः संग्रहः संभवति । तथापि क्वचिद्व्यावृत्तेरपि व्यावृत्तिसाधकत्वात् एतन्मात्रस्फोरणाय पृथगुक्तिः । तथा च पृथिव्यां इतरत्वावच्छिन्नप्रतियोगिताकभेदे साधिते सिषाधयि-

---

*† अनयोर्मूलं १२१ पृष्ठे द्रष्टव्यम् ।

नी. **दीपिकायां नन्विति** । पार्थिवत्वसाधकं पीतत्वहेतुमुक्त्वा तैजसत्वाभावसाधकं हेतुमाह। **गुरुत्वादिति** । एतेन सुवर्णस्य तेजसः विजातीयरूपं स्वीक्रियते। 'पीतं सुवर्णं' इत्यबाधितप्रतीतिबलात् । एवं च तैजसत्वस्य निर्बाधतया पृथिवीत्वं न सिध्य-

रा. नद्रवत्वाधिकरणत्वादित्यनुमानं पर्यवसितम् । अत्र च पूर्वोक्तहेतोः सत्प्रतिपक्षत्वेन

नृ. **स्येति** । भुक्तान्नादेः परिग्रहः । **परिणामहेतुरिति** । रक्तवसामांसमलधातुरूपेण निष्पत्तौ निमित्तकारणमित्यर्थः। जाठररूपमिति यावत् । आकरजं दर्शयति । **आकरजमिति** । आकरः खनिः तत्र जातमित्यर्थः । **सुवर्णादीति** । आदिना रजतादिपरिग्रहः । तत्र सुवर्णस्य तैजसत्व व्यवस्थापयितु आदावाक्षिपति । **दीपिकायां नन्वित्यादिना** । **पीतत्वात् गुरुत्वादिति** । ननु पार्थिवत्वसाधने पीतत्वस्यादुष्टतया पार्थिवत्वव्यभिचारिगुरुत्वरूपहेत्वन्तरप्रणयने बीजाभाव इति चेत् अत्र प्राञ्चः । गुरुत्वस्य हेत्वन्तरत्वसूचकवाकाराद्यभावादेकमेव पीतत्वविशिष्टं गुरुत्वं हेतुरिति नोक्तदोष इत्याहुः । तन्न । केवलगुरुत्वस्य व्यभिचारित्वात् तद्वारणाय तत्र समवायघटितसामानाधिकरण्यसम्बन्धेन पीतत्वविशेषणस्यावश्यकत्वे समवायसम्बन्धेन तस्यैव हेतुत्वौचित्येन विशेष्यदलस्य व्यर्थत्वात् । अन्यथा समवायघटितसामानाधिकरण्येन पृथिवीत्वविशिष्टद्रव्यत्वादेरपि गन्धानुमापकत्वापत्तेः । न चेष्टापत्तिः । व्यर्थविशेष्यदलघटितार्थप्रतिपादकहेतुवाक्यघटितन्यायस्यासन्न्यायत्वेन मणिकारप्रभृतिभिः उपन्यस्तत्वेन कथकसंप्रदायविरोधापत्तेः । प्राचीनैकदेशिनस्तु पीतत्वं पार्थिवत्वसाधकं, गुरुत्वं तु तेजोभिन्नत्वसाधकम् । न च द्वितीयानुमानं व्यर्थमिति वाच्यम् । परमतनिराकरणपूर्वकस्वसिद्धान्तकथनस्यावश्यकतया पराभिमततैजसत्वाभावसाधनाय तस्यावश्यकत्वादित्याहुः । तदसत् । सुवर्णस्य पार्थिवत्वसाधनेनैवार्थात् तैजसत्वाभावनिर्णये अनुमानान्तरप्रणयनवैयर्थ्यादुपस्थि-

प. षया तेनापि तद्भेदसाधनं संभवतीति । ननु तर्हि नातिव्याप्तिनिर्णयः संभवति । सर्वत्रैव उक्तसंभावनासत्त्वात् तथा चातिव्याप्तिसन्देहवारणाय विशेषणदानानौचित्यात् ततो यत्रातिव्याप्तिनिर्णयः तादृशस्य लक्षणमाह । ***अभिधेयत्वादाविति** । आदिना प्रमेयत्वादिपरिग्रहः । तथा चाभिधेयत्वादीनामपि लक्ष्यतावच्छेदकीभूतपदार्थत्वसमनियतत्वेनातिव्याप्तिरिति भावः। †**धर्मविशेषणमिति** असाधारणेत्यादिः । अत्र व्यावर्तकत्वं च व्यावृत्तिविषयकानुमितिजनकलिङ्गपरामर्शविषयत्वं बोध्यम् । ननु इतरभेदो विशेषणं विशेष्यं वा । नाद्यः पृथिव्यां इतरभेद इति असङ्ग्रहापत्तेः । नान्त्यः इतरभेदवती पृथिवीति अनुमित्यसङ्ग्रहापत्तेः इति चेन्नैवम् । पक्षनिष्ठोद्देश्यतानिरूपितेतरभेदनिष्ठविधेयताकानुमितिजनकेत्यादिविवक्षणात्। उभयत्रापि साध्ये विधेयताख्यविषयतायाः सत्त्वात् । अथैवमपि पक्षविशेषणकपरामर्श-

* मूलं १२१ पृष्ठे । † मूलं १२६ पृष्ठे ।

नी. तीति कस्यचिद्भ्रान्तिर्निरस्ता । गुरुत्वस्याप्रत्यक्षत्वेन तथा वक्तुमशक्यत्वादिति दिक्। सुवर्णस्य पीतिमगुरुत्वाश्रयतोऽतिरिक्तत्वं व्यवस्थापयितुमनुमानेऽप्रयोजकशङ्कावारणाय कार्यकारणभावमनुकूलतर्कं व्यवस्थापयति । **अत्यन्तानलेति** । सुवर्णस्येत्यादिः ।

रा. परस्परविरोधान्न काप्यनुमितिरिति न सुवर्णे पार्थिवत्वव्यवच्छेदसिद्धिः । अतो न सुव-

नृ. र्णत्वेन हेतुनैवोभयसाधनसंभवाच्च । वस्तुतस्तु सुवर्णं पार्थिवमित्याद्यनुमाने सुवर्णत्वं न पक्षतावच्छेदकम् । तथा सति रजतस्य पक्षतावच्छेदकानाक्रान्ततया तत्र पार्थिवत्वासिद्धिप्रसङ्गात् । तदर्थमनुमानान्तरप्रणयने गौरवाच्च । नापि रजतसाधारणहिरण्यत्वं पक्षतावच्छेदकम् । तथा सति पक्षतावच्छेदकाश्रयरजते पीतत्वरूपहेत्वभावेन भागासिद्धिप्रसङ्गात् । तस्मात् पार्थिवत्वसाधने आक्षेप्तुः न निर्भरः । सुवर्णादौ पार्थिवत्वाभावस्य पूर्वं केनाप्यप्रतिपादितत्वेनानुक्तार्थोपर्याक्षिपासम्भवात् । किन्तु साधारणप्रतिज्ञावाक्यप्रतिपाद्यतेजोभिन्नत्वसाधन एव पूर्वं सुवर्णादौ तैजसत्वस्य ग्रन्थकृता प्रतिपादितत्वात् । तदसहमानस्याक्षेपसंभवात् । अत एव तस्मात् सुवर्णं तैजसमिति सिद्धान्त उपसंहारोऽपि सङ्गच्छते । तथा च सुवर्णत्वावच्छेदेन तेजोभिन्नत्वसाधने पीतत्वरूपहेतोरदुष्टत्वेऽपि हिरण्यत्वावच्छेदेन तेजोभिन्नत्वसाधनं भागासिद्धिग्रस्तत्वात् पीतत्वलिङ्गेन न संभवतीति गुरुत्वरूपहेत्वन्तरानुसरणमिति प्रतिभाति । अत्र सुवर्णं तैजसं पृथिव्याद्यष्टकान्यत्वे सति द्रव्यत्वादिति परिशेषानुमानेन सुवर्णस्य तैजसत्वं साधयितुं हेतुघटकविशेष्यासिद्धिसत्यन्तासिद्धिनिराकरणाय पृथिव्यादिभिन्नत्वमपि साधनीयम् । तत्रापि द्रव्यत्वपृथिवीभिन्नत्वसाधकहेतोः स्वरूपासिद्धिशङ्कापरिहारायादावन्वयव्यतिरेकौ दर्शयति । **अत्यन्तानलेति** । विजातीयाग्निसंयोगसमय इत्यर्थः । **घृतादाविति** । आदिना जत्वादिपरिग्रहः । **द्रवत्वनाशदर्शनेनेति** । द्रवत्वनाशस्य अनुभवसिद्धत्वेनेत्यर्थः । एतेन पार्थिवद्रवत्वनाशवि-

प. विषयत्वं पक्षविशेष्यकपरामर्शविषयत्वं वा । नाद्यः इतरभेदव्याप्यगन्धवतीत्यादिपरामर्शासङ्ग्रहापत्तेः । न द्वितीयः । इतरभेदव्याप्यगन्धः पृथिव्यामित्यादिपरामर्शासंग्रहापत्तेरिति चेन्न । तादृशानुमितिजनकपक्षनिष्ठविषयतानिरूपितहेतुनिष्ठविषयतानिरूपितव्याप्तिनिष्ठविषयताशालि लिङ्गपरामर्शत्वेनोभयसङ्ग्रहात् । न चैवमपि तादृशपरामर्शविषयत्वस्य व्याप्त्यादावपि सत्त्वात् अतिप्रसक्तिरिति वाच्यम् । परामर्शीयपक्षनिष्ठविषयतानिरूपितत्वावच्छिन्नव्याप्तिनिष्ठविषयतानिरूपितविषयताश्रयत्वस्य विवक्षितत्वात् । तादृशविषयता हेतुनिष्ठेति अन्यत्र विस्तरः । ननु व्यवहारो न शब्दप्रयोगः, किन्तु तज्जन्यतद्धर्मवति तद्धर्मप्रकारकनिर्णयः । स चासाधारणधर्मज्ञानं विना न संभवतीति तदपि तत्प्रयोजनमेवेत्यत आह । ***व्यवहारस्यापीति** । अपिना व्यावृत्तेः समुच्चयः । †**न देयमिति** । उक्तस्थले अतिव्याप्तिवारणाय तत्त-

*† अनयोर्मूलं १२७ पृष्ठे द्रष्टव्यम् ।

**नी.** अनुमानप्रयोगास्त्वित्थमवसेयः ' सुवर्णमपार्थिवं असति प्रतिबन्धके अत्यन्तानलसंयोगे सति अनुच्छिद्यमानद्रवत्वाधिकरणत्वात् यन्नैवं तन्नैवम् । यथा पृथिवी ' जलमध्यस्थघृतादौ व्यभिचारवारणाय ' असति प्रतिबन्धक ' इति । अग्निसंयोगासमानाधिकरणद्रवत्व-

**रा.** र्णस्य तैजसत्वमित्य शङ्कां निराकर्तुमाह । **तस्मादिति** । अयं भावः। पूर्वोक्तहेतुभ्यां पी-

**नृ.** जातीयतेजस्संयोगयोः कार्यकारणभावग्राहकान्वयसहचारसत्त्वमाविष्कृतम् । **जलमध्यस्थ इति** । विजातीयाग्निसंयोगे सत्यपीति शेषः । **नाशादर्शनेनेति** । द्रवत्वनाशस्यानुभवसिद्धत्वाभावेनेत्यर्थः । एतेन पृथिवीद्रवत्वनाशं प्रति द्रवद्रव्यान्तरस्य संयोगेन प्रतिबन्धकत्वमाविष्कृतम् । **असति प्रतिबन्धक इति** । प्रतिबन्धकाभावकाल इत्यर्थः । **कार्यकारणभावावधारणादिति** । अन्वयव्यतिरेकज्ञानसहकृतप्रत्यक्षप्रमाणेनेत्यादिः । कार्यकारणभावस्य प्रत्यक्षात्मकनिर्णयविषयत्वादित्यर्थः । तथा च पृथिवीनिष्ठदैशिकविशेषणतासंबन्धेन द्रवत्वनाशं प्रति एककालावच्छेद्यं यत्समवायदैशिकविशेषणत्वोभयघटितं सामानाधिकरण्यं तेन संबन्धेन पृथिवीभिन्नद्रवद्रव्यत्वावच्छिन्नप्रतियोगिताकाभावविशिष्टविजातीयतेजस्संयोगस्य फलोपधायकत्वेन प्रत्यक्षप्रमाणसिद्धत्वादिति समुदितवाक्यार्थः । पक्षे हेतुसत्त्वमुपपादयति । **सुवर्णस्येति** । पीतिमाश्रयस्येत्यर्थः । **अत्यन्ताग्निसंयोगे सतीति** । समवायसंबन्धेन विजातीयाग्निसंयोगे सतीत्यर्थः । सतिसप्तम्याः एककालावच्छेद्यसामानाधिकरण्यमर्थः । तस्यानुच्छिद्यमानपदार्थैकदेशनाशेऽन्वयः । **अनुच्छिद्यमानद्रवत्वाधिकरणत्वेनेति** । नाशाप्रतियोगिद्रवत्ववत्त्वेनेत्यर्थः । न त्वधिकरणत्वस्यापि तच्छरीरे प्रवेशः व्यर्थत्वात् । किन्तु तादृशद्रवत्वस्य समवायेन हेतुत्वलाभायाधिकरणत्वपदम् । **पार्थिवत्वानुपपत्तेरिति** । पीतिमाश्रयनिष्ठद्रवत्वनाशप्रतिबन्धकस्येत्यादिः । पृथिवीस्वरूपत्वासंभवादित्यर्थः । तस्यापि पृथिवीस्वरूपत्वे विजातीयाग्नि-

**प.** च्छिन्नत्वम् धर्मविशेषणं न देयमित्यनुपङ्गेण योजना बोध्या । अत्र व्यवहारस्यापि लक्षणप्रयोजनत्वे इत्यपिकारादिना अस्वरसः सूचितः । न च तादृशनिर्णयत्वस्य न जन्यतावच्छेदकत्वं अर्थसमाजग्रस्तत्वात् इत्यन्यत्र विस्तरः । ननु अभिधेयत्वादीनां व्यावहारिकत्वेऽपि व्यावृत्तेः व्यावहारिकत्वाभावात्तत्रातिव्याप्तिस्तत्त्वस्येत्यत आह । ***व्यावृत्तेरपीति** । अपिना अभिधेयत्वादिसमुच्चयः । केचित्तु-व्यावर्तकस्यैव लक्षणत्वे इतरभेदानुमितिजनकस्यैव लक्षणत्वेन व्यवहार्यत्वे लक्ष्यत्वेन व्यवहार्यं यत् तद्व्यावर्तकमित्यायातम । व्यावर्तकत्वं नाम इतरभेदानुमितिजनकत्वं, तल्लक्षण लक्षणस्य लक्ष्यतावच्छेदकमित्यायातम् । ननु इतरभेदानुमितिजनकत्वं नाम लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदावच्छिन्नप्रतियोगिताकभेदानुमितिजनकत्वं, ल यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदाश्रयनिष्ठतत्तद्धर्मावच्छिन्नप्रतियोगिताकभेदानुमि-

* अस्य मूलं १२७ पृष्ठे द्रष्टव्यम् ।

नी. वति घृतादौ व्यभिचारवारणाय अत्यन्तानलसंयोगे सतीति । **द्रवद्रव्यान्तरासिद्धाविति** । अत्यन्तानलसंयोगी पीतिमाश्रयः द्रवत्वनाशप्रतिबन्धकद्रवद्रव्यान्तरसंयुक्तः अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वे सति गुरुत्वाज्जलमध्य-

रा. तिमगुरुत्वाश्रयस्य सुवर्णस्य पार्थिवत्वसिद्धावपि अत्यन्तानलसंयोगे तदीयनाशादर्श-

नृ. संयोगेन तन्निष्ठद्रवत्वस्यापि नाशात् वाय्वादिवत् पीतिमाश्रयनिष्ठद्रवत्वनाशप्रतिबन्धकत्वानुपपत्तिरित्याशयः । तथा च विजातीयाग्निसंयोगविशिष्टपीतिमाश्रयत्वावच्छिन्नं द्रवत्वनाशप्रतिबन्धकविजातीयद्रवद्रव्यसंयुक्तं एककालावच्छिन्नसामानाधिकरण्यसंबन्धेन विजातीयाग्निसंयोगविशिष्टनाशाप्रतियोगिद्रवत्ववत्त्वात् जलमध्यस्थघृतवदित्यनुमानात् पृथिवीभिन्नद्रव्यसिद्धिरिति भावः । अत्र यद्यपि द्रवत्वनाशप्रतिबन्धकद्रव्यसंयुक्तत्वमेव साध्यमुचितं सजातीयस्य प्रतिबन्धकत्वासंभवात् वाय्वादेरिवाद्रवद्रव्यस्य प्रतिबन्धकत्वासंभवाच्च । तथाप्युक्तार्थस्फोरणाय साध्यघटकद्रव्ये विजातीयत्वद्रवत्वयोर्निवेश इति ध्येयम् । उक्तार्थं उपसंहरति । **तस्मादिति** । निरुक्तलिङ्गादित्यर्थः । **पीतद्रव्यद्रवत्वनाशप्रतिबन्धकतयेति** । पीतरूपसमवायिनिष्ठद्रवत्वनाशप्रतिबन्धकतयेत्यर्थः । **द्रवद्रव्यान्तरसिद्धाविति** । वस्तुतः द्रवत्वाश्रयं पृथिवीभिन्नं च यद्द्रव्यं तदनुमितावित्यर्थः । एतेन परिशेषानुमाने विशेष्यासिद्धिः सत्यन्तघटकपृथिवीभिन्नत्वासिद्धिश्च परास्ता । सत्यन्तघटकजलभिन्नत्वं साधयति । **नैमित्तिकेति** । समवायेन नैमित्तिकद्रवत्ववत्त्वेनेत्यर्थः । **जलत्वानुपपत्तेरिति** । तथा च पीतरूपाश्रयनिष्ठद्रवत्वनाशप्रतिबन्धकद्रवद्रव्यं न जलं समवायेन नैमित्तिकद्रवत्ववत्त्वात् घृतवदित्यनुमानात् जलभिन्नत्वसिद्धिरिति भावः । **रूपवत्तयेति** । रूपवत्तयापीत्यर्थः । अपिना नैमित्तिकद्रवत्वं समुच्चीयते । वाय्वादिवत् रूपवद्भिन्नद्रव्यस्याप्रतिबन्धकत्वेन तद्वदेतस्यापि प्रतिबन्धकत्वानुपपत्त्या रूपवत्त्वस्वीकारस्यावश्यकत्वादिति भावः । **वाय्वादिष्वनन्तर्भावादिति** । वाय्वादिस्वरूपत्वासंभवादित्यर्थः । तथा

प. तिजनकत्वं वा । नाद्यः पृथिवी पृथिवीभिन्नभिन्ना गन्धवत्त्वादित्यत्र पृथिवीभिन्नजलादिनिष्ठप्रतियोगितायां जलत्वादीनां अवच्छेदकत्वं न संभवति । तथा हि । पृथिवीभिन्नेषु सर्वत्र वर्तमानायां प्रतियोगितायां प्रत्येकं जलादिवृत्तीनां जलत्वादीनामवच्छेदकत्वासंभवात् । किन्तु पृथिवीत्वावच्छिन्नभेदस्य पृथिवीभिन्ने सर्वत्र सत्त्वेन तस्यैवावच्छेदकत्वमङ्गीकार्यम् । एवं च पृथिवी पृथिवीभिन्नभिन्ना इत्याकारकानुमितेर्जायमानतया पृथिवीभिन्नभिन्ना वा न वेति सन्देहाजननेऽपि जलादिभिन्ना वा न वेति सन्देहानिवृत्तेः । न द्वितीयः । जलादिभिन्ना वा न वेति सन्देहस्याजायमानत्वेऽपि अभिधेयत्वादावतिव्याप्तिकथनमसङ्गतमेव स्यात् । लक्ष्यतावच्छेदकपदार्थत्वावच्छिन्नभेदाप्रसिद्ध्या तदाश्रयनिष्ठतत्तद्धर्मावच्छिन्नभेदानुमितिजनकत्वरूपलक्ष्यतावच्छेदकस्याप्रसिद्ध्या तदभाववति लक्षणसत्त्वादतिव्याप्तिरेवेति वक्तुमशक्यत्वात् । न च सामान्यतो लक्ष्यताव-

नी. स्थघृतादिवत् इत्यनुमानेन तत्सिद्धिर्द्रष्टव्या । जलादिकमादायार्थान्तरपर्यवसानं वारयति । **नैमित्तिकेति ।** ननु उष्णस्पर्शभास्वररूपयोरुपलब्ध्यभावेन सुवर्णस्य तैतसत्वमनुपपन्नमित्यत आह । **तस्येति । प्रतिबन्धादिति ।** दोषविधयेत्यादिः ।

रा. नेन तन्नाशप्रतिबन्धकं तदुपष्टम्भकविजातीयद्रव्यं अवश्यं कल्पनीयम् । तदेव तेजो-

नृ. च तादृशद्रव्यं वायुत्वाद्यवच्छिन्नप्रतियोगिताकभेदषट्कवत् नैमित्तिकद्रवत्ववत्त्वात् रूपवत्त्वाच्च घृतादिवत् इत्यनुमानात् तत्सिद्धिरिति भावः । यद्यप्येकेनैव नैमित्तिकद्रवत्वलिङ्गेन जलवाय्वादिप्रतियोगिकभेदसप्तकसाधनसंभवे रूपवत्त्वेन भेदषट्कसाधनमनुचितम् । तथापि रूपवत्त्वेन भेदषट्कसाधने दीपिकाकारस्य न निर्भरः । किन्तु अरूपिद्रव्यस्याप्रतिबन्धकत्वाद्रूपवत्त्वमप्यङ्गीकार्यमिति स्फोरणाय रूपवत्त्वहेतुना तत्साधितम् । असिद्धस्य हेतुत्वासंभवेन तस्य हेतुत्वकथनेन सिद्धत्वलाभसंभवात् इत्याशयः । **तैजसत्वसिद्धिरिति ।** प्रतिबन्धकद्रवद्रव्यस्येत्यादिः । निरुक्तपरिशेषानुमानात् तैजसत्वसिद्धिरित्यर्थः । ननु तस्य तैजसत्वे तत्र उष्णस्पर्शभास्वररूपयोः कुतो नोपलब्धिरत आह । **तस्येति ।** अथवा ननु प्रतिबन्धकद्रव्यं न तैजसं उष्णस्पर्शाभावात् भास्वररूपाभावाच्च घटादिवदिति प्रतिपक्षानुमानसंभवात् नोक्तानुमानात् तैजसत्वसिद्धिरिति आशङ्कां हेत्वोः स्वरूपासिद्धत्वप्रदर्शनेन परिहरति । **तस्येति ।** प्रतिबन्धकद्रव्यस्येत्यर्थः । **उपष्टम्भकेति ।** अभिभावकेत्यर्थः । **प्रतिबन्धादिति ।** अभिभूतत्वादित्यर्थः । **अनुपलब्धिरिति ।** प्रत्यक्षाविषयत्वमित्यर्थः । उपसंहरति । **तस्मादिति ।** प्रतिबन्धकद्रव्यस्य उष्णस्पर्शभास्वररूपवत्त्वे बाधकाभावादित्यर्थः । तथा च प्रकृतहेत्वोः स्वरूपासिद्धत्वेन प्रतिपक्षरूपत्वासंभवात् निरुक्तानुमानात् तत्र तेजस्त्वसिद्धिः निराबाधेति भावः । **सुवर्णं तैजसमिति ।** तेजस्त्वेन निर्णीतप्रतिबन्धकद्रव्यमेव सुवर्णं रजतं हिरण्यमिति विशेषसामान्यशब्दैः व्यवह्रियत इत्यर्थः । एतेन पूर्वं तैजसत्वसिद्धिरित्यु-

प. च्छेदकावच्छिन्नप्रतियोगिताकभेदाश्रयनिष्ठतत्तद्धर्मावच्छिन्नप्रतियोगिताकभेदानुमिति - जनकत्वस्य गन्धादौ प्रसिद्धत्वात्तदभाववति लक्षणसत्त्वादतिव्याप्तिकथनं संगतमेवेति वाच्यम्।तथा सति तादृशलक्ष्यतावच्छेदकस्य गन्धनिष्ठस्य जललक्षणीभूतशीतस्पर्शे अभावात् तादृशलक्षणसत्त्वादतिव्याप्तेः संभवेन व्यावृत्तावभिधेयत्वादौ शीतस्पर्शादौ अतिव्यप्तिः स्यात् । इतो ग्रन्थकृताऽभिधीयेत न च प्रकृतलक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदाश्रयनिष्ठतद्धर्मावच्छिन्नप्रतियोगिताकभेदानुमापकत्वं तदिति विवक्षणाज्जललक्षणीभूतशीतस्पर्शादेरेतादृशलक्ष्यतावच्छेदकाक्रान्तत्वेन तत्रातिव्याप्त्यसंभवान्नानुपपत्तिरिति वाच्यम् । लक्ष्यतावच्छेदकाभावज्ञानस्यातिव्याप्तिज्ञाने कारणत्वाल्लक्ष्यतावच्छेदकाभावज्ञानं प्रति प्रतियोगिज्ञानविधया लक्ष्यतावच्छेदकज्ञानस्य कारणत्वात् । प्रकृते अभिधेयत्वादौ पक्षतावच्छेदकभूतपदार्थत्वावच्छिन्नभेदाप्रसिद्धया तद्धटितल-

वायुं लक्षयति । **रूपरहितेति** । आकाशादावतिव्याप्तिवारणाय स्पर्शवानिति । पृथिव्यादावतिव्याप्तिवारणाय रूपरहितेति । प्राणस्य कुत्रान्तर्भाव इत्यत आह । **शरीरेति** । **स चेति** । एक एव प्राणः स्थान-

---

**नी.** **शरीरेतीति** । तथा च प्राणस्य विषयेऽन्तर्भाव इति भावः । **स्थानभेदादिति** ।

**रा.** विषयत्वेन सुवर्णपदेन विभज्यते । तच्च न पृथिवी विजातीयत्वात् । न जलं सांसि-

**नृ.** क्त्वा तस्मादिति ग्रन्थेन पुनस्तैजसत्वप्रतिपादनात् पौनरुक्त्यमिति शङ्का निरस्ता ।
**वायुं लक्षयतीति** । वायुं लक्षणवन्तं करोतीत्यर्थः । वायुविशेष्यकलक्षणप्रकारकज्ञानानुकूलव्यापारानुकूलकृतिमानिति समुदितवाक्यार्थः । आकाशादावित्यादिपदेन कालादिचतुर्णां संग्रहः । पृथिव्यादावित्यादिपदेन जलतेजसोः परिग्रहः । **मूले रूपरहितेत्यादि** । रूपरहितत्वे सति स्पर्शवत्त्वं वायोर्लक्षणमित्यर्थः । अत्र रूपरहितत्वं समवायसंबन्धावच्छिन्नरूपत्वावच्छिन्नप्रतियोगिताकाभाववत्त्वं ग्राह्यम् । तेन संयोगेन रूपाभावरूपघटोभयाभावं चादाय नातिव्याप्तिः । स्पर्शवत्त्वञ्च स्पर्शसमानाधिकरणद्रव्यविभाजकजातिमत्त्वरूपं वाच्यम् । तेन उत्पत्तिक्षणावच्छेदेन वायौ उत्पन्नविनष्टवायौ च नाव्याप्तिः । नन्वेवमपि उत्पत्तिक्षणावच्छेदेन घटादौ उत्पन्नविनष्टघटादौ चातिव्याप्तिरिति चेन्न । रूपासमानाधिकरणस्पर्शसमानाधिकरणजातिमत्त्वस्य विवक्षितत्वान्नातिव्याप्तिरिति । **शरीरं वायुलोक इति** । वायुलोकवृत्तित्वेनागमसिद्धमित्यर्थः । ननु तच्छरीरस्य वायुत्वे किं मानमिति चेन्न । वायुत्वं शरीरसमवेतं परमाणुसमवेतजातित्वात् पृथिवीत्ववदित्यनुमानस्यैव प्रमाणत्वात् । **इन्द्रियं स्पर्शग्राहकमिति** । स्पार्शनप्रत्यक्षकरणमित्यर्थः । एतेन तत्र अनुमानप्रमाणं सूचितम् । तथा हि स्पार्शनत्वावच्छिन्नं मनोभिन्नेन्द्रियकरणकं मानसानिरूपितलौकिकविषयताशालित्वात् चाक्षुषवदित्यनुमानात् त्वगिन्द्रियसिद्धिः । ननु तथापि तस्य वायुत्वे किं मानमिति चेन्न । त्वगिन्द्रियं वायवीयं चाक्षुषनिष्ठलौ-

**प.** क्ष्यतावच्छेदकज्ञानासंभवेनं तत्प्रयोज्यातिव्याप्तिज्ञानस्यासंभावितत्वात् व्यावर्तकत्वस्य दुर्वचत्वादतिव्याप्तिकथनमसङ्गतमेव स्यादिति चेदाकर्णय । पूर्वोक्तप्रकृतपक्षतावच्छेदकत्वाद्यघटितकेवलमितरभेदानुमापकत्वं केवलभेदानुमापकत्वं वा व्यावर्तकत्वं लक्षणलक्ष्यतावच्छेदकमित्यवधेयम् । तथा च अभिधेयत्वादेः भेदानुमितिजनकत्वासंभवात् पृथिवीतरभिन्ना इतरभिन्नत्वादित्यादौ इतरभेदरूपव्यावृत्तेः साध्यसाधनभिया इतरभेदानुमापकत्वासंभवेन तयोर्लक्ष्यतावच्छेदकानाक्रान्तत्वात्पदार्थत्वसमातेयतत्वस्य निरुक्तस्य च व्यावृत्तावभिधेयत्वादौ च सत्त्वादतिव्याप्तिकथनं संगतमेवेति तद्वारणाय तद्भिन्नत्वं धर्मविशेषणम् देयमिति । तथा च व्यावृत्तिभिन्नत्वे सति अभिधेयत्वभिन्नत्वे सति तद्धर्मसमनियतत्वं तद्धर्मावच्छिन्नलक्षणलक्षणमिति नातिव्याप्तिरिति भावः । ननु व्यावृत्तेः सिद्धसाधनभिया इतरभेदानुमापकत्वासंभवेनालक्ष्यत्वा-

भेदात्प्राणापानादिशब्दैः व्यवह्रियत इत्यर्थः । स्पर्शानुमेयो वायुः । तथा हि—योऽयं वायौ वाति सति अनुष्णाशीतस्पर्श उपलभ्यते स क्वचिदाश्रितः गुणत्वाद्रूपवत् । न चास्य आश्रयः पृथिवी उद्भूतस्पर्शवत्पार्थिवस्योद्भूतरूपवत्त्वनियमात् । न जलतेजसी अनुष्णाशीतस्पर्शवत्त्वात् । न विभुचतुष्टयम् सर्वत्रोपलब्धिप्रसङ्गात् । न मनः परमाणुस्पर्शस्यातीन्द्रियत्वात् । तस्माद्यः प्रतीयमानस्पर्शाश्रयः स वायुः (एव) । ननु वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात् घटवत् इति चेन्न । उद्भूतरूपस्योपाधित्वात् । 'यत्र द्रव्यत्वे सति बहिरिन्द्रियजन्य-

---

नी. हृदि प्राण इत्यादिकोशोक्तस्थानभेदादित्यर्थः । (मुखनासिकाभ्यां ? निष्क्रमणप्रवेशना-

रा. द्विकद्रवत्वाभावात् । न वाय्वादिकं रूपवत्त्वात् । इत्यखिलार्थः । यद्यपि विजाती-

नृ. किकविषयतासंबन्धावच्छिन्नकार्यतानिरूपितकारणताशून्यत्वे सति स्पार्शननिष्ठलौकिकविषयतासंबन्धावच्छिन्नकार्यतानिरूपितद्रव्यत्वसमानाधिकरणकारणतावत्त्वात् अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनपवनवत् इत्यनुमानस्यैव प्रमाणत्वात् । अत्र घटादौ व्यभिचारवारणाय सत्यन्तम् । आत्मवारणाय विशेष्यम् । घ्राणाद्यपेक्षया त्वगिन्द्रि-

प. तत्रातिव्याप्तिकथनसंभवेनैव सामञ्जस्ये अभिधेयत्वादिस्थलान्तरातिव्याप्तिकथनं किमर्थमिति चेन्न । सत्यपि सिद्धसाधनदोषे अनुमितसायां सत्यां पृथिव्यां इतरभेदेन इतरभेदस्य साधयितुं शक्यत्वात्तस्येतरभेदानुमापकत्वसंभवेन लक्ष्यतावच्छेदकाक्रान्तत्वात् सामान्यतः इतरभेदं साध्यीकृत्य पृथिवीत्वावच्छिन्नप्रतियोगिताकभेदाश्रयनिष्ठतत्तद्धर्मावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वेन पृथिव्यामितरभेदसाधनसंभवेन तस्येतरभेदानुमापकत्वरूपलक्ष्यतावच्छेदकाक्रान्तत्वसंभवाद्वा तत्रातिव्याप्तिर्नायातीत्यस्वरसं हृदि निधाय अभिधेयत्वादावतिव्याप्तिकथनं कृतमिति ध्येयम् । तत्रातिव्याप्तिवारणाय केवलान्वयिभिन्नत्वं विशेषणं देयम् । ननु कथमभिधेयत्वादावतिव्याप्तिः घटः घटपटोभयभेदवान् अभिधेयत्वादित्यादौ अभिधेयत्वादेर्निरुक्तोभयत्वरूपव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदानुमापकत्वस्याव्यावर्तकत्वस्य सत्त्वात् । न च तद्धर्मावच्छिन्नलक्षणत्वे तद्धर्मावच्छिन्नेतरभेदानुमितिजनकत्वमिति वाच्यम् । तथा च पदार्थत्वावच्छिन्नेतराप्रसिद्ध्या तद्धटितस्य तत्रासंभव इति वाच्यम् । तथा सति तद्धर्मावच्छिन्नेतरभेदानुमितिजनकत्वरूपलक्षणलक्षणलक्ष्यतावच्छेदकाप्रसिद्ध्या न चेष्टापत्तिः । लक्ष्यतावच्छेदकाभाववति लक्षणवृत्तित्वस्यैवातिव्याप्तित्वात् । तस्मात्सामान्यतो भेदानुमितिजनकत्वस्यैव तत्त्वमास्थेयम् । तथा च कथमभिधेयत्वादीनामलक्ष्यत्वोपवर्णनम् । न च व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकभेदानुमाप-

नी. त्प्राणः । मलादीनामधो नयनात् अपानः । आहारेषु पाकार्थं वह्नेः समुन्नयनात्

रा. यद्रव्यस्य रूपं न प्रत्यक्षसिद्धं शुक्लभास्वराननुभवात् परकीयरूपेण तत्प्रत्यक्षा-

नृ. यस्याश्रयवैलक्षण्यमाह । **सर्वशरीरवृत्तीति ।** शरीरनिरूपितदेशविशेषानवच्छिन्न-वृत्तिताश्रयमित्यर्थः । शरीरत्वव्यापकमिति यावत् । नखदन्तलोम्नां शरीरोत्पत्त्यनन्तरकालीनोत्पत्तिमत्त्वस्यागमसिद्धत्वात् न व्यापकत्वभङ्गः । ननु भाष्यादौ शरीरेन्द्रियविषयप्राणभेदेन वायौ चातुर्विध्यप्रतिपादनात् अत्र त्रैविध्येन विभजने बीजाभावः प्राणस्यातिरिक्तद्रव्यत्वापत्तिश्चेत्यत आह । **शरीरेति ।** यः वृक्षादिकम्पनहेतुः स एव शरीरान्तस्सञ्चारी चेत् प्राणशब्देन व्यवह्रियत इत्यर्थः । तथा च विषयत्वस्य सर्वसाधारणतया विषयत्वेनाङ्गीकृतवृक्षादिकम्पनहेतुभूतवायोरेव स्थानभेदेन प्राणशब्देन व्यवह्रियमाणतया विषयत्वेनापि विभागस्संभवतीत्याशयेन त्रैविध्यं उक्तम् । अत एव नातिरिक्तद्रव्यत्वापत्तिश्चेति भावः । **स चैकोऽपीति ।** शरीरान्तस्सञ्चारी प्राणशब्दवाच्यः लाघवात् एकोऽपि सन् इत्यर्थः। **उपाधिभेदादिति ।** कोशप्रतिपाद्यहृदादिरूपस्थानभेदात् क्रियाभेदाच्चेत्यर्थः । तथा हि हृदि वृत्तित्वात् मुखनासिकाभ्यां निष्क्रमणात् प्रवेशाच्च प्राण इत्युच्यते । गुदस्थानवृत्तित्वात् मलादीनां अधोनयनाच्च अपानशब्देन व्यवह्रियते। नाभिवृत्तित्वात् भुक्तस्य पाकार्थं वह्नेः समुन्नयनाच्च समान इत्युच्यते । कर्णदेशस्थितत्वात् ऊर्ध्वन्नयनाच्च

प. कत्वमेव तत्त्वमिति वाच्यम् । तथापि घटभेदपटभेदान्यतरत्वावच्छिन्नानुमितिजनकत्वरूपान्यतरस्य तत्राक्षतेः । अनुमित्सादशायां व्यावृत्तेरपि स्वानुमितिजनकत्वं संभवतीति पूर्वमुक्तत्वात् । स्वेतरभेदानुमितिजनकत्वाविवक्षणेऽपि इदं जलभिन्नं जलादित्रयोदशभिन्नत्वादिति रीत्या पृथिवीनिष्ठजलादिव्यावृत्तेरपि जलभेदात्मकभेदविशेषानुमापकत्वादिति चेदुच्यते । भेदानुमापकत्वं अखण्डभेदव्यक्त्यनुमापकत्वम् । प्रतियोग्यवृत्तिभेदवृत्त्यनुमापकत्वमिति यावत् । अनुमापकत्वं अनुमेयतावच्छेदकरूपावच्छिन्नभेदप्रतियोगिप्रतियोगिकावृत्तिरूपावच्छिन्नतन्निरूपितव्याप्त्यादिमत्त्वम् । एवं च अभिधेयत्वादेः उभयभेदव्यक्त्यनुमापकत्वेऽपि प्रतियोग्यवृत्तिभेदवृत्त्यनुमापकत्वाभावादव्यावर्तकत्वोपपत्तिः । जलादिभेदस्य प्रत्येकजलभेदाद्यनुमापकत्वेऽपि प्रत्येकभेदप्रतियोगिजलप्रतियोगिकवृत्तिनैकजलादिभेदत्वेन रूपेण तदनुमापकत्वादव्यावर्तकत्वोपपत्तिः । पृथिवीत्वादेस्तु पृथिवीत्वत्वेनैव जलादिभेदानुमापकत्वात् लक्ष्यतावच्छेदकवत्त्वोपपत्तिः । अथ पृथिवीत्वगन्धत्वादेरनुमेयभूतजलादिभेदप्रतियोगिपृथिवीत्वाभावादिप्रतियोगिपृथिवीत्वादिवृत्तित्वेन पृथिवीत्वादेरपि कथं व्यावर्तकत्वोपपत्तिः । प्रतियोगित्वाद्यघटितरूपेणानुमापकत्वोक्तौ जलादिभेदस्यापि इदं जलभिन्नं तद्व्यक्तिमत्त्वादिति रीत्यानुमापकत्वेन कथं तस्याव्यावर्तकत्वोपपत्तिः । आकाशाभावतद्भेदान्यतरत्वावच्छिन्नानुमापकत्वेनाभिधेयत्वादेर्व्यावर्तकत्वोपपत्तेः प्रति-

नी. समानः। ऊर्ध्वंनयनात् उदानः। नाडीमुखेषु वितननात् व्यानः।) स्वमतं दर्श-

रा. भ्युपगमात्। तथा च रूपवत्त्व एव मानाभावेन रूपवत्त्वात् न वाय्वादिकमित्य-

नृ. उदान इत्युच्यते। सर्वशरीरवृत्तित्वात् सर्वनाडिषु प्रवेशनाच्च व्यान इत्युच्यत इति। ननु वायौ प्रमाणाभावात् तस्य लक्षणादिकरणमयुक्तमित्याशङ्कां प्रमाणप्रदर्शनेन परिहरति। **दीपिकायां स्पर्शानुमेयो वायुरिति।** तथा च महत्त्वोद्भूतरूपवद्द्रव्यसंयोगासमानकालीनप्रत्यक्षविषयस्पर्शः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्यसमवेतः पृथिव्याद्यष्टद्रव्यासमवेतत्वे सति द्रव्यसमवेतत्वात् इति परिशेषानुमानात् पृथिव्याद्यष्टद्रव्यातिरिक्तवायुनामकनवमद्रव्यसिद्ध्या नोक्तशङ्केति भावः। निरुक्तहेतौ विशेष्यासिद्धिं विशेषणासिद्धिं च वारयितुं तत्साधयति। **तथा हीति।** वायौ वाति सति वायुसंयोगे सतीत्यर्थः। **अवभासत इति।** प्रत्यक्षविषय इत्यर्थः। तथा च वायुसंयोगसमानकालीनप्रत्यक्षविषय इत्यर्थः फलितः। ननु पक्षाप्रसिद्धिः वायुसाधनात् पूर्वं तस्यासिद्धत्वेन तद्घटितस्य तस्य सुतरामप्रसिद्धत्वादिति चेन्न। वायौ वातीत्यस्य महत्त्वोद्भूतरूपवद्द्रव्यसंयोगेऽसतीत्यत्र तात्पर्यात्। तथा च महत्त्वोद्भूतरूपवद्द्रव्यसंयोगासमानकालीनप्रत्यक्षविषयस्पर्शस्य पक्षत्वलाभान्नोक्तानुपपत्तिरिति भावः। **क्वचिदाश्रित इति।** द्रव्यसमवेत इत्यर्थः। **रूपवदिति।** अनेन विशेष्यासिद्धिः परिहृता। सत्यन्तासिद्धिं क्रमेण परिहरति।

प. योग्यवृत्तित्वस्यापि तत्रासत्त्वात्। न च भेदत्वावच्छिन्नानुमितिजनकत्वस्यैवानुमापकत्वस्योक्तत्वान्न दोष इति वाच्यम्। तर्हि निरुक्तघटभेदपटभेदान्यतरत्वस्यैव अनुमेयतावच्छेदकत्वेन भेदत्वस्य तथात्वात् भेदप्रतियोग्यवृत्तित्वविशेषणवैयर्थ्यापत्तेः निरुक्तविवक्षाङ्गीकारे पृथिवीत्वादेः अव्यावर्तकत्वोपपत्तेश्चेति चेन्न। अनुमेयतावच्छेदकरूपावच्छिन्नभेदप्रतियोगिनिष्ठतादात्म्यसंबन्धावच्छिन्नप्रतियोगिकावृत्तिरूपावच्छिन्नतानिरूपितव्याप्त्यादिमत्त्वस्यैव व्यावर्तकत्वोपगमे पृथिवीत्वादेः व्यावर्तकत्वोपपत्तिः। तथा हि पृथिवीत्वाभावाभावात्मकपृथिवीत्वस्य तादात्म्यसंबन्धावच्छिन्नप्रतियोगिकत्वाभावेन तादृशप्रतियोगिकावृत्तिपृथिवीत्वत्वावच्छिन्नत्वाद्व्यावर्तकत्वोपपत्तिः। एवं व्यावृत्तेरपि अव्यावर्तकत्वोपपत्तिश्च जलादित्रयोदशभेदकूटस्य तत्तत्तादात्म्यादिसंबन्धावच्छिन्नप्रतियोगिप्रतियोगिकतया तद्वृत्तिरूपावच्छिन्नत्वात्। न चैवं तद्धर्मतदवच्छिन्नात्यन्ताभावान्योन्याभावयोः उभयत्वेन व्यावर्तकता न स्यादिति वाच्यम्। इष्टापत्तेः। संभवत्युभयोरन्यतरस्य हेतुत्वे उभयोरुभयत्वेनातथात्वात् उभयोरपि तथात्वे च निग्रहस्थानादिति न किंचिद् एतदिति वदन्ति। द्रव्यलक्षणस्य अव्याप्तिमाशङ्कते। **नन्विति।** परिहरति। **नेति।** केचित्तु द्रव्यत्वं गुणवत्त्वं वा द्रव्यसामान्यलक्षणमित्यत्र दीपिकाकारेण आद्यक्षणविशिष्टे उत्पन्नविनष्टे घटेऽव्याप्तिमभिधाय तन्निराकरणाय गुणसमानाधिकरणसत्ताभिन्नजातिमत्त्वं इति विवक्षितम्।

नी. यति । **स्पर्शानुमेय इति** । अस्य उपलभ्यमानस्पर्शस्य आश्रयः पृथिवी

रा. सङ्गतम्। तथापि घृतादिस्थले रूपवत एव द्रव्यस्य द्रवत्वनाशप्रतिबन्धकतायाः क्लृप्त-

नृ. न चेति । **अस्येति**। तादृशस्पर्शस्य इत्यर्थः । **पृथिव्याश्रय इति** । पृथिव्य-धिकरणमित्यर्थः । तथा च स्पर्शः पृथिव्यसमवेत इति फलितार्थः । **उद्भूतस्पर्शवत्पार्थिवस्येति** । अत्रोद्भूतत्वं लौकिकविषयतावत्त्वरूपमेव लाघवात् ग्राह्यम् । एवमग्रेऽपि । स्पर्शवतः घ्राणादेः उद्भूतरूपवत्त्वाभावात् नियमभङ्गवारणाय उद्भूतत्वं स्पर्शविशेषणम् । तत्रैव तादृशद्रव्यत्वादिमति व्यभिचारवारणाय स्पर्शपदम् । तादृशस्पर्शवति भर्जनकपालस्थवह्न्यादौ तद्वारणाय पृथिवीपदम् । **उद्भूतरूपवत्त्वनियमादिति** । उद्भूतरूपवत्तायाः आवश्यकत्वादित्यर्थः । उद्भूतरूपे समवायघटितसामानाधिकरण्यसम्बन्धेन उद्भूतस्पर्शविशिष्टपृथिवीत्वनिरूपितव्यापकतायाः अन्वयव्यतिरेकसहचारज्ञानसहकृतप्रत्यक्षप्रमाणकरणकप्रमितिविषयत्वादिति फलितार्थः। तथा च व्यापकाभावात् व्याप्याभावानुमितेः प्रामाणिकतया प्रकृते निरुक्तस्पर्शाधिकरणं उद्भूतस्पर्शविशिष्टपृथिवीत्वाभाववत् उद्भूतरूपाभावात् रूपवदित्यनुमानात् विशेषणवत्तया निर्णीते पक्षे व्यापकतावच्छेदकपृथिवीत्वाभावत्वेनैव तस्य सिद्धेः निष्प्रत्यूहत्वादिति भावः । ननु उद्भूतरूपस्योद्भूतस्पर्शविशिष्टपृथिवीत्वव्यापकत्वे निर्णीते विशिष्टरूपस्य केवलरूपानतिरेकितया केवलरूपेऽपि व्यापकत्वनिर्णयसंभवात्

प. तदसङ्गतम् । तत्राद्यक्षणविशिष्टघटस्थलीयाव्याप्तेः गुणाधिकरणत्वविवक्षणेन वारयितुं शक्यत्वात् । उत्पन्नविनष्टघटेऽव्याप्तिकथनं शशविषाणेन कण्डूविनोदनं अनुकरोति । तथा हि तादृशघटनाशः कपालनाशात् कपालद्वयसंयोगनाशाद्वा । नाद्यः नश्यतः कपालस्य घटोत्पादकत्वासंभवात् । नान्तिमः पक्षः । तथा हि घटारम्भकसंयोगनाशकविभागजनिका क्रिया तदारम्भकसंयोगजनकक्रियानाशोत्तरं वक्तव्या । क्रियायाः क्रियाविरोधित्वात् । सा च घटारम्भकसंयोगपर्यन्तं नश्यति । क्रियायाः स्वजन्यसंयोगनाश्यत्वनियमात् । हन्तैवं उभयकर्मजस्थल एवेयं रीतिः । न तु इतरकर्मजन्यसंयोगस्थले । तथा हि एकस्मिन् कपाले आरम्भकसंयोगजनिका क्रिया अन्यस्मिन् कपाले तन्नाशक्रियेत्युक्तौ न काप्यनुपपत्तिरिति चेत् भ्रान्तोऽसि । किमेकस्मिन् आरम्भकसंयोगजनकक्रियोत्पत्तिकाल एव अन्यस्मिन् तन्नाशजनकक्रियोत्पद्यते किं वा तज्जन्यविभागकाले उत तज्जन्यपूर्वसंयोगनाशकाले आहोस्वित् आरम्भकसंयोगोत्पत्तिकाले । नाद्यः द्वितीयक्षणे तस्याः तूष्णींभावापत्तेः । तथा विभज्यत इति चेत् कुतोऽवधेः । कपालादिति चेत् सम्यगुक्तं हि विभजयत इति न्यायात् । इतरस्मात् अनारम्भकसंयोगवतः देशादिति चेत् तर्हि तेन विभागेनानारम्भकसंयोग एव नाशनीयः । नत्वारम्भकसंयोगः । नापि द्वितीयः । उक्तयुक्तेः । अत एव न तृतीयोऽपि । तुरीयस्तु स्यात् तदस्तु नोद्देश्यसिद्धिः ।

नी. न चेत्सन्वयः । **चतुष्टयमिति** । इदमाकाशादिप्रत्येकभेदसाधनाभिप्रायेण ।

रा. त्वात् नीरूपाकाशवाय्वादीनां संबन्धसत्त्वे द्रवत्वनाशदर्शनाच्च द्रवत्वनाशप्रति-

नृ. व्यापकदले उद्भूतत्वविशेषणं व्यर्थम् । एवं केवलस्पर्शविशिष्टपृथिवीत्वव्यापकताया अपि रूपे संभवात् व्याप्यदलेऽपि उद्भूतत्वविशेषणं व्यर्थमिति चेन्न । अतीन्द्रियसाधारणरूपत्वावच्छिन्नप्रत्यक्षतः उद्भूतस्पर्शविशिष्टपृथिवीत्वव्यापकताया निर्णयासंभवेन रूपं तादृशपृथिवीत्वव्यापकं तादृशपृथिवीत्वव्यापकोद्भूतरूपव्यापकत्वात् द्रव्यत्ववदित्यनुमानेनैव केवलरूपे तद्व्यापकताग्रहो वाच्यः । एवं च निरुक्तानुमानात् पूर्वमुद्भूतरूपे प्रात्यक्षिकनिरुक्तव्यापकताग्रहस्यावश्यकतया तत एव प्रकृतार्थसिद्धेः तदर्थं केवलरूपे निरुक्तव्यापकतानुमानं निष्प्रयोजनमित्याशयेन इदमेवाभिहितम् । एवमुद्भूतरूपे केवलस्पर्शविशिष्टपृथिवीत्वव्यापकतायाः बाधितत्वेन स्पर्शे उद्भूतत्वनिवेशनम् । एवं दलद्वये उद्भूतत्वानुपादाने केवलरूपे केवलस्पर्शविशिष्टपृथिवीत्वव्यापकतायाः प्रत्यक्षतो ग्रहासंभवात् अनुमानस्याप्रयोजकशङ्काकवलितत्वेनासाधकत्वाच्च । तस्माद्दलद्वयेऽपि तादृशविशेषणं आवश्यकम् । न चोद्भूतरूपे केवलपृथिवीत्वनिरूपितव्यापकताया अपि प्रत्यक्षतो ग्रहसंभवात् तदभावेन पृथिवीत्वाभावसाधनसंभवाच्च व्याप्यदले उद्भूतस्पर्शवैशिष्ट्यनिवेशनं व्यर्थमिति वाच्यम् । उत्पन्नविनष्टघटाद्यन्तर्भावेन व्यभिचारेण उद्भूतरूपस्य पृथिवीत्वाव्यापकत्वात् । तस्माद्व्याप्यदले तादृशविशेषणमावश्यकमिति

प. नन्वस्तु आरम्भकसंयोगोत्पत्तिकाल एव इतरकपाले तन्नाशकक्रियोत्पत्तिः तज्जन्यविभागकाले प्रतिबन्धकवशात् यत्र न घटोत्पत्तिः आरम्भकसंयोगनाशकाले तु घटोत्पत्तिः । पूर्वक्षणे आरम्भकसंयोगसत्त्वात् तत्रैवोद्देश्यसिद्धिरिति चेन्न । कपालद्वये सत्यविलम्बेन घटोत्पत्तेरेव आनुभविकतया तत्कालीनघटप्रतिबन्धकस्यैवालीकत्वात् । किं बहुना असमवायिकारणस्य कार्यकालवृत्तितयापि हेतुत्वं सकलतान्त्रिकमतसिद्धमिति उत्पन्नविनष्टघटोऽप्रसिद्ध इति वदन्ति । ननु समवायेन गुणाधिकरणत्वविवक्षणेन आद्यक्षणविशिष्टघटे नाव्याप्तिरित्यत आह । **उत्पन्नविनष्टघटेति** । ननु यो घटः प्रथमक्षणे उत्पन्नः द्वितीयक्षणे च नष्टः स उत्पन्नविनष्टघट इति वक्तव्यम् । तत्तु न सङ्गच्छते । नैयायिकैः द्वितीयक्षणवृत्तिध्वंसप्रतियोगिक्षणिकपदार्थानङ्गीकारेण तस्यालीकत्वात् तदङ्गीकारे च बौद्धमतप्रवेशापत्तेः । न च तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वरूपक्षणिकत्ववादिनैयायिकमतानुसारेण स्वोत्पत्तितृतीयक्षणविशिष्टघटस्यैव उत्पन्नविनष्टघटत्वान्नोक्तदोष इति वाच्यम् । तथा सति द्वितीयक्षणे रूपादिगुणस्य उत्पत्तिसंभवेन अव्याप्त्यभिधानासाङ्गत्यापत्तेः । न च आमनिक्षिप्तघटे विजातीयाग्निसंयोगेन द्व्यणुकादिक्रमेण नष्टे पुनश्च विजातीयाग्निसंयोगेन द्व्यणुकादिक्रमेण उत्पन्ने तत्र घटोत्पत्तिक्षणे कपाले विलक्षणाग्निसंयोगे नाशे सति न घटोत्पत्तिक्षणे कपालनाशेन तेन घटोत्पत्तिद्वितीयक्षणे रूपादिगुणोत्पत्त्यसंभवात् अत्राव्याप्तिकथनं सङ्गतमेवेति वाच्यम् । तथापि तत्र निरु-

नी. **सर्वत्रोपलब्धिप्रसङ्गादिति** । स्पर्शस्येत्यादिः । आकाशादीनां विभुत्वादिति

रा. बन्धकतयैव विजातीयद्रव्यस्य रूपवत्त्वमवश्यमभ्युपेयमिति भावः । ननु तस्य रूपव-

नृ. दिक् । **म जलतेजसी इति** । तादृशस्पर्शस्याश्रयः न जलं न वा तेजः इत्यर्थः । निरुक्तस्पर्शाधिकरणं जलत्वावच्छिन्नप्रतियोगिताकभेदतेजस्त्वावच्छिन्नप्रतियोगिताक-भेदोभयवदिति फलितार्थः । तत्र हेतुमाह । **अनुष्णाशीतस्पर्शवत्त्वादिति** । अनुष्णाशीतवत्त्वादित्यर्थः । न तु स्पर्शत्वस्यापि हेतौ प्रवेशः व्यर्थत्वात् । किन्त्वनुष्णाशीतत्वं स्पर्शत्वव्याप्यजातिविशेषः इति स्फुटप्रतिपत्त्यर्थं तन्निवेश इति बोध्यम् । अत्रोद्भूतरूपे उद्भूतस्पर्शविशिष्टपृथिवीत्वव्यापकत्ववत्तादृशस्पर्शविशिष्टजल-त्वादिव्यापकत्वं वाय्वानीतजलतेजोभागान्तर्भावेन व्यभिचारात् न संभवतीत्युद्भूत-रूपाभावहेतुना निरुक्तभेदद्वयसाधनासंभवात् हेत्वन्तरानुसरणमिति बोध्यम् । **न विभु-चतुष्टयमिति**। तादृशस्पर्शाधिकरणं विभुचतुष्टयं नेत्यर्थः। तादृशस्पर्शः आकाशाद्यात्मा-न्तान्यतमसमवेतत्वाभाववानित्यर्थः। अत्र गुहादिप्रविष्टशरीरावच्छेद्यप्रत्यक्षनिरूपितलौ-किकविषयताशून्यत्वे सति* विशेषगुणत्वात् घटादिरूपवदिति सदृष्टान्तहेतुः पूरणीयः। कालादिपरिमाणे व्यभिचारबारणाय हेतौ विशेष्यदलम् । शब्दादौ व्यभिचारवा-रणाय सत्यन्तदलमिति बोध्यम् । निरुक्तहेतौ व्यभिचारशङ्कानिवर्तकानुकूल-

प. कयुक्तया रूपाद्युत्पत्त्यसंभवेऽपि उत्पत्तिकालावच्छेदेन गगनादिसंयोगजनने बाधका-भावात् । न च कार्यस्य कारणानन्तरभावितया समवायिकारणाभावेन तदसंभव इति वाच्यम् । आकाशस्यैव तथात्वात् तस्य सत्त्वात् । न च संयोगोत्पत्तिं प्रति यावत्स-मवायिकारणस्य अपेक्षितत्वात्अन्यथा घटविरहेऽपि संयोगोत्पत्त्यापत्तेर्नाव्याप्तिरिति वाच्यम् । अस्तु वा द्वितीयादिक्षणावच्छेदेन गगनसंयोगादिजनने बाधकाभावादिति चेन्न । संयोगजसंयोगातिरिक्तसंयोगस्य क्रियाजन्यत्वनियमेन तत्रोत्पन्नविनष्टद्वितीय-क्षणे क्रियायाः यथाकथंचनसंभवाद्वा विनाशकारणसामग्रीसान्निध्यात्मकप्रतिबन्धक-सद्भावाद्वा तत्र गगनादिसंयोगजननासंभवेन अव्याप्त्यभिधानमित्याशङ्क्य परिहरति। **गुणसमानाधिकरणेति** । सत्ताजातिमादाय गुणादावतिव्याप्तिवारणाय सत्ताभि-न्नेति। सत्ताभिन्नगुणत्वादिजातिमादाय गुणादावतिव्याप्तिवारणाय गुणसमानाधिकरणे-ति । द्रव्यगुणान्यतरत्वमादाय गुणादावतिव्याप्तिवारणाय जातिपदम् । समवायेन ता-दृशजातिमत्त्वं बोध्यम् । तेन न कालिकविशेषणतया गुणादावतिव्याप्तिः । ननु तादृश-जातिः द्रव्यत्वमेव तथा च चक्रगत्या द्रव्यत्वजातिमत्त्वमेव उक्तं स्यात् । भक्षितेऽपि लशुने न शान्तो व्याधिरिति न्यायेन इतरभेदानुमाने हेतुपक्षतावच्छेदकयो अभेदेन दोषःस्यादिति चेन्न । आकारभेदेन उभयरूपत्वसंभवात् द्रव्यत्वाकारेण पक्षतावच्छेद-कत्वं गुणसमानाधिकरणसत्ताभिन्नजातिमत्त्वाकारेण हेतुत्वादिति नोक्तदोषः। **गुणान्वि-**

* लौकिकविषयताश्रयेत्यर्थः । तेन निर्विकल्पके न व्यभिचारः ।

**नी.** भावः । प्रत्यक्षः बहिरिन्द्रियजन्यप्रत्यक्षविषयः । अनुद्भूतस्पर्शाश्रये त्वगिन्द्रिये

**रा.** त्त्वे कथं न प्रत्यक्षमत आह । **उपष्टम्भकेति । अभिभवेति ।** स्वप्रत्यक्षप्रतिबन्धा-

**नृ.** तर्कमाह । **सर्वत्रेति ।** स स्पर्शो यदि आकाशाद्यात्मान्तान्यतमसमवेतविशेष-
गुणः स्यात् तदेत्यादिः । गुहादिप्रविष्टशरीराद्यवच्छेद्यप्रत्यक्षनिरूपितलौकिकविषयता-
वान् स्यादित्यर्थः । तथा च शब्दज्ञानादेः तादृशविशेषगुणत्वात् सकलसामग्रीसत्त्वे
यथा तादृशलौकिकविषयतावत्त्वं तथा तादृशस्पर्शस्यापि त्वक्संयुक्ताकाशादिसमवाय-
सन्निकर्षबलात् तादृशलौकिकविषयतापत्त्या अनुभवविरोधात् इष्टापत्त्यसंभवेनानिष्ट-
प्रसञ्जनात्मकसत्तर्कात् व्यभिचारशङ्कानिरासे सत्युक्तानुमानात् तादृशान्यतमसमवेतत्वा-
भावसिद्धिर्निष्प्रत्यूहेति भावः । **न मन इति ।** तादृशस्पर्शाधिकरणं मनोभिन्नमित्यर्थः।
मनस्समवेतत्वाभाववानिति फलितार्थः । अत्र लौकिकविषयतावत्त्वात् घटरूपवदिति
सदृष्टान्तहेतुः पूरणीयः । उक्तानुमाने व्यभिचारशङ्कानिरासकतर्कमाह । **परमाणु-
स्पर्शस्येति ।** अत्र स्पर्शपदं गुणकर्मोपलक्षकम् । तथा च परमाणुसमवेतगुणादेरि-
त्यर्थः । **अतीन्द्रियत्वादिति ।** लौकिकविषयताशून्यत्वादित्यर्थः । तथा च द्रव्य-
समवेतवृत्तिलौकिकविषयतां प्रति समवायघटितसामानाधिकरण्यसंबन्धेन महत्त्वस्य
प्रयोजकतया परमाणुषु महत्त्वाभावात् तत्समवेतगुणादिषु तादृशसंबन्धेन महत्त्वा-
भावात् यथा लौकिकविषयत्वाभावः तथा तादृशस्पर्शस्यापि मनस्समवेतत्वेन मनसो

**प.** **भजत इति ।** गुणत्वावच्छिन्नविशेष्यकावान्तरधर्मप्रकारकज्ञानानुकूलव्यापारानुकूलकृ-
त्याश्रय इत्यर्थः । ननु सामान्यलक्षणमनभिधाय विभागकरणे न्यूनता स्यादित्यतः
सामान्यलक्षणमाह । **द्रव्येति ।** द्रव्यकर्मसामान्यादिष्वतिव्याप्तिवारणाय क्रमेण
दलत्रयम् । द्व्यणुकभिन्ननिष्ठनिरूपितसमवायप्रतियोगिवृत्तिपदार्थविभाजकोपाधिमत्त्वं
गुणलक्षणमिति ध्येयम् । लाघवादाह । **गुणत्वजातिमत्त्वेति । कर्म विभजत इति ।**
क्रमप्राप्तत्वादिति शेषः । तल्लक्षणमाह । **संयोगेति ।** संयोगस्यापि संयोगजसंयोगास-
मवायिकारणत्वात् तत्रातिव्याप्तिवारणाय संयोगभिन्नेति । द्रव्यादिवारणाय विशेष्यम्।
गुणान्तरेऽतिव्याप्तिवारणाय विशेष्यदळघटकसंयोगपदम्। अत्र विचारयामः । संयोगा-
समवायिकारणमित्यत्र असमवायिपदं निरर्थकम् । तथा च संयोगनिष्ठकार्यतानिरू-
पितकारणतावत्त्वं लक्षणम् । ननु कार्यत्वावच्छिन्नं प्रति कालादेः कारणतया संयोग-
स्यापि कार्यत्वावच्छिन्नान्तःपातित्वात् ( श्रीगन्धर्वलपनाय नमः) अत्रेदं बोध्यते
गुणाः द्विविधाः सामान्यगुणाः विशेषगुणाश्चेति । संख्याद्यपरत्वान्तनैमित्तिकद्रवत्ववे-
गत्वस्थितस्थापकाः सामान्यगुणाः । तत्त्वं च आकाशात्मान्यसमवेतवृत्तिपाकजावृत्तिसां-
सिद्धिकद्रवत्वावृत्तिगुणवृत्तिजातिमत्त्वे सति भावनान्यत्वं । आकाशात्मविशेषगुणेषु अति-
व्याप्तिवारणाय प्राथमिकवृत्त्यन्तं जातिविशेषणम्। रूपादिचतुष्टयवारणाय तत्रैव प्राथमि-
कावृत्त्यन्तविशेषणम् । सांसिद्धिकद्रवत्ववारणाय तत्रैव द्वितीयावृत्त्यन्तविशेषणम् ।

**नी.** व्यभिचारवारणाय प्रत्यक्षेति । **उपाधित्वादिति** । तथा च हेतावुपाधि-

**रा.** दिति भावः । **वायाविति** । उपलभ्यत इत्यन्तं पक्षभूतस्पर्शव्यक्तेः परिचायकमा-

**नृ.** महत्त्वाभावेन निरुक्तसंबन्धेन तत्र महत्त्वाभावात् लौकिकविषयत्वाभावापत्त्या अनुभवविरोधात् इष्टापत्त्यसंभवेनानिष्टप्रसञ्जनात्मकसत्तर्कात् व्यभिचारशङ्कानिरासे सति निरुक्तानुमानात् मनस्समवेतत्वाभावसिद्धिरिति भावः । **तस्मादिति** । निरुक्तपरिशेषानुमानादित्यर्थः । निरुक्तस्पर्शाश्रयस्य पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्यत्वसिद्धाविति शेषः । **यः प्रतीयमानस्पर्शाश्रय इति** । क्लृप्तद्रव्यातिरिक्तद्रव्यत्वेन सिद्धप्रतीयमानस्पर्शाश्रयो य इत्यर्थः । **स वायुरेवेति** । एवकारो भिन्नक्रमः । स एव वायुशब्देन व्यवह्रियत इत्यर्थः । इदानीं वायोः प्रत्यक्षत्ववादिनवीनैकदेशिमतं दूषयितुं तन्मतमुपन्यस्यति । **नन्वित्यादिना** । **प्रत्यक्ष इति** । लौकिकविषयतावानित्यर्थः । **प्रत्यक्षस्पर्शाश्रयत्वादिति** । लौकिकविषयताश्रयस्पर्शाश्रयत्वादित्यर्थः । एतेन वायोरपि वायौ उद्भूतरूपं नास्तीति चाक्षुषप्रत्यक्षनिरूपितलौकिकविषयत्वमादाय सिद्धसाधनवारणाय प्रत्यक्षनिरूपितलौकिकविषयत्वस्यैव साधनीयतया तन्मात्रसाधने-

**प.** कर्मण्यतिव्याप्तिवारणाय जातौ गुणवृत्तित्वविशेषणम् । भावनायामतिव्याप्तिवारणाय विशेष्यभाग इति । रूपादिचतुष्टयस्नेहसांसिद्धिकद्रवत्वशब्दबुद्ध्याद्यष्टकभावनाः विशेषगुणाः । तत्त्वं च मनोवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकतावच्छेदकगुरुत्वद्रवत्वावृत्तिगुणविभाजकधर्मसांसिद्धिकद्रवत्वभावनात्वान्यतमत्वम् । अत्र संख्याद्यपरत्वान्तवेगस्थितस्थापकेषु अतिव्याप्तिवारणाय प्रतियोगितावच्छेदकतावच्छेदकान्तविशेषणम् । गुरुत्वनैमित्तिकयोः अतिव्याप्तिवारणाय तत्रैवावृत्तित्वान्तविशेषणम् । पाकात्मकविजातीयतेजःसंयोगनिष्ठवैजात्यमादाय पाकेऽव्याप्तिवारणाय जातौ गुणविभाजकत्वविशेषणम् । सांसिद्धिकद्रवत्वभावनयोः संग्रहाय अन्यतमत्वे सजातिनिवेशनमिति मूलकारस्य न्यूनतापरिहाराय बुद्ध्यादयोऽष्टावित्यादिग्रन्थेन सामान्यगुणत्वविशेषगुणत्वाभ्यां गुणानां द्वैविध्यं सूचयित्वा सामान्यगुणानां निरुक्तगुणान्यतमत्वमेव लक्षणमित्युक्तप्रायमित्याशयेन विशेषगुणलक्षणमाह । **दीपिकायां द्रव्यविभाजकोपाधिद्वयसमानाधिकरणावृत्तीति** । द्रव्यत्वव्यापकत्वानवच्छेदकपरत्वापरत्वगुरुत्वद्रवत्ववेगावृत्तिगुणविभाजकेत्यर्थः । **जातिमत्त्वमिति** । तादृशसांसिद्धिकद्रवत्वभावनात्वान्यतमत्वमित्यर्थः । अत्र संख्यात्वजातिमादाय संख्यादिपञ्चके अतिव्याप्तिवारणाय द्रव्यत्वव्यापकत्वानवच्छेदकत्वान्तनिवेशः । परत्वादिचतुष्टये वेगस्थितस्थापकयोश्च अतिव्याप्तिवारणाय तत्रैवावृत्तित्वान्तविशेषणम् । पाकनिष्ठवैजात्यमादायाव्याप्तिवारणाय तत्रैव गुणविभाजकविशेषणम् । सांसिद्धिकद्रवत्वभावनयोः संग्रहाय अनुगमाय च अन्यतमत्वेन जातिनिवेश इति ॥

प्रत्यक्षत्वं, तत्र उद्भूतरूपवत्त्वम्' इति साध्यव्यापकत्वम् । पक्षे साधनाव्यापकत्वम् । न चैवं तप्तवारिस्थतेजसोऽपि अप्रत्यक्षत्वापत्तिः इष्टत्वात् ।

---

**नी.** व्यभिचारेण साध्यव्यभिचारोन्नयनसम्भवान्न प्रत्यक्षत्वसिद्धिरिति भावः । ननु तादृशप्रत्यक्षत्वस्य गुणादावपि सत्त्वेन तत्रोद्भूतरूपाभावेन साध्याव्यापकत्वात्कथं तस्योपाधित्वमित्यत आह । **यत्रेति** । तथा च पक्षधर्मावच्छिन्नसाध्यव्यापकोऽयमुपाधिरिति भावः । एवं प्रत्यक्षस्पर्शाश्रयस्याप्युद्भूतरूपाभावेन प्रत्यक्षत्वानङ्गीकारे । **अप्रत्यक्षत्वापत्तिरिति** । उद्भूतरूपाभावादिति भावः । ननु परमाणु-

**रा.** त्रम् । न तु पक्षतावच्छेदककोटिप्रविष्टः सः । स्पर्श इत्येवानुमानशरीरम् । न च वायोरव्याप्य-

**नृ.** नैवंष्टसिद्धेः साध्ये प्रत्यक्षानिरूपितत्वविशेषणं व्यर्थम् । एवं पृथिवीपरमाणुसमवेतस्पर्शस्यापि स्पर्शत्वरूपसामान्यलक्षणाजन्यालौकिकप्रत्यक्षविषयतया व्यभिचारवारणाय प्रत्यक्षनिरूपितलौकिकविषयताश्रयस्पर्शवत्त्वस्यैव हेतुत्वेन वाच्यतया तद्घटकलौकिकविषयतायाः प्रत्यक्षनिरूपितत्वविशेषणं नोपादेयम् । एतेन व्यर्थविशेषणघटितत्वेन व्याप्यत्वासिद्धत्वापत्तिरिति दूषणमपास्तम् । दीपिकाग्रन्थस्योक्तार्थपर्यवसितत्वस्वीकारात् । **उद्भूतरूपवत्त्वस्येति** । उद्भूतरूपस्येत्यर्थः । **उपाधित्वादिति** । ननु नायमुपाधिः । लौकिकविषयत्वाधिकरणरूपादावुद्भूतरूपाभावेन लौकिकविषयत्वरूपसाध्यव्यापकत्वाभावात् इत्याशङ्कां किञ्चिद्विशिष्टसाध्यव्यापकत्वं उपपाद्य परिहरति । **यत्रेति** । यत्र यत्रेत्यर्थः । **द्रव्यत्वे सतीत्यादि** । समवायस्वरूपोभयघटितसामानाधिकरण्यसंबन्धेन बहिर्द्रव्यत्वविशिष्टलौकिकविषयत्वमित्यर्थः । तेन बहिरिन्द्रियजन्यप्रत्यक्षत्वस्य मानसानिरूपितलौकिकविषयत्वपर्यवसितस्य तादृशविषयतात्वेन साध्यत्वाभावात् उद्भूतरूपस्य द्रव्यत्वविशिष्टतादृशविषयतात्वावच्छिन्ननिरूपितव्यापकत्वोपपादनस्य उपाधित्वानिर्वाहकत्वेन व्यर्थत्वादिति दूषणस्य नावकाश इति । यदि च मानसानिरूपितलौकिकविषयत्वमेव साध्यतयाभिप्रेतं तदा यथाश्रुतमेव सम्यगिति बोध्यम् । **तत्रेति** । तादृशसर्वाधिकरण इत्यर्थः । **इति साध्यव्यापकत्वमिति** । इत्याकारकपक्षधर्मविशिष्टसाध्यतावच्छेदकावच्छिन्ननिरूपितव्यापकत्वमित्यर्थः । तथा चोद्भूतरूपस्य पक्षधर्मावच्छिन्नसाध्यव्यापकत्वसत्त्वात् नोपाधित्वभङ्ग इति भावः । **साधनाव्यापकत्वमिति** । इदं चोपाधेः व्यभिचारितासंबन्धेन हेतुनिष्ठत्वप्रतिपादनाय न तु तस्याप्युपाधित्वशरीरप्रविष्टत्वं प्रयोजनाभावादिति ध्येयम् । ननूद्भूतरूपस्य पक्षधर्मावच्छिन्नसाध्यव्यापकत्वसत्त्वे केवलरूपस्यापि तादृशव्यापकत्वाक्षेपकतया केवलरूपत्वेनैव उपाधित्वसंभवात् उपाधितावच्छेदकशरीरे उद्भूतरूपत्वानिवेशनमफलमिति चेन्न । उपाधिपदस्य साध्यव्यापकत्वावच्छिन्नरूढत्वात् । उप स्वसमीपवर्तिनि पदार्थे स्वीयं व्याप्तिस्वरूपधर्मं आदधातीति योगेन उपाधिपदस्य

**तस्माद्रूपरहितत्वाद्वायुरप्रत्यक्षः । इदानीं कार्यरूपपृथिव्यादिचतुष्टयस्योत्पत्तिविनाशक्रमः कथ्यते । ईश्वरस्य चिकीर्षावशात्परमाणुषु क्रिया जायते । ततः परमाणुद्वयसंयोगे द्व्यणुकमुत्पद्यते । त्रिभिरेव द्व्यणुकैस्त्र्यणुकमुत्पद्यते । एवं चतुरणुकादिक्रमेण महती पृथिवी, महत्य आपः, महत्तेजः, महान्वायुरुत्पद्यते । एवमुत्पन्नस्य कार्यद्रव्यस्य संजिहीर्षावशात् क्रियया परमाणुद्वयविभागे द्व्यणुकनाश इत्येवं पृथिव्यादिनाशः । असमवायिकारणनाशात् द्व्यणुकनाशः । समवायिकार-**

---

**नी.** पुञ्जस्यैव घटादिरूपत्वेन अतिरिक्तावयविनोऽसत्त्वात्पृथिव्यादिचतुष्टयस्य नित्यत्वानित्यत्वाभ्यां विभागकथनमनुपपन्नमित्याशङ्कां वारयति । **इदानीमिति** । पृथि-

**रा.** सिद्धत्वात् वायावित्यादिना पक्षभूतस्पर्शपरिचय एव न संभवतीति वाच्यम् । वायौ

**नृ.** साध्यव्याप्यत्वावच्छिन्नार्थकत्वाच्च योगरूढ्यर्थतावच्छेदकधर्मद्वयविशिष्टस्यैव मुख्योपाधित्वमिति प्राचीनमतानुसारेणोद्भूतरूपत्वेनोपाधित्वमङ्गीकृतम् । न च केवलरूपस्येवोद्भूतरूपस्यापि न द्रव्यत्वावच्छिन्नलौकिकविषयत्वव्याप्यत्वं परमाण्वन्तर्भावेन व्यभिचारस्य तुल्यत्वादिति वाच्यम् । प्रकृते उद्भूतपदस्य लौकिकविषयताविशिष्टार्थकत्वात् परमाणौ तादृशरूपाभावेन व्यभिचाराप्रसक्तिरित्याशयः । **एवमिति** । उद्भूतरूपस्य बहिर्द्रव्यत्वविशिष्टलौकिकविषयत्वव्यापकत्वस्वीकारादित्यर्थः । **तन्नवारिस्थतेजसोऽपीति** । उद्भूतस्पर्शाश्रयत्वात् नवीनमते त्वाचप्रत्यक्षविषयतादृशतेजसोऽपीत्यर्थः । अपिना वायुस्समुच्चीयते । **अप्रत्यक्षत्वापत्तिरिति** । लौकिकविषयत्वशून्यत्वापत्तिरित्यर्थः । तथा च तादृशतेजसि व्यापकीभूतोद्भूतरूपाभावलिङ्गेन बहिर्द्रव्यत्वविशिष्टलौकिकविषयत्वाभावस्सिद्धस्सन् बहिर्द्रव्यत्वरूपविशेषणनिर्णयसहकृतपरामर्शात् केवललौकिकविषयत्वाभावत्वरूपव्यापकतानवच्छेदकधर्मप्रकारेणैव सिध्यतीति भावः । **इष्टत्वादिति** । तादृशतेजसो लौकिकविषयत्वशून्यत्वस्येत्यादिः । प्राचीनाभिमतत्वादित्यर्थः । उपसंहरति । **तस्मादिति** । वायोः प्रत्यक्षत्वसाधकप्रमाणाभावादित्यर्थः । स्वमते साधकलिङ्गमाह । **रूपरहितत्वादिति** । उद्भूतरूपवत्त्वाभावादित्यर्थः । **अप्रत्यक्ष इति** । लौकिकविषयताशून्य एवेत्यर्थः । **इदानीमिति** । पृथिव्यादिचतुष्टयस्य लक्षणस्वरूपप्रामाण्यकथनानन्तरमित्यर्थः । **उत्पत्तिविनाशक्रम इति** । उत्पत्तिक्रमः विनाशक्रमश्चेत्यर्थः । **कथ्यत इति** । शिष्यबुद्धिवैशद्यायेत्यादिः । सप्रमाणमुच्यत इत्यर्थः । **ईश्वरस्येत्यादि** । तथा हीत्यादिः । **चिकीर्षावशादिति** । कर्तुमिच्छारूपहेतोरदृष्टविशेषविशिष्टात्मसंयोगरूपासमवायिकारणसहकृतादित्यर्थः । अत्र द्रव्यस्यैव कारणत्रयजन्यत्वनियमेनाद्यक्रियां प्रत्यसमवायि-

णनाशात् त्र्यणुकनाश इति संप्रदायः। सर्वत्रासमवायिकारणनाशात् द्रव्यनाश इति नवीनाः। किं पुनः परमाणुसद्भावे प्रमाणम्। उच्यते—जालसूर्यमरीचिस्थं सर्वतः सूक्ष्मतमं यत् द्रव्यं उपलभ्यते तत्सावयवं चाक्षुषद्रव्यत्वाद्घटवत् । त्र्यणुकावयवोऽपि सावयवः महदारम्भकत्वा-

---

**नी.** व्यादिचतुष्टयनिरूपणानन्तरमित्यर्थः । द्व्यणुकनाशः इत्यस्य परमाणुद्वयसंयोगनाश इत्यादिः । **सर्वत्रेति** । जन्यद्रव्यसामान्य इत्यर्थः । एकरीतिरेवोचितेति भावः । **चाक्षुषद्रव्यत्वादिति** । चाक्षुषत्वे सति द्रव्यत्वादित्यर्थः । रूपादौ

**रा.** वातीत्यस्य वृक्षादिकम्पनहेतुभूतवायुनामकपदार्थे आगच्छति सतीत्यर्थः । तादृशश्च

**नृ.** कारणस्याप्रसिद्धत्वेऽपि न क्षतिः। समवायिकारणनिमित्तकारणाभ्यामेव तदुत्पत्तिस्वीकारादित्यस्मद्गुरुचरणाः। **क्रियेति**। द्रव्यारम्भानुगुणक्रियेत्यर्थः । **तत इति**। तादृशक्रियाजन्यविभागजन्यपूर्वदेशसंयोगनाशादित्यर्थः । उत्पत्तिक्रममुपपाद्य नाशक्रममुपपादयति । **एवमिति** । उत्पत्तिक्रमकथनानन्तरमित्यर्थः । **उत्पन्नस्य कार्यद्रव्यस्येति**। अत्रोत्पन्नस्येति स्वरूपकीर्तनं अनुत्पन्नकार्यद्रव्याप्रसिद्धेरिति ध्येयम् । **सञ्जिहीर्षावशादिति** । संहर्तुमिच्छारूपकारणाददृष्टविशेषविशिष्टात्मसंयोगरूपासमवायिकारणसहकृतादित्यर्थः । अदृष्टवदात्मसंयोगस्य असमवायिकारणत्वं भवति । मानुषादिवैचित्र्यहेतोः अदृष्टस्य अवान्तरप्रलयेऽपि जीवात्मगुणत्वात् । जन्यत्वं पञ्चम्यर्थः । तस्य क्रियायामन्वयः । **क्रिययेति** । तृतीयार्थो जन्यत्वम् । तस्य विभागेऽन्वयः । **द्व्यणुकनाश इति** । आरम्भकसंयोगनाशपूर्वकद्व्यणुकनाश इत्यर्थः । **इत्येवमिति** । एतादृशक्रमेणेत्यर्थः । **पृथिव्यादिनाश इति** । कार्यरूपपृथिव्यादिचतुष्टयनाश इत्यर्थः । **असमवायिकारणनाशादिति** । परमाणुद्वयसंयोगनाशादित्यर्थः । **द्व्यणुकनाश इति** । समवायिकारणस्य परमाणोर्नाशासम्भवादिति भावः। **समवायिकारणनाशादिति**। द्व्यणुकादिनाशादित्यर्थः। **त्र्यणुकनाश इति**। त्र्यणुकादिनाश इत्यर्थः । **संप्रदाय इति**। प्राचीनसिद्धान्त इत्यर्थः । अत्रोक्तरीत्या क्वचित्समवायिकारणनाशस्य क्वचिदसमवायिकारणनाशस्य द्रव्यनाशकत्वे कार्यकारणभावद्वयकल्पनाप्रयुक्तगौरवमिति अस्वरसं हृदि निधाय संप्रदाय इत्युक्तमिति ध्येयम्। **सर्वत्रेति**। षष्ठ्यर्थे सप्तमी। कार्यद्रव्यमात्रस्येत्यर्थः। एतस्य नाश इत्युत्तरेणान्वयः । **असमवायिकारणनाशादिति** । अवयवद्वयसंयोगनाशादेवेत्यर्थः। **नाश इति** । स्वीक्रियत इति शेषः । तथा च एतन्मते कार्यद्रव्यनाशमात्रे अवयवसंयोगनाशस्यैव हेतुतया कार्यकारणभावद्वयाप्रसक्तेः नोक्तगौरवावकाश इति भावः । **इतीति** । एतादृशार्थमित्यर्थः। **नवीना इति** । वदन्तीति शेषः। अत्र त्र्यणुकादिनाशं प्रति असमवायिकारणनाशस्य हेतुत्वस्वीकारे

नी. आत्मनि च व्यभिचारवारणाय विशेष्यविशेषणे । न चेदमप्रयोजकमिति शङ्क्यम् ।

रा. कश्चित्पदार्थः सर्ववादिसम्मत एव । तस्य नवमद्रव्यत्व एव विवादादिति भावः । केचित्तु

नृ. द्व्यणुकनाशानन्तरं द्व्यणुकसंयोगनाशः तदुत्तरक्षणे त्र्यणुकनाशस्य वाच्यतया एतन्मते क्षणावलम्बः समवायिकारणं विना क्षणद्वयं द्रव्यस्य स्थित्यापत्तिः । प्राचीनमते तु द्व्यणुकनाशद्वितीयक्षणे एव द्व्यणुकसंयोगत्र्यणुकयोः नाशस्वीकारान्नोक्तदोषापत्तिरित्यस्वरसं हृदि निधाय नवीना इत्युक्तमिति ध्येयम । ननु पृथिव्यादिचतुष्टयस्य पूर्वोक्तोत्पत्तिविनाशक्रमोऽयुक्तः परमाणुद्व्यणुकयोः मानाभावात् । न चैवं सति त्र्यणुकस्यासमवायिकारणाभावादनुत्पत्तिप्रसङ्ग इति वाच्यम् । इष्टत्वात् असमवेतद्रव्यत्वादेव तस्य नित्यत्वमपि स्वीक्रियते । महत्त्वोद्भूतरूपवत्त्वाच्च घटादेरिव प्रत्यक्षत्वम् । न चैवं सति अणुः परमाणुरिति प्रामाणिकव्यवहारानुपपत्तिः सर्वस्यापि महत्त्ववत्त्वेन अणुत्वाद्याश्रयाभावादिति वाच्यम् । अपकर्षानाश्रयमहत्त्वस्य परममहत्त्वशब्दवाच्यत्ववत् अपकर्षाश्रयमहत्त्वसामान्यस्य अणुत्वशब्दवाच्यत्वम् । अत एव महानपि महत्तमादणुरिति व्यवहारः । एवमुत्कर्षानाश्रयमहत्त्वस्यैव परमाणुत्वशब्दवाच्यत्वम् । एवं च कपालादिपरिमाणस्य घटादिपरिमाणावधिकापकर्षाश्रयत्वात् अणुत्वशब्दवाच्यत्वेऽपि कापालिकादिपरिमाणावधिकोत्कर्षाश्रयत्वान्न परमाणुशब्दवाच्यत्वम् । त्र्यणुकपरिमाणस्य तु सकलपरिमाणावधिकापकर्षाश्रयत्वात्किञ्चित्परिमाणावधिकोत्कर्षानाश्रयत्वाच्च परमाणुत्वशब्दवाच्यत्वम् । तस्मात्परमाण्वादिद्रव्यसद्भावे प्रमाणाभावात् पूर्वोक्तोत्पत्तिविनाशक्रमनिरूपणमसङ्गतमिति नवीनैकदेशिमतं निरसितुं आदौ तन्मतं संक्षेपेण अनुवदति । **किं पुनरिति** । अत्र पुनश्शब्दो वाक्यालङ्कारे । किंशब्दः प्रमाणशब्दपूर्वं योज्यः । परमाणुसद्भावे परमाण्वादिसद्भावे । आदिना द्व्यणुकपरिग्रहः । **प्रमाणमिति** । इति चेदिति शेषः । अनुवृत्तकिंशब्दसहितप्रमाणशब्देन किमपि प्रमाणं नास्तीत्यर्थो लभ्यते । तत्र संभवतीत्यत आह । **जालसूर्येत्यादिना** । जालसूर्यमरीच्यवच्छेदेन परिदृश्यमानमुत्कर्षानाश्रयमहत्त्वाश्रयो यदित्यर्थः । इदं च त्र्यणुकसद्भावे प्रत्यक्षप्रमाणोपन्यासाय । न तु तेन रूपेण पक्षत्वलाभाय गौरवात् । किन्तु त्र्यणुकत्वमेव पक्षतावच्छेदकम् । अत्र त्र्यणुकत्वं चतुरणुकजनकतावच्छेदकतया त्र्यणुकपदशक्यतावच्छेदकतया वा सिद्धो जातिविशेषः । न च पृथिवीत्वादिना सङ्करेण नास्य जातित्वमिति वाच्यम् । पृथिवीत्वादिव्याप्यजातिचतुष्टयाङ्गीकारात् प्रकृते पृथिवीत्वव्याप्यत्र्यणुकत्वजात्यवच्छिन्नं पक्षीकृत्य वक्ष्यमाणहेतुना सावयवत्वसाधने त्र्यणुकावयवादिसिद्धौ तुल्यन्यायेन जलत्वादिव्याप्यत्र्यणुकत्वावच्छिन्नस्यापि सावयवत्वसिद्धिः निराबाधेत्याशय इति ध्येयम् ॥ एतेन जलतेजस्त्र्यणुकयोः जालसूर्यमरीच्यवच्छेदेन उपलभ्यमानत्वे प्रमाणाभावात् वायुत्र्यणुक-

त्कपालवत् । यो द्व्यणुकावयवः स परमाणुः। स च नित्यः,तस्यापि कार्यत्वे अनवस्थाप्रसङ्गात् । सृष्टिप्रलयसद्भावे 'धाता यथापूर्वमकल्पयत्' इति

---

नी. चाक्षुषं प्रति कारणस्य महत्त्वस्य त्रुटावपेक्षिततया सावयवत्वं विना अवयवसं-

रा. वाति गच्छतीति व्युत्पत्त्या वायुः व्यजनं तस्मिन् वाति चलति सति इत्यर्थः

नृ. स्यातीन्द्रियत्वाच्च त्रयाणां जलादित्र्यणुकानां प्रत्यक्षप्रमाणसिद्धत्वाभावात् पक्षसिद्ध्यभावेन तत्तत्पक्षकन्यायाप्रवृत्त्या तादृशत्र्यणुकानां सावयवत्वे प्रमाणाभाव इति दूषणमपास्तम् । तत्त्र्यणुकत्वावच्छिन्नम् । **सावयवमिति** । अवयवसमवेतमित्यर्थः । **चाक्षुषद्रव्यत्वादिति** । द्रव्यवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषवत्त्वादित्यर्थः । **घटवदिति** । घटवदित्यनुमानात् द्व्यणुकासिद्धाविति शेषः । **त्र्यणुकावयवोऽपीति** । त्र्यणुकावयवत्वेन सिद्धद्व्यणुकोऽपीत्यर्थः । अपिशब्दः उक्तसमुच्चायकः । अत्र पक्षतावच्छेदकं च द्व्यणुकत्वम् । तच्च त्र्यणुकसमवायिकारणतावच्छेदकतया सिद्धपृथिवीत्वादिव्याप्यजातिचतुष्टयान्यतमात्मकमतो न साङ्कर्यावकाशः । एवं च तादृशान्यतमावच्छिन्नः पक्ष इति फलितमिति ध्येयम् । **सावयव इति** । अवयवसमवेत इत्यर्थः । समवेत इति वार्थः । **महदारम्भकत्वादिति** । महन्निरूपितसमवायिकारणतावत्त्वादित्यर्थः । महन्निष्ठसमवायसंबन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावत्त्वादिति वार्थः । **कपालवदिति।** कपालवदित्यनुमानात् द्व्यणुकावयवसिद्धाविति शेषः । **यो द्व्यणुकावयव इति** । द्व्यणुकावयवत्वेन सिद्धो य इत्यर्थः । **स एव परमाणुरिति** । स एव परमाणुशब्दवाच्य इत्यर्थः । अत्र परमाणुत्वमपि पृथिवीत्वादिव्याप्यनानाजातिस्तादृशद्व्यणुकसमवायिकारणतावच्छेदकतया सिद्धा । न चैवं सति द्रव्यत्वव्याप्यव्याप्यजातेः न परमाणुवृत्तित्वमिति नियमभङ्ग इति वाच्यम् । तादृशनियमे मानाभावात् द्व्यणुकादिसाधारणतादृशजातेः परमाणुवृत्तित्वस्य नियमार्थत्वाद्वा दोषाप्रसक्तेरिति ध्येयम् । **स च नित्य इति** । परमाणुः नित्य एवेत्यर्थः । नित्यशब्दोत्तरं योजितचशब्दस्य अवधारणार्थकत्वात् । तस्यानित्यत्वे बाधकमाह । **तस्यापीति** । परमाणोरपीत्यर्थः । **कार्यत्व इति** । महदारम्भकावयवत्वहेतुनेत्यादिः । सावयवत्वेऽनुमिते सतीत्यर्थः । **अनवस्थाप्रसङ्गादिति ।** अप्रामाणिकानन्तावयवधाराकल्पनापत्तेरित्यर्थः । तथा च परममहदिति व्यवहारान्यथानुपपत्त्या प्रमाणान्तरेण गगनादेः परममहत्त्वाङ्गीकारवत् परमाणुरिति व्यवहारान्यथानुपपत्त्या निरुक्तानुमानेन परमाणुत्वाश्रयवस्तुसिद्धावपि महदारम्भकावयवत्वहेतुना परमाणोः सावयवत्वसिद्धिः इत्यनुमानस्य निरुक्तान्यथानुपपत्त्यादिरूपानुकूलतर्काभावेन अप्रामाणिकानन्तावयवकल्पनासम्पादकत्वेन च

**श्रुतिरेव प्रमाणम् । 'सर्वकार्यद्रव्यध्वंसोऽवान्तरप्रलयः । सर्वभावकार्यध्वंसो महाप्रलयः' इति विवेकः। आकाशं लक्षयति। शब्दगुणकमिति।**

---

**नी.** ख्याजन्यस्य तस्य स्वीकर्तुमशक्यत्वादिति सङ्क्षेपः। यत्किंचिज्जन्यद्रव्यध्वंसस्येदानीमपि

**रा.** इति प्राहुः । **मूले अतीतेत्यादि ।** यद्यपि व्यवहारं प्रति व्यवहर्तव्यज्ञानमेव

**नृ.** अप्रयोजकशङ्काग्रस्तत्वादिति भावः ॥ नन्वीश्वरचिकीर्षाधीनाणुक्रियया सृष्टिः ईश्वरसञ्जिहीर्षाधीनपरमाणुक्रियया प्रलयः इत्यनुपपन्नं सृष्टिप्रलययोः प्रमाणाभावादित्याशङ्कां प्रमाणप्रदर्शनेन परिहरति । **सृष्टिप्रलयसद्भाव इति** । एतस्य श्रुतिरेव प्रमाणमित्युत्तरेणान्वयः। सृष्टौ प्रलये चेत्यर्थः। **धाता यथा पूर्वमकल्पयत् इत्यादिना** । आदिना "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति" इत्यादिश्रुतिपरिग्रहः । इदानीं शिष्यबुद्धिवैशद्याय प्रलयस्य द्वैविध्यं तयोर्लक्षणं चाह ।**सर्वकार्यद्रव्यध्वंस इति** । कार्यद्रव्यप्रातियोगिकाः यावन्तः ध्वंसाः तत्समुदाय इत्यर्थः । अत्र द्रव्ये कार्यत्वविशेषणमनर्थकं नित्यप्रतियोगिकध्वंसाप्रसिद्धेः किन्तु कार्यद्रव्याणामेव ध्वंसाः प्रसिद्धा इति स्फुटप्रतिपत्त्यर्थं द्रव्ये कार्यत्वनिवेशनम् । एवं च पर्याप्तिसंबन्धेन द्रव्यप्रतियोगिकध्वंससमुदायत्ववत्त्वं अवान्तरप्रलयलक्षणमिति हृदयम् । **सर्वभावकार्यध्वंस इति ।** भावकार्यस्य यावन्तो ध्वंसाः तावत्समुदाय इत्यर्थः । अत्रापि भावे कार्यत्वनिवेशनस्य अव्यावर्तकतया पर्याप्त्याख्यसंबन्धेन भावप्रतियोगिकध्वंससमुदायत्ववत्त्वं महाप्रलयलक्षणं पर्यवसितमिति बोध्यम् । अत्र "धाता यथा पूर्वमकल्पयत्" इति श्रुतिविरोधापत्त्या महाप्रलयो नाङ्गीकर्तव्य इत्यस्मद्गुरुचरणाः । **आकाशं लक्षयतीति** । क्रमप्राप्तमित्यादिः । **मूले शब्दगुणकमिति** । अत्र शब्दवत्त्वं लक्षणम् । लक्षणतावच्छेदकं शब्दत्वजातिः तद्व्याप्तिकत्वादिजातिश्च लक्षणतावच्छेदकभेदात् लक्षाणानामनेकत्वेऽपि क्षतिविरहात् । शब्दे गुणत्वोत्कीर्तनं गुणत्वहेतुना शब्दस्य द्रव्याश्रितत्वसाधने इतरबाधसहकारेणाकाशस्वरूपधर्मसिद्धिरित्येतादृशार्थस्फोरणाय। तत्सिद्धिप्रकारश्च अस्मत्कृतमुक्तावलीप्रभायां अनुसन्धेयः । नव्यास्तु आकाशस्य विशेषगुणान्तरव्यवच्छेदार्थं गुणत्वकथनमित्याहुः। समवायसंबन्धेन शब्दस्याकाशलक्षणत्वलाभाय तस्य गुणत्वकथनमित्यस्मद्गुरुचरणाः । न च वीणायां ध्वनिः वने कोलाहल इति प्रामाणिकप्रतीतिव्यवहारात् शब्दवत्त्वं वीणादावतिव्याप्तमिति वाच्यम्। वीणादेरवच्छेदकत्वावगाहित्वेनैव तदुपपत्तौ समवायेन शब्दवत्त्वे प्रमाणाभावात्। अन्यथा शरीरे सुखमिति व्यवहारात् शरीरेऽपि समवायेन सुखस्वीकारापत्तिः । अत्रादृष्टविशेषविशिष्टकर्णशष्कुल्यवच्छिन्नं सदाकाशमेव श्रोत्रेन्द्रियमित्युच्यते सर्वेषां कर्णशष्कुलीसत्त्वेऽपि अदृष्टविशेषविशिष्टत्वाभावात् केषांचित् बाधिर्यमिति बोध्यम् ।

नन्वाकाशमपि पृथिव्यादिवन्नाना, किं नेत्याह । तच्चैकमिति । भेदे प्रमाणाभावादित्यर्थः । एकत्वादेव सर्वत्र शब्दोपलब्धेर्विभुत्वमङ्गीकर्तव्य-

---

नी. सत्त्वात् सर्वेति । नित्यद्रव्याणां ध्वंसासंभवात् कार्येति । परमाणुनिष्ठरूपादीनां तदानीमपि सत्त्वात् द्रव्येति । ध्वंसानां ध्वंसासंभवेन महाप्रलयेऽपि सत्त्वात् भावेति दिक् । शब्दगुणकम् इत्यत्र शब्दवदिति वक्तव्ये तथाकथनं आकाशे शब्द एव विशेषगुण इति द्योतनाय । घटाकाशो मठाकाश इत्यादिव्यवहारस्योपाधिकृतत्वे नासाधकत्वादाकाशस्यानेकत्वे प्रमाणं नेत्याह । भेद इति । एकत्वादिति आकाशस्येत्यादिः । नन्वेकत्वेऽप्यविभुत्वमस्त्वित्यत आह । सर्वत्रेति । सर्वदिगवच्छे

रा. कारणम् न व्यवहर्तव्यपदार्थः, तथा सति अतीतघटव्यवहारानापत्तेरिति मूल-

नृ. तच्चैकमिति मूलप्रतिपाद्याकाशैकत्वं व्यवस्थापयितुं तन्मूलं अवतारयति । दीपिकायां नन्वित्यादिना । आकाशमपीति । अपिशब्दः नानात्वेन सिद्धपृथिव्यादि-चतुष्टयसमुच्चायकः । उक्तमेव विवृणोति । किं पृथिव्यादिवन्नानेति । प्रश्नार्थकः किंशब्दः नानेत्युत्तरं योज्यः । इति जिज्ञासायामिति शेषः । तथा च पृथिव्यादि-चतुष्टयस्य नानात्वसाधकं प्रमाणं यथा तथाऽऽकाशस्यापि नानात्वसाधकं प्रमाणमस्ति किमिति जिज्ञासायामिति फलितार्थः । नेत्याहेति । तादृशप्रमाणं नास्तीत्याहेत्यर्थः मूले तच्चैकमिति । तदेकमेवेत्यर्थः । यथाश्रुते अनेकत्वाश्रयघटादेरपि प्रत्येकमे-कत्ववत्त्वादव्यावर्तकतापत्तेः । तथा च लाघवात् यथा सर्वकार्यकर्तृत्वेन सिद्ध ईश्वरः तादृशकर्तृत्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकैकत्ववत्तया सिद्धः तथा शब्दाश्रयतया सिद्धमाकाशमपि लाघवात् शब्दसमानाधिकरणान्योन्याभावप्रतियो-गितानवच्छेदकैकत्ववत्तया सिद्धमिति प्रमाणाभावान्न तस्य पृथिव्यादिवदनेकत्वमिति भावः । उक्तार्थबोधनाय फलितार्थमाह । दीपिकायां भेद इति । पर्याप्तिसंबन्धेन द्वित्वादिमत्त्व इत्यर्थः । प्रमाणाभावादिति । प्रत्युत धर्मिग्राहकमानस्यैव निरुक्तै-कत्वग्राहकस्य सत्त्वादिति भावः । एकत्वादेवेति । अप्यर्थक एवकारः विभुत्वमि-त्युत्तरं योज्यः । निरुक्तैकत्वाश्रयाकाशरूपसमवायिकारणादित्यर्थः । सर्वत्रेति । सर्वावच्छेदेनेत्यर्थः । कालविशेषविशिष्टपृथिव्यादिचतुष्टयघटकप्रत्येकावच्छेदेनेति या-वत् । सर्वावच्छेदेन सर्वघटकगुणाद्यवच्छेदेन वा शब्दोत्पत्त्यप्रसिद्धया यथाश्रुतासङ्गतेः। शब्दोपलब्धेरिति । उपलभ्यमानशब्दादित्यर्थः । उपलभ्यमानत्वविशेषणं त-दवच्छेदेन शब्दोत्पत्तौ प्रमाणप्रदर्शनाय । न तु तस्यापि हेतुतावच्छेदकता व्यर्थत्वात् । तथा च काश्याद्यवच्छेदेन सेत्वाद्यवच्छेदेन च शब्दोत्पत्त्यनुरोधेनाकाशे काश्या-दिदेशसंयोगस्य सेत्वादिदेशसंयोगस्य चावश्यकतया एकस्याकाशस्य तावत्पदार्थसं-योगवत्त्वं विभुत्वं विना न निर्वहतीत्यन्यथानुपपत्त्या तस्य विभुत्वसिद्धिरिति भावः ।

मित्याह विभ्विति। सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वं, मूर्तत्वं परिच्छिन्नपरि-

---

नी. देनेत्यर्थः। परिच्छिन्नपरिमाणवत्त्वमिति। यदि परिच्छिन्नत्वस्यापकर्षाश्रयत्वा-

रा. मसङ्गतं। दिक्कालस्य कार्यमात्रकारणत्वेन तादृशव्यवहारकारणत्वमक्षतमेवेत्यु-

नृ. विभुत्वं निर्वक्ति। सर्वमूर्तेति। यद्यपि परममहत्परिमाणवत्त्वरूपमेव विभुत्वमिति शक्यते वक्तुं तथापि वैभववान् महाकाशस्तथा चात्मेति सूत्रे कणादेन परममहत्त्वसाधकलिङ्गत्वेन विभुत्वस्य प्रतिपादनात् परममहत्त्वस्य तत्स्वरूपत्वं सूत्रकाराननुमतमिति प्रकारान्तरेण विभुत्वनिर्वचनं कृतमिति ध्येयम्। ननु सर्वमूर्तद्रव्यसंयोगित्वमित्यस्य सर्वाणि यानि मूर्तद्रव्याणि तावत्प्रतियोगिकसंयोगवत्त्वार्थकत्वे तावत्प्रतियोगिकसंयोगाप्रसिद्धया असंभवः। तावतां प्रत्येकप्रतियोगिकसंयोगसमुदायवत्त्वार्थकत्वे घटपटसंयोगादेरपि तादृशसंयोगरूपतया तद्घटितसमुदायवत्त्वस्याकाशादावभावात् तद्दोषतादवस्थ्यम्। यावन्ति मूर्तद्रव्याणि तेषां प्रत्येकप्रतियोगिकैकैकघटितसंयोगसमुदायार्थकत्वे उत्पन्नविनष्टपृथिव्यादेरपि मूर्तत्वजात्याश्रयत्वेन सर्वमूर्तान्तर्गततया तत्प्रतियोगिकसंयोगस्याप्रसिद्धत्वेन तद्घटितसंयोगसमुदायवत्त्वाभावात् तद्दोषतादवस्थ्यमिति चेदत्र प्राञ्चः। एतद्वाक्यघटकमूर्तपदं न जात्यवच्छिन्नपरम्। किन्तु क्रियावत्परम्। एवं च क्रियावत्सकलपदार्थघटकप्रत्येकप्रतियोगिकैकसंयोगघटितसंयोगसमुदायवत्त्वं लक्षणं फलितमिति नोक्तदोष इत्याहुः। नव्यास्तु प्रकृतवाक्यघटकमूर्तशब्दस्य नित्यमूर्तपरतया परमाणूनामेव नित्यमूर्तत्वात् सकलपरमाणुघटकप्रत्येकप्रतियोगिकैकसंयोगघटितसंयोगसमुदायवत्त्वं विभुसामान्यलक्षणं फलितमिति नोक्तदोषप्रसक्तिरित्याहुः। तदुभयमपि मन्दम्। अपेक्षाबुद्धिविशेषविषयत्वरूपस्य आकाशादिचतुष्टयघटकप्रत्येकमात्रसमवेततादृशसंयोगसमुदायपर्याप्तसमुदायत्वस्य भिन्नभिन्नतत्तत्तदेकैकतादृशसमुदायत्वावच्छिन्नवत्त्वरूपविभुसामान्यलक्षणस्य वाच्यतासम्बन्धेन विभुपदवत्त्वरूपलक्ष्यतावच्छेदकाश्रयेऽन्यस्मिन्नसत्त्वादव्याप्त्यापत्तेः, प्रत्येकसमवेततादृशसंयोगसमुदायचतुष्टयपर्याप्तैकसमुदायत्वस्य तादृशसमुदायचतुष्टयमात्रविशेष्यकज्ञानविशेष्यत्वरूपस्य लक्षणतावच्छेदकत्वे तादृशसमुदायचतुष्टयस्यैव तादृशसमुदायत्वरूपलक्षणतावच्छेदकविशिष्टतया कुत्रापि तादृशलक्षणवत्त्वाभावात् असंभवापत्तेः, तादृशसंयोगसमुदायचतुष्टयान्यतमत्वस्य लक्षणतावच्छेदकत्वे अन्यतमत्वस्य व्यासज्यवृत्तितया समुदायघटकैकसंयोगेऽपि तादृशान्यतमत्वावच्छिन्नवत्त्वरूपलक्षणस्य घटादावपि सत्त्वादतिव्याप्त्यापत्तेः, लक्षणे द्रव्यत्वनिवेशनवैयर्थ्यापत्तेश्च। अस्मद्गुरुचरणास्तु सर्वमूर्तद्रव्यसंयोगीत्यनेन गगनाद्यसंयुक्तमूर्तं नास्तीत्यर्थो लभ्यते। एवं च स्वासंयुक्तमूर्तकं यद्यत् स्वं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वं लक्षणमिति फलितम्। अत्र गगनाद्यसंयुक्तमूर्ता-

माणवत्त्वं क्रियावत्त्वं वा। विभुत्वादेव आत्मवन्नित्यमित्याह। नित्यं

नी. त्मकतया परमाणोरणुतरत्वेन द्व्यणुकपरिमाणापेक्षया परमाणुपरिमाणस्यापकृष्टत्वाभावात्परमाणुष्वव्याप्तमिदं लक्षणमित्युच्यते। तदाह। **क्रियावत्त्वमिति।**

रा. च्यते। तदा कार्यमात्रकारणीभूतादृष्टादौ अतिव्याप्तिः। घटादिकारणत्वमादाय

नृ. प्रसिद्धया स्वपदेन गगनाद्युपादानासंभवात् लक्षणसमन्वयः। गगनादेरपि स्वासंयुक्तगुणादिकत्वादसंभववारणाय मूर्तेत्युक्तम्। मूर्तत्वजात्यवच्छिन्नोत्पन्नविनष्टघटादेरपि गगनाद्यसंयुक्तत्वादसंभववारणाय संयुक्तार्थकद्रव्यपदम्। तादृशघटादेः गगनासंयुक्तत्वेऽपि संयुक्तत्वाभावान्नासंभवः। स्वासंयुक्तसंयुक्तकं यद्यदित्युक्तावपि गगनादेरपि गगनाद्यसंयुक्तसंयुक्तगगनादिकत्वात् तद्दोषतादवस्थ्यमिति मूर्तेति विशेषणमिदानीमप्यावश्यकमेवेति। इत्थं च स्वासंयुक्तसंयुक्तमूर्तकं यद्यत् स्वं तत्तद्भयक्तिभेदकूटवत्त्वं विभुसामान्यत्वानुगतं लक्षणं फलितमिति न कश्चिद्दोषः। इदं च मूर्तपदस्य मूर्तत्वजात्यवच्छिन्नपरत्वाभिप्रायेण। मूर्तपदस्य क्रियावत्परत्वे परमाणुपरत्वे वोत्पन्नविनष्टघटादिकमादायासंभवाप्रसक्तेः द्रव्यपदं व्यर्थमेव। न चैवमपि रूपादेः संयोगाप्रसिद्धया स्वशब्देन रूपादेरुपादानासंभवेन तत्र लक्षणसत्त्वादतिव्याप्तितादवस्थ्यमिति वाच्यम्। तादृशभेदकूटविशिष्टद्रव्यत्वस्य लक्षणत्वस्वीकारेण अतिव्याप्त्यनवकाश इति व्याचकुः। अत्र मूर्तपदस्य परमाणुपरत्वेऽपि रूपादावतिव्याप्तिवारणाय तादृशभेदकूटसमानाधिकरणद्रव्यविभाजकधर्मवत्त्वस्य विवक्षणीयतया तादृशधर्मवत्त्वलाभायैव द्रव्यपदमुपात्तम्। यद्वा सर्वपदसमभिव्याहृतमूर्तशब्देन क्रियात्वावच्छिन्नविशिष्टं मूर्तत्वजात्यवच्छिन्नं वा लभ्यते। संयोगिशब्देन भिन्नयोरेव संयोगनियमात् भेदो लभ्यते। द्रव्यपदसमभिव्याहारात् तादृशभेदसमानाधिकरणद्रव्यविभाजकधर्मवत्त्वम्। क्रियात्वावच्छिन्नसमानाधिकरणतादृशधर्मवत्त्वं मूर्तत्वजात्यवच्छिन्नसमानाधिकरणतादृशधर्मवत्त्वं वा निर्दुष्टं लक्षणमिति लभ्यत इति न कोऽपि दोषः। अत्रैव दीपिकाकारस्यापि निर्भर इति प्रतिभाति। प्रसङ्गसङ्गत्या अत्रैव मूर्तस्यापि लक्षणमाह। **मूर्तत्वमिति। परिच्छिन्नपरिमाणवत्त्वमिति।** अत्र परिमाणे परिच्छिन्नत्वं नापकर्षाश्रयत्वं परमाणुपरिमाणस्य कुतोऽप्यपकर्षानाश्रयत्वेन परमाणावव्याप्तेः। किन्तु परममहत्परिमाणभिन्नत्वमाकाशादिचतुष्टयान्यतमासमवेतत्वं वा परिच्छिन्नत्वं तदाश्रयपरिमाणवत्त्वं मूर्तत्वमिति फलितम्। एतल्लक्षणस्य गुरुत्वात् लक्षणान्तरमाह। **क्रियावत्त्वं वेति।** क्रियात्वावच्छिन्नं समवायेन लक्षणमित्यर्थः। न चेदमुत्पन्नविनष्टघटादौ अव्याप्तमिति वाच्यम्। क्रियाधवृत्तिगगनासमवेतजातिमत्त्वस्य विवक्षितत्वात्। अत्र आत्मत्वजातिमादायातिव्याप्तिवारणाय क्रियावद्वृत्तीति। तादृशद्रव्यत्वादिजातिमादाय गगनादावतिव्याप्तिवारणाय गगनासमवेतेति। क्रियावत्त्वं तद्वृत्तित्वं तादृशजातिमत्त्वं च समवायेन

**चेति । कालं लक्षयति । अतीतेति । सर्वाधारः कालः सर्वकार्यनिमित्तकार-**

---

नी. वस्तुतस्तु लाघवमेवोत्तरकल्पानुसरणे बीजम् इति ध्येयम् । अतीतादिव्यवहारहेतुः कालः इति मूले आदिना अनागतादिपरिग्रहः । अतीतत्वं च वर्तमानध्वंसप्रतियोगित्वम् । वर्तमानत्वम् इह शब्दप्रयोगाधिकरणकालवृत्तित्वम् । भविष्यत्त्वं च वर्तमानप्रागभावप्रतियोगित्वम् । अत्र सर्वत्र कालस्य घटकतया अतीतादिव्यवहारे हेतुत्वं तस्येति ध्येयम् । न च तादृशव्यवहारः सूर्यपरिस्पन्दोपाधिमादाय सम्भवतीति वाच्यम् । अनुगतस्य व्यवहारस्यानुगतविषयं विना असम्भवेनातिरिक्तकालस्वीकारादिति दिक् । **सर्वाधार इति** । कालिकसम्बन्धेनेत्यादिः । अत्र विभिन्नका-

रा. विनिगमनाविरहाच्च । तत्रापि अतीतादिव्यवहार एव हेतुः ज्ञापकं यस्य स इति

नृ. बोध्यम् । नातः संबन्धान्तरेण तद्वत्त्वतद्वृत्तित्वादिकमादाय दोषः । इदमुपलक्षणम् । क्रियानिरूपितसमवायिकारणतावच्छेदकतया सिद्धजातिविशेषरूपं मूर्तत्वम् । तादृशजातिः उत्पन्नविनष्टघटादावपि स्वीक्रियते बाधकाभावात् इत्यपि बोध्यम् । विभु क्रियं चेति मूलेन यतो विभु तत एव नित्यमिति अभिप्रायं प्रकाशयति । **विभुत्वादवेति** । विभुत्वलिङ्गादेवेत्यर्थः । **आत्मवन्नि यमित्याहेति** । तथा च आकाशं नित्यं विभुत्वात् आत्मवदित्यनुमानात् आकाशस्य नित्यत्वसिद्धिर्भवतीत्याशयेनाहेति कलितार्थः । इदमुपलक्षणम् । शब्दो द्रव्यसमवेतः गुणत्वात् रूपवत् इत्यनुमानात् कॢप्तद्रव्यासमवेतत्वबाधसहकृतात् सिद्धयदाकाशं लाघवज्ञानसहकारात् यथैकत्वेन सिध्यति तथा नित्यत्वे लाघवमिति लाघवज्ञानसहकारात् नित्यत्वेनापि सिध्यतीत्यपि बोध्यम् । **कालं लक्षयतीति** । क्रमप्राप्तमित्यादिः । आदौ प्रसाध्यानन्तरं लक्षयतीत्यर्थः **मूले अतीतादीति** । आदिना वर्तमानत्वभविष्यत्त्वयोः परिग्रहः । अत्र अतीतत्वं शब्दप्रयोगाधिकरणकालवृत्तिध्वंसप्रतियोगित्वम् । वर्तमानत्वं च तादृशकालवृत्तित्वम् । भविष्यत्त्वं च तादृशकालवृत्तिप्रागभावप्रतियोगित्वमिति बोध्यम् । अतीतेति भावप्रधाननिर्देशः । व्यवहारो ज्ञानजनकशब्दः । अतीतादिपदोत्तरलुप्तषष्ठ्याः प्रकारित्वमर्थः । तस्य व्युत्पत्तिवैचित्र्यात् व्यवहारपदार्थैकदेशज्ञानेऽन्वयः । तत्र कारणं तन्निरूपिकारणतावच्छेदकघटकमित्यर्थः । कारणशब्दस्य कारणतावच्छेदकपरत्वात् । एवं च तादृशव्यवहारं प्रति अतीतत्वादेः तज्ज्ञानस्य वान्वयव्यतिरेकाभ्यां हेतुत्वावश्यकतया वाच्यतासंबन्धावच्छिन्नातीतादिशब्दनिष्ठकार्यतानिरूपितस्वरूपसंबन्धावच्छिन्नातीतत्वादिनिष्ठकारणतावच्छेदकघटकतया तादृशकार्यतानिरूपितविशेष्यतासंबन्धावच्छिन्नातीतत्वादिप्रकारज्ञाननिष्ठकारणतानिरूपितविशेष्यतासंबन्धावच्छिन्नावच्छेदकाश्रयघटकतया वा कालसिद्धिरिति भावः । इदमुपलक्षणम् । समवायेन किञ्चिदवधिककालिकपरत्वं प्रति विशेष्यतासंबन्धेन किञ्चिन्निष्ठतपनपरिस्पन्दापेक्षया अधिकतपनपरिस्पन्दवत्ताज्ञानं कारणमिति सर्वसम्मतम् । तपनपरिस्पन्दस्य

णम्। दिशो लक्षणमाह। प्राचीति। दिगपि कार्यमात्रनिमित्तकारणम्। आत्मनो

नी. लिकयोराधाराधेयभावविरहात्क्रियादेः सर्वाधारत्वशङ्कैव नावतरतीति भावः । प्राच्या-
दिव्यवहारहेतुरिति मूले आदिना प्रतीच्यादिपरिग्रहः । उदयाचलसन्निहितमूर्ता-

रा. व्युत्पत्त्या अतीतादिव्यवहारज्ञाप्यत्वमेव काललक्षणम् । अतीतत्वं च वर्तमानकाल-

नृ. घटादौ समवायादिरूपसाक्षात्संबन्धबाधेन स्वसमवायिसंयुक्तसंयोगरूपपरंपरासंबन्धेन
तत्र तत्प्रकारकत्वं वाच्यम् । एवं च कालिकपरत्वजनकबहुतररविक्रियाविशिष्टमिद-
मिति ज्ञानं परम्परासंबन्धघटकवस्त्वधीनं साक्षात्संबन्धाभावे सति विशिष्टज्ञानत्वात्
लोहितस्फटिक इति विशिष्टज्ञानवदित्यनुमानात् निरुक्तपरम्परासंबन्धघटकवस्त्वसिद्धौ
पृथिव्यादिचतुर्णां मनसश्च अविभुद्रव्यत्वेनकस्यापि तादृशद्रव्यस्य परत्वाश्रययावद्द्रव्य-
संयोगाभावात् क्लृप्तविभूनान्तु विनिगमनाविरहात् बहूनां संबन्धघटकत्वे गौरवाच्च
क्लृप्तद्रव्याणां निरुक्तपरम्परासंबन्धघटकत्वासंभवेनाक्लृप्त एव लाघवज्ञानसहकृतनि-
रुक्तानुमानात् नित्यत्वैकत्वविभुत्वाश्रयतया सिध्यतीति स एव महाकाल इत्यु-
च्यत इत्यभिप्रायेण स चैको विभुर्नित्यश्चेत्युक्तमित्यपि बोध्यम् । एतेन
तपनपरिस्पन्दानामेवातीतादिव्यवहारकारणतावच्छेदकघटकत्वसंभवात् न तेन महा-
कालसिद्धिरिति केषाञ्चिद्दूषणं प्रत्युक्तम् । प्रकारान्तरेण महाकालस्य साधितत्वात्
मूले महाकालस्य लक्षणाप्रतिपादनात् न्यूनतापरिहाराय स्वयं लक्षणमाह ।
**दीपिकायां सर्वाधार इति ।** सकलपदार्थनिष्ठकालिकसंबन्धावच्छिन्ना-
धेयतानिरूपिताधिकरणतावत्त्वं महाकाललक्षणमित्यर्थः । लक्षणान्तरमाह । **स-
र्वकार्येति ।** कार्यत्वावच्छिन्नकालिकसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसं-
बन्धावच्छिन्नकारणत्वमित्यर्थः । कारणतायां तादात्म्यसंबन्धावच्छिन्नत्वोपपादना-
ददृष्टे नातिव्याप्तिः । अदृष्टस्य कालिकसंबन्धेनैव हेतुत्वात् । अत्र प्रथमलक्षणापे-
क्षया द्वितीयलक्षणस्य कारणत्वादिघटितत्वेन गुरुत्वात् निमित्तकारणं चेत्यत्र
विकल्पार्थकचशब्दः उत्तरकल्पे अनिर्भरसूचनायेति हृदयम् । **दिश इति ।** क्रम-
प्राप्ताया इत्यादिः । **लक्षणमाहेति ।** प्रमाणभुक्त्वेत्यादिः । **मूले प्राच्येत्यादि ।**
आदिना प्रतीच्यादिपरिग्रहः । अत्र प्राचीत्वमुदयाचलसन्निहितमूर्तावच्छिन्न-
दिक्त्वम् । अस्ताचलसन्निहितमूर्तावच्छिन्नदिक्त्वं प्रतीचीत्वम् । सुमेरुसन्निहितमूर्ता-
वच्छिन्नदिक्त्वं उदीचीत्वम् । सुमेरुव्यवहितमूर्तावच्छिन्नदिक्त्वं अवाचीत्वमिति
हृदयम् । एवं च प्राच्यादेः व्यवहार इति विग्रहे निरुक्तप्राचीत्वादिविशिष्टविषयकज्ञान-
जनकशब्दः इत्यर्थलाभः । प्राचीत्यादिरिति व्यवहार इति विग्रहे प्राचीप्रतीचीत्याद्या-
कारकशब्द इत्यर्थलाभः । तत्र हेतुस्तन्निरूपितकारणतावच्छेदकमित्यर्थः । तथा च
व्यवहारं प्रति व्यवहर्तव्यज्ञानस्य हेतुतया वाच्यतासंबन्धावच्छिन्नतादृशशब्दनिष्ठ-
कार्यतानिरूपितज्ञाननिष्ठकारणतानिरूपितविषयतासंबन्धावच्छिन्नावच्छेदकताश्रयतया

लक्षणमाह। ज्ञानेति। आत्मानं विभजते। स द्विविध इति। परमात्मनां

---

नी. वच्छिन्ना दिक् प्राची। अस्ताचलसन्निहितमूर्तावच्छिन्ना दिक् प्रतीची। मेरोः सन्निहितमूर्तावच्छिन्ना दिक् उदीची। तद्व्यवहितमूर्तावच्छिन्ना तु दक्षिणा। मूले ज्ञाना-

रा. वृत्तिध्वंसप्रतियोगित्वम्। वर्तमानत्वं च प्रतियोग्यधिकरणत्वम्। एवं भविष्यत्त्वं वर्तमान-

नृ. महादिक्सिद्धिरिति भावः। इदमुपलक्षणम्। पाटलिपुत्रात् काश्यपेक्षया प्रयागस्य परत्वं दृष्टम्। तच्च प्रयागे पाटलिपुत्रावधिककाशीनिष्ठसंयुक्तसंयोगपरम्परापेक्षयाधिकसंयुक्तसंयोगरूपपरम्परावत्त्वज्ञानजन्यमिति सकलग्रन्थकारानुमतम्। प्रयागे साक्षात् समवायादिसम्बन्धेन तादृशसंयोगपरम्परावत्त्वस्य बाधिततया स्वसमवायिसंयुक्तसंयोगरूपपरम्परासंबन्धेन तादृशसंयोगसमुदायवत्त्वप्रकारकप्रयागविशेष्यकज्ञानमेव प्रयागनिष्ठतादृशपरत्वजनकं वाच्यम्। एवं च प्रयागनिष्ठतादृशपरत्वजनकं प्रयागविशेष्यकं पाटलिपुत्रावधिककाशीनिष्ठसंयुक्तसंयोगपरम्परापर्याप्तसंख्याधिकसंख्यापर्याप्त्यधिकरणसंयुक्तसंयोगपरम्पराप्रकारकज्ञानमिदं निरुक्तपरम्परासंबन्धघटकसापेक्षं साक्षात् संबन्धाभावे सति विशिष्टबुद्धित्वात् लोहितः स्फटिक इति विशिष्टज्ञानवदित्यनुमानाज्ज्ञानवज्ज्ञानसहकृतात् तादृशपरम्परासंबन्धघटकतया सिद्धस्य कालसिद्धिस्थलोक्तरीत्या क्लृप्तद्रव्यानात्मकत्वसिद्धौ नित्यत्वैकत्वविभुत्वाश्रयतया महादिक्सिद्धिरिति अभिप्रायेण सा चैका विभ्वी नित्या चेत्युक्तमित्यपि बोध्यम्। एतेनोदयगिरिव्यवहितसन्निहितमूर्तानामेव मेरुसन्निहितव्यवहितमूर्तानामेव च क्लृप्तानां प्राचीप्रतीचीत्यादिव्यवहारजनकतावच्छेदकस्वीकारात् न तेन महादिक्सिद्धिरिति केषाञ्चिद्दूषणमपास्तम्। प्रकारान्तरेण महादिशः साधितत्वात्। **आत्मन इति।** क्रमप्राप्तस्येत्यादिः। **लक्षणमाहेति।** व्यावर्तकमाहेत्यर्थः। **मूले ज्ञानाधिकरणमात्मेति।** समवायेन ज्ञानवत्त्वमात्मनो लक्षणमित्यर्थः। समवायेन ज्ञानस्य लक्षणत्वलाभायाधिकरणपदम्। इदमुपलक्षणम्। आत्मत्वजातिमत्त्वमप्यात्मनो लक्षणम्। सुखादिसमवायिकारणतावच्छेदकतयात्मत्वजातिसिद्धिसंभवात्। सा जातिरीश्वरेऽपि स्वीक्रियते। शरीरादिकारणान्तरविरहेणैव ईश्वरे सुखाद्युत्पत्त्यापादनासम्भवात् नित्यस्येत्यादिनियमभङ्गप्रसङ्गः। न चैवं सति आकाशादावपि तादृशजातिस्वीकारापत्तिः। शरीरादिरूपकारणान्तरविरहेणैव तत्र सुखाद्युत्पत्त्यापादनासंभवात् सकलकारणसत्त्वघटितनित्यस्येत्यादिनियमभङ्गाप्रसक्तिरिति वाच्यम्। तथापि गगनादावात्मेति व्यवहाराभावेन तादृशजात्यनभ्युपगमात्। ईश्वरे तु श्रौतव्यवहारानुरोधेन तादृशजातिस्वीकारस्यावश्यकत्वाच्च। वस्तुतस्तु आत्मपदशक्यतावच्छेदकतया आत्मत्वजातिसिद्धिर्बोध्या। असति बाधके शक्यतावच्छेदकतया जातिसिद्धेस्सर्वानुमतत्वात्। एतेन सुखादिसमवायिकारणतावच्छेदकतया अनति-

लक्षणमाह । तत्रेति । नित्यज्ञानाधिकरणत्वमीश्वरत्वम् । नन्वीश्वरसद्भावे किं प्रमाणम् । न तावत्प्रत्यक्षम । तद्धि बाह्यमान्तरं वा । नाद्यः

---

नी. धिकरणमिति । समवायेन ज्ञानवदित्यर्थः । तत्र तयोर्मध्ये । दीपिकायाम् नित्यज्ञानाधिकरणत्वमिति । न च 'नित्यं विज्ञानमानन्दं ब्रह्म' इति श्रुत्या

रा. कालवृत्तिप्रागभावप्रतियोगित्वम् । व्यवहाराणां कालज्ञापकत्वं च अतीतादिव्यवहारः

नृ. प्रसक्तजीवत्वजातेरेव साधनौचित्यात् तादृशावच्छेदकत्वहेतुना ईश्वरसाधारणात्मत्वसाधनं कुसृष्टिसंपादकत्वेन अनुचितमिति शङ्का निरस्ता । यत्तु आत्मनि प्रमाणाभावात तल्लक्षणाभिधानमयुक्तमिति तन्न । जीवानां प्रत्येकं अहं सुखीत्यादिप्रत्यक्षसिद्धत्वात सर्व एव आत्मानस्समर्पिता इति श्रुतिसिद्धत्वाच्च । एवमीश्वरस्यापि आत्मा वा अरे द्रष्टव्यः श्रोतव्य इत्यादिश्रुतिसिद्धत्वात् । तस्मादात्मसामान्यस्य प्रमाणसिद्धत्वेन नोक्तदोषावकाश इति । स द्विविध इति । निरुक्तलक्षणलक्षित आत्मा प्रकारद्वयान्यतरविशिष्ट इत्यर्थः । प्रकारद्वयमेवाह । परमात्मेति । भावप्रधाननिर्देशात् परमात्मत्वं जीवात्मत्वं चेत्यर्थः । इतिशब्दस्य अभेदोऽर्थः । तस्य प्रकारद्वयेऽन्वयः । एवं च परमात्मत्वजीवत्वाभिन्नप्रकारद्वयान्यतरविशिष्ट आत्मेति समुदितवाक्यार्थः । तत्रेति । परमात्मजीवात्मनोर्मध्य इत्यर्थः । घटकत्वं सप्तम्यर्थः । तस्य परमात्मन्यन्वयः । ईश्वर इति । सृष्ट्यादिकर्तेत्यर्थः । एतेन ईश्वरे प्रमाणं दर्शितम् । तच्चाग्रे स्फुटीभविष्यति । सर्वज्ञ इति । परमात्मेत्यत्र परमात्मत्वनिर्वचनम् । तच्च सर्वविषयकज्ञानवत्त्वरूपम् । इदमेव ईश्वरलक्षणमिति हृदयम् । अत्र ईदृशमूलोक्तलक्षणं योगिष्वतिव्याप्तिदोषग्रस्तमिति विचिन्त्य स्वयं निर्दुष्टलक्षणमाह । दीपिकायां नित्यज्ञानाधिकरणत्वमिति । समवायेन नित्यज्ञानवत्त्वमित्यर्थः । एतल्लाभायैवाधिकरणपदं उपात्तम् । इदानीं प्रसङ्गसङ्गत्या निरीश्वरवादिनं निराकर्तुमादौ तन्मतमुपन्यस्यति । नन्विति । ईश्वरसद्भाव इति । ईश्वरास्तित्व इत्यर्थः । किं प्रमाणमिति । न किमपि प्रमाणमित्यर्थः । भवन्मतसिद्ध ईश्वरः प्रमाणसामान्यागम्य इति समुदितार्थः । अत्र प्रत्यक्षादिप्रमाणविशेषगम्यत्वाभावकूटवत्त्वात् यन्नैवं तन्नैवं यथा घट इति सदृष्टान्तहेतुः पूरणीयः । प्रकृते हेतोस्स्वरूपासिद्धिं वारयितुं कूटघटकप्रत्येकाभावं साधयति । न तावत्प्रत्यक्षमिति । ईश्वरः प्रत्यक्षप्रमाणगम्यो नेति फलितार्थः । अत्र मानसान्यप्रत्यक्षनिरूपितलौकिकविषयत्वाभावमानसनिरूपितलौकिकविषयत्वाभावोभयवत्त्वादाकाशवदिति सदृष्टान्तहेतुः पूरणीयः । तद्धीति । प्रत्यक्षप्रमाणगम्यत्वं हीत्यर्थः । हि प्रसिद्धौ । बाह्यमान्तरं वेति । मानसान्यप्रत्यक्षनिरूपितलौकिकविषयत्वरूपं मानसनिरूपितलौकिकविषयत्वरूपं वा खल्वित्यर्थः । तादृशोभयात्मकहेतुघटकाभावद्वयं क्रमेण साधयति । नाद्य इति । न मान-

**अरूपिद्रव्यत्वात् । न द्वितीयः आत्मसुखदुःखादिव्यतिरिक्तत्वात् । नाप्यनुमानं लिङ्गाभावादिति चेन्न । अङ्कुरादिकं सकर्तृकं कार्यत्वाद्‌-**

---

नी. विरोध इति वाच्यम् । आनन्दपदस्यानन्दवदर्थकताया इव विज्ञानपदस्यापि विज्ञानवदर्थकतास्वीकारेणाविरोधात् । न चानन्दपदस्यैव तादृशार्थकत्वमसिद्धमिति वाच्यम् । अर्शआद्यजन्तत्वाङ्गीकारेण तादृशार्थसिद्धेः । अन्यथा नपुंसकत्वानुपपत्तेः । अत्रानन्दो भारापगमे सुखी संवृत्तोऽहम् इतिवद्दुःखाभावे उपचर्यते । नवीनास्तु नित्यसुखमीश्वरस्याङ्गीकुर्वन्तीत्यलमाधिकजल्पनेन । **अरूपिद्रव्यत्वादिति** । बाह्यप्रत्यक्षं प्रति उद्भूतरूपस्य हेतुत्वादिति भावः । **आत्मसुखदुःखादीति** । विजातीयात्म-

रा. सविषयकः साधुव्यवहारत्वात् इत्येवं बोध्यम् । कालाभावे कालघटितव्यवहारानुपपत्तेरिति । एवमग्रेऽपि बोध्यम् । **अङ्कुरादिकमिति** । पृथिवीत्वस्य पक्षताव-

नृ. सान्यप्रत्यक्षनिरूपितलौकिकविषयतावानित्यर्थः । अत्र हेतुमाह । **अरूपिद्रव्यत्वादिति** । रूपत्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदविशिष्टद्रव्यत्वादित्यर्थः । द्रव्यवृत्तिदैशिकविशेषणतासंबन्धेन तादृशभेदवत्त्वादिति यावत् । नातो विशेषणविशेष्यभावे विनिगमनाविरहप्रयुक्तदोषः । अथवा । अरूपिद्रव्यत्वादिति । रूपसमवायित्वाभावरूपसमवायिसमवेतत्वाभावतादृशसमवायिसमवेतसमवेतत्वाभावरूपसमवायादिनिरूपितविशेषणत्वाभावैतत्समुदायवत्त्वादित्यर्थः । एतेन विशेषरूपेण संसर्गत्वानङ्गीकर्तृप्राचीनमते द्रव्यवृत्तिदैशिकविशेषणतात्वेन तस्य हेतुतावच्छेदकसंबन्धत्वासंभवात् तादृशसंबन्धेन नोक्तभेदस्य हेतुत्वमिति दूषणं प्रत्युक्तम् । **न द्वितीय इति** । न मानसनिरूपितलौकिकविषयतावानित्यर्थः । तत्र हेतुमाह । **आत्मेति** । जीवेत्यर्थः । यथाश्रुते ईश्वर आत्मभेदाभावेन नैय्यायिकमते तादृशभेदघटितहेतोस्स्वरूपासिद्ध्यापत्तेः । **सुखदुःखादीति** । आदिना इच्छाद्वेषप्रयत्नानां संग्रहः । तथा च जीवत्वावच्छिन्नप्रतियोगिताकभेदसुखत्वादियत्नत्वान्तसमुदायघटकप्रत्येकधर्मावच्छिन्नप्रतियोगिताकभेदैतत्समुदायवत्त्वादित्यर्थः । अथवा जीवसुखादियत्नान्तान्यतमत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वादित्यर्थः । घटवदिति दृष्टान्तः पूरणीयः । **नाप्यनुमानमिति** । अपिशब्दः प्रत्यक्षसमुच्चायकः । यथा ईश्वरे प्रत्यक्षं न प्रमाणं तथानुमानमपीत्यर्थः । ईश्वरः अनुमानप्रमाणगम्यत्वाभाववानिति फलितार्थः । अत्र हेतुमाह । **लिङ्गाभावादिति** । तद्व्याप्यलिङ्गाभावादित्यर्थः । तथा च यत्र यद्व्याप्यलिङ्गं प्रसिद्धं तत्र तदनुमेयम् । यथा वह्निव्याप्यधूमात्मकलिङ्गं पर्वते प्रसिद्धमिति भवति । पर्वते वह्निरनुमेयः । प्रकृते ईश्वरव्याप्यलिङ्गस्य क्वापि अनिर्णीतत्वेन ईश्वरो न कुत्राप्यनुमातुं योग्य इत्याशयः । अत्र संज्ञासंज्ञिसंबन्धस्यैवोपमानप्रमाणत्वेन ईश्वरे उपमानप्रमाणगम्यत्वाभावस्य सर्वमतसिद्धत्वात न साधितमिति हृदयम् । इदानीं लौकिकशब्दानां आप्तोक्तत्वानिर्णयात् तत्प्र-

टवत् इत्यनुमानस्यैव प्रमाणत्वात् । उपादानगोचरापरोक्षज्ञानचिकीर्षा-

---

नी. मनस्संयोगस्य मानसप्रत्यक्षहेतोरीश्वरेऽभावादिति भावः । **प्रमाणत्वादिति** । न चेदमप्रयोजकमिति शङ्क्यम् । कार्यत्वावच्छिन्नं प्रति कृतित्वावच्छिन्नस्य हेतुत्वेना-

रा. च्छेदकत्वे सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे सिद्धसाधनम् । अवच्छेदकावच्छेदेन

नृ. माणकत्वाभावेऽपि सर्वसंमतिरिति श्रुतिप्रमाणकत्वाभावमेव साधयति । **नाप्यागम इति** । आगमः ईश्वरसाधको नेत्यर्थः । तत्र हेतुमाह । **तथाविधेति** । निर्णीतप्रामाण्यकश्रुतेरभावादित्यर्थः । श्रुतेर्निर्णीतप्रामाण्यकत्वाभावादिति यावत् । यथाश्रुते ईश्वरप्रतिपादकानेकश्रुतिसत्त्वात् असङ्गत्यापत्तेः । तथा च ईश्वरोच्चरितत्वेनैव श्रुतिप्रामाण्यस्य वक्तव्यतया ईश्वरसन्देहे श्रुतेरपि सन्दिग्धप्रामाण्यकत्वेन निर्णीतप्रामाण्यकत्वरूपलिङ्गनिर्णयाभावेन श्रुतेर्नेश्वरसाधकत्वसंभव इति भावः। अत्र ईश्वरव्याप्यलिङ्गाभावात् साक्षादीश्वरसाधनासंभवेऽपि लिङ्गान्तरेण परम्परया ईश्वरसाधनं संभवतीत्याशयेन समाधत्ते । **अङ्कुरादिकमित्यादिना** । अत्र अङ्कुरत्वरूपपक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे अङ्कुरविशेषे अस्मदादिकृतिजन्यत्वमादाय सिद्धसाधनदोषप्रसक्तावपि पृथिवीत्वव्याप्यजातिविशेषरूपाङ्कुरत्वावच्छेदेन साध्यसिद्धेरेव उद्देश्यत्वान्न सिद्धसाधनप्रसक्तिरिति हृदयम् । पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वाभिप्रायेण पक्षान्तरमाह । **आदीति** । आदिना पृथिवीत्वादिव्याप्यजातिविशेषरूपद्व्यणुकत्वभेदत्वाद्यवच्छिन्नपरिग्रहः । **सकर्तृकमिति** । कृतिजन्यमित्यर्थः । विशेष्यतासंबन्धावच्छिन्नकृतिनिष्ठकारणतानिरूपितसमवायसंबन्धावच्छिन्नकार्यतावादिति यावत् । कारणतायां विषयतासंबन्धावच्छिन्नत्वनिवेशाददृष्टद्वारा हविरादिगोचरास्मदीयकृतिजन्यत्वमादाय न सिद्धसाधनप्रसक्तिः । **कार्यत्वादिति** । स्ववृत्तिमहाकालभेदवत्त्वकालिकविशेषणत्वसमवायैतत्त्रितयसंबन्धेन सत्तावत्त्वादित्यर्थः । यदि च समवायसंबन्धावच्छिन्नत्वाविशेषितध्वंससाधारणकार्यत्वमेव साध्यतयाभिप्रेतं तदा समवायसंबन्धमनिवेश्य निरुक्तोभयसंबन्धेन सत्तावत्त्वमेव हेतुरिति हृदयम् । अत्र महाकाले व्यभिचारवारणाय स्ववृत्तिमहाकालभेदवत्त्वस्य स्वसंबन्धघटकता । तादृशभेदवत्त्वमभावीयदैशिकविशेषणतया बोध्यम् । तेन न तद्दोषतादवस्थ्यम् । आकाशादौ व्यभिचारवारणाय कालिकविशेषणत्वस्य संबन्धघटकता । ध्वंसे व्यभिचारवारणाय समवायस्य संबन्धघटकतेति हृदयम् । न चाप्रयोजकशङ्काकबलितत्वात् अयं हेतुः न साधक इति वाच्यम् । कार्यत्वेन कृतित्वेन कार्यकारणभावरूपानुकूलतर्कसत्त्वेन तादृशशङ्कोत्पत्त्यसंभवादिति । **इत्यनुमानस्येति** । इत्याकारकन्यायवाक्यजन्यशाब्दबोधोत्तरकालीनमानसपरामर्शस्येत्यर्थः । **प्रमाणत्वादिति** । ईश्वर-

**कृतिमत्त्वं कर्तृत्वम् । उपादानं समवायिकारणम् । सकलपरमाण्वादिसूक्ष्मदर्शित्वात्सर्वज्ञत्वम् । यः सर्वज्ञः स सर्ववित् इत्यागमोऽपि तत्र प्रमा-**

---

**नो.** प्रयोजकत्वाभावादिति दिक् । **उपादानेति** । यद्यपि कृतिमत्त्वमेव संभवति, तथाप्यपरोक्षज्ञानचिकीर्षादिकं प्रति कारणत्वप्रदर्शनाय तथोक्तिरिति ध्येयम् । **सर्व-**

**रा.** साध्यसिद्धेरुद्देश्यत्वं परमाणौ बाध इति तत्परित्यागः । ननु कार्यत्वमस्तु कर्तृत्वं माऽस्त्वित्यप्रयोजकत्वशङ्कायां कर्तृत्वेन कार्यत्वेन कार्यकारणभाव एव अनुकूलतर्को वाच्यः । स च न प्रमाणसिद्धः । घटत्वेन कुलालत्वेन पटत्वेन तन्तुवायत्वेन

**नृ.** प्रमापकत्वादित्यर्थः । कृतिजन्यत्वसाधनेनेव इच्छाजन्यत्वज्ञानजन्यत्वसाधनेनापीश्वरसिद्धिर्भवतीति बोधयितुं कर्तृत्वपदार्थमाह । **उपादानगोचरेति** । उपादानविषयकेत्यर्थः । एतस्यापरोक्षज्ञानचिकीर्षाकृतिषु प्रत्येकान्वयः । उपादानपदार्थमाह । **उपादानमिति** । अत्र कर्तृजन्यत्वं न साध्यम् । निरुक्तज्ञानादिरूपानन्तकर्तृत्वानां कारणतावच्छेदकत्वापत्त्या गौरवात् । नापि तादृशज्ञानादिजन्यत्वं दृष्टान्तपक्षसमवायिकारणेषु सर्वेष्वनुगतसमवायिकारणत्वस्याभावेनोपादानशब्देन घटादिरूपदृष्टान्तसमवायिकारणग्रहणे तद्विषयकतादृशज्ञानादिजन्यत्वस्य पक्षे बाधितत्वेन हेतोः बाधितत्वव्यभिचारित्वयोः आपत्तिः । तत्पदेन पक्षीभूतमेधसमवायिकारणग्रहणे तद्विषयकज्ञानादिजन्यत्वस्य दृष्टान्तेऽभावेन तदन्तर्भावेण व्यभिचारित्वापत्तिः । केवलज्ञानत्वाद्यपेक्षया समवायिकारणविषयकज्ञानत्वादेर्गुरुत्वेन तस्य कारणतावच्छेदकत्वासंभवाच्च । अतः समवायेन कार्यं प्रति विशेष्यतासंबन्धेन ज्ञानत्वादिना लाघवात् कारणत्वं वाच्यम् । एवं च ज्ञानत्वेच्छात्वकृतित्वानां मध्ये एकैकधर्मावच्छिन्नविशेष्यतासंबन्धावच्छिन्नकारणतानिरूपितसमवायसंबन्धावच्छिन्नकार्यत्वमेव सकर्तृकशब्देन विवक्षितसाध्यम् । तथा च एतादृशानुमानात् कार्यत्वेन ज्ञानत्वादिना च कार्यकारणभावात्मकानुकूलतर्कप्रयोज्यव्यभिचारज्ञानाभावात् ज्ञानादिजन्यत्वसिद्धौ तद्घटकज्ञानाद्याश्रयत्वस्य जीवानां बाधितत्वादतिरिक्त ईश्वरो लाघवादेकत्वनित्यत्वाश्रयतया सिध्यतीति समुदितदीपिकाग्रन्थतात्पर्यार्थ इति प्रतिभाति । निरुक्तानुमानेन ईश्वरसिद्धौ अर्थात्सर्वज्ञत्वमपि सिद्ध्यतीत्याह । **सकलेति** । द्व्यणुकोपादानसकलपरमाणुविषयकप्रत्यक्षवत्त्वात् त्र्यणुकोपादानसकलद्व्यणुकविषयकप्रत्यक्षवत्त्वाच्चेत्यर्थः । **सर्वज्ञत्वमिति** । अतीन्द्रियसूक्ष्मपदार्थविषयकप्रत्यक्षवतः स्थूलपदार्थविषयकप्रत्यक्षाश्रयत्वं कैमुतिकन्यायसिद्धमिति तस्य सर्वज्ञत्वमर्थात् सिद्धमित्यर्थः । उक्तानुमानेन ईश्वरं तस्य सर्वज्ञत्वं च निर्णीयोभयत्र श्रुतिरपि प्रमाणमित्याह । **यस्सर्वज्ञ इति** । **इत्यागमोऽपीति** । आदिना यस्य ज्ञानमयं तपः सोऽकामयतेत्यादिश्रुतिसंग्रहः । अपिना निरुक्तानुमानं समुच्चीयते । **तत्रेति** । ईश्वरं

णम् । जीवस्य लक्षणमाह । **जीव इति** । सुखाद्याश्रयत्वं जीवलक्षणम् । ननु

---

नी. **विदिति** । विदधात्वर्थो विशेषरूपेण ज्ञानम् । **लक्षणमाहेति** । स्वरूपमाहेत्यर्थः । **मूले प्रतिशरीरं भिन्न इति** । न च अवयवोपचयापचयाभ्यां तत्तच्चैत्रादिशरी-

रा. विशिष्यैवान्वयव्यतिरेकाभ्यां कारणताग्रहस्य जायमानत्वात् । न च कार्यसामान्याभावे कर्त्रभावप्रयोजकत्वे गौरवात् कारणतावच्छेदकधर्मावच्छिन्नाभावस्यैव कार्यतावच्छेदकावच्छिन्नाभावप्रयोजकत्वाच्च यद्विशेषयोरिति न्यायेन स आवश्यक इति वाच्यम् । कारणतावच्छेदकधर्मावच्छिन्नाभावस्यापि लाघवेन प्रयोजकत्वकल्पने बाधकाभावादित्यभिप्रायेणाह । **आदीति** । आदिना खण्डघटस्य परिग्रहादित्यनुमानेन घटत्वेन

नृ. तस्य सर्वज्ञत्वे चेत्यर्थः । **जीवस्य लक्षणमाहेति** । जीवस्य व्यावर्तकधर्मं नानात्वादिकं चाहेत्यर्थः । **मूले जीवः प्रतिशरीरं भिन्न इति** । अत्र जीव इत्यनेन जीवत्ववत्त्वं जीवलक्षणम् लभ्यते । जीवत्वं च सुखादिमत्त्वम् । सुखादिसमवायिकारणतावच्छेदकतया जीवपदशक्यतावच्छेदकतया वा सिद्धजातिर्वा । जीवानामनेकत्वेऽनुमानप्रमाणमाह ॥ **प्रतिशरीरं भिन्न इति** । शरीरभेदेन भिन्न इत्यर्थः । एतच्छरीरावच्छिन्नजीवः एतच्छरीरभिन्नशरीरावच्छिन्नजीवभिन्न इति यावत् । अत्र एतच्छरीरभिन्नशरीरावच्छेद्यभोगानधिकरणत्वात् घटवदिति सदृष्टान्तो हेतुः पूरणीयः । न च एकस्यैव जीवस्य नानाशरीरसंभवेन एतच्छरीरावच्छिन्नजीवात्मकपक्षे एतच्छरीरभिन्नजन्मान्तरशरीरावच्छिन्नजीवभिन्नत्वरूपसाध्यं बाधितमिति वाच्यम् । साध्यघटकैतच्छरीरभिन्नशरीरे एतच्छरीरसमानकालीनत्वस्यापि निवेशनीयत्वात् । प्रकृते जन्मान्तरशरीरस्य एतच्छरीरसमानकालीनत्वाभावेनादोषात् । न चैवमपि सौभर्यादेरेकदा शतशश्शरीरादिसत्त्वेन निरुक्तसाध्याभावात् तद्दोषतादवस्थ्यमिति वाच्यम् । तादृशशरीरे योगाद्यजन्यत्वस्यापि विशेषणत्वात् सौभर्यादिदेहानां योगादिजन्यतयाऽदोषात् । एवं हेतुघटकशरीरेऽप्येतच्छरीरभिन्नत्वैतच्छरीरसमानकालीनत्वयोगाद्यजन्यत्वविशेषणान्यावश्यकानि । अन्यथा स्वरूपासिद्ध्यापत्तेः । जीवस्य चलनाभावेऽपि काश्यादिसकलदेशेषु एकशरीरावच्छेदेन सुखाद्युपलब्धेः विभुत्वमङ्गीकार्यमित्याह । **विभुरिति** । अत एव वैभवात्महानाकाशः तथा च आत्मेति महाभाष्यमपि प्रमाणम् । विभुत्वान्नित्यत्वमावश्यकमित्याह । **नित्यश्चेति** । जीवशब्दप्रतिपाद्यजीवत्वरूपलक्षणस्य स्वरूपमाह । **दीपिकायाम् सुखाद्याश्रयत्वमिति** । आदिना दुःखादिपरिग्रहः । अत्र सुखादिमत्त्वमेव जीवलक्षणम् । आश्रयत्वकथनं तु समवायेन तस्य लक्षणत्वलाभायेति हृदयम् । अस्मद्गुरुचरणास्तु समवायेन सुखादेर्लक्षणत्वे मुक्तात्मनि अव्याप्त्यापत्तिः । अतस्तदाश्रयत्वस्य लक्षणत्वलाभायाश्रयत्वकथनमिति व्याचक्रुः । चार्वाकमतं दूषयितुं तन्मतमुपन्य

मनुष्योऽहं ब्राह्मणोऽहम् इत्यादौ सर्वत्राहंप्रत्यये शरीरस्यैव विषयत्वाच्छरीरमेवात्मेति चेन्न। शरीरस्यात्मत्वे करपादादिनाशे शरीरनाशादात्मनोऽपि नाशप्रसंगात्। नापीन्द्रियाणामात्मत्वम्, 'योऽहं घटमद्राक्षं सोऽहमिदानीं स्पृशामि' इत्यनुसन्धानाभावप्रसङ्गात्। अन्यानुभूतेऽर्थे अन्य-

---

नी. राणां विभिन्नत्वेऽपि जीवभेदाभावादिदमसङ्गतम्। एवं कायव्यूहस्थलेऽपीति वाच्यम्। समानकालिकयोगजधर्माजन्यशरीरभेदेन जीवभेदस्यैव विवक्षिततयाऽदोषात्। एवं चैतच्छरीरावच्छिन्नभोगवान्समानकालिकयोगजधर्माजन्यतच्छरीरावच्छिन्नभोगवद्भिन्न इति रीत्या प्रतिशरीरं जीवभेदः साध्य इत्यलम्। **शरीरस्यैवेति**। अन्यथा मनुष्यत्वादीनां शरीरधर्मत्वेन तथा प्रत्ययस्यैवासङ्गतिरित्यभिमानः। **नाशप्रसङ्गादिति**। समवायिकारणनाशस्य द्रव्यनाशकत्वादिति भावः। **योऽहमिति**। भूतकालिकदर्शन-

ग. कुलालत्वेन कार्यकारणभावानुकूलतर्कसहंकृतेनैव ईश्वरसिद्धिः। कार्यत्वादित्यस्य कार्यकर्तृतावच्छेदकधर्मवत्त्वादित्यर्थकतया कर्तृकार्यतावच्छेदकीभूतघटत्वादिमत्त्वस्य

नृ. स्यति। **नन्विति**। **इत्यादौ सर्वत्राहंप्रत्यय इति**। आदिना क्षत्रियोऽहमित्यादेः परिग्रहः। इत्याद्यभिन्नसकलाहमित्याकारकप्रत्यय इत्यर्थः। **शरीरस्यैव विषयत्वादिति**। एवकारेण शरीरातिरिक्तस्य प्रत्ययविषयत्वं व्यवच्छिद्यते। तथा च मनुष्यत्वब्राह्मणत्वादीनां शरीरमात्रवृत्तितया तत्प्रकारेण प्रमाविषयाहंपदार्थात्मनः शरीरस्वरूपत्वावश्यकतया प्रमाणाभावादात्मनः नातिरिक्तत्वमिति भावः। **करपादादिनाश इति**। आदिना नासिकादेः परिग्रहः। **शरीरनाशादिति**। पूर्वशरीरनाशादित्यर्थः। **आत्मनोऽपीति**। त्वन्मत इत्यादिः। अपिशब्दः एवकारार्थे। त्वन्मते आत्मन एव नाशापत्तेरित्यर्थः। न चेष्टापत्तिः। पूर्वानुभूतस्य कालान्तरे स्मरणानुपपत्तेः। अनुभवाश्रयस्य पूर्वशरीरस्य नष्टत्वात् स्वस्य स्वाननुभूतार्थस्मरणाश्रयत्वासंभवादिति भावः। अत्र चाक्षुषादिकरणत्वेन क्लृप्तानां चक्षुरादीनामेव ज्ञानाद्याश्रयत्वं स्वीक्रियताम्। चक्षुर्जानातीत्यादिप्रत्ययात्। अतः चक्षुरादिकमेवात्मेति बौद्धा वदन्ति। तन्मतं दूषयति। **नापीन्द्रियाणामिति**। अपिना शरीरपरिग्रहः। यथा शरीरस्य आत्मत्वन्नास्ति तथा इन्द्रियाणामात्मत्वं नास्तीत्यर्थः। तत्र हेतुमाह। **योऽहं घटमद्राक्षमिति**। योऽहं घटादिविषयकवर्तमानध्वंसप्रतियोगिचाक्षुषवानित्यर्थः। **सोऽहमिदानीं स्पृशामीति**। घटादिविषयकवर्तमानस्पार्शनवान् सोऽहमित्यर्थः। **इत्यनुसन्धानाभावप्रसङ्गादिति**। इत्याकारकचाक्षुषाश्रयस्पार्शनाश्रययोः अभेदावगाहिप्रत्यक्षाभावप्रसङ्गादित्यर्थः। तथाच चक्षुस्त्वगादिरूपेन्द्रियाणां परस्परभिन्नतया भेदावगाहिप्रत्ययानुपपत्तेः नेन्द्रियाणामात्मत्वसंभव इत्यर्थः। उक्तार्थमेव प्रकाशयति। **अन्यानुभूत इति**। अत्र कर्म-

नी॰ वति वर्तमानकालिकस्पार्शनवत्त्वं प्रत्याख्यते तच्च भवतां मते न सम्भवति चाक्षुषस्पार्शनवतोर्भेदादिति भावः । **अनुसन्धानायोगादिति ।** अन्यथा चैत्रेणानुभूतस्य

रा॰ हेतुत्वलाभादिति भावः । न चैवमपीश्वरस्य कुलालत्वापत्तिरिति वाच्यम् । खण्डघटोत्पत्तेः पूर्वं जीवानां तदुपादानगोचरापरोक्षज्ञानचिकीर्षाऽसत्त्वेन तद्वत्त्वेन ईश्वरसिद्धेरभ्युपेयत्वात् । न च कुलालस्यैव घटकर्तृत्वादिति वाच्यम् इष्टत्वात्, घटोत्पादनसमर्थस्यैव कुलालत्वात् । अत एवाह—नमः कुलालेभ्यः कर्मारेभ्य इति विभावनीयम् ।

नृ॰ धारयः । वर्तमानध्वंसप्रतियोगिचाक्षुषाश्रयत्वेनानुभवविषयचक्षुषीत्यर्थः । **अन्यस्यानुसन्धानायोगादिति ।** स्पार्शनाश्रयस्याभेदावगाहिप्रत्यक्षसंबन्धादित्यर्थः । इदमुपलक्षणम् । सौगतास्तु अनित्यत्वाच्छरीरादीनां आत्मत्वं मास्तु नित्यत्वात् मनस एवात्मत्वमित्याहुः । तन्न । तथा सति अहं जानामीत्याद्याकारकात्मविशेष्यकज्ञानादिप्रकारकलौकिकप्रत्यक्षाभावप्रसङ्गात् । प्रत्यक्षे महत्त्वस्य हेतुतया मनसि तदभावात् चाक्षुषाद्युत्पत्तिकाले मानसोत्पत्तिप्रसङ्गाच्च । तदा मानससामग्र्या अप्यक्षतत्वात् । योगाचारास्तु सर्वं विज्ञानमयं तत् द्विविधं प्रवृत्तिविज्ञानमालयविज्ञानमिति । अयं घट इत्यादिविज्ञानं घटमहं जानामीत्यादिविज्ञानं च प्रवृत्तिविज्ञानम् । अहमित्याकारकमालयविज्ञानम् । स एव आत्मा । भावमात्रस्य क्षणिकत्वादात्मापि क्षणिक एव । न चालयविज्ञानस्यात्मत्वे गुणे गुणानङ्गीकारेण तस्य ज्ञानसुखादिमत्त्वासंभवात् जानामीत्यनुव्यवसायानुपपत्तिरिति वाच्यम् । प्रवृत्तिविज्ञानसुखादीनां आलयविज्ञानस्याकारविशेषरूपत्वेन तस्य तादात्म्यसंबन्धेन तादृशज्ञानादिमत्त्वेनोक्तानुपपत्तिविरहात् । तदाकारत्वं च तदभिन्नत्वे सति तद्भिन्नत्वेन भासमानत्वं यथा मृदभिन्नत्वे सति मृद्भिन्नत्वेन भासमानत्वात् घटस्य मृदाकारकत्वम् । एवं च मृदस्तादात्म्यसंबन्धेन घटवत्त्वात् घटवन्मृदितिप्रतीत्युपपत्तिः । न च तादात्म्यस्याधिकरणत्वानियामकतया कथं तादृशप्रतीत्युपपत्तिरिति वाच्यम् । समवायमनङ्गीकुर्वतां अवयवावयविनोर्गुणगुणिनोः क्रियाक्रियावतोश्च तादात्म्यसंबन्धमङ्गीकुर्वतां मते तादात्म्यस्य वृत्तिनियामकत्वात् । न चात्मनः क्षणिकत्वे कालान्तरे स्मरणानुपपत्तिः । अनुभवाश्रयस्यात्मनो नष्टत्वादिति वाच्यम् । तथापि पूर्वानुभवजन्यसंस्काराणां पूर्वालयविज्ञानजन्योत्तरोत्तरालयविज्ञाने सङ्क्रान्तत्वस्वीकारेण स्मरणप्रत्यभिज्ञानुपपत्तिविरहात् । तस्मात् क्षणिकविज्ञानमेवात्मेत्याहुः । तन्न आत्मनः क्षणिकविज्ञानरूपत्वे संस्काररूपवासनायाः क्रियारहितत्वात् प्रवेशात्मकसङ्क्रमासंभवेन कालान्तरे स्मरणाद्यनुपपत्तिप्रसङ्गात् । न च पूर्वपूर्वालयविज्ञानजन्योत्तरोत्तरालयविज्ञानेषु पूर्वपूर्वालयविज्ञानजन्यसंस्कारैस्संस्कारान्तरोत्पत्तिस्वीकारात् न स्मरणानुपपत्तिरिति वाच्यम् । समानविषयकानुभवस्यैव संस्कारहेतुतया उत्तरोत्तरालय-

म्यानुसंधानायोगात् । तस्माद्देहेन्द्रियव्यतिरिक्तो जीवः सुखदुःखादि-
वैचित्र्यात्प्रतिशरीरं भिन्नः । स च न परमाणुः । सर्वशरीरव्यापि-

---

**नी.** वस्तुनो मैत्रेण स्मरणापत्तेरिति भावः । ननु सर्वशरीरावच्छेदेनात्मनि सुखादिसाक्षा-

**रा. प्रतिशरीरं भिन्न इति** । प्रतिवृक्षं सिञ्चतीत्यत्रेव प्रत्यर्थौ व्यापकत्वं । तथा च वृक्षत्वव्यापककर्मतानिरूपितसेचनानुकूलकृतिमानितिवत् शरीरत्वव्यापकभेदप्रति-योगी जीव इत्येव तादृशवाक्यात् शाब्दबोध इति । ननु जीवानामैक्येऽपि शरीरत्व-व्यापकभेदप्रतियोगित्वं जीवेषु अक्षतमेवेति चेन्न । पृथिवीतरेभ्यो भिद्यते इत्यादौ भिद्धातोः नान्योन्याभावबोधकत्वम् । तथात्वे भिदधातोः अकर्मकत्वेन कर्मणि यकोऽसाधुत्वापत्तेः । अकर्मकत्वेऽपि आत्मनेपदानुपपत्तिरिति भेदविधेयकानुमि-तिरेव भिद्धातोरर्थ इति वाच्यः । तदुत्तरकर्मप्रत्ययस्य विषयत्वमर्थः । तथा हि पृथिवी गन्धवदितरेभ्यो भिद्यते इत्यादौ गन्धप्रयोज्येतरप्रतियोगिकभेदविधेय-कानुमितिविषया पृथिवीत्येव बोधः । प्रकृत प्रयोजकत्वमेव कर्तृत्वं । इत्थं च शरीरेण शरीरेण प्रतिशरीरमिति व्युत्पत्त्या शरीरत्वव्यापकशरीरव्यापीति । इदमुपलक्षणं प्रत्यक्षे

**नृ.** विज्ञानेष्वनुभवरूपकारणाभावेन तादृशसंस्कारोत्पत्त्यसंभवात् । न च यत् सन् तत् क्षणिकमिति व्याप्तिमङ्गीकृत्य तदनुरोधेन जगन्मात्रस्य क्षणिकत्वाङ्गीकर्तृ-योगाचारमते समानविषयकानुभवाभिन्नालयविज्ञानजन्यालयविज्ञानपरम्परायाः ता-दृशानुभवाभिन्नालयविज्ञानप्रयोज्यज्ञानत्वेन हेतुत्वस्वीकारात् तादृशपरम्परासु सं-स्कारोत्पत्तौ बाधकाभाव इति वाच्यम् । एकत्राप्रामाणिकानन्तसंस्कारकल्पना-पेक्षया तादृग्व्याप्तिं अनङ्गीकृत्य नित्यातिरिक्तैकात्मकल्पनाया एव न्याय्यत्वादिति बोध्यम् ॥ **तस्मादिति** । जीवस्य देहेन्द्रियमनःक्षणिकविज्ञानरूपत्वासम्भवादि-त्यर्थः । **देहेन्द्रियादिव्यतिरिक्त इति** । देहेन्द्रियादिभिन्न एवेत्यर्थः । आदिपदेन मनःक्षणिकविज्ञानयोः परिग्रहः । **सुखदुःखादिवैचित्र्यादिति** । एतस्यार्थः जीवः प्रतिशरीरं भिन्न इति मूलोक्तरीत्या ज्ञेयः । अत्र जीवो महान् द्रव्यवृत्तिलौकिक-विषयतासंबन्धेन प्रत्यक्षवत्त्वात् घटवदित्यनुमानात् प्रत्यक्षमहत्त्वयोः कार्यकारण-भावग्रहात्मकानुकूलतर्कसहकृतात् जीवस्य महत्त्वं साधयितुं विषयपरिशोधकतर्क-मप्याह । **स च न परमाणुरिति** । जीवः परममहत्त्ववानेवेत्यर्थः । **शरीरव्या-पीति** । अन्यथेत्यादिः । शिरसि मे वेदना पादे मे सुखमित्यादिशरीरयावदवयव-घटकप्रत्येकावयवावच्छेद्यसुखदुःखद्वेषादिनिष्ठलौकिकविषयताशालिसमूहालम्बनात्मक-साक्षात्कारानुपपत्तिप्रसङ्गादित्यर्थः । जीवस्याणुत्वेन एकदा शिरःपादादिना सम्ब-न्धासंभवादिति भावः । इदमुपलक्षणम् । लौकिकविषयताशून्यत्वप्रसङ्गादित्यपि बोध्यम ॥ अस्मद्गुरुचरणास्तु शरीरव्यापीति शरीरावच्छेदेत्यर्थः । इदं च सुखा-

**सुखाद्यनुपलब्धिप्रसङ्गात् । न मध्यमपरिमाणवान् तथा सति अनित्यत्वप्रसङ्गेन कृतहानाकृताभ्यागमप्रसङ्गात् । तस्मान्नित्यो विभुर्जीवः ।**

---

नी. त्कारोपपत्तये सर्वशरीरव्यापित्वमात्मनोऽस्तु । तथाऽपि विभुत्वाङ्गीकारे प्रयोजनाभाव इत्यत आह—**न मध्यमेति । अनित्यत्वप्रसङ्गेनेति ।** यन्मध्यमपरिमाणं तदनित्यम् इति व्याप्तेरिति भावः । **कृतेति** । कृतस्य यागादिना संपादितस्य

रा. महत्त्वस्य कारणत्वेन आत्ममानसानुपपत्तिश्च । भेदानुमितिविषयो जीव इत्येवं बोधस्य प्रकृते पर्यवसितत्वेन एतच्छरीरावच्छिन्नभोगाश्रयो जीवः शरीरान्तरावच्छिन्नभोगाश्रयात् भिद्यते स्वावच्छिन्नभोगाश्रयत्वसंबन्धेन एतच्छरीरादित्येवं क्रमेण शरीरमात्रस्यैव जीवभेदानुमापकतालाभेन शरीरभेदेन जीवभेदलाभात् । शरीराणि च एककालावच्छिन्नत्वेन योगजधर्माजन्यत्वेन विशेषणीयानि । तेन प्रतिजन्मशरीरभेदेऽपि, जन्मभेदेन न जीवभेदः न वा सौभरिप्रभृतीनां योगबलेन एकदा नानाशरीरपरिग्रहेऽपि तच्छरीरभेदेन जीवभेदापत्तिरित्यपि अवधेयम् । आत्मनः परमाणुत्वे आत्ममानसान्यत्वस्य महत्त्वकार्यतावच्छेदककोटिप्रवेशे गौरवादित्यपि बोध्यम् । **कृतहानेति ।** कृतस्य एतज्जन्मार्जितस्य पापपुण्यादेः हानौ निष्फलत्वं, अकृतस्य स्वानार्जितस्य पुण्यपापफलस्याभ्यागमः प्राप्तिः, तयोरापत्तेरित्यर्थः । अनित्यस्य

नृ. ह्यनुभवः शरीरावच्छेद्य एवेति स्फुटीकरणाय । न तु तस्याप्यापाद्यघटकता व्यर्थत्वात् । **सुखदुःखादीति ।** सुखादिनिष्ठलौकिकविषयताशालिसाक्षात्काराविषयत्वप्रसङ्गादित्यर्थः । इदमपि योग्यविशेषगुणसंबन्धेनैवात्मनः प्रत्यक्षत्वं न त्वन्यथेति स्फुटीकरणाय । न तु तस्याप्यापाद्यकोटिप्रवेशः व्यर्थत्वात् । किन्तु साक्षात्काराविषयत्वप्रसङ्गादित्येवापाद्यमिति व्याचक्षुः । **न मध्यमपरिमाणवानिति ।** नापकर्षाश्रयमहत्त्ववानित्यर्थः । **तथा सतीति ।** जीवस्य तादृशपरिमाणवत्त्वस्वीकारे इत्यर्थः । **अनित्यत्वेनेति ।** अनित्यत्वप्राप्त्येत्यर्थः । मध्यमपरिमाणवत्त्वलिङ्गेन घटादिदृष्टान्तेन अनित्यत्वसिद्ध्येति समुदितार्थः । **कृतहानित्यादि ।** कृतयागादिकर्मजन्यधर्मादेः स्वर्गादिजनकत्वानुपपत्तिः । धर्मादिसाधनं विना फलप्राप्तिश्च स्यादित्यर्थः । अयं भावः । तथा च यागादिजन्यधर्मादेरात्मनाशेन नाशात्स्वर्गादिफलजनकत्वासम्भवेन यजेत स्वर्गकाम इत्यादिविधीनां न सुरां पिबेदित्यादिनिषेधानां चाप्रामाण्यापत्तिः । उत्पन्नात्मनां सर्वेषां धर्माद्यभाववत्त्वस्याविशिष्टतया केषाञ्चित् सुखवत्त्वं केषाञ्चिद्दुःखवत्त्वमनुभूयमानमनुपपन्नं स्यात् । तत्तत्साधनाभावस्य सर्वेषु तुल्यत्वात् सर्वेषां सुखवत्त्वं दुःखवत्त्वं वा स्यात् । एवं जातमात्रस्य स्तन्यपाने प्रवृत्त्यनुपपत्तिः । तदा इष्टसाधनत्वानुभवाभावात् । अनुभवजन्यसंस्काराभावेन तत्स्मरणाभावाच्चेति भावः । उपसंहरति । **तस्मादिति ।** जीवस्याणुत्वमध्यमपरिमाणवत्त्वानित्यत्वानामसंभवादित्यर्थः । **नित्यो विभुर्जीव**

**मनसो लक्षणमाह । सुखेति । स्पर्शरहितत्वे सति क्रियावत्त्वं मनसो लक्षणम् । तद्विभजते । तच्चेति । एकैकस्यात्मन एकैकं मन इत्यात्मनामनेकत्वा-**

---

नी. धर्मादेहीनं नाशः अकृतस्याभ्यागमः प्राप्तिस्तत्प्रसङ्गादित्यर्थः । कर्तुरात्मन उत्तरजन्मनि असत्त्वात्, अकर्तुश्च सत्त्वादिति भावः । ननु जीवस्याऽणुत्वमेवास्तां, तावता नोक्तदोषः । सूक्ष्मदीपस्य सर्वगृहावच्छेदेनेवाणुरूपस्यापि जीवस्य प्रभाप्रसरणाङ्गीकारात् इति चेन्न । तथा सति कायव्यूहस्थले सुखादिसाक्षात्कारानुपपत्तेरिति दिक् । मनःसंयोगाद्यतिव्याप्तिवारकेन्द्रियत्वघटितमूलोक्तलक्षणापेक्षया लघुलक्षणमाह । **स्पर्शरहितत्वे सतीति । एकैकं मन इति ।** सर्वात्मनामेकस्य मनसः स्वीकारे

रा. आत्मनो नाशानन्तरं भोक्तुरभावात् जन्मप्रभृत्येव सुखदुःखाननुभवादिति भावः । उपसंहरति । **तस्मादिति ।** मध्यमपरिमाणपरमाणुत्वयोः पूर्वोक्तदोषादित्यर्थः । विभुत्वे निरवयवत्वेन अवयवसंयोगादिना नाशाभावेन नित्यत्वमर्थात्सिद्धमित्यर्थः ।

नृ. **इति** । नित्यत्वपरममहत्परिमाणवत्त्वोभयाश्रयो जीव इत्यर्थः । **मनसो लक्षणमाहेति** । मनसो लक्षणं वक्तुमादौ प्रमाणमाहेत्यर्थः । **मूले सुखाद्युपलब्धीति** । सुखादिनिष्ठलौकिकविषयताशालिप्रत्यक्ष इत्यर्थः । इदं च मानसप्रत्यक्षलाभाय न तु तद्विषयकत्वेनापि प्रवेशः प्रयोजनाभावादिति हृदयम् । **साधनमिति** । करणमित्यर्थः । एतल्लाभायैवेन्द्रियपदमुपात्तम् । न तु तेन रूपेण प्रवेशः गौरवात् । तथा च मानससाक्षात्कारः सकरणकः कालिकसमवायोभयसम्बन्धेन साक्षात्कारत्ववत्त्वाचाक्षुषवदित्यनुमानान्मानसस्य सकरणकत्वे सिद्धे तत्करणत्वस्य क्लृप्तचक्षुरादीनां असंभवादतिरिक्तकरणसिद्धौ तदेव मन इत्युच्यत इति भावः । केचित्तु सुखाद्युपलब्धीत्यादिमूलस्य मानसकरणत्वरूपमनोलक्षणपरत्वमाहुः । तन्न । मनसस्साधनं विना तल्लक्षणप्रतिपादनस्यायुक्तत्वात् न्यूनतापरिहाराय स्वयं मनोलक्षणमाह । **दीपिकायां स्पर्शरहितत्वे सतीति** । इदं च घटादावतिव्याप्तिवारणाय । समवायसंबन्धावच्छिन्नस्पर्शत्वावच्छिन्नप्रतियोगिताकाभाववत्त्वं तदित्यर्थः । तेन व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकं व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोताकाभावं वादाय न तद्दोषतादवस्थ्यम् । आकाशादावतिव्याप्तिवारणाय विशेष्यभागः । नच पुरीतति प्रविष्टमनसि क्रियाभावादव्याप्तिरिति वाच्यम् । क्रियावत्त्वशब्दस्य क्रियादिकरणत्वपरत्वात् । न चैवमपि कठिनसुकुमारस्पर्शवदवयवारब्धद्रव्यस्य चित्रस्पर्शानङ्गीकर्तुनये निस्स्पर्शत्वात् तत्र अतिव्याप्तितादवस्थ्यमिति वाच्यम् । स्पर्शाधिकरणावृत्तिक्रियावद्वृत्तिजातिमत्त्वस्य विवक्षितत्वात् । इदमुपलक्षणम । मानसकारणतावच्छेदकतया सिद्धजातिविशेषरूपमनस्त्वं मनसो लक्षणमित्यपि बोध्यम । सुखाद्युपलब्धीत्यादिना मनः प्रसाध्य इदानीं मनस आनन्त्यं साधयति । **मूले तच्चेति** ।

न्मनसोऽप्यनेकत्वमित्यर्थः । परमाणुरूपमिति । मध्यमपरिमाणवत्त्वे अनित्यत्वप्रसङ्गादित्यर्थः । ननु मनो विभु स्पर्शरहितत्वे सति द्रव्यत्वादाकाशादिवदिति चेन्न । मनसो विभुत्वे आत्ममनःसंयोगस्याऽ-

---

नी. एकस्य ज्ञानदशायामपरस्य तदनुपपत्तिः, तस्याणुत्वेन सकलेन्द्रियैरेकदा संयोगाभावादिति भावः । **विभ्विति** । तथा च तस्य परममहत्परिमाणत्वेन पूर्वोक्तदोषान-

रा. संस्कारस्यानादित्वेन तदाश्रयस्य अनादित्वसिद्धौ अनादिभावस्य नाशासंभवात् इति

नृ. निरुक्तप्रमाणसिद्धमनश्चेत्यर्थः । अवधारणार्थकश्चशब्दः अनन्तमित्युत्तरं योज्यः । **प्रत्यात्मनियतत्वादिति** । आत्मानमात्मानं प्रति प्रत्यात्मं नियतत्वात् ज्ञानोत्पत्त्यर्थनियमेन संयोगसंबन्धेन संबन्धित्वादित्यर्थः । एतेन मनस आनन्त्ये अनुमानप्रमाणं सूचितम् । तथा हि एतदात्मसमवेतमानसकरणं मनः एतदात्मभिन्नसमवेतमानसकरणभिन्नं एतदात्मभिन्नात्मसमवेतमानसासाधारणकारणसंयोगाप्रतियोगित्वात् घटवदित्यनुमानान्मनस आनन्त्यसिद्धिरिति भावः । उक्तार्थमेव प्रकाशयति । **दीपिकायामेकैकस्यात्मन इति** । एकैकं मनः एकैकात्मसमवेतमानसकरणमेवेत्यर्थः । अन्यथा सकलात्मप्रत्यक्षापत्तेरिति भावः । **इत्यात्मनामनेकत्वादिति** । इत्याकारकहेतोः आत्मानेकत्वप्रयुक्तं मनसोऽप्यनेकत्वमित्यर्थः । मनसो मूलोक्तं परमाणुरूपत्वं व्यवस्थापयितुमादौ मध्यमपरिमाणवत्त्वं खण्डयति । **मध्यमपरिमाणवत्त्व इति** । मनस इत्यादिः । अपकर्षाश्रयमहत्त्ववत्त्व इत्यर्थः । **अनित्यत्वप्रसङ्गादिति** । एकैकात्मनियतमनसोऽपि बहूनां कारणानां तद्ध्वंसानां तदुत्पादकानां च परमाणुपर्यन्तानां कल्पनीयतया महागौरवप्रसङ्गात् एतादृशमनोऽवयवधाराविश्रमाश्रयपरमाणोरेकस्य लाघवेन मनस्त्वकल्पनौचित्याच्चेति भावः । इदानीं परममहत्परिमाणवत्त्वं खण्डयितुमाक्षिपति । **नन्विति** । **विभ्विति** । परममहत्परिमाणवदित्यर्थः । **स्पर्शरहितद्रव्यत्वादिति** । घटादौ व्यभिचारवारणाय स्पर्शरहितेति । गुणादौ व्यभिचारवारणाय विशेष्यदलम् । यद्यप्येतस्य हेतुत्वे उत्पन्नविनष्टघटादौ व्यभिचारः विशेषणविशेष्यभावे विनिगमनाविरहप्रयुक्तः हेतुतावच्छेदकरूपेण हेतोरनिर्णयः विशेषणविशेष्योभयत्वावच्छिन्नस्य हेतुत्वे हेतुतावच्छेदकसंबन्धाप्रसिद्धिश्चेति दोषः प्रसज्यते । तथापि स्पर्शवदवृत्तिद्रव्यविभाजकधर्मवत्त्वहेतौ तात्पर्यात् नोक्तदोषः । **विभुत्व इति** । परममहत्परिमाणवत्त्व इत्यर्थः । **आत्ममनस्संयोगस्येति** । विभुद्वयसंयोगे मानाभावेनेत्यादिः । आत्मनि मनस्संयोगस्येत्यर्थः । तेन यथाश्रुते आत्ममनस्संयोगस्य प्रसिद्ध्यप्रसिद्धिभ्यां तन्निषेधानुपपत्तिरूपदोषः

**समवायिकारणस्याभावाज्ज्ञानानुत्पत्तिप्रसङ्गः। न च विभुद्वयसंयोगोऽस्त्विति वाच्यम्। तत्संयोगस्य नित्यत्वेन सुषुप्त्यभावप्रसङ्गात्, पुरीतद्व्यतिरिक्तस्थले आत्ममनःसंयोगस्य सर्वदा विद्यमानत्वात्। अणुत्वे**

---

नी. वकाश इति भावः। **अभावादिति**। विभुद्वयसंयोगानभ्युपगमादिति भावः। **ज्ञानानुत्पत्तीति**। भावकार्यस्यासमवायिकारणजन्यत्वनियमादिति भावः।

रा. भावः। **मनस इति**। इन्द्रियत्वस्य गुरुशरीरतया लाघवमभिप्रेत्याह। **स्पर्शेति**। **तत्संयोगस्येति**। विभुद्वयसंयोगस्येत्यर्थः। **नित्यत्वेति**। विभौ क्रियाविरहेण क्रियाजन्यत्वासंभवात् अजन्यत्वम्। अजन्यभावस्य च नाशासंभवः। ध्वंसं प्रति जन्यभावत्वेन कारणत्वात् इति भावः। तथा च ज्ञानजनकीभूतपुरीतद्व्यतिरिक्तप्रदेशावच्छिन्नात्ममनःसंयोगस्य सर्वदैव सत्त्वेन सुषुप्त्यभावप्रसङ्ग इति भावः।

नृ. प्रत्युक्तः। **अभावादिति**। आत्मन्यवृत्तेरित्यर्थः। **ज्ञानानुत्पत्तिप्रसंगादिति**। भावकार्यमात्रस्य कारणत्रितयजन्यत्वनियमेन प्रकृते असमवायिकारणाभावादित्यर्थः। न च तादृशनियमे मानाभावः। द्रव्यस्यैव कारणत्रितयजन्यत्वनियमात्। एवं च असमवायिकारणं विनापि क्वचिदुत्पत्तिसंभवेन प्रकृते ज्ञानाद्युत्पत्तौ बाधकाभाव इति वाच्यम्। तथा सत्यात्मनि सुषुप्तावपि ज्ञानाद्युत्पत्त्यापत्तेः मनसः करणत्वानुपपत्तेश्च। **विभुद्वयसंयोग इति**। तादृशसंयोगोऽपीत्यर्थः। **अस्त्विति**। प्रामाणिक इत्यर्थः। **तत्संयोगस्येति**। आत्ममनोरूपविभुद्वयसंयोगस्येत्यर्थः। **नित्यत्वेनेति**। नाशासंभवेनेत्यर्थः। अत्र तृतीयान्तं सर्वदा विद्यमानत्वादित्यत्र हेतुः। सर्वदा विद्यमानत्वं च सुषुप्त्यभावप्रसङ्गहेतुरिति हृदयम्। तथा च आश्रयनाशात् क्रियाजन्यविभागाद्वा संयोगनाशस्य वाच्यतया आत्ममनसोर्नित्यत्वात् क्रियारहितत्वाच्चाश्रयनाशक्रियाजन्यविभागरूपनाशकाभावेन सर्वदा सत्त्वादिति भावः। इदमुपलक्षणम्। मनसो विभुत्वे पुरीतन्नाडिप्रवेशासंभवेन सुषुप्तिर्न स्यादिति बोध्यम्। **सुषुप्त्यभावप्रसङ्गादिति**। न चेष्टापत्तिः। अनुभवविरोधादिति भावः। एतेन मनसो विभुत्वसाधकनिरुक्तानुमानस्याप्रयोजकत्वान्न साधकमिति सूचितम्। अस्मद्गुरुचरणास्तु—

मनो न विभु आत्मसंयुक्तत्वात् घटवदित्यनुमानात् पूर्वोक्तहेतोः सत्प्रतिपक्षत्वं वक्तुं प्रतिहेतोस्स्वरूपासिद्धिशङ्कां वारयति। **मनस इति**। **आत्ममनस्संयोगस्येत्यादि**। असमवायिकारणमनस्संयोगस्यात्मन्यभावादित्यर्थः। **ज्ञानानुत्पत्तिप्रसङ्गादिति**। तथा चानायत्या मनस्यात्मसंयोगस्स्वीकार्य इति भावः। प्रतिहेतौ व्यभिचारमाशङ्क्य निराकरोति। **न चेत्यादिना। विद्यमानत्वादिति**। तथा चानायत्यात्मसंयुक्तस्य न विभुत्वमिति भाव इति व्याचक्षुः। सिद्धान्ते तु तादृशदोषनिराकरणद्वारा तमुपसंहरति **अणुत्व इति**। मनसः पारिमाण्डल्यस्वीकार इत्यर्थः।

तु यदा मनः पुरीतत् प्रविशति तदा सुषुप्तिः यदा निस्सरति तदा ज्ञानोत्पत्ति-रित्यणुत्वसिद्धिः। रूपं लक्षयति। **चक्षुरिति**। संख्यादावतिव्याप्तिवारणाय मात्र-

---

नी. **विभुद्वयसंयोगोऽस्त्विति** । तस्य नित्यत्वेनासमवायिकारणक्रियाद्यसत्त्वेऽपि न क्षतिरिति भावः। **मात्रपदमिति** । यद्यपि चक्षुर्मात्रग्राह्यत्वं चक्षुरितराग्राह्यत्वे सति

रा. **मात्रपदमिति**। चक्षुरितरेन्द्रियाग्राह्यत्वे सति चक्षुर्ग्राह्यत्वं चक्षुर्मात्रग्राह्यत्वं, तत्र प्रथमदलं चक्षुस्त्वगुभयेन्द्रियग्राह्यसंयोगादावतिव्याप्तिवारणाय । द्वितीयदलं अतीन्द्रियगुरुत्वादावतिव्याप्तिवारणाय । चक्षुर्ग्राह्यत्वं च चक्षुरिन्द्रियजन्यलौकिकप्रत्यक्ष-विषयत्वम्। तेन गुरुत्वादेः चक्षुरिन्द्रियजन्यालौकिकप्रत्यक्षविषयत्वेऽपि नातिव्याप्तितादवस्थ्यम्। तादितरेन्द्रियाग्राह्यत्वमपि तज्जन्यलौकिकप्रत्यक्षाविषयत्वम्। तेन रूपी घट इति स्पार्शने रूपस्यालौकिकप्रत्यक्षविषयत्वेऽपि नाव्याप्तिः । यद्यपि एवमपि प्रभाभित्तिसंयोगेऽतिव्याप्तिः दुर्वारा, तस्या अपि चक्षुर्मात्रग्राह्यगुणत्वात् । न च परमाणुरूपे चक्षुर्ग्राह्यत्वाभावेनाव्याप्तिवारणाय चक्षुर्ग्राह्यजातिमत्त्वे सतीति विवक्षणीयम् । तथा सति प्रभाभित्तिसंयोगे तादृशजातिमत्त्वाभावात् नातिव्याप्तिः।

नृ. द्व्यणुकरूपत्वे अनित्यत्वापत्त्योक्तगौरवापत्तेः। **प्रविशतीति**। परमाणोः क्रियावत्त्वादिति भावः। **इत्यणुत्वसिद्धिरिति**। इत्याकारकप्रमाणात् परमाणुत्वं प्रमितमिति भावः। **रूपं लक्षयतीति**। गुणविभागवाक्यात् प्रथमोपस्थितमित्यादिः। तथा च तादृशवाक्यात् प्रथममेव रूपस्य उपस्थितत्वात् स्मृतस्य उपेक्षानर्हत्वरूपप्रसङ्गसङ्गत्या आदौ रूपलक्षणकरणमिति भावः। **मूले चक्षुर्मात्रग्राह्य इति**। चक्षुरितरेन्द्रियाग्राह्यचक्षुर्ग्राह्यमिति तदर्थः । अत्र चक्षुरितरेन्द्रियाग्राह्यत्वं च चक्षुर्भिन्नानिन्द्रियव्यापारसंबन्धावच्छिन्नकारणतानिरूपितकार्यताश्रयज्ञाननिरूपितलौकिकविषयताशून्यत्वरूपं वाच्यम् । तेन रूपस्य कालोपाधिविधया त्वगादिजन्यचाक्षुषविषयत्वेऽपि ज्ञानलक्षणाप्रत्यासत्त्या स्फटिकादिस्पार्शनविषयत्वेऽपि च नासंभवः। चक्षुर्ग्राह्यत्वं च ज्ञाननिरूपितलौकिकविषयतावत्त्वरूपं वाच्यम् । ज्ञाने चक्षुर्जन्यविशेषणत्वस्य व्यर्थत्वात्तेन धर्माधर्मादिरीश्वरज्ञानविषयत्वेऽपि अनुमितिविषयत्वेऽपि च नातिव्याप्तिः । प्रभायामतिव्याप्तिवारणाय गुणपदम् । न चेदं परमाण्वादिरूपेऽव्याप्तं उपरिदेशावच्छेदेयविहङ्गमद्वयसंयोगविशेषेऽतिव्याप्तं चेति वाच्यम्। तादृशलौकिकविषयताशून्यज्ञाननिरूपितलौकिकविषयताश्रयगुणवृत्तिजातिमत्त्वस्य विवक्षितत्वात् नोक्तदोषद्वयावकाशः । एतेन विशेषणविशेष्यभावे विनिगमनाविरहप्रयुक्तानेकलक्षणापत्तिः विशेषणविशेष्यसमुदायस्य लक्षणत्वे लक्षणतावच्छेदकसंबन्धाप्रसिद्धिरिति दूषणं प्रत्युक्तमिति प्राञ्चः । नव्यास्तु चक्षुर्ग्राह्यमिति त्वगग्राह्यचक्षुर्ग्राह्यमित्यर्थः ।

पदम् । रूपत्वेऽतिव्याप्तिवारणाय गुणपदम् । नन्वव्याप्यवृत्तिनीला-

---

नी. चक्षुर्ग्राह्यत्वम् । तच्च न रूपे संभवति । तथापि त्वगिन्द्रियाग्राह्यत्वे सति चक्षुर्ग्राह्यत्वं तदिति ध्येयम् । **गुणपदमिति** । न चैवमपि प्रभाभित्तिसंयोगेऽतिव्याप्तिरिति वाच्यम्, त्वगग्राह्यचक्षुर्ग्राह्यगुणविभाजकधर्मवत्त्वपर्यवसानेनादोषात् । अत एव

रा. प्रभाभित्तिसंयोगत्वस्य जातित्वाभावात् । संयोगस्य जातिमत्त्वेऽपि तस्य द्वीन्द्रियग्राह्यत्वादिति वाच्यम् । तथा सति रूपत्वे जातिमत्त्वविरहेणैव अतिव्याप्त्यप्रसक्त्या गुणपदानर्थक्यप्रसङ्गात् । तथापि प्रभात्वजातिमादाय प्रभायामति-

नृ. त्वगग्राह्यत्वं च त्वङ्निष्ठव्यापारसंबन्धावच्छिन्नकारणतानिरूपितकार्यताश्रयज्ञाननिरूपितलौकिकविषयताशून्यत्वम् । तत्प्रयोजनं च उक्तमेव । चक्षुर्ग्राह्यत्वं च ज्ञाननिरूपितलौकिकविषयतावत्त्वम् । अत्रापि ज्ञानांशे चक्षुर्जन्यत्वनिवेशे प्रयोजनविरहात् तत्राप्युक्तसकलदोषवारणाय त्वङ्निष्ठव्यापारसंबन्धावच्छिन्नकारणतानिरूपितकार्यताश्रयज्ञाननिरूपितलौकिकविषयताशून्या लौकिकविषयताश्रया च या गुणवृत्तिर्जातिः तद्वत्त्वमिति लक्षणं परिष्करणीयम् । एवं च गुरुभूतचक्षुर्भिन्नत्वेन त्वगादिसकलेन्द्रियघटितलक्षणकरणापेक्षया एतल्लक्षणस्य लघुभूतजातिपुरस्कारेण एकेन्द्रियघटितत्वात् लाघवमित्याहुः । अस्मद्गुरुचरणास्तु अस्मिन् लक्षणे त्वङ्निष्ठव्यापारसम्बन्धावच्छिन्नकारणतानिरूपितकार्यताश्रयज्ञानत्वेन ज्ञानस्य न प्रवेशो गौरवात् । किन्तु स्पार्शत्वेन लाघवात् । एवं च स्पार्शननिरूपितलौकिकविषयताशून्या लौकिकविषयताश्रया गुणवृत्तिर्या जातिस्तद्वत्त्वमेव मूलकाराभिप्रेतं लघुरूपलक्षणमिति व्याचक्रुः । अत्र चक्षुर्मात्रग्राह्यत्वं चक्षुरितरेन्द्रियाग्राह्यत्वे सति चक्षुर्ग्राह्यत्वमिति प्राचीनव्याख्यानेऽत्यन्तघटकज्ञानस्य तन्निरूपितलौकिकविषयत्वस्य वा चक्षुरितरनिष्ठव्यापारसंबन्धावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वेन तन्निरूपितत्वेन लक्षणे न निवेशः गौरवात् । किन्तु ज्ञानस्य चाक्षुषान्यत्वेन तदीयलौकिकविषयतायाः चाक्षुषानिरूपितत्वेन निवेशो लाघवात् । तथा च चाक्षुषानिरूपितलौकिकविषयताशून्यत्वलौकिकविषयत्वगुणवृत्तित्वैतत्त्रितयविशिष्टजातिमत्त्वं प्राचीनाभिमतं रूपलक्षणं फलितम् । न चैवं स्पार्शननिरूपितत्वरूपलघुधर्मपुरस्कारेण लौकिकविषयत्वनिवेशापेक्षया चाक्षुषानिरूपितत्वरूपगुरुधर्मपुरस्कारेणात्र लौकिकविषयत्वस्य निवेशनात् गौरवमिति वाच्यम् । अखण्डाभावसंपादकतया वैयर्थ्याभावात् । एतेन शक्त्या मात्रपदलभ्येतराग्राह्यत्वघटितलक्षणसंभवे तत्परित्यज्य लक्षणया मात्रपदलभ्यत्वगग्राह्यत्वघटितलक्षणकरणं अनुचितमिति दूषणं प्रत्युक्तम् । तस्माच्चक्षुर्मात्रग्राह्यमिति मूलस्यप्राचीनपरिष्कार एव सामान्यतः चक्षुर्मात्रग्राह्य इति प्रयोक्तुर्मूलकारस्यापि निर्भर इति प्रतिभाति । यथाश्रुतरूपलक्षणघटकदलप्रयोजनमाह । **रूपत्वेऽतिव्याप्तीति** । इदमुपलक्षणम् । रूपत्वजाति-

**दिसमुदाय एव चित्ररूपमिति चेन्न । रूपस्य व्याप्यवृत्तित्वनियमात् ।**

---

**नी.** परमाणुरूपादौ नाव्याप्तिरिति बोध्यम् । **समुदाय एवेति** । एवकारेणातिरिक्त-चित्ररूपव्यवच्छेदः । **व्याप्यवृत्तित्वेति** । दैशिकव्याप्यवृत्तित्वेत्यर्थः । इदमुप-

**रा.** व्याप्तिवारणाय गुणवृत्तित्वेन जातिः विशेषणीया । जातौ गुणवृत्तित्वलाभायैव गुणपदमिति न कस्यापि वैयर्थ्यमिति ध्येयम् । **व्याप्यवृत्तित्वनियमादिति** । न चाप्रयोजकोऽयं नियम इति वाच्यम् । लाघवतर्कस्यैव प्रयोजकत्वात् । तथा हि । नीलपीतकपालारब्धे घटे पीतकपालावच्छेदेन नीलरूपोत्पत्तिवारणाय तत्तदवयवावच्छेदेन नीलादिरूपं प्रति तत्तदवयवगतनीलान्यरूपत्वेन प्रतिबन्धकत्वं वाच्यम् ।

**नृ.** मत्त्वमपि तल्लक्षणम् । रूपवति रूपानुत्पत्त्या समवायेन जन्यरूपत्वावच्छिन्नं प्रति नीलत्वाद्यवच्छिन्नं प्रति वा रूपत्वेन प्रतिबन्धकत्वं वाच्यम । शुक्लादिरूपसत्त्वेऽपि नीलाद्यनुत्पत्तेः । एवं च समवायसंबन्धावच्छिन्नतत्तद्धर्मावच्छिन्नप्रतिबध्यतानिरूपितसमवायसंबन्धावच्छिन्नप्रतिबन्धकतावच्छेदकतया रूपत्वजातिसिद्धिसंभवात् इत्यपि बोध्यम् । प्राञ्चस्तु विषयतासंबन्धेन स्पार्शनं प्रति तादात्म्यसंबन्धेन रूपस्य प्रतिबन्धकतया तदवच्छेदकतया रूपत्वजातिसिद्धिरिति वदन्ति । तदसत् रूप इव रसादावपि स्पार्शनानुत्पत्त्या स्पार्शनं प्रति रसत्वादिनापि अनेकप्रतिबन्धकत्वापत्त्या गौरवेण उक्तप्रतिबध्यप्रतिबन्धकभावानभ्युपगमात् । किन्तु रूपादौ स्पार्शनोत्पत्तिवारणाय गुणनिष्ठलौकिकविषयतासंबन्धेन स्पार्शनं प्रति तादात्म्येन स्पर्शस्य हेतुत्वं स्वीक्रियते लाघवात् । एवं चोक्तरीत्या रूपत्वजातिसिद्धिरिति । **मूले तच्चेति** ॥ निरुक्तलक्षणलक्षितरूपं चेत्यर्थः । अवधारणार्थकश्चशब्दः सप्तविधमित्युत्तरं योज्यः । शुक्लनीलेत्यादिसप्तविधमित्यन्तग्रन्थस्य शरीरेन्द्रियविषयभेदादित्यादिपूर्वग्रन्थोक्तरीत्यार्थो ज्ञेयः । **सप्तविधमिति** । सप्तविधमेवेत्यर्थः । एवकारव्यवच्छेद्यनवीनाभिमतरूपनिष्ठषड्विधत्वं दूषयितुं तन्मतमुपन्यस्यति । **नन्विति । अव्याप्यवृत्तिनीलादिसमुदाय इति** । नीलादीनां अव्याप्यवृत्तित्वं विना तत्समुदायस्य एकवृत्तित्वासम्भवादिति भावः । **चित्ररूपमिति** । प्रतीतिविषय इत्यर्थः । तथा च तादृशनीलादिसमुदायविषयकत्वाङ्गीकारेणैव तादृशप्रतीत्युपपत्तेरतिरिक्तचित्ररूपाङ्गीकारो निष्प्रामाणिक इति भावः । **रूपस्य व्याप्यवृत्तित्वनियमादिति** । रूपत्वस्य व्याप्यवृत्तित्वव्याप्यत्वादित्यर्थः । प्राचामयमाशयः । रूपस्याव्याप्यवृत्तित्वे नानारूपवदवयवारब्धद्रव्यप्रत्यक्षे समवायेन नानारूपाणां हेतुत्वकल्पनापत्त्या नानारूपेषु चित्रमिति प्रतीतिविषयत्वकल्पनापत्त्या च गौरवापत्तेः । रूपमात्रस्य व्याप्यवृत्तित्वे तु नानारूपवदवयवारब्धपटेऽतिरिक्तचित्ररूपस्यैवोत्पत्त्या तस्यैवाश्रयप्रत्यक्षहेतुत्वं, चित्ररूपमिति प्रतीतिविषयत्वं च संभवतीति नोक्तगौरवप्रसक्तिः । अत एव एकं चित्रमिति प्रतीतेः

**ननु चित्रपटे अवयवरूपस्यैव प्रतीतिरिति चेन्न । रूपराहित्येन पटस्याप्रत्यक्षत्वप्रसंगात् । न च रूपवत्समवेतत्वं प्रत्यक्षत्वप्रयोजकं गौरवात् । तस्मात्पटस्य प्रत्यक्षत्वान्यथानुपपत्त्या चित्ररूपसिद्धिः ।**

---

**नी.** लक्षणम् । एकैकचित्ररूपस्थलेऽनेकरूपाणामेकैकतत्प्रागभावादिस्थले च अनेकप्रागभावादीनां कल्पनेन, अनेकरूपेषु चित्रः इत्याकारकप्रतीतिविषयत्वकल्पनेन च गौरवमिति । **रूपरहितत्वेनेति** । समवायेनेत्यादिः । **प्रसङ्गादिति** । द्रव्यचाक्षुषं प्रति समवायेन रूपस्य कारणत्वादिति भावः । **रूपवत्समवेतत्वमिति** । स्वाश्रयसमवेतत्वसंबन्धेन रूपम् । **प्रत्यक्षत्वप्रयोजकमिति** । प्रत्यक्षविषयत्वप्रयोजकमस्तु इत्यर्थः । **गौरवादिति** । साक्षात्संबन्धेन कारणत्वापेक्षया गौरवादित्यर्थः । चित्रावयवकावयवकपालैरारब्धघटस्य चाक्षुषत्वानुरोधेन स्वसमवायिसमवेतसमवेतत्वसंबन्धेन रूपस्य तत्प्रयोजकत्वमङ्गीकर्तव्यम् । एवं च त्रुटेश्चाक्षुषत्वानुपपत्तिरपि द्रष्टव्या । **प्रत्यक्षत्वानुपपत्त्येति** । एतेन चित्ररूपवच्चित्ररसोऽपि सिध्येदिति

**रा.** रूपस्य व्याप्यवृत्तितामते प्रतिबध्यप्रतिबन्धकभावो न कल्प्यत एव । किन्तु अवयविनि तत्तदवयवावच्छेदेन तत्तद्रूपं प्रति तत्तदवयवगततत्तद्रूपाणामेव हेतुत्वं

**नृ.** प्रमात्वमुपपद्यत इति । नन्वस्तु रूपस्य व्याप्यवृत्तित्वं अस्तु च नानागन्धवदवयवारब्धघटस्य निर्गन्धत्ववत् नानारूपवदवयवारब्धपटस्यापि नीरूपत्वम् । तादृशघटविशेष्यकगन्धप्रत्ययस्य अवयवगन्धमादाय उपपत्तिवत् तादृशघटविशेष्यकरूपप्रत्ययस्यापि अवयवरूपमादायोपपत्तिसंभवात् इत्याशयेनाक्षिपति । **ननु चित्रपट इति** । **रूपरहितत्वेनेति** । समवायेन रूपसामान्याभाववत्त्वेनेत्यर्थः । **पटस्येति** । नानारूपवदवयवारब्धपटस्येत्यर्थः । **अप्रत्यक्षत्वप्रसङ्गादिति** । प्रत्यक्षनिरूपितलौकिकविषयत्वाभावप्रसङ्गादित्यर्थः । द्रव्यवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्षं प्रति समवायेन उद्भूतरूपस्य हेतुतया तत्र तादृशकारणाभावादिति भावः । **प्रत्यक्षत्वप्रयोजकमिति** । प्रत्यक्षकरणमित्यर्थः । लौकिकविषयतासंबन्धेन प्रत्यक्षकारणस्यैव प्रत्यक्षनिरूपितलौकिकविषयताप्रयोजकत्वादिति भावः । **गौरवादिति** । रूपत्वापेक्षया रूपवत्समवेतत्वस्य गुरुत्वादित्यर्थः । तथा च गौरवान्न तेन रूपेण हेतुत्वमिति भावः । इदमुपलक्षणम् । रूपवत्समवेतत्वस्य रूपवत्समवेतसमवेतत्वस्य वा हेतुतेत्यत्र विनिगमनाविरहात्कार्यकारणभावद्वयापत्तिश्चेत्यपि बोध्यम् । एतेन कारणतावच्छेदकगौरवमतिरिक्तचित्ररूपकल्पनागौरवतुल्यमिति शङ्का निरस्ता । **तस्मादिति** । रूपवत्समवेतत्वादेः प्रत्यक्षकारणत्वासंभवादित्यर्थः । **पटस्येति** । रूपत्वेन हेतुत्वावश्यकत्व इत्यादिः । तादृशपटस्येत्यर्थः । **प्रत्यक्षत्वान्यथानुपपत्त्येति** । अन्यथा प्रत्यक्षत्वानु-

रूपस्याश्रयमाह । **पृथिवीति** । आश्रयं विभज्य दर्शयति । **तत्रेति** । रसं लक्षयति । **रसनेति** । रसत्वेऽतिव्याप्तिवारणाय गुणपदम् । रसस्याश्रयमाह । **पृथिवीति** । आश्रयं विभज्य दर्शयति । **तत्रेति** । गन्धं लक्षयति । **घ्राणेति** । गन्धत्वेऽतिव्याप्तिवारणाय गुणपदम् ।

---

**नी.** शङ्का निरस्ता । द्रव्यलौकिकरासनस्याप्रसिद्ध्या तदनुपपत्त्यभावेन न चित्ररसाङ्गीकार इति संक्षेपः । **रसत्व इति** । रसनग्राह्यगुणविभाजकोपाधिमत्त्वे तात्पर्यम् ।

**रा.** कल्प्यत इति न गौरवमिति वाच्यम् । व्याप्यवृत्तिशुक्लादिरूपस्थले शुक्लरूपादौ तत्तदवयवावच्छिन्नत्वस्य विरहेण उक्तरूपेण कार्यकारणभावकल्पनाप्रयुक्तगौरवाभावात् । न चैवमपि अतिरिक्तचित्ररूपं प्रति अवयवगतनानारूपाणां कारणत्वकल्पनं अधिकमिति वाच्यम् । चित्रपट इत्यादिप्रतीतेः नानारूपसमुदायविषयकत्वकल्पनामपेक्ष्य एकचित्ररूपविषयकत्वकल्पने लाघवस्य अतिस्फुटत्वादिति भावः ।

**नृ.** पपत्त्येति योजना । अन्यथा तादृशपटे रूपानङ्गीकारे प्रत्यक्षत्वानुपपत्त्या लौकिकविषयतासंबन्धेन प्रत्यक्षवत्त्वानुपपत्त्या चित्ररूपसिद्धिरिति अतिरिक्तचित्ररूपमवश्यं स्वीकार्यमित्यर्थः । कॢप्तरूपाणां परस्परविरोधेनोत्पत्त्यसंभवादिति भावः । **मूले पृथिवीजलतेजोवृत्तीति** । पृथिव्यादित्रिकवृत्तितावच्छेदकरूपत्ववदित्यर्थः । **तत्रेति** । पृथिव्यादित्रिक इत्यर्थः । घटकत्वं सप्तम्यर्थः । तस्य पृथिव्यामन्वयः । **पृथिव्यां सप्तविधमिति** । पृथिवीवृत्तितावच्छेदकाः ये सप्तप्रकाराः तावदन्यतमविशिष्टं रूपमित्यर्थः । यथाश्रुते पृथिव्यामिव सप्तप्रकारान्यतमविशिष्टरूपस्य जलादावपि सत्त्वेन जले सप्तविधरूपमिति प्रतीतिव्यवहारापत्तेः । एवमग्रेऽप्यूह्यम् । **अभास्वरशुक्लमिति** । अभास्वरशुक्लमेवेत्यर्थः । यथाश्रुते पृथिव्यामपि तादृशरूपसत्त्वादसाङ्गत्यापत्तिः । **शुक्लभास्वरमिति** । शुक्लत्वव्याप्यभास्वरत्वजात्यवच्छिन्नमित्यर्थः । **तेजसीति** । तेजोमात्रवृत्तीत्यर्थः । **रसनग्राह्यो गुणो रस इति** । रसननिष्ठव्यापारसंबन्धावच्छिन्नकारणतानिरूपितकार्यताश्रयज्ञाननिरूपितलौकिकविषयताश्रय - गुण इत्यर्थः । प्रयोजनं च उक्तप्रायम् । तादृशज्ञानस्य रसनजत्वेनैव निवेशः । अत्रापि परमाण्वादिरसे अव्याप्तिवारणाय तादृशविषयताश्रयरूपावृत्तिजातिमत्त्वं विवक्षणीयम् । एतल्लाभायैव गुणपदम् । यथाश्रुतमूलार्थानुरोधेन गुणत्वदलप्रयोजनमाह **दीपिकायां रसत्व इति । आश्रयं विभज्य दर्शयतीति** । रससामान्याश्रयं प्रदर्श्य रसविभाजकतत्तद्धर्मावच्छिन्नाश्रयं विशिष्य दर्शयतीत्यर्थः । **मूले तत्र पृथिव्यां षड्विध इति** । रसे इत्यनुषज्यते । अर्थस्तु पूर्ववत् । **घ्राणग्राह्यो गुणो गन्ध इति** । एतस्य रसनग्राह्यो गुणो रस इति ग्रन्थार्थरीत्या अर्थो ज्ञेयः ।

स्पर्शं लक्षयति । **त्वगिति** । स्पर्शत्वेऽतिव्याप्तिवारणाय गुणपदम् । संयोगादावतिव्याप्तिवाराणाय मात्रपदम् । **पाकजमिति** । पाकस्तेजः-संयोगः । तेन पूर्वरूपं नश्यति रूपान्तरमुत्पद्यत इत्यर्थः । तत्र परमाणुष्वेव पाको न द्व्यणुकादौ । आमनिक्षिप्ते घटे परमाणुपु

---

नी. एवं गन्धलक्षणेऽपि । **मात्रपदमिति** । चक्षुरग्राह्यत्वगिन्द्रियग्राह्यगुणविभाजकोपाधिमत्त्वमिति फलितोऽर्थः । **परमाणुष्वेव पाक इति** । परमाणुष्वेव पूर्वरूपपरावृत्त्यादिजनकतेजःसंयोग इत्यर्थः । एवकारव्यवच्छेद्यं स्पष्टयति । **न द्व्यणुकादाविति** । **आमनिक्षिप्ते घट इति** । घटे आमनिक्षिप्ते सति श्यामघटनाशे परमा-

रा. **गुणपदमिति** । यद्यप्यत्रापि परमाणुस्पर्शे अव्याप्तिवारणाय त्वगिन्द्रियमात्रग्राह्यजातिमत्त्वमेव विवक्षणीयं । तथा च स्पर्शत्वेऽतिप्रसक्त्या गुणपदमनर्थकमेव । तथापि मृदुत्वकाठिन्ययोः ग्रन्थकृन्मते अवयवसंयोगविशेषात्मकतया अवयवसंयोगगतवैजात्यस्यापि त्वगिन्द्रियमात्रग्राह्यत्वे संयोगे अतिव्याप्तिवारणाय गुणत्वसाक्षाद्व्याप्यतादृशजातिमत्त्वस्यैव लक्षणे विवक्षणीयतया तल्लाभायैव गुणपदमित्यवधेयम् । **पाकनिक्षिप्त इति** । पच्यतेऽनेनेति व्युत्पत्त्या पाकः अत्राग्निरेव । घटे

नृ. **त्वगिन्द्रियमात्रेति** । एतस्य रूपग्रन्थार्थदशा अर्थो ज्ञेयः । न च स्पार्शनानिरूपितलौकिकविषयताशून्यलौकिकविषयताश्रयजातिमत्त्वमात्रस्य स्पर्शलक्षणत्वेऽपि अनतिप्रसक्तेः जातौ गुणवृत्तित्वनिवेशे प्रयोजनविरहेण मूलोक्तगुणपदं व्यर्थमिति वाच्यम् । वायोः स्पार्शनाङ्गीकर्तृमते वायुत्वजातिवारणाय गुणपदसार्थक्यात् । स्पर्शलक्षणेऽपि यथाश्रुतमूलार्थानुसारेण गुणत्वविशेषणप्रयोजनमाह । **दीपिकायां स्पर्शत्व इति** । **मूले रूपादिचतुष्टयं पृथिव्यां पाकजमिति** । रूपादिचतुष्टयघटकं यद्यत् पृथिवीवृत्ति तत्सर्वं पाकजं अत एवानित्यमित्यर्थः । अन्यत्रापाकजमित्यत्र रूपादिचतुष्टये । अत एव नित्यमनित्यं चेत्यर्थः । उभयमुदाहरति । **नित्यगतमिति** । रूपादिचतुष्टयघटकं यद्यन्नित्यजलादिवृत्ति तत्सर्वं नित्यमित्यर्थः । **अनित्यगतमिति** । रूपादिचतुष्टयघटकं यद्यत् अनित्यजलादिवृत्ति तत्सर्वमनित्यमित्यर्थः । **पाकजमिति** । मूलस्थपाकजशब्दस्यार्थं वक्तुमादौ पाकपदार्थमाह । **दीपिकायां पाक इति** । **तेजस्संयोग इति** । विजातीयतेजस्संयोग इत्यर्थः । **तेनेति** । विजातीयतेजस्संयोगेनेत्यर्थः । **पूर्वरूपं नश्यतीति** । पूर्वरूपनाशो भवतीत्यर्थः । **इत्यर्थ इति** । अयमेव पाकजशब्दार्थ इत्यर्थः । पाकः कुत्रेत्याकाङ्क्षायां मतभेदेन पाकस्थलमुदाहरति । **तत्रेति** । पाकः कुत्रेत्याकाङ्क्षायां इत्यर्थः । **पाक इति** । पूर्वरूपनाशपूर्वकरूपान्तरोत्पादकतेजस्संयोग इत्यर्थः । एवमग्रेऽपि । परमाणुष्वेवेत्यत्र एवकारव्यवच्छेद्यं स्वयमेव विवृणोति । **न द्व्यणुकादाविति** । आदिनावय-

**रूपान्तरोत्पत्तौ श्यामघटनाशे पुनर्द्व्यणुकादिक्रमेण रक्तघटोत्पत्तिः । तत्र परमाणवः समवायिकारणम् । तेजःसंयोगोऽसमवायिकारणम् । अदृष्टादिकं निमित्तकारणम् । द्व्यणुकादिरूपे कारणरूपमसमवायिकारण-**

---

नी. णुषु रूपान्तरोत्पत्तावित्यन्वयः । तत्र परमाणुरूपे अवयविनि पाकानङ्गीकारादाह । **कारणरूपमिति** । परमाणुष्वेव पाकं वदतां वैशेषिकाणामयमाशयः । वेगातिशयवता तेजसा परमाणूनामभिघातसंयोगे सति अवश्यं तेषु क्रिया जायते । ततो

रा. पाकनिक्षिप्ते सति श्यामघटनाशे परमाणुषु रूपान्तरोत्पत्ताविति योजना । श्यामघटसत्त्वदशायामेव परमाणुषु रूपान्तरोत्पत्तिसंभवे घटनाशस्य पुनरुत्पादस्वीकारे प्रयोजनविरहात् । न च घटगततत्तत्पूर्वनाशार्थमेव घटनाशः स्वीकरणीय इति वाच्यम् । परमाणुगतरूपनाशरूपान्तरोत्पत्तिभ्यां घटगतरूपनाशरूपान्तरोत्पत्त्योः संभवात् । तस्मात् अवयव्युपष्टब्धेषु परमाणुषु पाकासंभवेन रूपनाशासंभवात् वैशेषिकैरवयवनाशः स्वीकरणीयः । नैयायिकैश्चावयविनः सच्छिद्रतया अवयवि-

नृ. विमात्रपरिग्रहः । **एतस्येति** । पीलुपाकवादिन इत्युत्तरेणान्वयः । उक्तार्थमुपपादयति । **आमनिक्षिप्त इति** । अग्नियन्त्रविशेषस्थापित इत्यर्थः । घट इति सतिसप्तमी । **परमाणौ रूपान्तरोत्पत्तौ श्यामघटनाश इति** । श्यामघटनाशे रूपान्तरोत्पत्ताविति योजना । **श्यामघटनाश इति** । द्व्यणुकादिनाशक्रमेण श्यामघटादिनाशे सतीत्यर्थः । तदनन्तरमिति शेषः । **रूपान्तरोत्पत्ताविति** । पूर्वरूपादिचतुष्टयनाशपूर्वकरूपादिचतुष्टयोत्पत्तौ सत्यामित्यर्थः । तदनन्तरमिति शेषः । **पुनरिति** । अत्यन्तसंयोगादित्यर्थः । **द्व्यणुकादिक्रमेण रक्तघटोत्पत्तिरिति** । रक्तरूपविशिष्टद्व्यणुकाद्युत्पत्तिपूर्वकरक्तघटाद्युत्पत्तिरित्यर्थः । अयं भावः । अग्नियन्त्रनिक्षिप्ते घटे तेजस्संयोगानन्तरं तादृशघटारम्भकेषु यावदवयवेषु रूपान्तरोत्पत्तिमन्तरा पूर्वरूपनाशपूर्वकरूपान्तरोत्पत्तिर्न संभवति । अनुभवविरोधात् । न हि घटे रक्तोत्पत्त्यनन्तरं तदवयवाः नीलास्सन्तो दृश्यन्ते । यावदवयवेष्वपि रूपान्तरोत्पत्तिर्न संभवति । घटस्याच्छिद्रत्वेन वह्नेः सूक्ष्मावयवानां अन्तःप्रवेशासंभवेन घटारम्भकयावदवयवेषु वह्न्यवयवसंयोगस्य बाधितत्वात् । परन्तु अग्निसंयोगाधीनपरमाणुक्रियया परमाणुद्वयविभागजन्यारम्भकसंयोगनाशपूर्वकद्व्यणुकादिनाशक्रमेण महावयविनाशे सति पुनरग्न्यन्तरसंयोगात् परमाणौ श्यामनाशपूर्वकरक्तोत्पत्तौ पुनरग्न्यन्तरसंयोगात् परमाणौ द्रव्यारम्भानुगुणक्रियया परमाणुद्वयसंयोगोत्पत्तौ द्व्यणुकादिमहावयविपर्यन्तव्यूहोत्पत्तिर्भवतीति । शिष्यबुद्धिवैशद्यार्थं उत्पन्नपरमाणुरूपे कारणत्रयं दर्शयति । **तत्रेति** । परमाणुरूप इत्यर्थः । द्व्यणुकादिरूपेऽपि तद्दर्शयति । **द्व्यणुकादिरूप इति** । आदिना अवयविमात्र-

मिति पीलुपाकवादिनो वैशेषिकाः। पूर्वघटस्य नाशं विनैव अवयविनि अवयवेषु च परमाणुपर्यन्तेषु युगपद्रूपान्तरोत्पत्तिरिति पिठरपाकवादिनो नैयायिकाः। अत एव पार्थिवपरमाणुरूपादिकमनित्यमित्यर्थः। अन्यत्र जलादावित्यर्थः। नित्यगतमिति। परमाणुगतमित्यर्थः। अनित्यगत-मिति। द्व्यणुकादिगतमित्यर्थः। रूपादिचतुष्टयम् उद्भूतं प्रत्यक्षम्। अनुद्भूतमप्रत्यक्षम्। उद्भूतत्वं प्रत्यक्षत्वप्रयोजको धर्मः। तदभावोऽनुद्भू-

---

नी. विभागः, तत आरम्भकसंयोगनाशे सत्यवश्यं यावदवयविनाशः, ततः स्वतन्त्रेषु परमाणुषु रूपान्तरोत्पत्तौ पुनरदृष्टादिघटितसामग्रीवशात्परमाणुषु क्रियाविभागादि-क्रमेण यथास्थितमपरावयविपर्यन्तमुत्पत्तिरिति। अवयविन्यपि पाकं वदतां नैया-यिकानां तु अयमाशयः। तेजसा परमाणूनामभिघातसंयोगेऽपि तस्य नियमत आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकक्रियाजनकत्वे मानाभावेन अवयविन्यपि पाक-स्वीकार उचितः। अत एव 'सोऽयं घटः' इति प्रत्यभिज्ञापि सङ्गच्छते। अनन्तावय-विनाशाद्यकल्पनेन लाघवं चेति। न चावयविरूपं प्रति अवयवरूपस्य, तन्नाशं प्रति आश्रयनाशस्य, च हेतुतायां व्यभिचार इति वाच्यम्। कार्यतावच्छेदककोटौ वैजात्य-निवेशनेन व्यभिचारवारणसम्भवात्। **अन्यत्र जलादावित्यर्थ इति**। यद्यपि रूपादिचतुष्टयं जलादौ बाधितम्, तथापि यथायोगमन्वये तात्पर्यम्। **उद्भूत-**

रा. सत्त्वेऽपि तदवयवेषु पाकस्संभवतीति नावयविनाशस्तैरङ्गीक्रियत इति ध्येयम्। **तत्रेति**। रूपान्तर इत्यर्थः। **प्रत्यक्षप्रयोजक इति**। शुक्लत्वादिना सांकर्येण उ-

नृ परिग्रहः। **पीलुपाकवादिन इति**। वैशेषिका इत्यर्थः। वदन्तीति शेषः। प्राचीनमते पाकस्थलमुदाहरति। **पूर्वघटनाशं विनैवेति**। **अवयविनीति**। पूर्वावयविनीत्यर्थः। **अवयवेष्विति**। तदवयवेष्वित्यर्थः। **युगपत् रूपान्तरोत्पत्तिरिति**। युगपत्पूर्वरूपनाशः। तदनन्तरं युगपद्रूपा-न्तरोत्पत्तिरित्यर्थः। अयं भावः। घटादेस्सच्छिद्रत्वात् घटावयवेषु यावत्सु वह्नेः सूक्ष्मावयवैः अन्तःप्रविष्टैः संयोगो न विरुध्यते। एवं चावयवेष्ववयविनि च युगपद्वि-जातीयतेजस्संयोगात् युगपदेव पूर्वरूपादिनाशः। तदुत्तरक्षणे युगपदेव रूपाद्यन्त-रोत्पत्तिः संभवतीति। अधिकन्तु अस्मदीयमुक्तावलीप्रभायामनुसन्धेयम्। **अत एवेति**। पार्थिवपरमाणुषु पूर्वरूपादिनाशपूर्वकरूपाद्यन्तरोत्पत्तेः उभयमतसिद्धत्वादे-वेत्यर्थः। **पार्थिवपरमाणुष्विति**। पृथिव्या परमाणुष्वपीत्यर्थः। अपिना पृथिवी-द्व्यणुकादयः परिगृह्यन्ते। **रूपादिकमिति**। रूपादिचतुष्टयमित्यर्थः। **जलादा-विति**। जलादित्रिष्वित्यर्थः। **रूपादिचतुष्टयमुद्भूतमिति**। उद्भूतं रूपादि-

**नी.** **त्वमिति** । उद्भूतत्वं जातिः । न च शुक्लत्वादिना साङ्कर्यम् । गुणगतसाङ्कर्यं न दोष

**रा.** द्भूतत्वस्य जातित्वासंभवेन धर्म इत्युक्तम् । अखण्डोपाधिरित्यर्थः ।

**नृ.** चतुष्टयमेवेत्यर्थः । **प्रत्यक्षमिति** । प्रत्यक्षनिरूपितलौकिकविषयतावदित्यर्थः । एवकारव्यवच्छेद्यं स्पष्टयति । **अनुद्भूतमिति** । रूपादिचतुष्टयमिति शेषः । **अप्रत्यक्षमिति** । प्रत्यक्षानिरूपितलौकिकविषयताशून्यमित्यर्थः । **प्रत्यक्षत्वप्रयोजक इति** । विषयतासंबन्धावच्छिन्नप्रत्यक्षनिष्ठकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणताशून्यावृत्तिरित्यर्थः । निरुक्तकारणतावच्छेदकधर्म इति तु नार्थः । प्रत्यक्षे विषयत्वेन तत्तत्प्रत्यक्षे तत्तद्व्यक्तित्वेन वा हेतुत्वस्यैव प्रामाणिकत्वेन मध्यविधकार्यकारणभावे प्रमाणाभावात् मध्यविधकार्यकारणभावाङ्गीकारेऽपि तादृशकारणतावच्छेदकतया सिद्धोद्भूतत्वस्य शुक्लत्वादिना साङ्कर्येण जातिरूपत्वासम्भवेन रूपादिचतुर्णां मध्ये येषां लौकिकप्रत्यक्षं तावदन्यतमत्वरूपस्यैवोद्भूतत्वस्य पर्यवसितत्वात् ईदृशकार्यकारणभावस्य मध्यमविधकार्यकारणभाववादिनामप्यननुमतत्वाच्च । अन्यथा प्रत्यक्षे घटत्रयाद्यन्यतमत्वेनापि तादात्म्येन हेतुतास्वीकारापत्त्या अप्रामाणिकानन्तकार्यकारणभावकल्पनापत्तेः । अस्मद्गुरुचरणास्तु उद्भूतत्वं प्रत्यक्षप्रयोजकधर्म इति—लौकिकविषयतासम्बन्धावच्छिन्नप्रत्यक्षत्वावच्छिन्नप्रतियोगिताकाभाववदवृत्तिधर्म इति प्रत्यक्षनिरूपितलौकिकविषयत्वसामान्याभाववदवृत्तिधर्म इति वार्थः । स च धर्मः निरुक्तान्यतमत्वरूपैकधर्मस्वरूपः तादृशरूपादिप्रत्येकमात्रवृत्त्यन्यतमत्वचतुष्टयात्मको वेत्यन्यदेतदिति व्याचक्रुः । प्राञ्चस्तु उद्भूतत्वं प्रत्यक्षत्वप्रयोजकधर्म इति—प्रत्यक्षनिरूपितानिरुक्तकारणतावच्छेदकतया सिद्धो जातिविशेषः । न च शुक्लत्वादिना साङ्कर्यान्न तस्य जातित्वसंभव इति वाच्यम् । शुक्लत्वादिव्याप्यानेकजातिस्वीकारेण तादृशदोषाप्रसक्तेः । नन्वेवमप्येतादृशदोषवारणाय मधुरत्वादिव्याप्यषडुद्भूतत्वं सुरभित्वादिव्याप्योद्भूतत्वद्वयं शीतत्वादिव्याप्योद्भूतत्वत्रयं स्वीकार्यम् । एवं चाष्टादशोद्भूतत्वानां रूपादिचतुष्टयान्यतमनिष्ठलौकिकविषयतासंबन्धावच्छिन्नप्रत्यक्षनिष्ठकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणतावच्छेदकत्वं न संभवति । एकैकतत्तद्धर्मावच्छिन्नत्वस्य नियतपूर्ववृत्तित्वाभावात् । तस्मादुद्भूतत्वस्य जातित्वं न संभवतीति चेन्न । स्वावच्छिन्नाव्यवहितोत्तरक्षणोत्पत्तिकत्वसंबन्धेन तत्तदुद्भूतत्वजातिवैशिष्ट्यस्यापि कार्ये निवेशनीयतया उक्तदोषाभावात् । न चैवमपि अष्टादशकार्यकारणभावः प्रसज्यते इति वाच्यम् । इष्टापत्तेरित्याहुः । नव्यास्तु—साङ्कर्यस्य जातिबाधकत्वे मानाभावात् निरुक्तकारणतावच्छेदकतया सिद्धजातिरूपं रूपादिचतुष्टयमात्रवृत्त्येकमेवोद्भूतत्वं रूपादिप्रत्येकमात्रवृत्तिलौकिकविषयतासंबन्धावच्छिन्नकार्यतानिरूपितनिरुक्तकारणतावच्छेदकतया सिद्धजातिरूपं रूपादिप्रत्येकमात्रवृत्त्युद्भूतत्वचतुष्टयं वा स्वीकार्यम् । एवं च

तत्वम् । संख्यां लक्षयति । **एकेति** । परिमाणं लक्षयति । **मानेति** । परिमाणं विभजते । **तच्चेति** । भावप्रधानो निर्देशः । अणुत्वं, महत्त्वं, दीर्घत्वं, ह्रस्वत्वं चेत्यर्थः । पृथक्त्वं लक्षयति । **पृथगिति** । इदमस्मात्पृथक् इति व्यवहारकारणं पृथक्त्वमित्यर्थः । संयोगं लक्षयति । **संयुक्तेति** । इमौ संयुक्तौ इति व्यवहारहेतुरित्यर्थः । संख्यादिलक्षणे

---

**नी.** इति नवीनमताभिप्रायकोऽयं ग्रन्थ इति न दोषः । केचित्तु शुक्लत्वादिव्याप्यमनुद्भूतत्वं नाना । तदभावकूटवत्त्वमेवोद्भूतत्वमित्याहुः । मूले **द्वित्वादिकं**

**टा.** **संयुक्तव्यवहारहेतुरिति** । यद्यपि व्यवहारः शब्दप्रयोगइत्यर्थः, तत्र च न संयोगः

**नृ.** तन्मते कार्ये न कारणतावच्छेदकवैशिष्ट्यानिवेशेन वाष्टादशोद्भूतत्वस्वीकार इति लाघवमित्याहुः । **तदभाव इति** । प्रत्यक्षप्रयोजकनिरुक्तोद्भूतत्वाभाव एवेत्यर्थः । **अनुद्भूतत्वमिति** । अनुद्भूतत्वशब्दप्रतिपाद्यमित्यर्थः । न त्वनुद्भूतत्वमपि अन्यादृशं गौरवात् प्रयोजनाभावाच्चेति भावः । **मूले एकत्वादिव्यवहार इति** । एकत्वादिप्रकारकज्ञानजनकशब्द इत्यर्थः । एकः द्वावित्यादिशब्द इति यावत् । **हेतुरिति** । असाधारणकारणमित्यर्थः । तथा च एकत्वाद्यधिकरण एव वाच्यतासंबन्धेन एक इत्यादिव्यवहारोत्पत्त्या एकत्वाद्यनधिकरणे निरुक्तसंबन्धेन तादृशव्यवहारानुत्पत्त्या चान्वयव्यतिरेकाभ्यां एक इत्यादिव्यवहारं प्रत्येकत्वादेः हेतुत्वस्यावश्यकत्वात् वाच्यतासंबन्धावच्छिन्नतादृशव्यवहारनिष्ठकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणत्वमेकत्वादिसंख्यासामान्यलक्षणं फलितमिति भावः । न च यादृशैकत्वाद्याश्रयण तादृशव्यवहारः तत्राव्याप्तिरिति वाच्यम्, तादृशकारणतासमानाधिकरणरूपावृत्तिजातिमत्त्वस्य विवक्षितत्वात् । न चैवं सति एक इत्याकारकव्यवहारघटितलक्षणस्यैव निर्दुष्टत्वसंभवात् आदिपदग्राह्यद्वावित्यादिव्यवहारघटितलक्षणकरणमफलमिति वाच्यम् । विनिगमनाविरहेण तद्घटितलक्षणस्यावश्यकत्वात् लक्षणस्य लक्षणान्तरादूषकत्वाच्च । इदमुपलक्षणम् । गणनापदशक्यतावच्छेदकतया सिद्धसङ्ख्यात्वजातिमत्त्वं संख्यासामान्यलक्षणमित्यपि बोध्यम् । संख्यां विभजते । **एकत्वादीति** । संख्यास्वरूपमाह एकत्वादीतीत्यस्मद्गुरुचरणाः । एकत्वादीत्यादिना द्वित्वादिपरिग्रहः । परार्धः पर्यन्तं यस्याः सा तथा चैकत्वादिपरार्धत्वान्तसंख्याविभाजकधर्मान्यतमवती संख्येति फलितार्थः । अत्र एक इति व्यवहारनिरूपितनिरुक्तकारणतासमानाधिकरणद्वित्वावृत्तिजातिमत्त्वं एकत्वपदशक्यतावच्छेदकतया सिद्धैकत्वत्वजातिमत्त्वं वा एकत्वसामान्यलक्षणम् । अनयैव दिशा द्वित्वादिपरार्धपर्यन्तानामपि प्रत्येकलक्षणान्यूह्यानि । अन्यथा न्यूनतापत्तेरिति हृदयम् । एकत्वं नित्यानित्यभेदेन द्विवि-

सर्वत्र दिक्कालादावतिव्याप्तिवारणाय असाधारणेति विशेषणीयम् । संयो-

---

नी. सर्वत्रानित्यमेवेति । हेतुभूतापेक्षाबुद्धिनाशेन द्वित्वादिनाशादिति भावः । परिमाणस्य गुणिबोधकशब्दैर्विभजनमसङ्गतमतो दीपिकायाम् । भावप्रधान इति । असाधारणेति । कालादेः साधारणकारणत्वेन तत्र नीति

रा. कारणं, व्यवहारं प्रति व्यवहर्तव्यज्ञानस्यैव कारणत्वात् । तथापि व्यवह्रियते अनेनेति,

नृ. धर्मित्वाशयेन नित्यैकत्वादेराश्रयमाह । नित्यगतमिति । नित्यैकत्वस्याश्रयः नित्यद्रव्यमेवेत्यर्थः । अनित्यगतमनित्यमिति । अनित्यैकत्वस्याश्रयः अनित्यद्रव्यमेवेत्यर्थः । इदं च स्वाश्रयसमवायिकारणसमवेतैकत्वासमवायिकारणकं आश्रयनाशनाश्यं चेति ध्येयम् । द्वित्वादीनां द्वैविध्यं नास्तीत्याह । द्वित्वादिकन्त्विति । एतस्यानित्यमेवेत्युत्तरेणान्वयः । आदिना परार्धपर्यन्तसङ्ख्यापरिग्रहः । अप्यर्थकः तुशब्दः सर्वत्रेत्युत्तरं योज्यः । सर्वत्रेति । सर्वेषु नित्येष्वनित्येष्वपि वर्तत इत्यर्थः । तथा च द्वित्वादिपरार्धपर्यन्तसङ्ख्याधिकरणं नित्यद्रव्यमनित्यद्रव्यं च भवतीति फलितार्थः । अत्र द्वित्वादिकमाश्रयगतैकत्वासमवायिकारणकं अपेक्षाबुद्धिजन्यं क्वचिन्नाशनाश्यं क्वचिदाश्रयनाशनाश्यं चेति हृदयम् । परिमाणं मानव्यवहारकारणमिति भाष्यानुसारेण परिमाणलक्षणमाह । मानव्यवहारकारणमिति । परिमाणप्रकारकज्ञानजनकशब्दकारणमित्यर्थः । अणु महद्दीर्घं ह्रस्वं चेति व्यवहारनिरूपितासाधारणकारणतावदिति फलितार्थः । तथा च वाच्यतासंबन्धावच्छिन्नाणवादिव्यवहारनिष्ठकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणतासमानाधिकरणरूपावृत्तिजातिमत्त्वं परिमाणसामान्यलक्षणमिति भावः । इदमुपलक्षणम् । परिमाणपदशक्यतावच्छेदकतया सिद्धपरिमाणत्वजातिमत्त्वं परिमाणसामान्यलक्षणमित्यपि बोध्यम् । परिमाणं विभजते । तच्चतुर्विधमिति । निरुक्तलक्षणलक्षितपरिमाणं प्रकारचतुष्टयान्यतमविशिष्टमित्यर्थः । अणु महद्दीर्घं ह्रस्वं चेति भावप्रधाननिर्देशः । तथा चाणुत्वत्वमहत्त्वत्वदीर्घत्वत्वह्रस्वत्वत्वाभिन्नप्रकारचतुष्टयान्यतमविशिष्टं परिमाणमिति समुदितवाक्यार्थः । अत्र अणुरिति व्यवहारनिरूपितनिरुक्तकारणत्वसमानाधिकरणमहत्त्वावृत्तिजातिमत्त्वं अणुत्वपदशक्यतावच्छेदकतया सिद्धाणुत्वत्वजातिमत्त्वं वा अणुत्वसामान्यलक्षणम् । एवं महत्त्वावृत्तित्वस्थाने अणुत्वावृत्तित्वं निवेश्य महत्त्वादिनिरूपितकारणत्वघटितानि महत्त्वादिपदशक्यतावच्छेदकतया सिद्धमहत्त्वत्वादिजातिमत्त्वरूपाणि वा महत्त्वादित्रयाणां प्रत्येकलक्षणान्यूह्यानि । अतो न न्यूनतेति ध्येयम् । अत्र दीर्घत्वं जन्यमहत्त्वाधिकरणमात्रवृत्ति, न त्वाकाशादौ । ह्रस्वत्वं जन्याणुत्वाधिकरणद्व्यणुकमात्रवृत्ति, न परमाणाविति प्राञ्चः । आचार्यास्तु दीर्घत्वह्रस्वत्वे नित्यानित्यभेदेन द्विविधे तत्र नित्यदीर्घत्वमाकाशमात्रवृत्ति, नित्यह्रस्वत्वं परमाणुमात्रवृत्ति, अनित्यं दीर्घ-

**गो द्विविधः कर्मजः संयोगजश्चेति । आद्यो हस्तक्रियया हस्तपुस्तकसंयोगः । द्वितीयो हस्तपुस्तकसंयोगात्कायपुस्तकसंयोगः । अव्याप्यवृत्तिः संयोगः । स्वात्यन्ताभावसमानाधिकरणत्वमव्याप्यवृत्तित्वम् । विभागं**

---

नी· व्याप्तिरिति भावः । **स्वात्यन्ताभावेति** । स्वप्रतियोगित्वस्वसामानाधि·

रा· व्यवहार इति व्युत्पत्त्या व्यवहारपदं व्यवहारजनकज्ञानपरम् । प्रत्यक्षात्मकज्ञाने

नृ. त्वं अनित्यं ह्रस्वत्वं चोदाहृतमेवेत्याहुः । एतत्तत्त्वं च अस्मत्कृतमुक्तावलीप्रभायां परिमाणग्रन्थेऽनुसंधेयम् । सर्वमतेऽपि सूचिकायां दण्डापेक्षया ह्रस्वत्वव्यवहारः । त्र्यणुकादौ घटाद्यपेक्षया अणुत्वव्यवहारवत् भाक्त एवेति हृदयम् । तच्च परिमाणं नित्यगतं नित्यं, अनित्यगतं अनित्यम् । अनित्यपरिमाणं क्वचित् संख्याऽसमवायिकारणकं, क्वचित् परिमाणासमवायिकारणकं, क्वचित् संख्यापरिमाणासमवायिकारणकं,क्वचित्प्रचयसंयोगपरिमाणोभयासमवायिकारणकं, क्वचित् संख्यापरिमाणप्रचयत्रयासमवायिकारणकं, आश्रयनाशनाश्यञ्चेति ध्येयम् । पृथक्त्वं लक्षयति । **पृथगिति** । प्रतिपाद्यतासंबन्धावच्छिन्ना या पृथगितिव्यवहारनिष्ठकार्यता तन्निरूपितसमवायसंबन्धावच्छिन्नकारणतासमानाधिकरणरूपावृत्तिजातिमत्त्वं, तादृशकारणतावच्छेदकतया पृथक्त्वपदशक्यतावच्छेदकतया वा सिद्धपृथक्त्वजातिमत्त्वं वा पृथक्त्वसामान्यलक्षणमिति भावः । एकत्वादिद्वित्वादिभेदेन संख्याया इव एकपृथक्त्वद्विपृथक्त्वादिभेदेन पृथक्त्वस्याप्यनेकविधत्वं बोध्यम् । एतेषां मध्ये घटः पृथगिति व्यवहारनिष्ठनिरुक्तसंबन्धावच्छिन्नकार्यतानिरूपितनिरुक्तसंबन्धावच्छिन्नकारणतासमानाधिकरणद्विपृथक्त्वावृत्तिजातिमत्त्वं, तादृशकारणतावच्छेदकतया एकपृथक्त्वपदशक्यतावच्छेदकतया वा सिद्धैकपृथक्त्वत्वजातिमत्त्वं वा एकपृथक्त्वसामान्यलक्षणम् । एवं घटौ पृथक् घटाः पृथक् इत्यादिव्यवहारनिष्ठनिरुक्तसम्बन्धावच्छिन्नकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणतासमानाधिकरणैकपृथक्त्वावृत्तिजातिमत्त्वं तादृशकारणतावच्छेदकतया द्विपृथक्त्वादिपदशक्यतावच्छेदकतया वा सिद्धद्विपृथक्त्वत्वादिजातिमत्त्वं वा द्विपृथक्त्वादिपरार्धपृथक्त्वान्तानां प्रत्येकलक्षणं बोध्यम् । अत्रैकपृथक्त्वं नित्यानित्यभेदेन द्विविधम् । नित्यगतन्नित्यं, अनित्यगतमनित्यम् स्वाश्रयसमवायिकारणगतैकपृथक्त्वासमवायिकारणकं आश्रयनाशनाश्यं च । द्विपृथक्त्वादिकं सर्वत्रानित्यं अपेक्षाबुद्धिविशेषजन्यं स्वाश्रयगतानेकैकपृथक्त्वासमवायिकारणकं क्वचिदपेक्षाबुद्धिनाशनाश्यं क्वचिदाश्रयनाशनाश्यं चेति हृदयम् । संयोगं लक्षयति। **संयुक्तेति** । संयुक्ताविति व्यवहारासाधारणकारणमित्यर्थः । वाच्यतासंबन्धावच्छिन्नतादृशव्यवहारनिष्ठकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणतासमानाधिकरणरूपावृत्तिजातिमत्त्वं, तादृशकारणतावच्छेदकतया संयोगपदशक्यतावच्छे-

लक्षयति । संयोगेति । कालादावतिव्याप्तिवारणाय गुण इति । रूपादावतिव्याप्तिवारणाय संयोगनाशक इति । विभागोऽपि द्विविधः कर्मजो

---

नी. करण्योभयसम्बन्धेनाभाववत्त्वमिति निष्कर्षः । संयोगनाशक इतीति । न च

रा. च विषयस्य कारणतया संयोगस्य तथात्वमक्षतम् । कार्यसामान्यं प्रति कालादीनां

नृ. दकतया वा सिद्धसंयोगत्वजातिमत्त्वं वा संयोगसामान्यलक्षणमिति भावः । यथाश्रुते संख्यादिलक्षणानां कालादावतिव्याप्तिवारणाय तत्तल्लक्षणघटककारणत्वस्यासाधारणकारणतास्वरूपत्वमाह । दीपिकायां संख्यादिलक्षणेष्विति । न्यूनतापरिहाराय संयोगं विभजते । संयोगो द्विविध इति । प्रकारद्वयमाह । कर्मजस्संयोगजश्चेति । अत्र कर्मजत्वमात्रं संयोगजत्वमात्रं च न संयोगविभाजकं, कर्मजत्वस्य विभागवृत्तित्वात् संयोगजत्वस्य अग्निसंयोगादिजन्यपरमाण्वादिक्रियायामपि सत्त्वात् स्वरूपसम्बन्धविशेषरूपजन्यत्वस्य प्रतिव्यक्तिभिन्नत्वेनानुगतत्वाभावाच्च । अत एव कर्मजसंयोगत्वं संयोगजसंयोगत्वं च न विभाजकम्, विशेषणविशेष्यभावे विनिगमनाविरहेण संयोगस्य चातुर्विध्यापत्तेः, किन्तु समवायसंबन्धावच्छिन्नक्रियानिष्ठकारणतानिरूपितसमवायसंबन्धावच्छिन्नसंयोगनिष्ठकार्यतावच्छेदकतया सिद्धकर्मजसंयोगमात्रवृत्तिवैजात्यं समवायसंबन्धावच्छिन्नसंयोगनिष्ठकारणतानिरूपितसमवायसंबन्धावच्छिन्नसंयोगनिष्ठकार्यतावच्छेदकतया सिद्धसंयोगजसंयोगमात्रवृत्तिवैजात्यं च विभाजकमिति बोध्यम् । द्विविधसंयोगमुदाहरति । आद्य इत्यादिना । ननु संयोगजसंयोगे मानाभावः, कायक्रियाया इव कायपुस्तकसंयोगस्यापि एकार्थसमवायसम्बन्धेन हस्तक्रियाजन्यत्वस्वीकारात् हस्तपुस्तकसंयोगोत्पत्तिकालोत्पन्नकायक्रियायाः कायपुस्तकसंयोगहेतुत्वस्वीकारादिति चेन्न । कायपुस्तकसंयोगकाले हस्तपुस्तकसंयोगरूपोत्तरसंयोगेनहस्तक्रियानाशेन तस्यास्तत्रासमवायिकारणत्वासम्भवात् असमवायिकारणस्य कार्यसहभावेन हेतुतायाः सिद्धान्तसिद्धत्वात् । हस्तपुस्तकसंयोगकाले कायपुस्तकसंयोगस्य उत्पत्तिर्न संभवति कायपुस्तकसंयोगस्य हस्तावच्छेदेनोत्पत्त्यनुपपत्तेः । हस्ते पुस्तकसंयोगस्य हस्तावच्छेदेन उत्पत्त्यनुपपत्तेः पूर्वं हस्ते पुस्तकसंयोगासत्त्वात् अवयविक्रियायाः यावदवयवक्रियाजन्यत्वेन हस्तक्रियया हस्तपुस्तकसंयोगोत्पत्तिकाले हस्तक्रियामात्रेण काये क्रियोत्पत्त्यसंभवाच्च । तस्मात्संयोगजसंयोग आवश्यक एवेति । इदमुपलक्षणम् । कर्मजसंयोगो द्विविधः । अभिघातो नोदनाख्यश्चेति । अभिघातत्वं नोदनत्वं च क्रियाविशेषजन्यतावच्छेदकतया अभिघातपदनोदनपदशक्यतावच्छेदकतया वा सिद्धजातिविशेष इत्यपि बोध्यम् । अस्मद्गुरुचरणास्तु नोदनसंयोगोऽपि द्विविधः, प्रशिथिलो निबिडश्चेति । प्रशिथिलत्वं निबिडत्वं च क्रियाविशेषजन्यतावच्छेदकतया प्रशिथिलपदनिबिडपदशक्यतावच्छेदकतया वा सि-

नी. तथापि संयोगेऽतिव्याप्तिः । तस्य प्रतियोगिविधया नाशं प्रति कारणत्वादिति वाच्यम् । प्रतियोगितासंबन्धानवच्छिन्ननाशनिष्ठजन्यतानिरूपितजनकत्वविवक्षणेना-

रा. कारणतया तद्व्यतिव्याप्तिवारणायासाधारणपदम् । असाधारणत्वं च कार्यत्वानवच्छिन्न-कार्यतानिरूपितकारणताश्रयत्वम् । **संयोगनाशकेति** । यद्यपि प्रतियोगिविधया

नृ द्वो जातिविशेष इति व्याचक्रुः । प्राञ्चस्तु कठिनत्वसुकुमारत्वे पृथिवीसंयोगगतजातिविशे-षरूपे इत्याहुः । तन्न । तथा सति चक्षुर्ग्राह्यत्वापत्तेः । किन्तु तादृशधर्मौ स्पर्शगतजातिविशे-षावेव त्वङ्मात्रग्राह्यत्वादिति वैशेषिकाः । प्राञ्चस्तु कर्मजसंयोगो द्विविधः, एकक्रियाजन्यः उभयक्रियाजन्यश्चेति । आद्य श्येनादिपर्वतसंयोगः अन्त्यो मेषद्वयादिसंयोग इत्याहुः । अपरे तु एकक्रियाजन्योभयक्रियाजन्यसंयोगजभेदात् संयोगस्यैव त्रैविध्यमाहुः । तदुभय-मपि मन्दम् ॥ एकक्रियाजन्यत्वोभयक्रियाजन्यत्वाभ्यां संयोगस्य विभागासंभवात् । असंभवप्रकारश्च अस्मत्कृतमुक्तावलीप्रभायां संयोगग्रन्थे अनुसंधेयः । **अव्याप्य-वृत्तिरिति** । दैशिकाव्याप्यवृत्तिः कालिकाव्याप्यवृत्तिश्चेत्यर्थः । **संयोग इति** । सर्वोऽपि संयोग इत्यर्थः । अव्याप्यवृत्तित्वं निर्वक्ति । **स्वात्यन्ताभावसमानाधि-करणत्वमिति** । येन संबन्धेन येन रूपेण यस्याव्याप्यवृत्तित्वमनुमतं तत्संबन्धाव-च्छिन्नतद्धर्मावच्छिन्नाभावनिष्ठकालिकादिविशेषणतातिरिक्तसंबन्धावच्छिन्नाधेयतानिरू-पिताधिकरणतावन्निरूपिततत्संबन्धावच्छिन्नवृत्तित्वं तेन संबन्धेन तेन रूपेण तस्या-व्याप्यवृत्तित्वमित्यर्थः । तेन घटत्वादेः संयोगसंबन्धेन घटत्वपटत्वोभयत्वेन न स्वात्यन्ताभावसमानाधिकरणत्वेऽपि समवायेन घटत्वात्यन्ताभावस्य कालि-काविशेषणतया दैशिकविशेषणतया चाधिकरणघटे समवायेन घटत्ववत्सत्त्वेऽपि समवायेन घटत्वात्यन्ताभावस्य दैशिकविशेषणतासंबन्धेनाधिकरणपटादौ कालि-कसंबन्धेन घटत्वसत्त्वेऽपि च न क्षतिः । तत्संबन्धावच्छिन्नतद्धर्मावच्छिन्नप्र-तियोगिताकाभावनिष्ठदैशिककालिकविशेषणतातिरिक्तसंबन्धावच्छिन्नाधेयतानिरूपिता-धिकरणतावन्निरूपिततत्संबन्धावच्छिन्नवृत्तितावच्छेदकतत्तद्धर्मवत्त्वं तेन संबन्धेन तेन रूपेणाव्याप्यवृत्तित्वमिति फलितार्थः । तेन नाननुगमः । इदं च दैशिक-कालिकसाधारणाव्याप्यवृत्तित्वसामान्यनिर्वचनम् । इदमुपलक्षणम् । अवच्छिन्नवृत्तिक-त्वमव्याप्यवृत्तित्वसामान्यस्वरूपम् । देशावच्छेद्यवृत्तिकत्वं दैशिकाव्याप्यवृत्तित्वं, काला-वच्छेद्यवृत्तिकत्वं कालिकाव्याप्यवृत्तित्वमित्यपि बोध्यम ॥ **मूले संयोगनाशको गुणो विभाग इति** । अत्र संयोगनाशनिष्ठदैशिकविशेषणतासंबन्धावच्छिन्नकार्यता-निरूपितकारणत्वरूपं ग्राह्यम् । तेन कालिकसंबन्धेन कार्यमात्रं प्रति कालादृष्टादेर्हेतु-त्वेऽपि नातिव्याप्तिः । निरधिकरणकाश्रयनाशजन्यसंयोगनाशोत्पत्त्यप्रसिद्धया तादृशसं-योगनाशं प्रति प्रतियोगिसमवायिदेशस्य तादात्म्यसंबन्धेन हेतुत्वावश्यकत्वात्तत्राति-

**विभागजश्चेति । आद्यो हस्तपुस्तकविभागः । द्वितीयो हस्तपुस्तकवि-**

---

नी. दोष इति केचित् । परे तु संयोगनाशत्वावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणत्वम् इति निष्कर्षः । एतत्तात्पर्यग्राहकं गुणपदमित्याहुः । **विभाग इति ।** अयमव्यव्याप्यवृत्तिरिति बोध्यम् । **आद्येति** । आद्यत्वमिह स्वसमानाधिकरणपतनप्र-

रा. संयोगनाशकत्वं संयोगेऽपीति तत्रातिव्याप्तिः । न च संयोगनाशं प्रतिसमवायेन कारणत्वं विवक्षणीयम् ; प्रतियोगिनश्च नाशं प्रति तादात्म्येनैव कारणत्वान्नातिव्या-

नृ. व्याप्तिवारणाय गुणपदम् । तदपि समवायसंबन्धावच्छिन्नकारणत्वलाभाय । न तु गुणत्वस्यापि लक्षणघटकता गौरवात् प्रयोजनाभावाच्च । नन्वेवं सति कालाद्दृष्टादावपि तादृशकारणत्वविरहेणैवानतिप्रसङ्गे कार्यतायां संबन्धविशेषावच्छिन्नत्वविशेषणमफलमिति चेदिष्टमेवैतत् । एतल्लक्षणघटकसंयोगनाशत्वं न संयोगप्रतियोगिकत्वविशिष्टनाशत्वं ध्वंसप्रागभावयोः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वे मानाभावेन ध्वंसांशे प्रतियोगितया संयोगत्वेन संयोगस्य निवेशासंभवेन तत्तत्संयोगव्यक्तेस्तत्तद्व्यक्तित्वेनैव निवेशनीयतया अननुगमात् नाशत्वस्योत्पत्तिघटितत्वेनाननुगतत्वात् । किन्तु स्वाश्रयप्रतियोगिकत्वकालिकविशेषणत्वोभयसंबन्धेन संयोगत्ववत्त्वमेवानुगतसंयोगनाशत्वम् । एवं च निरुक्तोभयसंबन्धेन संयोगत्वावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणत्वं विभागसामान्यलक्षणमिति फलितम् । परन्तु यादृशविभागोत्पत्तिक्षणे आश्रयस्य नाशः तादृशविभागस्य संयोगनाशजनकत्वासंभवात् तत्राव्याप्तिवारणाय तादृशकारणत्वसमानाधिकरणस्याव्याप्यवृत्तिजातिमत्त्वमेव विवक्षणीयम् । अतो न कश्चिद्दोष इति प्रतिभाति । इदमुपलक्षणम् । क्रियाजन्यतावच्छेदकतया विभागपदशक्यतावच्छेदकतया वा सिद्धविभागत्वजातिमत्त्वं विभागसामान्यलक्षणम् । सर्वोऽपि विभागोऽव्याप्यवृत्तिः । क्वचिदसमवायिकारणनाशनाश्यः क्वचिदाश्रयनाशनाश्यः इत्यपि बोध्यम् । वैशेषिकास्तु विभागजविभागोऽपि द्विविधः कारणमात्रविभागजविभागः कारणाकारणविभागजविभागश्चेति । आद्यः परमाणुक्रियाजन्यपरमाणुद्वयविभागादिक्रमेण द्व्यणुकनाशाव्यवहितोत्तरक्षणोत्पत्तिकपरमाण्वाकाशादिविभागः । द्वितीयस्तु कपालतरुविभागजन्यकुम्भतरुविभाग इत्याहुः । तन्न । कारणमात्रविभागजविभागे प्रमाणाभावात् । तदसिद्धिप्रकारश्च अस्मत्कृतमुक्तावलीप्रभायां पाकग्रन्थेऽनुसंधेयः । यथाश्रुतविभागलक्षणघटकदलद्वयप्रयोजनमाह । **दीपिकायां कालादावित्यादिना ।** न्यूनतापरिहाराय विभागं विभजते । **विभागोऽपीति ।** संयोगसमुच्चायकः अपिशब्दः दृष्टान्तार्थः । यथा संयोगो द्विविधः तथा विभाग इति भावः । विभागद्वयमुदाहरति । **आद्य इत्यादिना ।** अत्र संयोगनिष्ठकर्मजत्वसंयोगजत्वे इव विभाग-

भागात्कायपुस्तकविभागः । परत्वापरत्वयोर्लक्षणमाह । परा इति । परव्यवहारासाधारणकारणं परत्वम् । अपरव्यवहारासाधारणकारणमपरत्वम् इत्यर्थः । ते विभजते । ते द्विविधे इति । दिक्कृतयोरुदाहरणमाह । दूरस्थ इति । कालकृते उदाहरति । ज्येष्ठ इति । गुरुत्वं

---

**नी.** तियोगिकध्वंसासमानकालिकत्वम् । द्वितीयपतनादीनां प्राथमिकपतनध्वंससमानकालि-

**रा.** सिरिति वाच्यम् । तथा सति काले अतिव्याप्तिवारकस्य गुणपदस्य वैयर्थ्यापत्तेः ।

**नृ.** निष्ठकर्मजत्वविभागजत्वे अप्यूह्ये । नातो विभाजकधर्मयोरननुगतत्वप्रसक्तिरिति हृदयम् । ननु संयोगाभावेनैव विभक्तप्रत्ययोपपत्तेः विभागो न गुणान्तरमिति चेन्न । घटपटसंयोगोत्पत्तेः पूर्वमपि घटादौ विभक्तप्रत्ययापत्त्या तत्प्रतीतेः संयोगप्रागभावविषयकत्वासंभवात् । अत एव न तदत्यन्ताभावविषयकत्वं रूपरसयोः अवयवावयविनोश्च विभक्तप्रत्ययापत्तेः । नापि तत्प्रतीतेः संयोगध्वंसविषयकत्वं विभज्य संयुक्तेऽपि तत्प्रतीत्यापत्तेः । संयोगध्वंससत्त्वात् । नापि संयोगान्योन्याभावविषयकत्वं संयोगभिन्नमात्रे तत्प्रतीत्यापत्तेः । तस्मात्संयोगाभावेन विभक्तप्रतीत्युपपत्त्यभावात् विभागस्य गुणान्तरत्वमावश्यकमिति भावः । परापरव्यवहारासाधारणकारणे परत्वापरत्वे इति यथाश्रुतमूलप्रतिपाद्यपरापरव्यवहारोभयनिरूपितासाधारणकारणकत्वरूपलक्षणस्य परत्वादावसंभवग्रस्तत्वादेकैकव्यवहारघटितलक्षणद्वयपरतया तन्मूलं व्याचष्टे । **परव्यवहारेति** । पर इति शब्दनिष्ठवाच्यतासंबन्धावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणतासमानाधिकरणरूपावृत्तिजातिमत्त्वं परत्वलक्षणम् । अनयैव दिशा अपर इति शब्दघटितं जातिघटितं अपरत्वलक्षणमिति फलितम् । तेन यादृशपरत्वापरत्वाश्रये न तादृशव्यवहारस्तादृशपरत्वापरत्वयोर्नाव्याप्तिः । इदमुपलक्षणम् । निरुक्तकारणतावच्छेदकतया परत्वापरत्वपदशक्यतावच्छेदकतया वा सिद्धपरत्वत्वापरत्वत्वजातिमत्त्वं परत्वापरत्वसामान्यलक्षणमित्यपि बोध्यम् । **मूले दिक्कृते कालकृते चेति** । दैशिकपरत्वापरत्वे कालिकपरत्वापरत्वे चेत्यर्थः । अत्र परत्वनिष्ठं दैशिकत्वं च बहुतरमूर्तसंयोगान्तरितत्वज्ञानजन्यत्वम् । तदवच्छेदकतया सिद्धपरत्वत्वव्याप्यजातिविशेषो वा । एवं परत्वनिष्ठकालिकत्वं बहुतरतपनपरिस्पन्दान्तरितत्वज्ञानजन्यत्वम् । तदवच्छेदकतया सिद्धपरत्वत्वव्याप्यजातिविशेषो वा । अनयैव दिशा अपरत्वनिष्ठदैशिकत्वकालिकत्वे अपि निर्वाच्ये इति दैशिकपरत्वापरत्वे उदाहरति । **दूरस्थे इति** । दूरस्थनिष्ठं दैशिकपरत्वमित्यर्थः । दूरस्थत्वप्रकारकज्ञानजन्यं दैशिकपरत्वमिति यावत् । तथा च पाटलीपुत्रात् काशीमपेक्ष्य प्रयागः पर इत्यनुभवात् पाटलीपुत्रावधिककाशीनिरूपितपरत्वं प्रयागे स्वीकार्यम् । तत्र पाटलीपुत्रात् काशीमपे-

लक्षयति। **आद्येति**। द्वितीयादिपतनस्य वेगासमवायिकारणत्वाद्वेगेऽति-
व्याप्तिवारणाय आद्येति। द्रवत्वं लक्षयति। **आद्येति**। स्यन्दनं प्रस्र-
वणम्। तेजःसंयोगजं नैमित्तिकम्। तद्भिन्नं सांसिद्धिकम्। पृथिव्यां
नैमित्तिकमुदाहरति। **घृतादाविति**। तेजसि तदाह। **सुवर्णादा-
विति**। स्नेहं लक्षयति। **चूर्णेति**। कालादावतिव्याप्तिवारणाय गुणपदम्।
रूपादावतिव्याप्तिवारणाय पिण्डीभावेति। शब्दं लक्षयति। **श्रोत्रेति**।

---

**नी.** कत्वान्निरास इति भावः। **तदाहेति**। नैमित्तिकमाहेत्यर्थः। **पिण्डीभावेति**। पिण्डी

**रा.** कालिकसंबन्धेन कार्यं प्रति तादात्म्येनैव कालस्य कारणत्वात्। तथात्वे तदरवरसे

**नृ.** क्ष्य प्रयागनिष्ठदूरस्थत्वं च काशीनिष्ठपाटलीपुत्रावधिकसंयुक्तसंयोगपरम्पराघटकसंयो-
गसमुदायपर्याप्तसंख्याधिकसंख्यापर्याप्त्यधिकरणस्वनिष्ठसंयुक्तसंयोगपरम्पराघटकसं-
योगसमुदायवत्त्वम्। एवं पाटलीपुत्रात् प्रयागमपेक्ष्य काशी अपरा इत्यनुभवात्
पाटलीपुत्रावधिकप्रयागनिरूपितापरत्वं काश्यां स्वीकार्यम्। तत्र पाटलीपुत्रात् प्रया-
गमपेक्ष्य काशी समीपस्थेत्याकारकापेक्षाबुद्ध्यात्मकज्ञानं निमित्तकारणम्। पाटली-
पुत्रात् प्रयागमपेक्ष्य काशीनिष्ठसमीपस्थत्वं च प्रयागनिष्ठपाटलीपुत्रावधिकसंयुक्तसं-
योगपरम्पराघटकसंयोगसमुदायपर्याप्तसङ्ख्यान्यूनसङ्ख्यापर्याप्त्यधिकरणस्वनिष्ठसंयुक्त-
संयोगपरम्पराघटकसंयोगसमुदायकत्वरूपमित्याशयः। कालिकपरत्वापरत्वे उदा-
हरति। **ज्येष्ठ इति**। ज्येष्ठनिष्ठं कालकृतपरत्वमित्यर्थः। ज्येष्ठत्वज्ञानजन्यं कालि-
कपरत्वमिति यावत्। एवं कनिष्ठ इत्यत्रापि। तथा च चैत्रान्मैत्रः पर इत्यनुभवात्
मैत्रे चैत्रावधिकपरत्वं स्वीकार्यम्। तत्र चैत्रान्मैत्रो ज्येष्ठ इत्यपेक्षाबुद्ध्यात्मकं ज्ञानं
निमित्तकारणम्। चैत्रावधिकमैत्रनिष्ठज्येष्ठत्वं च चैत्रोत्पत्तिक्षणप्रभृत्येतत्क्षणपर्यन्तं
जायमानतपनपरिस्पन्दसमुदायापेक्षया अधिकतपनपरिस्पन्दसमुदायवत्त्वं तादृश-
समुदायपर्याप्तसंख्याधिकसंख्यापर्याप्त्यधिकरणस्वोत्पत्तिक्षणप्रभृत्येतत्क्षणपर्यन्तं जा-
यमानतपनपरिस्पन्दसमुदायवत्त्वम्। न तु तादृशसमुदायकत्वे सति चैतन्य-
रूपं तज्जन्यद्रव्यमात्रे चैतन्याभावेन तद्घटितज्येष्ठत्वादिज्ञानरूपकारणाभावात् का-
लिकपरत्वाद्यनुपपत्त्यापत्तेः। **कनिष्ठ इति**। कनिष्ठनिष्ठं कालिकमपरत्वं
इत्यर्थः। कनिष्ठत्वज्ञानजन्यं कालिकमपरत्वमिति यावत्। तथा च मैत्रा-
च्चैत्रः अपरः इत्यनुभवसिद्धमैत्रावधिकचैत्रनिष्ठकालिकापरत्वं प्रति मैत्राच्चैत्रः
कनिष्ठः इत्यपेक्षाबुद्धिः निमित्तकारणं वाच्यम्। मैत्रावधिकचैत्रनिष्ठकनिष्ठत्वं
च मैत्रोत्पत्तिक्षणप्रभृति एतत्क्षणपर्यन्तं जायमानतपनपरिस्पन्दसमुदायापेक्षया
न्यूनतपनपरिस्पन्दसमुदायकत्वं तादृशसमुदायपर्याप्तसंख्यान्यूनसंख्यापर्याप्त्यधिक-

शब्दत्वेऽतिव्याप्तिवारणाय गुणपदम् । रूपादावतिव्याप्तिवारणाय श्रोत्रेति। शब्दस्त्रिविधः संयोगजः, विभागजः , शब्दजश्चेति। तत्र आद्यो भेरीदण्डसंयोगजन्यः । द्वितीयो वंशे पाट्यमाने दलद्वयविभागजन्यश्चटचट-

---

नी. भावः संयोगविशेषः । **भेरीदण्डसंयोगज इति** । आद्येऽसमवायिकारणं

रा. नैव कालादावित्यादिपदमुक्तम् । तेन च क्रियापरिग्रहः । क्रियाया अपि संयो-

नृ. रणस्वोत्पत्तिक्षणप्रभृत्येतत्क्षणपर्यन्तं जायमानतपनपरिस्पन्दसमुदायकत्वरूपमेव । न तु चैतन्यघटितमपि उक्तदोषापत्तेरिति हृदयम् । गुरुत्वलक्षणमाह । **आद्येति** । आद्यपदप्रयोजनमाह । **दीपिकायां द्वितीयादीति** । आदिना तृतीयादिपतनपरिग्रहः । **वेगे अतिव्याप्तिवारणायाद्येतीति** । तथा च आद्यपतने गुरुत्वनिष्ठासमवायिकारणतानिरूपितपतननिष्ठकार्यतावच्छेदकतया सिद्धवैजात्यमादाय तदवच्छिन्ननिरूपितकारणत्वमेव गुरुत्वसामान्यलक्षणम् । न त्वसमवायिकारणत्वस्यापि लक्षणे प्रवेशः तादृशवजात्यावच्छिन्ननिरूपितकारणत्वस्यान्यत्रावर्तमानत्वेऽतिव्याप्त्यप्रसक्तेः। परं तु एतादृशवैजात्यावच्छिन्ननिरूपितकारणत्वस्य लक्षणत्वलाभाय लक्षणे असमवायिकारणत्वनिवेश इति हृदयम् । प्राञ्चस्तु—आद्यपतनासमवायिकारणत्वेन क्लृप्तगुरुत्वस्यैव द्वितीयादिपतनासमवायिकारणत्वसंभवात् तत्र वेगस्यासमवायिकारणत्वे मानाभावेनातिव्याप्त्यप्रसक्त्या लक्षणे आद्यपदमनुपादेयमित्याहुः । तन्न । वृक्षवृत्तिविभागजनकपतनवत्सु फलादिष्वधोदेशवृत्त्यभिघातसंयोगजनकपतनोत्पत्तेः तादृशविभागजनकपतनवत्सु कूलादिषु तादृशसंयोगजनकपतनानुत्पत्तेश्च अन्वयव्यतिरेकाभ्यां तादृशसंयोगजनकपतनक्रियां प्रति वेगस्य हेतुत्वावश्यकत्वे लाघवात् तस्यैव असमवायिकारणत्वमङ्गीकृत्य द्वितीयादिपतनेषु गुरुत्वस्यान्यथासिद्धत्वस्वीकारस्यैवोचितत्वात् । तस्मादाद्यपदं सफलमेवेति । ननु तथापि गुरुत्वविशिष्टद्रव्यस्य पतनं कदापि न जातं तत्समवेतगुरुत्वे लक्षणमिदमव्याप्तमिति चेन्न । तादृशासमवायिकारणत्वसमानाधिकरणरूपावृत्तिजातिमत्त्वस्य विवक्षितत्वात् । इदमुपलक्षणम् । गुरुत्वमतीन्द्रियं पतनरूपकार्यानुमेयं नित्यवृत्ति नित्यं अनित्यवृत्त्यनित्यम् । इदं च कारणगुणपूर्वकं आश्रयनाशनाश्यमित्यपि बोध्यम् । द्रवत्वं लक्षयति । **आद्यस्यन्दन इति** । प्रस्रवणेत्यर्थः । तथा च द्रवत्ववतामेव प्रस्रवणस्योपलभ्यमानतया समवायिकारणप्रत्यासन्नतया च तस्यासमवायिकारणत्वावश्यकत्वादिति भावः । ननु यादृशे द्रवद्रव्ये स्यन्दनं कदापि नोत्पन्नं तत्समवेतद्रवत्वे लक्षणमव्याप्तमिति चेन्न । तादृशकारणत्वसमानाधिकरणरूपावृत्तिजातिमत्त्वस्य विवक्षितत्वात् । इदमुपलक्षणम् । तादृशकारणतावच्छेदकतया द्रवत्वपदशक्यतावच्छेदकतया वा सिद्धद्रवत्वत्वजातिमत्त्वं लक्षणमित्यपि बोध्यम्। **पृथिव्यप्तेजोवृत्तीति** । द्रवत्वमित्यनुवर्तते। द्रवत्वत्वावच्छिन्नं

नी. भेर्याकाशसंयोगः, निमित्तकारणं भेरीदण्डसंयोगः । द्वितीये वंशदलाकाशविभागो-
रा. गनाशकत्वात् । न च विभागेन अन्यकर्मणोऽन्यथासिद्धिरिति वाच्यम् । न हि
नृ. तादृशत्रिकवृत्तीत्यर्थः । द्रवत्वत्वं पृथिव्यादित्रिकवृत्तितावच्छेदकमिति यावत् । **तद्द्वि-
विधमिति** । सांसिद्धिकत्वनैमित्तिकत्वाभिन्नप्रकारद्वयान्यतरविशिष्टं द्रवत्वमित्यर्थः । अत्र सांसिद्धिकत्वं प्रत्यक्षासिद्धः अनुगतप्रतीतिसिद्धः सांसिद्धिकपदशक्यतावच्छेदकतया वा सिद्धो जातिविशेषः जलसमवेतद्रवत्वमात्रवृत्तिः । एवं नैमित्तिकत्वं प्रत्यक्षसिद्धः तेजस्संयोगजन्यतावच्छेदकतया नैमित्तिकपदशक्यतावच्छेदकतया वा सिद्धोऽयं जातिविशेषः पृथिवीतेजस्समवेतद्रवत्वमात्रवृत्तिरिति ध्येयम् । प्राञ्चस्तु—सांसिद्धिकत्वं तेजस्संयोगाजन्यत्वम् । नैमित्तिकत्वं तेजस्संयोगजन्यत्वमित्याहुः । तच्चिन्त्यम् । द्विविधम् द्रवत्वमुदाहरति । **संसिद्धिकमिति । जल इति** । जल एवेत्यर्थः । इदमुपलक्षणम् । सांसिद्धिकं नित्यगतं नित्यं, अनित्यगतमनित्यम् । तच्च कारणगुणपूर्वकं आश्रयनाशनाश्यमित्यपि बोध्यम् । **नैमित्तिकं पृथिवीतेजसोरिति** । नैमित्तिकत्वजात्यवच्छिन्नं पृथिवीतेजोवृत्तीत्यर्थः; नैमित्तिकत्वं पृथिवीतेजोवृत्तितावच्छेदकमिति यावत् । अत्र सांसिद्धिकद्रवत्वं यथा यावज्जलवृत्ति तथा नैमित्तिकद्रवत्वं न यावत्पृथिवीतेजोवृत्ति, पटादौ वह्न्यादौ तदभावात् । अतः पृथिवीतेजोविशेषवृत्तित्वमाह । **पृथिव्यां घृतादाविति** । घृतादिरूपपृथिव्यामित्यर्थः । आदिना जत्वादिपरिग्रहः । सप्तम्यर्थः वृत्तित्वम् । तस्य द्रवत्वेऽन्वयः । **अग्निसंयोगजं द्रवत्वमिति** । नैमित्तिकद्रवत्वमित्यर्थः । **तेजसि सुवर्णादाविति** । सुवर्णादिरूपतेजसीत्यर्थः । आदिना रजतपरिग्रहः । सप्तम्यर्थो वृत्तित्वम् । तस्याग्निसंयोगजं द्रवत्वमित्यनुषङ्गेणान्वयः । इदमुपलक्षणम् । सर्वं नैमित्तिकद्रवत्वमनित्यं, तेजस्संयोगासमवायिकारणकं, तेजस्संयोगनाशनाश्यं, क्वचिदाश्रयनाशनाश्यं चेत्यपि बोध्यम् । स्नेहलक्षणमाह । **चूर्णादीति** । आदिना सक्त्वादिपरिग्रहः । तस्य पिण्डीभावः पिण्डाकारेण परिणामः । अवयवानां विलक्षणदृढसंयोग इति यावत् । तत्र कारणमित्यर्थः । ननु जलसंबन्धादेव निरुक्तपिण्डीभावोत्पत्तेः तदभावे तदभाव इति अन्वयव्यतिरेकाभ्यां जलसंयोगस्य संयोगेन जलस्य वा हेतुत्वमस्तु, किं स्नेहेनेति चेन्न । जलसंयोगत्वस्य गुरुधर्मत्वेन कारणतावच्छेदकत्वानङ्गीकारात् । जलप्रतियोगिकत्वविशिष्टसंयोगत्वस्य संयोगत्वविशिष्टजलप्रतियोगिकत्वस्य वा कारणतावच्छेदकत्वमित्यत्र विनिगमनाविरहेण कार्यकारणभावद्वयकल्पनापत्तेश्च । न च जलप्रतियोगिकसंयोगमात्रे वैजात्यं परिकल्प्य तेन रूपेण हेतुत्वस्वीकारान्नोक्तदोष इति वाच्यम् । नोदनत्वादिना साङ्कर्येण तस्य जातिरूपत्वासंभवात् । एवं जलत्वेन जन्यजलमात्रवृत्तिवैजात्येन वा जलस्य हेतुत्वमित्यत्र विनिगमनाविरहात् कार्यकारणभावद्वयापत्त्या संयोगेन जलस्यापि हेतुत्वा-

नी. ऽसमवायिकारणम् , दलद्वयविभागो निमित्तकारणम् । तृतीये तु पूर्वपूर्वशब्द: असमवा-

रा. व्यापारेण व्यापारिणोऽन्यथासिद्धिरिति नियमात् । अन्यथा उत्तरसंयोगं प्रति तस्या-

नृ. संभवात् । तस्मात् स्वसमवायिसंयोगसंबन्धेन स्नेहस्य हेतुत्वमावश्यकम् । यद्यपि सांसिद्धिकत्वजात्यवच्छिन्नस्य निरुक्तसंबन्धेन निरुक्तहेतुत्वं संभवतीति स्नेहाङ्गीकारो व्यर्थ: ; तथापि सांसिद्धकत्वेन शीतत्वेन वा हेतुत्वमित्यत्र विनिगमनाविरहात् कॢप्तानां विनिगमनाविरहेऽतिरिक्तस्नेहस्सिद्ध्यतीत्याशयेन स्नेहस्य हेतुत्वम-भिहितम् । एवं च निरुक्तपिण्डीभावनिष्ठकार्यतानिरूपितस्वसमवायिसंयोगसं-बन्धावच्छिन्नकारणत्वं स्नेहलक्षणमिति फलितम् । निरुक्तसंबन्धावच्छिन्नकारण-त्वस्य लक्षणत्वलाभायैव गुणपदमिति ध्येयम् । न च यादृशजलसंयोगात् कदापि पिण्डीभावो न जात: तत्समवेतस्नेहेऽव्याप्तमिति वाच्यम् । तादृ-शकारणत्वसमानाधिकरणरूपावृत्तिजातिमत्त्वस्य विवक्षितत्वात् । इदमुपलक्षणम् । निरुक्तकारणतावच्छेदकतया स्नेहपदशक्यतावच्छेदकतया वा सिद्धस्नेहत्वजातिमत्त्वं स्नेहलक्षणमित्यपि बोध्यम् । अस्मद्गुरुवरणास्तु—चूर्णादिपिण्डीभावहेतुरिति स्नेहस्य प्रयोजनप्रदर्शनपरं न तु लक्षणम् । तुल्ययुक्त्या सांसिद्धिकत्वजात्यवच्छिन्नस्यापि कारणत्वेनातिव्याप्त्यापत्तेः । किं तु जातिविशेषवत्त्वमेव लक्षणमिति व्याचक्रुः । अपरे तु— चूर्णादिग्रन्थ: स्नेहप्रमाणपरः, जातिविशेषो लक्षणमित्याहु: । नव्यास्तु लघुव्याप्यधर्मपुरस्कारेण कारणत्वसंभवे व्यापकधर्मपुरस्कारेण हेतुताया अप्रामाणिकत्वात् प्रकृते जलत्वस्य व्यापकधर्मत्वेन तेन रूपेण हेतुत्वासंभवात् जन्यजलमात्रवृत्तिवैजात्येनैव हेतुत्वं संभवतीति स्नेहोऽप्रामाणिक एवेत्याहु: । वस्तु-तस्तु जलस्य जलत्वेन जन्यजलमात्रवृत्तिवैजात्येन वा न हेतुत्वं, जलपरमाणुद्व्यणु-कसंयुक्तेऽपि चूर्णादौ पिण्डीभावानुत्पत्तेः । नापि महज्जलत्वेन, गुरुधर्मत्वात् विशेषण-विशेष्यभावे विनिगमनाविरहेण गुरुरूपेण कार्यकारणभावद्वयापत्तेश्च । नापि महज्ज-लमात्रवृत्तिवैजात्येन, तादृशजातौ मानाभावात्, कस्याप्यननुमतत्वाच्च । अन्यथा किञ्चित्कार्यं निमित्तीकृत्य त्रसरेणुं विहाय चतुरणुकादिसर्वजलेषु चतुरणुकं विहाय पञ्चाणुकादिसर्वजलेषु वैजात्यस्वीकारापत्त्या अपसिद्धान्तापत्तेः । नापि महज्जलसंयो-गस्य वैजात्यपुरस्कारेण हेतुत्वं, तादृशजातौ मानाभावात् , महज्जलसंयोगकालीन-महद्वायुसंयोगस्य वैजात्येन हेतुत्वमादाय कार्यकारणभावद्वयापत्तेश्च । किन्तु स्वसम-वायिमहज्जलसंयोगरूपपरम्परासंबन्धेन वैजात्यावच्छिन्नस्य हेतुत्वं वाच्यम् । तत्र गुणत्वसत्त्वयो: व्यापकधर्मत्वात् विनिगमनाविरहेण कार्यकारणभावद्वयापत्तेश्च न गुणत्वादिना हेतुत्वम् । शीतत्वसांसिद्धिकत्वयोः व्याप्यधर्मत्वेऽपि विनिगमनाविरह-प्रयुक्तकार्यकारणभावद्वयापत्तितादवस्थ्यादेव शीतत्वादिनापि न हेतुत्वसंभवः । तस्मात् कॢप्तानां हेतुत्वासंभवात् चूर्णादिपिण्डीभावहेतुतया जले लघुधर्मावच्छिन्न-

शब्दः। भेर्यादिदेशमारभ्य श्रोत्रदेशपर्यन्तं द्वितीयादिशब्दाः शब्दजाः। बुद्धेर्लक्षणमाह। सर्वव्यवहारेति। कालादावतिव्याप्तिवारणाय गुण इति। रूपादावतिव्याप्तिवारणाय सर्वव्यवहार इति। जानामीत्यनुव्यव-

---

नी. यिकारणम्। पवनादि निमित्तकारणमिति विवेकः। जानामीतीति। ज्ञानत्वमात्रं

रा. न्यथासिद्धत्वापत्त्या संयोगविभागयोरपेक्षं कारणं कर्मेति सूत्रविरोधापत्तिरित्यवधेयम्।

नृ. वस्त्वन्तरसिद्धौ स एव स्नेह इत्युच्यते। अत एव स्नेहोऽम्भस्येवेति भाष्यमपि सङ्गच्छत इति प्राचामाशय इति प्रतिभाति। जलमात्रवृत्तिरिति। जलभिन्ने स्नेहव्यवस्थापकप्रमाणाभावादिति भावः। ननु पृथिव्यां स्नेहाङ्गीकारः आवश्यकः, अन्यथा तैलसंयुक्तचूर्णादौ अनुभूयमानपिण्डीभावानुपपत्तिरिति चेन्न। तैलान्तर्वृत्तिजलसमवेतस्नेहादेव पिण्डीभावोपपत्तेः। न च तैले जलसत्त्वे ततो दहनानुपपत्तिः, जलस्य दहनप्रतिकूलत्वादिति वाच्यम्। अन्वयव्यतिरेकाभ्यां तैलानन्तर्वृत्तिजलस्यैव तत्प्रतिकूलत्वाङ्गीकारात्। प्राञ्चस्तु तैलान्तर्वृत्तिजलसमवेतस्नेहस्य प्रकृष्टत्वस्वीकारेण प्रकृष्टस्नेहवज्जलस्य दहनानुकूलत्वमेवाप्रकृष्टस्नेहवज्जलस्यैवानुभवबलात्प्रतिबन्धकत्वमङ्गीक्रियत इत्याहुः। जलमात्रवृत्तिरित्युपलक्षणम्। स्नेहो नित्यवृत्तिः नित्यः। अनित्यवृत्तिरनित्यः। अनित्यः कारणगुणपूर्वकः आश्रयनाशनाश्यश्चेत्यपि बोध्यम्। यथाश्रुतस्नेहलक्षणघटकदलद्वयप्रयोजनमाह। दीपिकायां कालादावित्यादिना। एवमुत्तरत्रापि। मूले शब्दलक्षणमाह। श्रोत्रग्राह्य इति। श्रोत्रकरणकज्ञाननिरूपितलौकिकविषयतावानित्यर्थः। अत्र ज्ञानस्य श्रोत्रेन्द्रियकरणकज्ञानत्वेन न प्रवेशः गौरवात् प्रयोजनाभावाच्च। किन्तु श्रावणत्वेनेति बोध्यम्। श्रावणे उपनीतरूपादेर्विषयतया तत्रातिव्याप्तिवारणाय विषयतायां लौकिकत्वनिवेशः। न च भेर्याद्यवच्छेदेन जायमानशब्दस्य श्रोत्रदेशावच्छेदेनानुत्पत्त्या निरुक्तश्रोत्रग्राह्यत्वाभावात्तत्राव्याप्तिरिति वाच्यम। श्रावणनिरूपितलौकिकविषयत्वसमानाधिकरणरूपावृत्तिजातिमत्त्वस्य विवक्षितत्वात्। इदमुपलक्षणम्। शब्दपदशक्यतावच्छेदकतया सिद्धशब्दत्वजातिमत्त्वं शब्दलक्षणमित्यपि बोध्यम्। तस्याश्रयमाह। आकाशमात्रवृत्तिरिति। वीथ्यां कोलाहलः वने कोलाहलः इत्यादिप्रतीतेः अवच्छेदकतासंबन्धेन वीथीवनादिविषयकत्वेन उपपत्तेरित्याशयः। शब्दं विभजते। स द्विविध इति। ध्वनित्ववर्णत्वरूपप्रकारद्वयान्यतरविशिष्ट इत्यर्थः। अत्र ध्वनित्वं ध्वनिपदशक्यतावच्छेदकतया सिद्धो जातिविशेषः। वर्णत्वं च ताल्वोष्ठपुटसंयोगजन्यतावच्छेदकतया सिद्धो जातिविशेष इत्यपि बोध्यम्। ध्वनिमुदाहरति। ध्वन्यात्मक इति। भेर्यादाविति। आदिना मृदङ्गादिपरिग्रहः। भेर्याद्यवच्छेदेन जायमानशब्द इत्यर्थः।

**सायगम्यं ज्ञानमेव लक्षणमिति भावः। बुद्धिं विभजते। सेति। स्मृतेर्लक्षणमाह। संस्कारेति। भावनाख्यः संस्कारः। संस्कारध्वंसेऽतिव्याप्तिवारणाय ज्ञानमिति। घटादिप्रत्यक्षेऽतिव्याप्तिवारणाय संस्कारजन्य-**

---

नी. लक्षणम्। जानामीत्यनुव्यवसायगम्यत्वं तु ज्ञानत्वस्य प्रमाणसिद्धत्वसूचनाय। तथा

रा. **संस्कारजन्येति**। संस्कारनिष्ठासाधारणकारणत्वम्। तेन कालत्वेन संस्कारजन्ये

नृ. ताल्वोष्ठपुटसंयोगाजन्यः शब्दः ध्वनिस्वरूप इति यावत्। वर्णमुदाहरति। **वर्णात्मक इति। संस्कृतभाषादिरूप इति**। आदिना अपभ्रंशभाषापरिग्रहः। ताल्वोष्ठपुटसंयोगजन्यशब्दः वर्णस्वरूप इति यावत्। न च ताल्वाद्यवच्छेद्यशब्दो वर्णस्वरूप इति कुतो नोक्त इति वाच्यम्। ध्वनिविशेषस्यापि ताल्वाद्यवच्छेद्यत्वात्। मूलकारस्य न्यूनतापरिहाराय ध्वनेस्त्रैविध्यमाह। **दीपिकायां शब्दस्त्रिविध इति**। ध्वन्यात्मकशब्दस्त्रिविध इत्यर्थः। यथाश्रुते शब्दसामान्यान्तर्गतवर्णस्य विभागजन्यत्वाभावादसाङ्गत्यापत्तेः। अत एव त्रिविधानां ध्वन्यात्मकशब्दानामेवाग्रेतनसमुदाहरणं साधु सङ्गच्छते। संयोगजत्वं न विभाजकं स्वरूपसंबन्धविशेषरूपजन्यत्वस्य शब्दव्यक्तिभेदेन भिन्नतया अनुगमकरूपत्वाभावात्। किन्तु संयोगनिष्ठासमवायिकारणतानिरूपितध्वनिनिष्ठकार्यतावच्छेदकतया सिद्धो ध्वनित्वव्याप्यजातिविशेषः। एवं विभागजत्वं विभागनिष्ठासमवायिकारणतानिरूपितध्वनिनिष्ठकार्यतावच्छेदकतया सिद्धस्तादृशजातिविशेषः। एवं शब्दजत्वमपि ध्वनिनिष्ठासमवायिकारणतानिरूपितध्वनिनिष्ठकार्यतावच्छेदकतया सिद्धस्तादृशजातिविशेष इति हृदयम्। तत्र त्रिविधं ध्वनिं क्रमेण उदाहरति। **आद्य इति**। संयोगजध्वनिरित्यर्थः। **भेरीदण्डसंयोगजन्य इति**। तादृशसंयोगनिमित्तकारणक इत्यर्थः। यस्स इति शेषः। तस्याद्य इति पूर्वेणान्वयः। तस्य भेर्याकाशसंयोगासमवायिकारणकत्वादिति भावः। **द्वितीय इति**। विभागजध्वनिरित्यर्थः। **वंशे पाट्यमान इति**। उत्पाट्यमाने सतीत्यर्थः। इदं च दळक्रियाजनकसामग्रीसंपत्त्यर्थम्। वंशोत्पाटनस्य वंशदळक्रियाहेतुत्वादिति भावः। **दळद्वयविभागजन्य इति**। वंशक्रियाजन्यवंशदळद्वयविभागनिमित्तकारणक इत्यर्थः। यस्स इति शेषः। तस्य द्वितीय इति पूर्वेणान्वयः। तस्य दळद्वयाकाशविभागासमवायिकारणकत्वादिति भावः। चटचट इति ध्वनिविशेषस्यानुकरणम्। **भेर्यादिदेशमारभ्येति**। भेर्यादिदेशावच्छेदेन जायमानध्वनिमारभ्येत्यर्थः। आदिना मृदङ्गादिपरिग्रहः। आद्यध्वनिं विहायेति यावत्। भेर्याद्यवच्छेदेन जायमानध्वनेराद्यत्वादित्याशयः। **श्रोत्रदेशपर्यन्तमिति**। श्रोत्रदेशावच्छेदेन जायमानध्वनिपर्यन्तमित्यर्थः। अन्त्यध्वनिपर्यन्तमिति यावत्। **द्वितीयादिशब्दा इति**। द्वितीयध्वनिप्रभृतिचरमध्वनिपर्यन्ताः ध्वन्यात्मकशब्दा इत्यर्थः। ये ते इति शेषः। **शब्दजा इति**। ध्वन्यात्म-

मिति । प्रत्यभिज्ञायामतिव्याप्तिवारणाय मात्रपदम् । अनुभवं लक्षयति । तद्भिन्नमिति । स्मृतिभिन्नं ज्ञानमनुभव इत्यर्थः । अनुभवं विभजते । स द्विविध इति । यथार्थानुभवस्य लक्षणमाह । तद्वतीति । ननु घटे घटत्वम् इति प्रमायामव्याप्तिः, घटत्वे घटाभावादिति चेन्न , यत्र यत्सं-

---

नी. हि 'घटं जानामि' इत्याद्यनुगतानुव्यवसायस्यानुगतधर्ममन्तरानुपपन्नत्वेन तस्य स्वीकर्तव्यत्वेन लाघवाज्जातित्वसिद्धिः। इत्थं च मूले सर्वव्यवहारहेतुः इति बुद्धेः स्वरूपकथनमिति भावः । संस्कारस्य त्रिविधत्वादाह । **भावनाख्य इति** । **प्रत्यभिज्ञायामतिव्याप्तेरिति** । सोऽयं देवदत्तः इति प्रत्यभिज्ञायां तद्देशकालवृत्तित्वरूपतत्तासंस्कारजन्यत्वस्य सत्त्वेन तत्रातिव्याप्तिरिति भावः । **मात्रेति** । यद्यपि

रा. चाक्षुषादौ नातिव्याप्तिः । **घटाभावादिति** । संयोगादिवृत्तिनियामक-

नृ. कशब्दासमवायिकारणका इत्यर्थः। इदमुपलक्षणम् । वर्णः द्विविधः—संयोगजः वर्णजश्च। आद्यः ताल्वोष्ठपुटसंयोगनिमित्तकारणकः। तस्य ताल्वाकाशसंयोगासमवायिकारणकत्वात् । द्वितीयवर्णप्रभृति अन्त्यवर्णपर्यन्तं सर्वे वर्णाः वर्णासमवायिकारणका इत्यपि बोध्यम् । अत्र ध्वन्यात्मको वर्णात्मकस्सर्वोऽप्यनित्यः । अव्याप्यवृत्तिः अन्त्यभिन्नः कार्यशब्दनाश्यः । अन्त्यशब्दः उपान्त्यशब्दनाशनाश्यः । शब्दोत्पत्तिप्रकारं स्वयमेव वक्ष्यतीति ध्येयम् । बुद्धिलक्षणमाह । **मूले सर्वव्यवहारहेतुरिति** । व्यवहारसामान्यहेतुरित्यर्थः । वाच्यतासंबन्धेन स्वानुकूलकृतिमत्त्वसंबन्धेन वा व्यवहारं प्रति विशेष्यतासंबन्धेन समवायसंबन्धेन वा ज्ञानस्य हेतुत्वात् लक्षणसङ्गतिरिति भावः। न च यादृशज्ञानस्य शत्त्या व्यवहारो नोत्पन्नः तत्राव्याप्तिरिति वाच्यम् । वाच्यतादिसंबन्धावच्छिन्नव्यवहारनिष्ठकार्यतानिरूपितविशेष्यतादिसंबन्धावच्छिन्नज्ञाननिष्ठकारणतासमानाधिकरणरूपावृत्तिजातिमत्त्वस्य विवक्षितत्वात् नोक्तदोष इति । इतोऽपि लघुलक्षणमाह । **ज्ञानमिति** । निरुक्तकारणतावच्छेदकतया ज्ञानपदशक्यतावच्छेदकतया वा सिद्धज्ञानत्वजातिमत्त्वं बुद्धिलक्षणमित्यर्थः । उक्तार्थ एव मूलकाराशयः । अन्यथा पर्यायपदवैयर्थ्यापत्तेः । दीपिकाकारो मूलस्थज्ञानपदस्य बुद्धिलक्षणपरत्वमाह । **जानामीत्यादिना** । घटमहं जानामीत्यनुव्यवसायगम्यमित्यर्थः । विषयविनिर्मोकेण केवलज्ञानव्यवसायस्यालीकतया यथाश्रुतासंगतेः । अत्र निर्विकल्पकस्य भगवद्ज्ञानस्य वा तादृशानुव्यवसायाविषयतया निरुक्तानुव्यवसायसिद्धज्ञानत्वजातेस्सकलज्ञानसाधारण्यं दुर्घटमिति केषाञ्चिद्दूषणमपाकर्तुं प्रकारान्तरेण ज्ञानत्वजातिसाधनं कृतमिति ध्येयम् । मूले बुद्धिं विभजते । **सा द्विविधेति** । स्मृतिलक्षणमाह । **संस्कारजन्यं ज्ञानमिति** । संस्कारसंबन्धावच्छिन्नकारणतानिरूपितकार्यत्वमित्यर्थः । स्मृतिमात्रे संस्कारसंबन्धेनानुभव-

नी. संस्कारमात्रजन्यत्वं संस्कारेतराजन्यत्वे सति संस्कारजन्यत्वम् । तच्च स्मृतावसंभावि । तत्र संस्कारेतरात्मादिजन्यत्वस्य सत्त्वात् । तथापि चक्षुराद्यजन्यत्वे सति संस्कारजन्यत्वे तात्पर्यमवसेयम् । मूले **तद्वति तत्प्रकारकानुभव इति** । सप्तम्यर्थौ विशेष्यत्व-

रा. संबन्धेन घटाभावादित्यर्थः । आधेयतायाश्च वृत्त्यनियामकत्वादिति भावः ।

नृ. स्य हेतुत्वाल्लक्षणसमन्वयः । प्रत्यभिज्ञायां संस्कारस्यैव कारणत्वं न तादृशानुभवस्य तथा सति इन्द्रियवदनुभवस्यापि प्रत्यक्षप्रमाणत्वापत्तेः । अतः प्रत्यभिज्ञायां नातिव्याप्तिः । मूलस्थज्ञानपदमपि एतादृशकारणत्वघटितस्य लक्षणत्वलाभाय । न तु ज्ञानत्वस्यापि लक्षणघटकता व्यर्थत्वात्, संस्कारध्वंसे अतिव्याप्त्यप्रसक्तेश्च । इदमुपलक्षणम् । निरुक्तकार्यतावच्छेदकतया स्मृतिपदशक्यतावच्छेदकतया वा सिद्धस्मृतित्वजातिमत्त्वं स्मृतिलक्षणमित्यपि बोध्यम् । अनुभवलक्षणमाह । **तद्भिन्नमिति** । स्मृतिभिन्नमित्यर्थः । इदञ्च स्मृतावतिव्याप्तिवारणाय । घटादावतिव्याप्तिवारणाय विशेष्यभागः । इदमुपलक्षणम् । संस्कारत्वावच्छिन्ननिरूपितकारणत्वम्, तादृशकारणतावच्छेदकतया अनुभवपदशक्यतावच्छेदकतया वा सिद्धानुभवत्वजातिमत्त्वं वा अनुभवलक्षणमित्यपि बोध्यम् । अनुभवं विभजते । **स द्विविध इति** । अनुभवः प्रकारद्वयान्यतरविशिष्ट इत्यर्थः । **यथार्थोऽयथार्थश्चेति** । अत्र सकलप्रमानिष्ठ यथार्थत्वं भगवद्ज्ञानवृत्तिविषयतावत्त्वे सत्यनुभवत्वं, ज्ञानभेदेन विषयिताभेदानभ्युपगमात् । सकलभ्रमनिष्ठायथार्थत्वञ्च भगवद्ज्ञानावृत्तिविषयितावत्त्वम् । ताभ्यामेवानुभवसामान्यस्य द्वैविध्यं वक्ष्यमाणन्तु तत्तद्धर्मप्रकारकानुभवस्य द्वैविध्यपरमिति ध्येयम् । प्रमाविशेषलक्षणमाह । **तद्वतीति** । प्रकारतावच्छेदकसंबन्धेन तत्संबन्धवतीत्यर्थः । तेन शुक्त्यादेरपि कालिकसंबन्धेन रजतत्ववत्त्वेऽपि शुक्त्यादिविशेष्यकरजतत्वभ्रमे नातिव्याप्तिः । न वा तादात्म्यस्य आधेयत्वानियामकतया पुरोवृत्तिविशेष्यकतादात्म्येन रजतादिप्रमायां अव्याप्तिः । सप्तम्यर्थौ विशेष्यतानिरूपकत्वं, तस्यानुभवेऽन्वयः । **तत्प्रकारकमिति** । तत्संबन्धावच्छिन्नतन्निष्ठप्रकारताकमित्यर्थः । न चेदं लक्षणम् । गुञ्जासमुदाये वह्नित्वप्रकारके, वह्नौ गुञ्जासमुदायत्वप्रकारके च अयं वह्निः, अयं गुञ्जासमुदायत्वप्रकारक इति समूहालम्बनात्मविपरीतभ्रमेऽतिव्याप्तिः; तस्य वह्न्यादिविशेष्यकत्वात् वह्नित्वादिप्रकारकत्वाच्चेति वाच्यम् । तेन संबन्धेन तत्संबन्धिनिष्ठविशेष्यतानिरूपिततत्संबन्धावच्छिन्नतन्निष्ठप्रकारत्वस्य विवक्षितत्वात् । प्रकृते वह्नित्वनिष्ठप्रकारतायाः वह्निनिष्ठविशेष्यतानिरूपितत्वाभावात्, गुञ्जासमुदायत्वनिष्ठप्रकारतायाः गुञ्जासमुदायनिष्ठविशेष्यतानिरूपितत्वाभावाच्च नोक्तातिव्याप्तिः । ननु घटपटोभयं घट इति भ्रमेऽतिव्याप्तिः । तस्य लक्षणाक्रान्तत्वात् । न च तेन संबन्धेन तत्संबन्धिनिष्ठविशेष्यतायां व्यासज्यवृत्तिधर्मानवच्छिन्नत्वं निरुक्तसंबन्धिमात्रनिष्ठत्वं वा निवेशनीयम् । एवञ्च निरुक्तज्ञानीयविशेष्यतायाः उभयत्वावच्छिन्नत्वेन व्यासज्य

बन्धोऽस्ति तत्र तत्संबन्धानुभवः इत्यर्थाद्धटत्वे घटसंबन्धोऽस्तीति नाव्याप्तिः। **सैवेति**। यथार्थानुभव एव शास्त्रे प्रमेत्युच्यत इत्यर्थः। अयथार्थानुभवं लक्षयति। **तदभाववतीति**। नन्विदं संयोगीति प्रमायामतिव्याप्तिरिति चेन्न। यदवच्छेदेन यत्संबन्धाभावस्तदवच्छेदेन तत्संबन्धज्ञानस्य विवक्षितत्वात्। संयोगाभावावच्छेदेन संयोगज्ञानस्य भ्रमत्वात्संयोगावच्छेदेन संयोगसंबन्धस्य सत्त्वान्नातिव्याप्तिः। यथार्थानुभवं विभजते। **यथार्थेति**। प्रसङ्गात्प्रमाकरणं विभजते। **तत्करणमपीति**। प्रमाकरणमित्यर्थः। प्रमाकरणं प्रमाणमिति प्रमाणसामान्यलक्षणम्। करणलक्षणमाह। **असाधारणेति**। दिक्कालादावतिव्याप्तिवारणाय असाधारणेति। कारणलक्षणमाह। **कार्येति**। पूर्ववृत्ति कारणमित्युक्ते रासभादावतिव्याप्तिः स्यादतो नियतेति। तावन्मात्रे कृते कार्येऽतिव्याप्तिरतः पूर्ववृत्तीति। ननु तन्तुरूपमपि पटं प्रति कारणं स्यादिति चेन्न, अनन्यथासिद्धत्वे सतीति विशेषणात्। अनन्यथासिद्धत्वमन्यथासिद्धिरहितत्वं। अन्यथासिद्धिः त्रिविधा—येन सहैव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तं प्रति तेन तदन्यथासिद्धम्। यथा तन्तुना

---

नी. माश्रयतासंबन्धेनानुभवान्वयी। तथा च तद्वद्विशेष्यकतत्प्रकारकानुभवत्वं यथार्थानुभवस्य लक्षणम्। तत्पदार्थः प्रकारः, तद्वत्त्वं प्रकारतावच्छेदकसंबन्धेन ग्राह्यम्। तेन कालिकसंबन्धेन शुक्त्यादौ रजतत्वसत्त्वेऽपि इदं रजतम् इति भ्रमे नाति-

रा. **तन्तुनेति**। तन्तुरूपस्य हि पटरूपं प्रति तन्तुरूपत्वेन कारणत्वं ग्राह्यम्। न रूपत्वेन

नृ. वृत्तिधर्मानवच्छिन्नत्वाभावात् तादृशविशेष्यतायाः विशेष्यतावच्छेदकीभूतोभयत्वात्मकतया तत्संबन्धिमात्रनिष्ठत्वाभावाच्च नातिव्याप्तिरिति वाच्यम्। तथा सति एतद्घटतद्घटोभयं घट इति प्रमायां अव्याप्त्यापत्तेः। विशेष्यतायाः एतद्व्यक्तितद्व्यक्त्युभयत्वरूपव्यासज्यवृत्तिधर्मावच्छिन्नत्वात्। द्वितीये घटः प्रमेयः इत्यादिप्रमायां अव्याप्त्यापत्तेः। तत्संबन्धिमात्रनिष्ठत्वस्य तत्संबन्धीतरावृत्तित्वरूपतया प्रमेयत्वसंबन्धीतराप्रसिद्धेरिति चेन्न। तत्संबन्धिनिष्ठत्वेनेन तत्संबन्धितावच्छेदकावच्छिन्नेति विवक्षणात् घटपटोभयत्वस्य घटत्वसंबन्धितानवच्छेदकत्वात् नोक्तातिव्याप्तिः। तद्घटैतद्घटोभयत्वस्य घटत्वसंबन्धितावच्छेदकत्वात् घटत्वस्यापि प्रमेयत्वसंबन्धितावच्छेदकत्वाच्च नोक्तस्थलद्वये अव्याप्तिः। न चैवमपि घट इत्याकारकनिर्धर्मि

**नी.** व्याप्तिः । न च तथापि रङ्गत्वेन रजतावगाहिनि, रजतत्वेन च रङ्गावगाहिनि इमे रङ्गरजते इत्याकारकसमूहालम्बनभ्रमेऽतिव्याप्तिः, तत्र रङ्गविशेष्यकत्वरङ्गत्वप्रकारकत्वयोः रजतविशेष्यकत्वरजतत्वप्रकारकत्वयोश्च सत्त्वादिति वाच्यम्। तद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वरूपार्थविवक्षणेनादोषात् । तथा हि ययोर्विषयतयोर्निरूप्यनिरूपकभावस्तन्निरूपितविषयितयोरवच्छेद्यावच्छेदकभाव इति सिद्धान्तः । दर्शितभ्रमे रङ्गत्वप्रकारतायां रङ्गविशेष्यतानिरूपितत्वस्य, रजतत्वप्रकारतायां रजतविशेष्यतानिरूपितत्वस्य च अभावेन रङ्गविशेष्यकत्वावच्छिन्नरङ्गत्वप्रकारकत्वरजतविशेष्यकत्वावच्छिन्नरजतत्वप्रकारकत्वयोश्च असत्त्वान्नातिव्याप्तिः। स्मृतिव्यावृत्तयेऽनुभवत्वनिवेशः । एतत्फलमनुपदं स्फुटीभविष्यति । ननु तद्वतीत्यस्य अधिकरणे इत्यर्थकतया घटे घटत्वम् इति प्रमायामव्याप्तिः । आधेयताया वृत्त्यनियामकतया तेन सम्बन्धेन घटरूपप्रकाराधिकरणाप्रसिद्धेरित्याशयेन शङ्कते—**ननु घटे घटत्वमितीति**। तद्वतीत्यस्य तत्सम्बन्धिनीत्यर्थः । एवं च

**रा.** अतिप्रसक्तत्वात्। एवं तन्तुत्वस्य तन्तुत्वत्वेन, कारणत्वमित्यर्थः। तच्च तन्त्वितरावृत्तित्वे

**नृ.** तावच्छेदकप्रमायामव्याप्तिः । घटनिष्ठविशेष्यताया निरवच्छिन्नत्वादिति वाच्यम् । तत्संबन्धितावच्छेदकावच्छिन्नत्वस्थाने तत्संबन्धितानवच्छेदकानवच्छिन्नत्वस्यैव निवेशनीयतया घटनिष्ठनिरवच्छिन्नविशेष्यताया अपि तादृशत्वेनाव्याप्तिविरहादिति दिक् । मूलस्थतद्वच्छब्दस्य तत्संबन्ध्यर्थकत्वं व्यवस्थापयितुं आक्षिपति—**दीपिकायां नन्वित्यादिना । घटे घटत्वमिति प्रमायामिति** । आधेयतासंबन्धेन घटत्वावच्छिन्नप्रकारतानिरूपितघटत्वव्यक्तिनिष्ठविशेष्यताशालिप्रमायामित्यर्थः । **घटत्वे घटाभावादिति** । घटत्वस्याधेयतासंबन्धेन घटाधिकरणत्वाभावादित्यर्थः । आधेयतासंबन्धस्याधिकरणत्वानियामकत्वादिति भावः। **यत्र यत्संबन्धोऽस्तीति** । यो यत्संबन्धी भवतीत्यर्थः । यत्रेत्युपलक्षणम्। यस्येत्यपि बोध्यम् । **तत्र तत्संबन्धानुभव इत्यर्थादिति** । तद्विशेष्यतानिरूपिततत्संबन्धावच्छिन्नतन्निष्ठप्रकारताशाल्यनुभव इति विवक्षणादित्यर्थः। तेन संबन्धेन तत्संबन्धिनिष्ठविशेष्यतानिरूपिततत्संबन्धावच्छिन्नतन्निष्ठप्रकारताशाल्यनुभवस्य लक्षणत्वस्वीकारादिति यावत् । एतादृशविवक्षायां नोक्ताव्याप्तिरित्याह । **घटत्व इति** । घटत्वस्याधेयतासंबन्धेन घटसंबन्धित्वादित्यर्थः । इच्छादावतिव्याप्तिवारणाय मूले अनुभव इति विशेष्यदलम् । न च विनिगमनाविरहात् ज्ञानत्वं विशेष्यतां। तावता इच्छादावतिव्याप्तिवारणसंभवादिति वाच्यम् । तथा सति स्मृतेरपि प्रमात्वापत्तेः । न चेष्टापत्तिः । प्रमायाः पञ्चविधत्वेन इन्द्रियवत् अनुभवस्यापि प्रमाणत्वापत्तेः। प्रमाकरणत्वाविशेषात् तत्रापि नेष्टापत्तिसंभवः। प्रत्यक्षानुमानोपमानशब्दाश्चत्वार्येव प्रमाणानीति सूत्रविरोधापत्तेः। तस्मात् स्मृतिव्यावृत्त-

नी. घटत्वस्यापि घटसम्बन्धितया तादृशप्रमायामाधेयतया घटसंबन्धिघटत्वविशेष्यकत्वावच्छिन्नघटप्रकारकत्वस्य सत्त्वान्नाव्याप्तिरिति समाधत्ते। **यत्रेति। यथार्थानुभव एवेति**। एवकारेण यथार्थस्मृतिव्यवच्छेदः। यथार्थज्ञानमात्रस्य प्रमात्वे स्मृतिकरणस्य प्रमाणान्तरतापत्तेरिति भावः। **अतिव्याप्तिरिति**। संयोगाभाववात संयोगप्रकार-

रा. सति सकलतन्तुवृत्तित्वमिति तन्तुघटितरूपेणैव तन्तुत्वस्य कारणताग्रहात् अन्यथा-

नृ. प्रमात्वस्यात्र वक्तव्यतया तदर्थं प्रमालक्षणे ज्ञानत्वमपहाय मूले अनुभवत्वनिवेशनम्। प्रवृत्त्युपयुक्तप्रमात्वं तु स्मृतिसाधारणज्ञानत्वघटितमेवेति हृदयम्। ननु ग्रन्थान्तरे प्रमात्वाप्रमात्वाभ्यां अनुभवस्य विभागो दृष्टः। अत्र तादृशधर्मद्वयमपहाय यथार्थत्वायथार्थत्वाभ्यां कथं विभाग इत्यत आह। **सैवेति**। यथार्थानुभव एवेत्यर्थः। **प्रमेत्युच्यत इति**। प्रमाशब्देन व्यवह्रियत इत्यर्थः। यथार्थत्वप्रमात्वयोरयथार्थत्वाप्रमात्वयोश्चैक्यान्नोक्तदोष इति भावः। अयथार्थानुभवविशेषलक्षणमाह। **तद्भाववतीति**। तेन संबन्धेन तदभाववन्निष्ठविशेष्यतानिरूपिततत्संबन्धावच्छिन्नतन्निष्ठप्रकारताशाल्यनुभवत्वं तेन संबन्धेन तत् भ्रमत्वमित्यर्थः। यथाश्रुते अयं घट इत्यादिप्रमायामपि संयोगेन घटत्वाभाववद्धटविशेष्यकत्वात् अतिव्याप्त्यापत्तेः। एतल्लक्षणघटकदलप्रयोजनं स्वयमूह्यम्। ननु घटपटान्यतरद्धट इति प्रमायामतिव्याप्तिः, अन्यतरत्वेन पटविशेष्यकत्वात्। न च विशेष्यतायां तदभाववन्मात्रनिष्ठत्वविवक्षणान्नोक्तदोषः। निरुक्तप्रमीयविशेष्यताया घटवृत्तित्वेन तदभाववन्मात्रनिष्ठत्वाभावादिति वाच्यं, तथा सति मूलावच्छिन्नो वृक्षः कपिसंयोगीति भ्रमे अव्याप्त्यापत्तेः। तथा हि। तदभाववन्मात्रवृत्तित्वं तदभाववदन्यावृत्तितद्वद्वृत्तित्वं वा। नाद्यः। कपिसंयोगाभावस्य केवलान्वयित्वेन तद्वदन्याप्रसिद्धेः। नान्त्यः। वृक्षे कपिसंयोगसत्त्वेन विशेष्यतायाः कपिसंयोगवदवृत्तित्वाभावात्। न च तदभाववन्निष्ठत्वं तत्संबन्धितावच्छेदकानवच्छिन्नत्वरूपं वाच्यं, निरुक्तभ्रमीयविशेष्यतायाः संयोगसंबन्धितानवच्छेदकमूलावच्छिन्नत्वात् नाव्याप्तिरिति वाच्यम्। तथा सति घट इत्याकारकनिर्धर्मितावच्छेदककप्रमायामतिव्याप्त्यापत्तेः। तादृशप्रमाविशेष्यताया निरवच्छिन्नत्वेन घटत्वसंबन्धितावच्छेदकानवच्छिन्नत्वाक्षतिरिति चेन्न। तदभाववन्निष्ठत्वशब्देन तत्संबन्धितानवच्छेदकावच्छिन्नत्वस्य विवक्षितत्वात् नोक्तप्रमायामतिव्याप्तिः। निर्धर्मितावच्छेदककभ्रमाप्रसिद्धया सर्वसामञ्जस्यात्। अधिकं तु अस्मत्कृतमुक्तावलीप्रभायां प्रमालक्षणपरिष्कारे अनुसन्धेयमिति दिक्। यथाश्रुतभ्रमविशेषलक्षणस्य प्रमाविशेषे अतिव्याप्तिमाशङ्क्य निराकरोति। **दीपिकायां नन्विति। इदं संयोगीति प्रमायामिति**। वृक्षादिकं कपिसंयोगीति प्रमायां अग्रावच्छिन्नवृक्षादिकं कपिसंयोगीति प्रमायां चेत्यर्थः। **अतिव्याप्तिरिति**। वृक्षादेरपि कपिसंयोगाभाववत्त्वादिति

नी. कत्वस्य सत्त्वादिति भावः । **यदवच्छेदेनेति** । यदवच्छेदेन यत्संबन्धावच्छिन्नप्रतियोगिताकयदभावः तदवच्छेदेन तत्संबन्धेन तत्प्रकारकानुभवस्य विवक्षितत्वादित्यर्थः । **संयोगाभावावच्छेदेनेति** । संयोगाभावावच्छेदकावच्छेदेनेत्यर्थः । **संयोगावच्छेदेनेति** । संयोगावच्छेदकावच्छेदेनेत्यर्थः । **संयोगसंबन्धस्येति** । समवायसंबन्धेन संयोगस्येत्यर्थः । अत्रेदमवधेयम्—इदमव्याप्यवृत्तिसंयोगादिप्रकारकभ्रमानुरोधेन । व्याप्यवृत्तिरजतत्वादिप्रकारकभ्रमलक्षणं तु— तत्संबन्धावच्छिन्नप्रतियोगिताकतदभाववान् यः तद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वविशिष्टानुभवत्वम् । प्रतियोगितायां प्रकारतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशात् पर्वतो वह्निमान् इति प्रमायां समवायावच्छिन्नवह्न्यभाववत्पर्वतविशेष्यकत्वस्य सत्त्वेऽपि नातिव्याप्तिः। विशेष्यत्वप्रकारत्वयोरवच्छेद्यावच्छेदकभावविवक्षणेन इमे रङ्गरजते इत्याकारकप्रमायां रङ्गत्वाद्यभाववद्रजतादिविशेष्यकत्वरङ्गत्वादिप्रकारकत्वयोः सत्त्वेऽपि ना-

रा. सिद्धत्वम् । यद्यप्येवं सति कपालसंयोगस्यापि कपालेन सह पूर्ववृत्तित्वग्रहात् कपा-

नृ. भावः । **यदवच्छेदेन यत्संबन्धाभाव इति** । यत्संबन्धावच्छिन्नयन्निष्ठप्रतियोगिताकाभावावच्छेदको य इत्यर्थः । यथाश्रुते कपिसंयोगस्य समवायेनाव्याप्यवृत्तित्वेऽपि समवायस्य व्याप्यवृत्तितया तदभावस्यापि व्याप्यवृत्तित्वेनावच्छेदकाप्रसिद्ध्या असांगत्यापत्तेः । **तदवच्छेदेन तत्संबन्धज्ञानस्येति** । तदवच्छिन्नविशेष्यतानिरूपिततत्संबन्धावच्छिन्नतन्निष्ठप्रकारताशालिज्ञानस्येत्यर्थः । तत्संबन्धावच्छिन्नतन्निष्ठप्रतियोगिताकाभावावच्छेदककावच्छिन्नविशेष्यतानिरूपिततत्संबन्धावच्छिन्नतन्निष्ठप्रकारता-शालिज्ञानस्येति समुदितार्थः । **विवक्षितत्वादिति** । तदभाववतीत्यादिवाक्याधीनत्वेन स्वीकृतत्वादित्यर्थः । तथा च वृक्षादि कपिसंयोगीति प्रमीयविशेष्यतायाः कपिसंयोगाभावनिरूपितविरोधभाजकतावच्छेदकताश्रयमूलाद्यवच्छेद्यत्वाभावेन निरुक्तलक्षणाभावान्न तादृशप्रमायामतिव्याप्तिरिति भावः । आदौ मूलावच्छिन्नवृक्षः कपिसंयोगीत्यादिभ्रमे लक्षणमुपपाद्य अनन्तरं द्वितीयप्रमायां अतिव्याप्तिं वारयति । **संयोगाभावावच्छेदेनेति** । कपिसंयोगाभावनिरूपितविरोधभाजकतावच्छेदकताश्रयमूलाद्यवच्छिन्नविशेष्यतानिरूपितकपिसंयोगनिष्ठप्रकारताशालिज्ञानस्येत्यर्थः । **भ्रमत्वादिति** । निरुक्तभ्रमलक्षणाक्रान्तत्वादित्यर्थः । नाव्याप्तिरिति शेषः । **संयोगावच्छेदेनेति** । कपिसंयोगनिरूपितविरोधभाजकतावच्छेदकताश्रयाग्रावच्छेदेनेत्यर्थः । **संयोगसंबन्धस्य विद्यमानत्वादिति** । वृक्षादौ संबन्धेन कपिसंयोगसत्त्वादित्यर्थः । एतत्प्रदर्शनं वक्ष्यमाणप्रमायाः तत्संबन्धितावच्छेदकावच्छिन्नविशेष्यतानिरूपिततन्निष्ठप्रकारताघटितप्रमालक्षणाक्रान्तत्वलक्षणायेति हृदयम् । **नातिव्याप्तिरिति** । अग्रावच्छेदेन वृक्षः कपिसंयोगीति प्रमायामित्यादिः । अग्रादेः कपिसंयोगावच्छेदकत्वेन तदभावावच्छेदकत्वाभावेन तदभावावच्छेदकावच्छेद्यत्व-

नी. तिव्याप्तिरित्यलमतिविस्तरेण । **प्रसङ्गादिति** । स्मृतस्योपेक्षानर्हत्वं प्रसङ्गः तस्मादित्यर्थः । सामान्यतोऽवगतस्यैव विशेषरूपेण प्रतिपादनं संभवतीति सामान्यलक्षणं स्फुटयति— **प्रमायाः करणं प्रमाणमिति । असाधारणेतीति** । दिक्कालादृष्टादेः कार्यत्वावच्छिन्नं प्रत्येव कारणत्वात् अनुभवत्वव्याप्यधर्मावच्छिन्नप्रमावृत्तिकार्यतानिरूपितकारणत्वस्य असत्त्वान्नातिव्याप्तिः । व्यापारवत्त्वे सति इत्यपि वक्तव्यम् । अतश्चक्षुःसंयोगादौ नातिव्याप्तिः । श्रोत्रमनःसंयोगः शब्दो वा व्यापारः सम्भवति तेन श्रोत्रेन्द्रिये करणलक्षणानाक्रान्तिरिति वदन्ति । यद्विलम्बात्प्रकृतकार्यानुत्पादस्तत्कारणत्वस्यैवासाधारणकारणत्वात्मकतया कालादिषु तादृशकारणत्वाभावान्नातिव्याप्तिः । व्यापारत्वेनाभिमतेन्द्रियसंयोगिकमेव करणम् । एतच्च लिङ्गपरामर्श एवानुमानम् इति मूल एव स्फुटीभविष्यति । अत एव मणिकृद्भिः उक्तं तच्च लिङ्गपरामर्शः इति ग्रन्थेनेति तु नव्याः । अधिकमस्मदीयचिन्तामणिप्रभायामनुसंधेयम् ।

रा. लेन कपालसंयोगस्यान्यथासिद्धिः स्यात् । तथापि स्वतन्त्रान्वयव्यतिरेकशून्यत्वे सती-

नृ. घटितभ्रमलक्षणानाक्रान्तत्वान्न तादृशप्रमायामतिव्याप्तिरिति भावः । मूले यथार्थानुभवं विभजते । **यथार्थानुभव इत्यादिना** । प्रत्यक्षत्वानुमितित्वोपमितित्वशाब्दत्वरूपप्रकारचतुष्टयान्यतमविशिष्टः यथार्थानुभव इत्यर्थः । अत्र प्रत्यक्षत्वं साक्षात्कारपदशक्यतावच्छेदकतया सिद्धजातिविशेषः । एवमनुमितीत्यादिपदशक्यतावच्छेदकतया सिद्धजातिविशेषाः अनुमितित्वोपमितित्वशाब्दत्वरूपधर्मा इति बोध्यम् । अस्मद्गुरुचरणास्तु साक्षात्करोमि अनुमिनोमि उपमिनोमि शाब्दयामि इत्यनुभवसिद्धजातिविशेषाः प्रत्यक्षत्वादिधर्मा इति व्याचक्रुः । अत्रैव प्रसङ्गसङ्गत्या प्रमाकरणमपि विभजते । **तत्करणमपीति** । प्रमाकरणमपीत्यर्थः । अपिना प्रमा समुच्चीयते । यथा प्रमा चतुर्विधा तथा तत्करणमपि चतुर्विधमिति लभ्यते । अत्र प्रमानिष्ठकार्यतानिरूपितव्यापारसंबन्धावच्छिन्नकारणत्वं तत्करणशब्दप्रतिपाद्यं प्रमाणशब्दवाच्यस्य लक्षणम् । एवं चैतल्लक्षणलक्षितप्रमाणशब्दवाच्यं चतुर्विधमिति फलितं इति बोध्यम् । प्रसङ्गसङ्गत्या अत्रैव करणसामान्यलक्षणमाह । **असाधारणकारणमिति** । व्यापारसंबन्धावच्छिन्नकारणतावत्करणशब्दवाच्यमित्यर्थः । कारणसामान्यलक्षणमाह । **कार्यनियतपूर्ववृत्तीति** । कार्याव्यवहितप्राक्कालावच्छेद्यः कार्यतावच्छेदकसंबन्धेन कार्याधिकरणनिरूपितदैशिकविशेषणतासंबन्धावच्छिन्नवृत्तित्वाश्रयो यः कारणतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकोऽभावः तत्प्रतियोगितानवच्छेदकधर्मवदित्यर्थः । तदप्रतियोगित्वमपहाय तत्प्रतियोगितानवच्छेदकधर्मवत्त्वनिवेशात् नारण्यस्थदण्डादेः कारणत्वानुपपत्तिः । एतल्लक्षणघटकतत्तत्संबन्धिविशेषनिवेशनं तत्प्रयोजनं स्वयमूह्यम् । न च रासभादेरपि निरुक्तघटनियतपूर्ववृत्तितावच्छेदकद्रव्यत्वादिमत्त्वादतिव्याप्तिरिति वाच्यम् ।

नी. **नियतेति** । नियतत्वं हि व्यापकत्वम् । तच्च रासभादेर्न संभवतीति तत्र न घट-कारणत्वातिप्रसक्तिरिति भावः । **पूर्ववृत्तीति** । स्वव्यापकत्वस्य स्वस्मिन् सत्त्वेऽपि स्वपूर्वकालवृत्तित्वस्यासत्त्वेन नातिप्रसंग इति भावः । कार्यतावच्छेदकसंबन्धेन कार्याधिकरणे कार्याव्यवहितप्राक्क्षणावच्छेदेन विद्यमानात्यन्ताभावप्रतियोगितानवच्छेदकतद्धर्मवत्त्वं तेन रूपेण कारणत्वमिति समुदितोऽर्थो बोध्यः । **कारणं स्यादिति** । तस्य नियतपूर्ववृत्तित्वादिति भावः । निबन्धान्तरेष्वन्यथासिद्धेः पञ्चविधत्वेऽपि मणिकारमताभिप्रायेण आह । **त्रिविधेति** । **येन सहेत्यादि** । येन तन्तुना सहैव

रा. ति विशेषणान्नानुपपत्तिः । स्वतन्त्रान्वयव्यतिरेकश्च कारणान्तराघटितसंबन्धेनान्वय-

नृ. अन्यथासिद्ध्यनिरूपकत्वेन धर्मस्य विशेषणीयत्वात् । न चैवं सति अनियतरासभादेरपि तादृशधर्मवत्त्वाभावादेवानतिप्रसंगे नियतपदं अनर्थकमिति वाच्यम् । इष्टत्वात् पूर्ववृत्तितावच्छेदकधर्मे अन्यथासिद्ध्यनिरूपितत्वलाभायैव तत्पदोपादानं इति कार्यनियतत्वे सति कार्यपूर्ववृत्तित्वमिति यथाश्रुतकारणलक्षणघटकदळप्रयोजनमाह । **दीपिकायां पूर्ववृत्तीति** । **रासभादावतिव्याप्तिरिति** । रासभादेः घटत्वावच्छिन्ननिरूपितपूर्ववृत्तिताश्रयत्वादिति भावः। **अतो नियतेति** । तथा च रासभादेः घटत्वावच्छिन्ननिरूपितव्यापकत्वरूपनियतत्वानाश्रयत्वात् नातिव्याप्तिरिति भावः । **तावन्मात्रे कृत इति** । कार्यनियतत्वमात्रस्य कारणलक्षणत्वस्वीकार इत्यर्थः। **अतः पूर्ववृत्तीति** । तथा च स्वस्य स्वपूर्ववृत्तित्वाभावान्नातिव्याप्तिरिति भावः । **तन्तुरूपमपीति** । अपिना तन्तुसमुच्चयः । तथा च पटं प्रति यथा तन्तवः कारणं तथा तन्तुरूपमपि कारणं स्यात् पटं प्रति नियतपूर्ववृत्तित्वादिति भावः । **अनन्यथासिद्धत्वे सतीति विशेषणादिति** । कारणलक्षणस्यानन्यथासिद्धत्वघटितत्वस्वीकारादित्यर्थः । तथा चानन्यथासिद्धत्वे सति नियतत्वे सति पूर्ववृत्तित्वं कार्याव्यवहितप्राक्कालावच्छेद्यकार्याधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकधर्मवत्त्वं इति कारणलक्षणं फलितम् । अतो नारण्यस्थदण्डादेः कारणत्वानुपपत्तिः । एवं च तन्तुरूपादेः पटं प्रति अन्यथासिद्धत्वेन अनन्यथासिद्धत्वघटितलक्षणाभावान्नातिव्याप्तिरिति भावः । अत्रैव तादृशस्य कारणत्वरूपत्वे दण्डस्य पृथिवीत्वेनापि हेतुत्वोपपत्तिः । पृथिवीत्वादेरपि तादृशधर्मरूपत्वात् निरुक्तधर्मे अन्यथासिद्ध्यनिरूपकत्वविशेषणदाने पृथगनन्यथासिद्धत्वमफलमित्यरुचि... अनन्यथासिद्धत्वघटितकारणलक्षणपरिष्कारानन्तरं अनन्यथासिद्धिविभजनं स्वयमेव प्रसगसगतिमाह । **अन्यथासिद्धत्वमिति** । अन्यथासिद्धत्वाभावकूटवत्त्वमित्यर्थः । **अन्यथासिद्धिस्त्रिविधेति** । प्रतियोगिभूतान्यथासिद्धि स्त्रिविधेत्यर्थः । **येन सहैवेति** । यद्घटितधर्मावच्छिन्नं यद्धर्मावच्छिन्नेत्यर्थः । **यस्येति** । यन्निष्ठमित्यर्थः । **यं प्रति पूर्ववृत्तित्वमिति** । यत्कार्यनियतपूर्ववृत्तित्वमित्यर्थः । यद्घटितेत्यत्र यत्पदं प्रकृतकार्यनिरूपितसाक्षात्संबन्धघटिता-

तन्तुरूपं तन्तुत्वं च पटं प्रति । अन्यं प्रति पूर्ववृत्तित्वे ज्ञात एव यस्य य प्रति पूर्ववृत्तित्वमवगम्यते तं प्रति तदन्यथासिद्धम् । यथा शब्दं प्रति

---

नी. यस्य तन्तुरूपस्य यं घटं प्रति पूर्ववृत्तित्वमवगम्यते तं पटं प्रति तत्तन्तुरूपं तेन तन्तुना अन्यथासिद्धमित्यर्थः । सहितत्वम् एकज्ञानविषयत्वं बोध्यम् । तन्तुरूपस्य पटपूर्ववृत्तित्वज्ञानेऽनतिप्रसक्ततन्तुरूपत्वेनैव विषयता वाच्या । तथा च तन्तुरूपमन्यथासिद्धमिति । एवं तन्तुत्वस्य पूर्ववृत्तित्वज्ञानमपि तन्तुविषयकमेवेति तदन्यथासिद्धमिति भावः। अत्र येनेत्यस्य स्वतन्त्रान्वयव्यतिरेकशालिनेति, यस्येत्यस्य च स्वतन्त्रान्वयव्यतिरेकशून्यस्य इति विशेषणं बोध्यम् । तेन अतथाभूतेन तन्तुत्वेन तन्तोरनन्यथासिद्धिः न वा—तन्तुसंयोगस्य तन्तुना अन्यथासिद्धिरिति संक्षेपः 'इतरान्वयव्यतिरेकशालि यत्तदन्यथासिद्धम्' इति तु परे । **शब्दं प्रतीति** । आकाशत्वं हि शब्दसमवायि-

रा. व्यतिरेकः । तन्तुत्वतन्तुरूपयोश्च स्वाश्रयाश्रयत्वसंबन्धेनैवान्वयव्यतिरेकौ ग्राह्यौ ।

नृ. न्वयव्यतिरेकशालिपरम् । एवञ्च तादृशान्वयव्यतिरेकशालिघटिततद्धर्मावच्छिन्नतत्कार्यनिरूपितनियतपूर्ववृत्तित्वाश्रयत्वं तत्कार्यनिरूपितान्यथासिद्धत्वमित्येकोऽर्थः । यद्धर्मावच्छिन्नं यन्निष्ठयन्निरूपितनियतपूर्ववृत्तित्वम् । यन्निष्ठयन्निरूपितनियतपूर्ववृत्तितावच्छेदको यो धर्म इत्यर्थः । तथा च तत्कार्यनिरूपितनियतपूर्ववृत्तितावच्छेदकत्वं तत्कार्यनिरूपितान्यथासिद्धत्वमित्यपरोऽर्थः । प्रथमे द्वितीये च स्वतन्त्रान्वयव्यतिरेकशून्यत्वं विशेषणीयम् । तेन घटं प्रति कपालसंयोगस्य कपालघटितकपालसंयोगत्वावच्छिन्ननियतपूर्ववृत्तिताश्रयत्वेऽपि कपालस्य तादृशनियतपूर्ववृत्तितावच्छेदकताश्रयत्वेऽपि च कपालसंयोगस्य कपालस्य च नान्यथासिद्धत्वप्रसंगः । यद्यप्यन्यथासिद्धेश्चातुर्विध्यं वक्तुमुचितं अर्थभेदात् । तथापि प्रथमद्वितीययोरेकशब्देन प्रतिपादनसंभवाच्छब्दैक्यमनुसृत्य त्रैविध्यमिति ध्येयम् । **अवगम्यत इति** । इदं च तन्तुघटिततन्तुरूपत्वस्य तन्तुत्वस्य च पूर्ववृत्तितावच्छेदकत्वे प्रमाणोपन्याससाधनत्वस्यापि लक्षणघटकतासत्त्वात् प्रथमं द्वितीयं च उदाहरति । **यथेति** । द्वितीयान्यथासिद्धमाह **अन्यं प्रति पूर्ववृत्तित्व इति** । प्रकृतकार्यातिरिक्तकार्यनिरूपितनियतपूर्ववृत्तित्व इत्यर्थः । **ज्ञात एवेति** । ज्ञानविषये सत्येवेत्यर्थः । तादृशपूर्ववृत्तित्वज्ञानानन्तरमेवेति यावत् । **यस्य यं प्रतीत्यादि** । यन्निष्ठयन्निरूपितपूर्ववृत्तित्वं ज्ञानविषयतावदित्यर्थः । तादृशपूर्ववृत्तित्वज्ञानं भवतीति यावत् । तथा चान्यपूर्ववृत्तित्वज्ञानस्य प्रकृतकार्यपूर्ववृत्तित्वज्ञानहेतुत्वलाभात्तादृशकार्यकारणभावबलादन्यपूर्ववृत्तित्वस्य प्रकृतपूर्ववृत्तितावच्छेदकत्वसिद्धिः । एवं च प्रकृतकार्यातिरिक्तकार्यनिरूपितनियतपूर्ववृत्तित्वघटितधर्मावच्छिन्नप्रकृतकार्यनिरूपितनियतपूर्ववृत्तिताश्रयत्वम् प्रकृतकार्यनिरूपितान्यथासिद्धत्वमिति फलितमिति भावः । एतादृशान्यथासिद्धत्वमुदाहरति । **यथेति** । **शब्दं प्रति पूर्ववृत्तित्व इत्यादि** । अयमाशयः । आकाशत्वज्ञानं विना आकाशं घटपूर्ववृत्तीति ज्ञानासंभवादनुभवबला-

पूर्ववृत्तित्वे ज्ञात एव पटं प्रत्याकाशस्य । अन्यत्र कॢप्तनियतपूर्ववर्तिन एव कार्यसंभवे तत्सहभूतमन्यथासिद्धम् । यथा पाकजस्थले

---

नी. कारणत्वम् । तथा च शब्दकारणत्वमगृहीत्वाकाशत्वेन घटपूर्ववृत्तित्वं ग्रहीतुमशक्यमित्याकाशोऽन्यथासिद्ध इत्यर्थः । **अन्यत्र कॢप्तेति** । अपाकजस्थले गन्धं प्रति कॢप्तनियतपूर्ववृत्तिना गन्धप्रागभावेनैव पाकजस्थलेऽपि तत्संभवे रूपप्रागभावोऽन्यथासिद्ध इत्यर्थः । अथैवं नियतपदं व्यर्थम्, अनियतरासभादेः तृतीयान्यथासिद्धत्वेन सत्यन्तेनैव वारणसंभवादिति चेन्न । घटसामान्यं प्रत्यन्यथासिद्ध्यसंभवात् अन्यत्र घटभिन्ने पटादौ कॢप्तपूर्ववर्तिनस्तन्त्वादिनो घटोत्पत्त्यसंभवादिति । नवीनाः पुनरेवमाहुः—लघुनियतपूर्ववर्तिन एव कार्यसंभवे तद्भिन्नत्वमन्यथासिद्धत्वम् । लघुत्वं च शरीरकृतमुपस्थितिकृतं संबन्धकृतं च । तत्र प्रथमम् । अनेकद्रव्यसमवेतत्वापेक्षया महत्त्वे । द्वितीयम्—गन्धं प्रति रूपप्रागभावापेक्षया गन्धप्रागभावे, गन्धस्य प्रतियोगिन उपस्थितत्वेन शीघ्रं तदुपस्थितेः । तृतीयं—दण्डत्वदण्डरूपाद्यपेक्षया दण्डादौ, स्वाश्रयदण्डसंयोगादिरूपपरंपरया गुरुत्वात् । एवं चैतावतैव निर्वाहेऽन्यथासिद्धिः त्रिविधा

रा. तस्य च तन्तुरूपकारणान्तरघटितत्वात् । सत्यन्तमात्रोक्तौ चक्षुषोऽपि चाक्षुषं प्रति अन्यथासिद्धिः स्यात् । तत्प्रतियोगिकसंयोगस्य चाक्षुषं प्रति कारणत्वेन तत्संबन्धेनैव चक्षुषः कारणत्वात् । अतः विशेष्यदलम् । कारणान्तराघटितसंबन्धेन नियतान्वयव्यतिरेकशून्यत्वे सति येन सह पूर्वभावः तदन्यथासिद्धमित्यर्थः । **पाकजस्थलेति** । पाकजगन्धत्वावच्छिन्नं प्रति रूपप्रागभावस्यान्यथासिद्धत्वादित्यर्थः । न च पाकजातिरिक्तस्थले शुक्लनीलवृत्तिना गन्धप्रागभावेनैव गन्धोत्पत्तिसंभवात् पाकजस्थलेऽपि रूप-

नृ. दाकाशस्य घटपूर्ववृत्तितावच्छेदकत्वसिद्धिः। आकाशत्वं च शब्दसमवायिकारणत्वं । तच्च शब्दपूर्ववृत्तित्वघटितमिति प्रकृतघटादिरूपकार्यभिन्नशब्दपूर्ववृत्तित्वघटितशब्दसमवायिकारणत्वरूपाकाशत्वावच्छिन्नघटादिरूपकार्यनिरूपितनियतपूर्ववृत्तिताश्रयत्वरूपद्वितीयान्यथासिद्धाश्रयत्वमाकाशस्येति। यद्याकाशत्वं शब्दाश्रयत्वादिरूपं तदा तेन रूपेणाकाशस्य वक्ष्यमाणतृतीयमेव घटादिनिरूपितान्यथासिद्धत्वम् । एवं घटं प्रति कुलालस्य कुलालपितृत्वेन द्वितीयान्यथासिद्धत्वमप्यूह्यमिति । तृतीयान्यथासिद्धिमाह—**अन्यत्रेति** । प्रकृतकार्यसजातीयप्रकृतकार्यभिन्न इत्यर्थः । निरूपितत्व सप्तम्यर्थः । तस्य पदार्थैकदेशपूर्ववृत्तितायामन्वयः। **कॢप्तनियतपूर्ववृत्तित्वमेवेति** । लघुधर्मावच्छिन्ननियतपूर्ववृत्तिताश्रयेणैवेत्यर्थः । **कार्यसंभव इति** । प्रकृतकार्यस्याप्युत्पत्तिनिर्वाह इत्यर्थः । **तत्सहभूतमिति** । तद्भिन्नमित्यर्थः । तथा च प्रकृतकार्यसजातीयप्रकृतकार्यभिन्नकार्यनिरूपितलघुधर्मावच्छिन्ननियतपूर्ववृत्तिताशून्यत्वं तत्कार्यसजातीयनिरूपितान्यथासिद्धत्वमिति फलितार्थः । उदाहरति । **यथेति** । **पाकजस्थल इति** । विजाती-

**गन्धं प्रति रूपप्रागभावस्य । एवञ्च अनन्यथासिद्धनियतपूर्ववृत्तित्वं कारणत्वम् । कार्यलक्षणमाह । कार्यमिति । कारणं विभजते । कारणमिति । समवायिकारणस्य लक्षणमाह—यत्समवेतमिति । यस्मिन्**

---

**नी.** पञ्चविधा चेति प्रपञ्चो व्युत्पत्तिवैचित्र्याय । न च अनियतरासभादेः तृतीयान्यथासिद्धत्वेनैव वारणात् नियतपदं व्यर्थमिति वाच्यम् । यतोऽन्यथासिद्धत्वस्यानुगतस्य दुर्वचनतया यत्र प्रामाणिकानामन्यथासिद्धत्वव्यवहारस्तद्भेदकूटं निवेशनीयम् । लघुनियतेत्यादिकं तु तत्तद्भेदप्रतियोगितत्तद्व्यक्तिपरिचायकम् । इत्थं च अनियतानन्तरासभादीनामेकेन नियतत्वविशेषणेनैव वारणाद्भेदकूटनिवेशे गौरवम् । नियतानां दण्डत्वादीनां तु तत्तद्भेदकूटत्वं निवेशनीयमित्यभिसन्धिः । **यस्मिन्समवेतमि-**

**रा.** प्रागभावः कथं न क्लृप्तनियतपूर्ववृत्तिः गन्धादीनां चतुर्णामप्येकदोत्पत्त्या प्रागभावचतु-

**नृ.** यतेजस्संयोगात् युगपद्रूपादिचतुष्टयोत्पत्तिस्थल इत्यर्थः । **गन्धं प्रतीति** । तद्गन्धसजातीयं प्रतीत्यर्थः । **रूपप्रागभावस्येति** । अन्यथासिद्धत्वमिति शेषः । अयं भावः । पाकाद्रूपादिचतुष्टयोत्पत्त्यधिकरणे तदुत्पत्तेः प्राग्रूपादिप्रागभावचतुष्टयसत्त्वेऽपि यादृशपुष्पादौ कदाचिद्रूपान्तरं नोपलब्धम् , किन्तु गन्धान्तरमेव, तत्र तादृशगन्धोत्पत्त्यव्यवहितप्राक्काले रूपप्रागभावसत्त्वे मानाभावात् गन्धप्रागभावस्यैव क्लृप्तनियतपूर्ववृत्तिताकतया तेनैव प्रकृतगन्धस्याप्युत्पत्तिसंभवे प्रकृतगन्धसजातीये रूपप्रागभावोऽन्यथासिद्ध इति । **एवं चेति** । अन्यथासिद्धत्वस्य त्रैविध्ये चेत्यर्थः । **अनन्यथासिद्धनियतपूर्ववृत्तित्वमिति** । निरुक्तान्यथासिद्धित्रयान्यतमशून्यत्वे सति निरुक्तान्यथासिद्धिप्रतियोगिकाभावकूटवत्त्वे सति वा नियतत्वे सति पूर्ववृत्तित्वं फलोपहितकारणत्वमिति, निरुक्तान्यथासिद्धत्वशून्यत्वे सति नियतपूर्ववृत्तित्वं नियतपूर्ववृत्तितावच्छेदकधर्मवत्त्वं स्वरूपयोग्यसाधारणकारणत्वमिति वार्थः । कार्यं लक्षयति । **मूले कार्यमिति** । कार्यपदवाच्यमित्यर्थः। **प्रागभावप्रतियोगीति**। प्रागभावप्रतियोगित्वं कार्यपदवाच्यसामान्यलक्षणमित्यर्थः । इदमुपलक्षणम् । कार्यपदवाच्यसामान्यस्य लक्ष्यत्वे स्ववृत्तिमहाकालभेदवत्त्वकालिकविशेषणत्वोभयसंबन्धेन सत्तावत्त्वरूपानुगतकार्यत्वं लक्षणम् । भावकार्यशब्दप्रतिपाद्यमात्रस्य लक्ष्यत्वे स्ववृत्तिमहाकालभेदवत्त्वकालिकविशेषणत्वसमवायैतत्त्रितयसंबन्धेन सत्तावत्त्वरूपानुगतकार्यत्वमेव लक्षणमित्यपि इति बोध्यम् । एतेन प्रागभावप्रतियोगित्वरूपकार्यत्वस्याननुगतप्रागभावघटितत्वेनाननुगततया एकैकप्रागभावप्रतियोगित्वस्यान्यत्रावर्तमानत्वादित्यव्याप्तिरिति दूषणस्य नावकाशः । अनुगतलक्षणसत्त्वात् कारणं विभजते । **कारणमिति** । कारणत्वमित्यर्थः । भावप्रधाननिर्देशादिति भावः । अत्र कारणतात्वं कारणत्वसामान्यलक्षणम् । कारणतात्वं च कारणमित्याकारकयत्किञ्चिद्बुद्धिप्रकारत्वं नातो न्यूनतेति

**समवेतमित्यर्थः । असमवायिकारणं लक्षयति—कार्येणेति । कार्येणेत्येतदुदाहरति—तन्तुसंयोग इति । कार्येण पटेन सह एकस्मिंस्तन्तौ समवेतत्वात्तन्तुसंयोगः पटस्यासमवायिकारणमित्यर्थः । कारणेनेत्येतदु-**

---

**नी.** त्यर्थ इति । यद्धर्मावच्छिन्नं यद्धर्मावच्छिन्ने समवायेनोत्पद्यते, तद्धर्मावच्छिन्नं प्रति

**रा.** ष्टयस्यापि पूर्ववृत्तित्वादिति वाच्यम् । गन्धं प्रति गन्धप्रागभावः स्वनियतपूर्ववृत्तिः ।

**नृ.** कारणस्य त्रैविध्याभावे न तादृगनुपपत्तेः यथाश्रुतासंगतिरिति ध्येयम् । **त्रिविधमिति** । प्रकारत्रयान्यतमविशिष्टमित्यर्थः । **समवाय्यसमवायिनिमित्तभेदादिति** । समवायिकारणत्वासमवायिकारणत्वनिमित्तकारणत्वभेदादित्यर्थः । तथा च समवायिकारणत्वादित्रितयनिष्ठभेदप्रयोज्यप्रकारत्रयान्यतमविशिष्टं कारणत्वमिति समुदितवाक्यार्थः । समवायिकारणत्वस्वरूपमाह । **यत्समवेतमिति** । यत्समवेतं कार्यं यत्समवेतमुत्पद्यत इति योजना । यन्निरूपितसमवायसंबन्धावच्छिन्नमित्यर्थः । **कार्यमिति** । कार्यत्वमित्यर्थः । तथा च समवायसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणत्वं प्रथमं समवायिकारणत्वस्वरूपमित्यर्थः । यत्समवेतमित्युत्पत्तिक्रियाविशेषणम् । **उत्पद्यत इति** । उत्पत्त्याश्रयत्वमित्यर्थः । यन्निरूपितसमवायसंबन्धावच्छिन्नोत्पत्त्याश्रयत्वमिति समुदितार्थः । तथा च समवायसंबन्धावच्छिन्नोत्पत्तिनिरूपकत्वं निरूपकतासंबन्धेन समवायसंबन्धावच्छिन्नोत्पत्तिसामान्यवत्त्वं वा द्वितीयं समवायिकारणत्वरूपमिति फलितार्थः । अत्र लक्षणं तु समवायिकारणशब्दाधीनबुद्धिनिरूपितप्रकारत्वं प्रकारतासंबन्धेन तादृशबुद्धिमत्त्वं नातो न्यूनतेति हृदयम् । तस्याश्रयमुदाहरति । **तन्तव इत्यादि** । असमवायिकारणत्वस्वरूपमाह । **कार्येति** । **कारणमिति** । कारणत्वमित्यर्थः । **असमवायिकारणमिति** । असमवायिकारणत्वमित्यर्थः । तथा च समवायेन कार्याधिकरणनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वतादृशाधिकरणनिरूपितसमवायघटितसामानाधिकरण्यसंबन्धावच्छिन्नवृत्तित्वान्यतरवत्त्वे सति कारणत्वं असमवायिकारणत्वमित्यर्थः । समवायसंबन्धावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणत्व-तादृशकार्यतानिरूपितसमवायघटितसामानाधिकरण्यसंबन्धावच्छिन्नकारणत्वान्यतरमसमवायिकारणत्वस्वरूपमिति फलितार्थः । तेन समवायेन पटीयरूपाधिकरणे पटे पटस्य समवायघटितसामानाधिकरण्यसंबन्धेन वर्तमानत्वात् पटरूपं प्रति पटस्यासमवायिकारणत्वं दुर्वारमिति शङ्का निरस्ता । अधिकं त्वन्यत्रानुसंधेयम् । द्विविधासमवायिकारणत्वाश्रयमुदाहरति । **यथा तन्तुसंयोग इत्यादि** । अत्रासमवायिकारणत्वलक्षणं असमवायिकारणत्वशब्दाधीनज्ञानीयप्रकारत्वं प्रकारतासंबन्धेन तादृशज्ञानवत्त्वं वा नातो न्यूनतेति बोध्यम् । निमित्तकारणत्वस्वरूपमाह ।

दाहरति—**तन्तुरूपमिति** । कारणेन पटेन सह एकस्मिंस्तन्तौ समवेतत्वात् तन्तुरूपं पटरूपस्यासमवायिकारणमित्यर्थः । निमित्तकारणं लक्षयति—**तदुभयेति** । समवाय्यसमवायिभिन्नकारणं निमित्तकारणमित्यर्थः । करणलक्षणमुपसंहरति—**तदेतदिति** । प्रत्यक्षलक्षणमाह—**तत्रेति** । प्रमाणचतुष्टयमध्ये इत्यर्थः । प्रत्यक्षज्ञानस्य लक्षणमाह—

---

नी. तद्धर्मावच्छिन्नं समवायिकारणमिति परमार्थः । **कारणेन पटेनेति** । स्वकार्यकारणेन पटेनेत्यर्थः । स्वं तन्तुरूपं पटादिकं प्रति तुरीतन्तुसंयोगादीनामसमवायिकारणत्ववारणाय तत्तदसमवायिकारणलक्षणे तत्तद्भिन्नत्वं देयमिति दिक् । ननु तुरीयविषयतानिरूपकस्य निर्विकल्पकज्ञानस्य निरूपकतासंबन्धेन प्रकारताशून्यत्वमिव विशेष्यताशून्यत्वं संसर्गताशून्यत्वमपि लक्षणं भवति, विनिगमनाविरहात्, इत्यतो

रा. प्रतियोगिज्ञानस्य कारणत्वेन रूपोपस्थितिं विना रूपप्रागभावस्य उपस्थित्यसंभवात्,

नृ. **तदुभयाभिन्नमिति** । समवायिकारणत्वभेदासमवायिकारणत्वभेदोभयविशिष्टकारणत्वमित्यर्थः । तेन समवायिकारणत्वादावपि प्रत्येकं निरुक्तकारणद्वयभेदसत्त्वेऽपि न क्षतिः । **निमित्तकारणमिति** । निमित्तकारणत्वरूपमित्यर्थः । निरुक्तकारणत्वाश्रयमुदाहरति । **यथा तुरीवेमादिकमिति** । अत्र निमित्तकारणशब्दाधीनज्ञानीयप्रकारत्वं प्रकारतासंबन्धेन तादृशज्ञानवत्त्वं वा निमित्तकारणत्वसामान्यलक्षणम् । तेन न न्यूनतेति हृदयम् । कारणत्वस्वरूपमुक्त्वा तद्विशेषकरणत्वस्वरूपमुपसंहरति । **तदेतदिति** । तल्लक्षणलक्षितं अनुपदं निरुक्तं यत् त्रिविधं कारणत्वं तन्मध्य इत्यर्थः । घटकत्वं सप्तम्यर्थः । तस्यासाधारणकारणत्वेऽन्वयः । तथा च निरुक्तकारणतात्रयघटकासाधारणकारणत्वमेव कारणत्वमित्यर्थः । असाधारणत्वं च व्यापारसंबन्धावच्छिन्नत्वम् । तथा च व्यापारसंबन्धावच्छिन्नकारणत्वं करणत्वस्वरूपमिति भावः । अत्र करणशब्दाधीनबुद्धिनिरूपितप्रकारत्वं प्रकारतासंबन्धेन तादृशबुद्धिमत्त्वं वा करणत्वसामान्यलक्षणमतो न न्यूनतेति ध्येयम् । प्रत्यक्षप्रमाणलक्षणमाह । **तत्रेति** । प्रमाणचतुष्टय इत्यर्थः । घटकत्वं सप्तम्यर्थः । तस्य प्रत्यक्षमिति प्रथमान्तपदोपस्थाप्यप्रत्यक्षेऽन्वयः । **प्रत्यक्षज्ञानकरणमिति** । प्रत्यक्षात्मकज्ञाननिरूपितव्यापारसंबन्धावच्छिन्नकारणतावदित्यर्थः । अत्र प्रत्यक्षशब्दस्य प्रमाणेप्रमितौ च प्रयोगाल्लक्षणवाक्यघटकप्रत्यक्षपदं प्रत्यक्षप्रमितिपरम् । न तु प्रमाणपरमिति स्फुटीकरणाय ज्ञानपदम् । न तु प्रत्यक्षज्ञानत्वेनापि लक्षणे प्रवेशः ज्ञानत्वांशस्य व्यर्थत्वात् । न चैतल्लक्षणवाक्यघटकप्रत्यक्षपदस्य प्रमाणप्रमितिसाधारणप्रत्यक्षसामान्यपरत्वे क्षतिविरहात् प्रमितिविशेषपरत्वस्फुटीकरणफलकतया ज्ञानपदसमर्थनमयुक्तमिति वाच्यम् । तथा सति चक्षुरादिनिरूपितकरणताश्रये अतिव्याप्त्यापत्तेरिति हृदयम् । प्रत्यक्षज्ञान-

इन्द्रियेति । इन्द्रियं चक्षुरादिकम्, अर्थो घटादिः, तयोः संनिकर्षः संयोगादिः, तज्जन्यं ज्ञानमित्यर्थः । तद्विभजते । तद्द्विविधमिति । निर्विकल्पकस्य लक्षणमाह—निष्प्रकारकमिति । विशेषणविशेष्यसं-

---

नी. लक्षणत्रयं दर्शयति—**विशेषणविशेष्येति** । विशेष्यादिविधया विशेष्याद्यनवगाहि ज्ञानमित्यर्थः । तथा च ज्ञानत्वघटितं विशेष्यताशून्यत्वं, विशेषणताशून्यत्वं, संसर्गताशून्यत्वं च लक्षणं पर्यवसितमिति भावः । केचित्तु—ननु निष्प्रकारकत्वं प्रकारता-

रा. पाकजगन्धत्वस्य कार्यतावच्छेदकत्वे च रूपपरावर्तकतेजस्संयोगस्य पाकत्वेन रूपोपस्थितिनियमेन रूपप्रागभावगन्धप्रागभावयोः युगपदुपस्थितत्वमिति भावः । **विशेषणविशेष्यसंबन्धेनेति** । यद्यपि निर्विकल्पके सन्निकर्षविशेषेण घटघटत्वयोः

नृ. लक्षणमाह । **इन्द्रियेति** । इन्द्रियार्थयोस्सन्निकर्षः संयोगादिः । तज्जन्यत्वे सति ज्ञानत्वमित्यर्थः । न च कालविधया चक्षुस्संयोगादिजन्यत्वमादायानुमित्यादावतिव्याप्तिरिति वाच्यम् । कार्यतायां सर्वाधारताप्रयोजकाभिन्नसंबन्धावच्छिन्नत्वनिवेशेनोक्तदोषाभावात् । सन्निकर्षध्वंसेऽतिव्याप्तिवारणाय ज्ञानत्वनिवेशः । अत्र इन्द्रियार्थसन्निकर्षजन्यत्वं तादृशसन्निकर्षनिष्ठसन्निकर्षविभाजकोपाध्यवच्छिन्नकारणतानिरूपितकार्यत्वम् । एवं च सन्निकर्षविभाजकोपाध्यवच्छिन्नकारणतानिरूपितकार्यत्वमेव लक्षणम् । ज्ञानपदम् एतादृशस्य लक्षणत्वलाभायैव । सन्निकर्षध्वंसे निरुक्तकार्यत्वविरहेणैवातिव्याप्त्यप्रसक्तेः अनुमित्यादौ निरुक्तकार्यत्वाभावादेवानतिप्रसक्तेः । जन्यतायां निरुक्तसंबन्धावच्छिन्नत्वमपि न निवेशनीयम् । इदं च न कोऽपि दोषः । लाघवं चेति प्रतिभाति । यद्यपि साक्षात्करोमीत्यनुव्यवसायसिद्धा प्रत्यक्षपदशक्यतावच्छेदकतया सिद्धा वा प्रत्यक्षत्वजातिरेव प्रत्यक्षज्ञानलक्षणमुचितं लघुत्वान्निर्दुष्टत्वाच्च । न तूक्तलक्षणं गुरुत्वात् ईश्वरप्रत्यक्षे अव्याप्तत्वाच्च । तथापि इन्द्रियार्थसन्निकर्षोत्पन्नमव्यपदेश्यमव्यभिचारिव्यवसायात्मकज्ञानं प्रत्यक्षमिति गौतमसूत्रानुरोधेन जन्यप्रत्यक्षस्य लक्ष्यत्वमङ्गीकृत्य गुरुभूतमप्येतल्लक्षणमेवोक्तमिति ध्येयम् । प्रत्यक्षज्ञानं विभजते । **तत् द्विविधमिति** । निरुक्तलक्षणलक्षितप्रत्यक्षज्ञानमित्यर्थः । अत्र प्रत्यक्षमेव द्विविधम् । अनुमित्यादेः सर्वस्यापि सविकल्पकरूपत्वेन निर्विकल्पकरूपत्वाभावात् न द्वैविध्यमिति बोध्यम् । निर्विकल्पकलक्षणमाह । **निष्प्रकारकमिति** । प्रकारत्वानिरूपकमित्यर्थः । सविकल्पकेऽतिव्याप्तिवारणाय विशेषणदलम् । घटादावतिव्याप्तिवारणाय विशेष्यभागः । इदमुपलक्षणम् । सांसर्गिकविषयत्वानिरूपकत्वघटितं विशेष्यत्वानिरूपकत्वघटितं लक्षणान्तरमपि बोध्यम् । अस्मद्गुरुचरणास्तु विलक्षणविषयताशालित्वमेव लघुभूतनिर्दुष्टं निर्विकल्पकलक्षणमिति व्याचकुः । वस्तुतः निर्विकल्पकपदस्य प्रत्यक्षविशेषे

**बन्धानवगाहि ज्ञानमित्यर्थः । ननु निर्विकल्पके किं प्रमाणमिति चेन्न, गौरिति विशिष्टज्ञानं विशेषणज्ञानजन्यं, विशिष्टज्ञानत्वात्, दण्डीति**

---

नी. शून्यत्वम् । प्रकारता च भासमानवैशिष्ट्यप्रतियोगित्वम् । संसर्गावच्छिन्नविषयतेति यावत् । तथा च संसर्गानवगाहिज्ञानत्वमेव संसर्गताशून्यज्ञानत्वमेव वा लक्षणमास्तां लाघवादित्यतस्तथैव मूलार्थमाह—विशेष्यविशेषणेतीत्याहुः । तच्चिन्त्यम् । सिद्धान्ते संसर्गताया इव प्रकारताया अपि विलक्षणविषयतात्मकत्वेन निष्प्रकारत्वरूपलक्षणे गौरवानवकाशादिति दिक् । निर्विकल्पकज्ञानस्यातीन्द्रियतया तत्र प्रत्यक्षप्रमाणासंभवादनुमानं प्रमाणयति—**गौरिति । विशिष्टज्ञानत्वादिति** । विशिष्टबुद्धिं

रा. यथा भानं तद्वत् समवायस्यापि भानं संभवत्येवेति निर्विकल्पकस्य संसर्गाविषयकत्वं

नृ. योगरूढत्वात् निर्विकल्पकपदशक्यतावच्छेदकतया सिद्धप्रत्यक्षत्वव्याप्यजातिविशेषरूपमेव निर्विकल्पकत्वम् । न च सविकल्पकपदशक्यतावच्छेदकतया सिद्धसविकल्पकत्वजातिनिर्विकल्पकत्वजात्योरांशिकनिर्विकल्पात्मकसविकल्पकप्रत्यक्षे समावेशेन सांकर्यान्न तस्य जातित्वसंभव इति वाच्यम् । सविकल्पकत्वस्य प्रत्यक्षत्वजात्या सांकर्येण जातित्वासंभवात् स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्यस्वसमानाधिकरणाभावप्रतियोगित्वैतत्त्रितयसंबन्धेन जातिविशिष्टत्वस्यैव साङ्कर्यरूपतया निर्विकल्पकत्वस्य तादृशसविकल्पकत्वेन साङ्कर्यस्यादोषत्वात् । अन्यथा पृथिवीत्वादेरपि घटजलान्यतरत्वादिना साङ्कर्येण जातित्वानुपपत्तेः । तस्मान्निर्विकल्पकत्वस्य जातित्वे न किमपि बाधकमिति प्रतिभाति । एतेन प्रकारत्वानिरूपकत्वविशिष्टज्ञानत्वस्य लक्षणत्वे ज्ञानविशिष्टप्रकारत्वानिरूपकत्वमादाय विनिगमनाविरहः प्रकारत्वानिरूपकत्वज्ञानत्वोभयत्वावच्छिन्नस्य लक्षणत्वे लक्षणतावच्छेदकसंबन्धाप्रसिद्धिरिति दूषणस्य नावकाशः । निष्प्रकारकशब्दार्थमाह । **दीपिकायां विशेषणेत्यादि** । अत्र विशेषणविशेष्ययोस्संबन्ध इति न विग्रहः । विशेषणविशेष्यत्वयोः वैयर्थ्यापत्तेः । किन्तु विशेषणं च विशेष्यं च संबन्धश्च विशेषणविशेष्यसंबन्धाः ।ताननवगाहत इति व्युत्पत्त्या विशेषणानवगाहिज्ञानं संसर्गानवगाहिज्ञानं च निर्विकल्पकस्वरूपम् । तादृशज्ञानत्वं लक्षणमिति लभ्यत इति भावः । **इत्यर्थ इति** । निष्प्रकारकशब्दतात्पर्यार्थः । न च निर्विकल्पकस्यापि घटघटत्वसमवायिविषयकत्वादसंभव इति वाच्यम् । विशेषणाद्यनवगाहीत्यस्य विशेषणाद्यनिरूपकतया उक्तदोषाभावात् निर्विकल्पके प्रमाणाभावात् प्रत्यक्षस्य द्वैविध्यमप्रामाणिकमित्याक्षिपति । **दीपिकायां नन्विति । किस्मान्नमिति** । तस्यातीन्द्रियतया प्रत्यक्षप्रमाणासंभवादिति भावः । **गौरिति । विशिष्टज्ञानमिति** । विशिष्टवैशिष्ट्यबोधनात्मकविशिष्टज्ञानमेव पक्ष इति स्फुटीकरणाय पक्षीभूतविशिष्टज्ञानस्य गौरित्याकारकत्वकथनं । विशिष्टवैशिष्ट्यज्ञानस्यापि पक्षत्वे तस्य विशेषणतावच्छेदकप्रकारक-

**ज्ञानवत् इत्यनुमानस्य प्रमाणत्वात् । विशेषणज्ञानस्यापि सविकल्पकत्वेऽनवस्थाप्रसङ्गान्निर्विकल्पकासिद्धिः । सविकल्पकं लक्षयति । सप्रकारकमिति । नामजात्यादिविशेष्यविशेषणसम्बन्धावगाहि ज्ञानमित्यर्थः ।**

---

**नो.** प्रति विशेषणज्ञानस्य कारणत्वान्नाप्रयोजकताशङ्केति भावः । सविकल्पकस्य विशिष्टबुद्धित्वेन विशेषणज्ञानजन्यत्वानियमादिति भावः । **विशेष्यविशेषणसम्बन्धाव-**

**रा.** दुर्घटं तथापि संसर्गनिरूपितसांसर्गिकविषयताशून्यत्वमेव विवक्षणीयम् । समवायस्य घटघटत्वाभ्यां तुल्यतया विषयत्वेऽपि तयोस्संसर्गतया समवायस्य निर्विकल्पके भानाभावान्नानुपपत्तिरिति ध्येयम्। **जात्यादीति।** आदिना गुणक्रिययोः संग्रहः। इन्द्रियसन्नि-

**नृ.** निर्णयजन्यत्वेन विशेषणज्ञानजन्यत्वस्यापि सिद्धतया अंशतः सिद्धसाधनापत्तेः । न तु गौरित्याकारकत्वविशिष्टज्ञानत्वेन पक्षता गौरवात् प्रयोजनाभावाच्च। किन्तु निरवच्छिन्नगोत्वप्रकारतानिरूपितनिरवच्छिन्नविशेष्यताशालिज्ञानत्वादिनेति हृदयम् । **विशेषणज्ञानजन्यमिति** । अत्र विशेषणज्ञाननिष्ठसमवायसंबन्धावच्छिन्नकारणतानिरूपितकार्यत्वं विशेषणज्ञाननिष्ठकारणतानिरूपितसमवायसंबन्धावच्छिन्नकार्यत्वं वा बोध्यम् । तेन कालिकसंबन्धेन विशेषणज्ञानजन्यत्वमादाय न सिद्धसाधनम् । **विशिष्टज्ञानत्वादिति** । प्रकारतानिरूपकत्वविशिष्टज्ञानत्वादित्यर्थः । ज्ञानीयप्रकारतानिरूपकत्वादिति यावत् । तेन नोक्तदोषः । न चेश्वरज्ञाने निरुक्तहेतुसत्त्वाद्व्यभिचार इति वाच्यम् । कालिकस्वरूपोभयसंबन्धेन हेतुत्वस्वीकारात् । सविकल्पकलक्षणमाह । **मूले सप्रकारकं ज्ञानमिति** । प्रकारतानिरूपकत्वविशिष्टज्ञानत्वं ज्ञानीयप्रकारतानिरूपकत्वं वा सविकल्पकलक्षणमित्यर्थः । इदमुपलक्षणम् । ज्ञानीयविशेष्यतानिरूपकत्वं ज्ञानीयसांसर्गिकविषयतानिरूपकत्वं च तल्लक्षणमित्यपि बोध्यम् । सविकल्पकस्वरूपमाह । **यथेति** । **डित्थोऽयमिति** । इदं च नामप्रकारकज्ञानमात्रोपलक्षकम् । **ब्राह्मणोऽयमिति** । इदं च जातिप्रकारकज्ञानमात्रोपलक्षकम् । **श्यामोऽयमिति** । इदं च गुणप्रकारकज्ञानमात्रोपलक्षकं । इदमुपलक्षणं । अयं भाव इत्याकारकोपाधिरूपधर्मप्रकारज्ञानस्वरूपं सविकल्पकमित्यपि बोध्यम् । सप्रकारकज्ञानशब्दार्थमाह । **दीपिकायां नामजात्यादीति** । आदिना गुणपरिग्रहः । अत्रापि नामजात्यादिविशेषणविशेष्ययोः संबन्ध इति न विग्रहः । उक्तदोषापत्तेः । किन्तु नामजात्यादिविशेषणं च विशेष्यं च संबन्धश्च तानवगाहत इति व्युत्पत्त्या नामजात्यादिरूपविशेषणावगाहिज्ञानं विशेष्यावगाहिज्ञानं संबन्धावगाहिज्ञानं च सविकल्पकं । तादृशज्ञानत्वं सविकल्पकलक्षणमिति लभ्यते । **इत्यर्थ इति** । सप्रकारकं ज्ञानमिति वाक्यतात्पर्यार्थ इत्यर्थः । न च निर्विकल्पकस्यापि तादृशत्वादतिव्याप्तिरिति वाच्यम् । विशेषणविशेष्य-

सविकल्पकमुदाहरति । **यथेति** । इन्द्रियार्थसंनिकर्षं विभजते । **प्रत्यक्षेति** । संयोगसंनिकर्षमुदाहरति । **चक्षुषेति** । द्रव्यप्रत्यक्षे सर्वत्र संयोगः संनिकर्षः । आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन, ततः प्रत्यक्षज्ञानमुत्पद्यते इत्यर्थः । संयुक्तसमवायमुदाहरति । **घटरूपेति** । तत्र युक्तिमाह । **चक्षुःसंयुक्त इति** । संयुक्तसमवेतसमवायमुदाहरति । **रूपत्वेति** । समवायमुदाहरति । **श्रोत्रेणेति** । तदुपपादयति । **कर्णेति** । ननु दूरस्थशब्दस्य कथं श्रोत्रसम्बन्ध इति

---

नी. **गाहीति** । अत्राप्युक्तरीत्या लक्षणत्रयं बोध्यम् । **मन इन्द्रियेणेति** । संयुज्यते इत्यनेनान्वयः । एवमग्रेऽपि । आत्मप्रत्यक्षसंग्रहस्तु आत्मा मनसा संयुज्यते, ततः प्रत्यक्षज्ञानमुत्पद्यते इति योजनान्तरेण । **कथं श्रोत्रसंबन्ध इति** । न च श्रोत्रस्य नभोरूपत्वेन तत्समवायो दूरस्थशब्दप्रत्यक्षजनक इति वाच्यम् । अतिप्रसङ्गभङ्गाय कर्णविवरावच्छिन्ननभोऽनुयोगिकत्वविशिष्टसमवायस्यैव प्रत्यक्षहेतुत्वाङ्गीकारेण तादृश-

रा. कर्षजन्यमित्युक्ते आत्ममनस्संयोगजन्यज्ञानमात्रे प्रत्यक्षत्वापत्तिरिति अर्थपदम् । अर्थो विषयः विषयेन्द्रियसन्निकर्षजन्यत्वं प्रत्यक्षस्यैव नानुमित्यादेरिति भावः । यद्यप्यर्थ-

नृ. संबन्धावगाहीत्यस्य विशेषणत्वविशेष्यत्वसांसर्गिकविषयत्वनिरूपकत्वार्थकतया निर्विकल्पकस्यातादृशत्वेन उक्तदोषाप्रसक्तेः । **सविकल्पकमुदाहरतीति** । सविकल्पकस्वरूपमाहेत्यर्थः । इन्द्रियार्थसन्निकर्षं विभजते । **मूले प्रत्यक्षज्ञानहेतुरिति** । इदं च प्रत्यक्षज्ञाननिरूपणानन्तरं सन्निकर्षनिरूपणे उपजीव्योपजीविभावस्य सङ्गतित्वलाभाय । **इन्द्रियार्थसन्निकर्ष इति** । इन्द्रियार्थयोर्लौकिकसन्निकर्ष इत्यर्थः । **षड्विध इति** । प्रकारषट्कान्यतमविशिष्ट इत्यर्थः । तत्र लौकिकविषयत्वप्रयोजकत्वं संयोगादिविशेषणतान्वान्यतमत्वं वा लौकिकसन्निकर्षसामान्यलक्षणमिति बोध्यम् । षड्विधसन्निकर्षं दर्शयति । **संयोग इति** । **संयुक्तसमवाय इति** । समवायस्वरूपोभयघटितसामानाधिकरण्यसंबन्धेन संयोगविशिष्टसमवाय इत्यर्थः । तेन घटादौ चक्षुरादिसंयोगशून्यकालेऽपि कालान्तरीणचक्षुरादिसंयोगाश्रयघटादिसमवायस्य सर्वदा रूपादौ सत्त्वेऽपि न सर्वदा रूपादिचाक्षुषाद्यापत्तिः । **संयुक्तसमवेतसमवाय इति** । स्वसमवायिसमवेतीयस्वरूपसंबन्धेन संयोगविशिष्टसमवाय इत्यर्थः । तेन नोक्तदोषः । **समवाय इति** । श्रोत्रावच्छिन्नसमवाय इत्यर्थः । तेन दूरस्थशब्दस्य न श्रावणप्रत्यक्षापत्तिः । **समवेतसमवाय इति** । श्रोत्रसमवेतसमवाय इत्यर्थः । कर्णविवरावच्छेद्यशब्दसमवाय इति यावत् । तेन नोक्तरीत्या दोषः । **विशेषणविशेष्यभावश्चेति** । विशेषणता चेतीत्यर्थः । अत्राभावाधिकरणसंबन्धस्य विशेष्यते-

नी. संबन्धस्य दूरस्थशब्देऽभावादिति भावः । प्रथमतो भेरीदण्डसंयोगेन नभसि शब्द उत्पद्यते, तेन शब्दाः, तैश्च पुनः शब्दा इत्येवं क्रमेण निखिलदिगवच्छे-

रा. सन्निकर्षजन्यत्वोक्तौ न क्वाप्यतिव्याप्तिः । तथाप्यनुमितिशाब्दबोधादेः पराम-

नृ. त्यपि संज्ञा वर्तते । तथा च विशेषणताशब्दविशेष्यताशब्दयोः पर्यायत्वमित्येकदेशिमतानुसारेण विशेषणविशेष्यभावश्चेत्युक्तमिति ध्येयम् । इन्द्रियसंयुक्तविशेषणता चेतीति यावत् । संयोगादिसन्निकर्षस्थलं क्रमेण दर्शयति । **चक्षुषेति** । चक्षुःपदं इन्द्रियमात्रोपलक्षकम् । **घटप्रत्यक्षे जननीय इति** । अत्र घटपदं द्रव्यमात्रोपलक्षकम् । एवं चेन्द्रियकरणकजननाश्रये द्रव्यप्रत्यक्ष इत्यर्थः । यद्यपि प्रत्यक्षेन्द्रियाकरणकजननाप्रसिद्धया जननेन्द्रियकरणकत्वविशेषणं अव्यावर्तकम्, तथापि द्रव्ये इन्द्रियसंयोगस्यैव सन्निकर्षत्वमिति स्फुटीकरणाय जनने तादृशविशेषणमिति ध्येयम् । तथा च द्रव्यवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्षं प्रति समवायसंबन्धेन इन्द्रियसंयोगः कारणमिति भावः । अत्रेन्द्रियसंयोगस्य नेन्द्रियसंयोगत्वेन हेतुत्वं, इन्द्रियसंयोगत्वस्य इन्द्रियप्रतियोगिकत्वविशिष्टसंयोगत्वरूपत्वं संयोगत्वविशिष्टेन्द्रियप्रतियोगिकत्वरूपत्वं वेत्यत्र विनिगमनाविरहेण गुरुरूपेण कार्यकारणभावद्वयापत्तेः । इन्द्रियाणामननुगतत्वाच्च । नापि तादृक्संयोगनिष्ठतत्तद्व्यक्तित्वेन व्यभिचारात् । किन्तु तादृशसंयोगनिष्ठप्रत्यक्षजनकतावच्छेदकतया सिद्धवैजात्यपुरस्कारेणैवेति हृदयम् । यद्यपि घटादिरूपद्रव्यस्य तत्समवेतानां च संयुक्तसमवेतसमवायेनैव प्रत्यक्षसंभवात् संयोगस्य संयुक्तसमवायस्य च सन्निकर्षत्वमनुचितम्, तथापि आत्मप्रत्यक्षानुरोधेन संयोगस्य ज्ञानादिप्रत्यक्षानुरोधेन संयुक्तसमवायस्य च सन्निकर्षत्वावश्यकतया लाघवानुरोधेन द्रव्यप्रत्यक्षमात्रे संयोगस्य द्रव्यसमवेतप्रत्यक्षमात्रे संयुक्तसमवायस्य सन्निकर्षत्वमभिहितम् । तथा च यत्र संयोगस्य हेतुत्वसंभवः न तत्र संयुक्तसमवायस्य सन्निकर्षविधया हेतुत्वम् । कारणतावच्छेदकगौरवात् । यत्र संयुक्तसमवायस्य हेतुत्वसंभवः न तत्र संयुक्तसमवेतसमवायस्य तथा हेतुत्वं उक्तयुक्तेः । यत्र तूभयासंभवः तत्रैव संयुक्तसमवेतसमवायस्य सन्निकर्षविधया हेतुत्वं लघुधर्मावच्छिन्नस्य हेतुत्वासंभवादित्याशयः । **घटरूपप्रत्यक्ष इति** । घटपदं द्रव्यमात्रोपलक्षकं । रूपपदं समवेतमात्रोपलक्षकम् । तथा च द्रव्यसमवेतवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्ष इत्यर्थः फलितः । **संयुक्तसमवाय इति** । स्वसमवायिविशेषणतासंबन्धेन विजातीयसंयोगविशिष्टसमवाय इत्यर्थः । **सन्निकर्ष इति** । सन्निकर्षविधया हेतुरित्यर्थः । तदुपपादयति । **चक्षुस्संयुक्त इति** । इन्द्रियसंयुक्तद्रव्यसमवायस्य द्रव्यसमवेतमात्रे सत्त्वादिति फलितार्थः । **रूपत्वसामान्यप्रत्यक्ष इति** । द्रव्यसमवेतसमवेतप्रत्यक्ष इत्यर्थः । द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्ष इति यावत् । **संयुक्तसमवेतसमवाय इति** ।

चेन्न, वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा शब्दान्तरोत्पत्तिक्रमेण

---

नी. देन शब्दोत्पत्तेरङ्गीकरणपरतया तदंशेऽपि साम्यनिर्वाहायाह—**कदम्बेति** । **द्रष्टव्यमिति** । अत्रेदमवधेयम् । विशेषणतानां संयुक्तविशेषणतात्वादिरूपेण बहुविधत्वेऽपि

रा. र्थपदार्थोपस्थित्यादिजन्यतया परामर्शादेरपि ज्ञानलक्षणसन्निकर्षतया अनुमित्यादावतिव्याप्तिरिति इन्द्रियपदम् । तथा चेन्द्रियप्रतियोगिकत्वे तादृशज्ञानरूपसन्निकर्षस्य अनुमित्यादावहेतुतया नातिव्याप्तिरिति ध्येयम् । **वीचीति** ।

नृ. स्वसमवायिसमवेतविशेषणतासंबन्धेन विजातीयसंयोगविशिष्टसमवाय इत्यर्थः । तदुपपादयति । **चक्षुस्संयुक्त इति** । इन्द्रियसंयुक्तद्रव्यसमवेतगुणकर्मसमवायस्य गुणत्वकर्मत्वादिरूपद्रव्यसमवेतसमवेतमात्रे सत्त्वादिति फलितार्थः । **श्रोत्रेणेत्यादि** । श्रोत्रकरणकजननाश्रयशब्दप्रत्यक्ष इत्यर्थः । शब्दविषयकश्रावण इति यावत् । शब्दवृत्तिलौकिकविषयतासंबन्धेन श्रावणप्रत्यक्ष इति फलितार्थः । **समवायस्सन्निकर्ष इति** । श्रोत्रावच्छिन्नसमवायः सन्निकर्षविधया हेतुरित्यर्थः । तदुपपादयति । **कर्णविवरेति** । कर्णविशिष्टाकाशस्येत्यर्थः । ननु शब्दप्रत्यक्षे श्रोत्रावच्छिन्नसमवायस्य तथा हेतुत्वे एकस्य शब्दप्रत्यक्षकाले सर्वेषामपि शब्दप्रत्यक्षापत्तिः निरुक्तसन्निकर्षसत्त्वादिति चेन्न । शब्दनिष्ठलौकिकविषयतासंबन्धेन तत्पुरुषीयश्रावणं प्रति तत्पुरुषीयकर्णावच्छेद्यसमवायस्यैव सन्निकर्षविधया हेतुत्वस्वीकारेणोक्तदोषाभावात् शब्दस्येव तत्समवायस्यापि कर्णावच्छेद्यत्वस्वीकारात् अथवा केवलसमवाय एव सन्निकर्षः निरुक्तसंबन्धेन तत्पुरुषीयश्रावणं प्रति तत्पुरुषीयकर्णावच्छेद्यशब्दस्य तादात्म्यसंबन्धेन हेतुत्वस्वीकारेणैवानतिप्रसङ्गात् । तत एवोक्तदोषस्यापि वारणसंभवादिति । समवेतसमवायमुदाहरति । **शब्दत्वसाक्षात्कार इति** । शब्दसमवेतवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्ष इत्यर्थः । **समवेतसमवाय इति** । कर्णावच्छेद्यो यत्समवेतः तत्समवाय इत्यर्थः । तदुपपादयति । **श्रोत्रसमवेत इति** । शब्दसमवेते शब्दत्वादौ श्रोत्रसमवेतसमवायसत्त्वादिति फलितार्थः । ननु भेर्याद्यवच्छेदेन जायमानशब्दस्य कर्णावच्छेद्यत्वाभावात् कर्णाकाशसंयोगस्य शब्दासमवायिकारणत्वाभावेन तदवच्छेदेन प्रथमोत्पत्त्यसंभवाच्च कर्णावच्छेद्यशब्दाप्रसिद्ध्या कथं शब्दश्रावणमिति शब्दातीन्द्रियत्ववादिनाम्मतं निरसितुमादौ तन्मतमुपन्यस्यति । **दीपिकायां नन्वित्यादिना** । **दूरस्थशब्दस्येति** । कर्णभिन्नदेशावच्छेद्यशब्दस्येत्यर्थः । **कथं श्रोत्रसंबन्ध इति** । कथं कर्णावच्छेद्यत्वमित्यर्थः । तथा च कस्यापि शब्दस्य कर्णावच्छेद्यत्वाभावात् न शब्दस्य प्रत्यक्षमिति भावः । **वीचीतरङ्गन्यायेनेति** । यथा आद्यवीची समीपदेशे तरङ्गान्तरं जनयति तत्तरङ्गः समीपदेशे तरङ्गान्तरं जनयति एवं भेर्याद्याकाशसंयोगासमवायिकारणकाद्यशब्दोऽपि समीपदेशावच्छे-

**श्रोत्रदेशे जातस्य श्रोत्रेण संबन्धात्प्रत्यक्षसंभवः । समवेतसमवायमुदाहर-ति । शब्दत्वेति । विशेषणविशेष्यभावमुदाहरति । अभावेति । तदुपपाद-**

---

**नी.** विशेषणतात्वेनैव परिगणनान्न षड्विधत्वहानिः । न चैवं समवायत्वेनैव संयुक्तसमवायादीनामनुगमः कुतो न कृत इति वाच्यम्, स्वतन्त्रेच्छस्येत्यादिन्यायानुसारेणादोषादिति । **एतेन** अभावप्रमाया विशेषणविशेष्यभावसन्निकर्षजन्यत्वप्रदर्शनेन ।

**रा.** वीचीतरङ्गः ऊर्मिपरम्परा, तन्न्यायेनेत्यर्थः । यत्र शब्द उत्पद्यते तद्बहिर्वर्तुलाकारेण सर्वदिक्षु शब्दान्तरमुत्पद्यते । पुनःतद्बहिर्वर्तुलाकारेण शब्दान्तरमिति क्रमेणेत्यर्थः । कदम्बमुकुलन्यायस्तु शब्दोत्पत्तिदेशात् बहिः सकलदिक्षु भिन्नभिन्नशब्दा उत्पद्यन्ते पुनस्तद्बहिस्तथैव शब्दान्तराणीति बोध्यम् । **भूतले घटो नास्ति**॥ पटाभाववत् भूतलमित्यत्र भूतलांशे घटाभावस्य विशेषणतया घटाभावे विशेषणत्वं सन्निकर्षः । भूतले घटो नास्तीत्यत्र अभावस्य विशेष्यतया भानात् विशेष्यत्वमेव सन्निकर्षः । यद्यपि तज्ज्ञानीयविशेषणत्वविशेष्यत्वयोः तज्ज्ञाने जननीये सन्निकर्षत्वासंभवः । तज्ज्ञानात् पूर्वं तज्ज्ञानीयविशेषणत्वविशेष्यत्वयोरभावात् कारणस्य कार्योत्पत्तेः पूर्वं अपेक्षितत्वात् । न च विषयस्य ज्ञानस्वरूपपक्षे ज्ञानात्

**नृ.** देन शब्दान्तरं जनयति । सोऽपि शब्दः स्वसन्निहितदेशावच्छेदेन शब्दान्तरं जनयतीति रीत्या कर्णविवरावच्छेदेनोत्पन्नशब्दो गृह्यत इति वीचीतरङ्गन्यायेन शब्दोत्पत्तिक्रम इति भावः । उक्तन्यायेन शब्दोत्पत्तिस्वीकारे कालविलम्ब इत्यस्वरसं हृदि निधायाह । **कदम्बमुकुळन्यायेनेति** । यथा प्रथमतः उत्पन्नं कदम्बमुकुळं सर्वदिगवच्छेदेनैकदैवानेकमुकुळानि जनयति एवं भेर्याद्याकाशसंयोगासमवायिकारणकाद्यशब्दोऽपि सर्वदिगवच्छेदेनैकदैवानेकशब्दान् जनयति परन्तु यद्दिगभिमुखो वायुः तद्दिगवच्छेदेनाधिकशब्दान् जनयतीति कदम्बमुकुळन्यायेन शब्दोत्पत्तिक्रम इति भावः । **श्रोत्रदेशे जातस्येति** । कर्णावच्छेदेन जायमानशब्दस्येत्यर्थः । **श्रोत्रसंबन्धादिति** । श्रोत्रावच्छिन्नसमवायरूपसन्निकर्षसत्त्वादित्यर्थः । **प्रत्यक्षत्वसंभव इति** । तथा च शब्दसामान्यस्यातीन्द्रियत्वमप्रामाणिकमिति भावः । अत्र भेरीसन्निहितपुरुषीयकर्णावच्छेदेन कदाचिद्भिभ्यादिशब्दानामुत्पत्तिसंभवाच्छब्दासमवायिकारणकशब्दमात्रस्य प्रत्यक्षत्वं भेर्याकाशसंयोगासमवायिकारणकाद्यशब्दस्य कर्णावच्छेद्यत्वाभावान्न प्रत्यक्षत्वम् । अत एवाद्यशब्दोऽतीन्द्रिय इति सकलतान्त्रिकसिद्धान्तोऽपि संगच्छत इति हृदयं । अन्त्यशब्दस्य कर्णावच्छेदेनोत्पन्नत्वेऽपि हीनशक्तिमत्त्वान्न प्रत्यक्षत्वमित्यन्ये । उपान्त्यशब्दोऽपीत्यपरे । **मूले अभावप्रत्यक्ष इति** । अभावनिष्ठलौकिकविषयतासंबन्धेन प्रत्यक्ष इत्यर्थः । **विशेषणविशेष्यभाव इति** । विशेषणतेत्यर्थः । **सन्निकर्ष इति** । सन्निकर्षविधया

यति । **घटाभाववदिति** । भूतले घटो नास्तीत्यत्र अभावस्य विशे-

---

नी. **प्रमाणान्तरत्वम्** प्रत्यक्षाद्यतिरिक्तप्रमाणत्वम् । नन्वनुपलब्धेः प्रमाणान्तरत्वानङ्गीकारे घटोपलब्धिदशायां तदभावप्रत्यक्षापत्तिः, मम मते तु—अनुपलब्ध्यात्मकप्रमाणान्तराभावान्नापत्तिरिति भाट्टशङ्कां परिजिहीर्षुर्योग्यानुपलब्धेरिन्द्रियसहकारित्वमात्रे-

रा. पूर्वं विषयस्यासत्त्वेऽपि अतिरिक्तत्वपक्षे तत्सत्त्वं संभवत्येवेति वाच्यम् । तथा सति ज्ञानभेदेन विषयताभेदे प्रमाणाभावेन ज्ञानीयविशेषणताया अपि ज्ञानान्तरजनने सन्निकर्षत्वमक्षुण्णमेवेति विशेष्यत्वस्य सन्निकर्षत्वानुसरणमफलम् । तथापि स्वरूपनिरूपितविशेषणतया स्वस्मिन् जननीये स्वस्य सन्निकर्षत्वमित्यभिप्रायेणेदं प्रकारताविशेष्यतासंसर्गतास्तिस्रो विषयताः परस्परं भिन्नाः । न तु ज्ञानभेदेन भिन्नाः । तथा च भूतले घटो नास्तीत्यत्र तज्ज्ञानीयविशेषणतायाः घटाभावे सत्त्वेन विशेष्यत्वं सन्निकर्ष इत्युक्तम् । वस्तुतस्तु विशेषणत्वं स्वरूपसंबन्ध एव । तच्च कालिकदैशिकदिक्कृतभेदेन त्रिविधम् । कालिकं कालस्वरूपमेव । दैशिकं तत्तदधिकरणदेशस्वरूपम् । दिक्कृतं दिग्रूपमेव । अत एव तत्तत्कालीनतत्तद्भूतलादिकं तत्तदभावानां संबन्ध इत्युक्तं ग्रन्थान्तरेष्विति ध्येयम् । **एतेन** विशेषणतायाः सन्निकर्षत्वस्वीकारेणेत्यर्थः । अभावे क्लृप्तसन्निकर्षाणामभावेन मीमांसकैः अभावग्राहकत्वेनानुपलब्धेः प्रमाणान्तरत्वं स्वीकृतम् । विशेषणतायाः सन्निकर्षत्वे च प्रत्यक्षेणैवाभावग्रहणसंभवात् किमनुपलब्धेः प्रमाणान्तरत्वेनेति भावः । ननु एवमनुपलब्धेः अभावग्राहकत्वाभावे भूतलादौ घटवत्ताभ्रमदशायामपि घटाभावप्रत्यक्षापत्तिः । न चाभावग्राहकसन्निकर्षत्वेऽपि विशिष्टबुद्धिमात्रे बाधनिश्चयाभावस्य कारणत्वेन घटवत्तानिश्चयस्य प्रतिबन्धकत्वेन घटभ्रमदशायां न घटाभावप्रत्यक्षापत्तिरिति वाच्यम् । अलौकिकसन्निकर्षाजन्यदोषविशेषाजन्यविशिष्टबुद्धिं प्रत्येव बाधनिश्चयस्य प्रतिबन्धकत्वात् इत्यत आह—

नृ. युक्त इत्यर्थः । अभावप्रत्यक्ष इत्युपलक्षणम् । समवायप्रत्यक्षे विशेषणतैव सन्निकर्ष इत्यपि बोध्यम् । अनुपलब्धेः प्रमाणान्तरत्वं निरसितुं विशेषणतासन्निकर्षेणाभावस्य प्रत्यक्षविषयत्वमुपपादयति । **घटाभाववद्भूतलमित्यत्रेति** । इत्याकारकप्रत्यक्ष इत्यर्थः । निरूपितत्वं सप्तम्यर्थः । तस्य विशेषणत्वेऽन्वयः । **चक्षुस्संयुक्तभूतल इति** । भूतले चक्षुस्संयुक्तत्वविशेषणं अभावे इन्द्रियसंबन्धविशेषणतारूपसन्निकर्षसत्त्वप्रतिपादनाय । अन्यथा तादृशप्रत्यक्षे केवलभूतलांशे एव घटाभावस्य विशेषणत्वेनासांगत्यापत्तिः । तथा च निरुक्तविशेषणतासन्निकर्षवशादेवाभावस्य प्रत्यक्षविषयत्वसंभवान्नानुपलब्धेः प्रमाणान्तरत्वमिति भावः । न्यूनतापरिहारायाभावस्य विशेष्यतया प्रत्यक्षविषयत्वमुपपादयति । **दीपिकायां भूतले घटो नास्तीत्यत्रेति** । आधेयतासंबन्धेन भूतलप्रकारकघटाभावविशेष्यकप्रत्यक्ष इत्यर्थः । निरूपि-

ष्यत्वं द्रष्टव्यम् । एतेन अनुपलब्धेः प्रमाणान्तरत्वं निरस्तम् । यद्यत्र घटोऽभविष्यत्तर्हि भूतलमिवाद्रक्ष्यत, दर्शनाभावान्नास्तीति तर्कित-

---

**नी.** णैव निर्वाहे अतिरिक्तप्रमाणत्वं न सम्भवतीत्याह । **यद्यत्रेत्यादिना । अत्र** चक्षुःसंयोगादिमद्भूतले । तर्कस्यापादकाभावसाधकाविपर्ययप्रतियोग्यापाद्यकत्वरूपविपर्यये तत्कोटिपर्यवसायित्वं दर्शयति—**दर्शनाभावान्नास्तीति ।** तद्दर्शनाभावान्नास्तीत्यर्थः । तर्किता आपादिता प्रतियोगिनो घटादेः सत्त्वस्य सत्त्वप्रसक्तेर्विरोधिनी या उपलब्धिस्तत्प्रतियोगिकोऽभावोऽनुपलब्धिस्तत्सहकृतेनेत्यर्थः । विरोधित्वविशेषणमुपलब्धेरनाहार्यत्वसूचनाय । प्रतियोगिसत्तापादनापादितोपलम्भप्रतियोगिकत्वरूपयोग्यताविशिष्टानुपलब्धिसहकृतेनेति तु परमार्थः । आलोकसंयोगाद्यसत्त्वदशायां यद्यत्र घटः स्यात्तर्हि उपलभ्येतेत्यापादनासंभवेन योग्यानुपलब्ध्यभावान्न तत्र घटाभावप्रत्यक्षमिति संक्षेपः । केचित्तु—**तर्कितेत्यादि ।** तर्कितमारोपितं यत्

**रा.** **यद्यत्रेति ।** तथा च प्रतियोग्युपलंभाभावस्य अभावप्रत्यक्षे जननीये प्रत्यक्षप्रमाणसहकारित्वेन न प्रतियोगिभ्रमदशायां अभावप्रत्यक्षापत्तिरिति भावः । अत्र चान्धकारे घटाभावप्रत्यक्षापत्तिवारणाय द्रव्यप्रत्यक्षे च द्रव्यगताभावप्रत्यक्षे च आलोकसंयोगस्य अवश्यं कारणत्वमङ्गीकर्तव्यम् । तथा सति अन्धकारे प्रत्यक्षानापत्तेः अन्धकारस्य तेजोऽभावरूपत्वादित्यतः तद्वारणाय उपलंभे तर्कितप्रतियोगिसत्त्वं विशेषणमुपात्तम् । अन्धकारे च घटोपलंभाभावो न तर्कितप्रतियोगिसत्त्वविरोधि । अन्धकारे घटसत्त्वेऽपि घटोपलंभाभावसत्त्वात् । तर्कितत्वं च अज्ञानविषयत्वं । वस्तुतः प्रतियोगिसत्त्वं नास्तीति सूचितम् । नन्वेवं अनुपलब्धेरपि अभाव-

**नृ.** तत्वं सप्तम्यर्थः । तस्य विशेष्यत्वेनान्वयः । **एतेनेति ।** निरुक्तसन्निकर्षबलादभावस्य प्रत्यक्षविषयत्वेनेत्यर्थः । **अनुपलब्धेरिति ।** योग्यानुपलब्धेरित्यर्थः । **प्रमाणान्तरत्वमिति ।** प्रमितिकरणत्वमित्यर्थः । नन्वनुपलब्धेः प्रमितिकरणत्वानङ्गीकारे भूतलादौ घटादिभ्रमकाले घटाभावादिचाक्षुषापत्तिः निरुक्तविशेषणतासन्निकर्षसत्त्वादित्याशङ्कामभावप्रत्यक्षे योग्यानुपलब्धेः सहकारिकारणत्वं स्वीकृत्य परिहरति । **यद्यत्रेति ।** भूतले यदि घटस्स्यादित्यर्थः । **तदा भूतलमिवेति ।** भूतलप्रत्यक्षमिव घटप्रत्यक्षमपि स्यादित्यर्थः । **दर्शनाभावादिति ।** आपत्तिविषयघटप्रत्यक्षस्य विशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकाभावरूपकारणसहकृतेन्द्रियादित्यर्थः । **नास्तीति ।** घटो नास्तीत्याकारकेत्यर्थः । एतस्याभावज्ञानोत्पत्तावित्यग्रिमेणान्वयः । उक्तार्थमेव विवृणोति । **तर्कितेति ।** प्रतियोग्यारोपजन्यारोपविषयेति महत्त्वावच्छिन्नोद्भूतरूपावच्छिन्नालोकसंयोगावच्छिन्नचक्षुस्संयोगसहकृतघटादिनिष्ठव्याप्यतानिरूपित -व्यापकताश्रयेति वा अर्थो लभ्यते । आपादकापाद्ययोः व्याप्यव्यापकभावनैयत्यात्

प्रतियोगिसत्त्वविरोध्यनुपलब्धिसहकृतेन्द्रियेणैव अभावज्ञानोत्पत्तौ अनुपलब्धेः प्रमाणान्तरत्वासंभवात् । अधिकरणज्ञानार्थमपेक्षणीयेन्द्रियस्यैव करणत्वोपपत्तावनुपलब्धेः करणत्वायोगात् । विशेषणविशेष्यभावो विशे-

---

नी. प्रतियोगिसत्त्वम्, तद्विरोधिनी यानुपलब्धिः, तत्सहकृतेनेत्यर्थः । एतावता प्रतियोगिसत्त्वरूपकारणाभावप्रयोज्योपलब्ध्यभावोऽभावप्रत्यक्षे कारणं, न तु इतरकारणविरहप्रयोज्योपलब्ध्यभाव इति सूचितम् । अत एवान्धकारे उपलम्भाभावसत्त्वेऽपि न घटाभावप्रत्यक्षमित्याहुः । नन्वभावप्रमायामिन्द्रियस्य करणत्वमनुपलब्धेः सहकारित्वं च त्वया कल्पनीयम् । तदपेक्षयानुपलब्धेरेव करणत्वकल्पनं वरम् इत्याशङ्क्याभावाधिकरणभूतलप्रत्यक्षे इन्द्रियस्यावश्यमपेक्षणीयतया क्लृप्तेनैवेन्द्रियकरणत्वेनाभावप्रत्यक्षोत्पत्तौ अनुपलब्धेर्विजातीयप्रमितिकरणत्वकल्पनमयुक्तमित्याह—**अधिकरणेति** । ननु विशेषणविशेष्यभावाख्योऽतिरिक्तसंबन्धः कल्पनीयस्त्वयेत्यत आह । **विशेषणविशेष्यभाव इति** । अत्रेदं बोध्यम्—प्रत्यक्षं द्विविधम्—लौकि-

रा. प्रत्यक्षकारणत्वस्य आवश्यकत्वे तस्या एवाभावप्रत्यक्षे कारणत्वमस्तु प्रत्यक्षस्य तत्कारणत्वे किमित्यत आह । **अधिकरणेति** । अधिकरणं विना अभावग्रहानुत्पत्त्या तत्र क्लृप्तकारणेन्द्रियेणैवाभावग्रहोपपत्तौ प्रमित्यन्तरकल्पनायाः तत्र कारणान्तरकल्पनायाश्चान्याय्यत्वादिति भावः । ननु इन्द्रियस्याभावग्रहे न कारणत्वसंभवः, क्लृप्तसन्निकर्षाणामभावात् । विशेषणतारूपसन्निकर्षकल्पने च पदार्थान्तरकल्पनाप्रयुक्तगमगौरवमित्यत आह— **विशेषणविशेष्यभाव इति** । विशेषणत्वं विशेष्यत्वं

नृ. केवलघटादेः व्याप्यत्वासंभवाच्च । तेनाभावप्रत्यक्षात्पूर्वं कदाचित्तर्कविरहेऽपि न क्षतिः । **प्रतियोगिसत्त्वविरोधीति** । प्रतियोगिप्रतियोगिकानुपलब्धीत्यर्थः । निरुक्तव्यापकताश्रयोपलम्भस्य विशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकत्वरूपयोग्यताविशिष्टाभावसहकृतेन्द्रियेणैवेति समुदितग्रन्थार्थः । **अभावज्ञानोत्पत्ताविति** । घटाभावादिनिष्ठलौकिकविषयताशालिप्रत्यक्षोपपत्तिसंभव इत्यर्थः । **अनुपलब्धेरिति** । निरुक्तयोग्यताविशिष्टाभावरूपानुपलब्धेरित्यर्थः । **प्रमाणान्तरत्वासंभवादिति** । प्रमितिकरणत्वास्वीकारादित्यर्थः । ननु विनिगमकाभावादिन्द्रियसहकृतनिरुक्तानुपलब्धेरेव प्रमितिकरणत्वमास्तामित्याशङ्क्यां विनिगमकप्रदर्शनेन परिहरति । **अधिकरणज्ञानार्थमिति** । भूतलादिप्रमितिकरणत्वेनोभयमतासिद्धेन्द्रियस्यैवेत्यर्थः । **करणत्वोपपत्ताविति** । घटाभावादिविषयप्रमितिकरणत्वसंभव इत्यर्थः । **अनुपलब्धेरिति** । योग्यानुपलब्धेरित्यर्थः । **करणत्वस्येति** । **घटात्यन्ताभावस्येति** । प्रमितिकरणस्येत्यर्थः । **अयुक्तत्वाच्चेति** । अप्रामाणिकत्वाच्चेत्यर्थः । नन्वभावाधिकरण-

षणाविशेष्यस्वरूपमेव, नातिरिक्तः संबन्धः । प्रत्यक्षज्ञानमुपसंहरंस्तस्य करणमाह । **एवमिति** । असाधारणकारणत्वादिन्द्रियं प्रत्यक्षज्ञानकरण-

---

नी. कमलौकिकं चेति । लौकिकत्वं च विषयिताविशेषः । लौकिके षोढा सन्निकर्षः कारणम् । अलौकिके तु सामान्यलक्षणा, ज्ञानलक्षणा, योगजधर्मश्चेति त्रिविधा प्रत्यासत्तिः । तत्र सामान्यलक्षणा धूमत्वादिरूपा तज्ज्ञानरूपा वा । सामान्यं जातिः तज्ज्ञानं वा लक्षणं स्वरूपं विषयो वा यस्या इति व्युत्पत्तेः । सा चाश्रयाणां निखिलधूमादीनामलौकिकप्रत्यक्षे उपयुज्यते । अतीतानागतधूमादिषु चक्षुःसंयोगादेरभावात्, इन्द्रियाणामसंनिकृष्टानां प्रत्यक्षजनकत्वात् । ज्ञानलक्षणातु सुरभिचन्दनमिति, चाक्षुषोपनीतभाने सौरभेण चक्षुषो योग्यसंनिकर्षाभावात् । एवं योगिनां देशकालवि-

रा. च क्लृप्तविशेषणविशेष्यस्वरूपमेव । नातः तदाधारकल्पनाप्रयुक्तगौरवमिति भावः । **असाधारणकारणत्वं** व्यापारवत्त्वे सति असाधारणकारणत्वम् । चक्षुस्संयोगादावतिव्याप्तिवारणाय व्यापारवत्त्वनिवेशः । आत्ममनस्संयोगद्वारा कारणीभूतात्मादौ अतिव्याप्तिवारणाय असाधारणेति । असाधारणत्वं च प्रकृते अनुभवत्वन्यूनवृत्तिधर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वम् । तेन संस्कारद्वारा स्मृतिजनके अनुभवे नातिव्याप्तिरिति ध्येयम् । वस्तुतस्तु असाधारणकारणत्वादित्यस्य प्रमितिविभाजकोपाधिपर्याप्तावच्छेदकताककार्यतानिरूपितकारणताशालित्वम् । तेन संस्कारद्वारा स्मृतिजनके अनुभवेऽपि नातिव्याप्तिरित्यनुसंधेयम् । अथवा असाधारणकारणत्वादित्यस्य प्रमितिविभाजकोपाधिपर्याप्तावच्छेदकताककार्यतानिरूपितकारणतावत्त्वादित्यर्थः । चक्षुस्संयोगादिजन्यतावच्छेदकतापर्याप्तिस्तु न प्रत्यक्षत्वादौ । तस्य न्यून-

नृ. संबन्धतया विशेषणतास्वीकारे अतिरिक्तपदार्थकल्पनागौरवात् एतन्मते परमवाशिष्यते तदित्याशङ्कां सप्तपदार्थान्तर्भावप्रतिपादनेन परिहरति । **विशेषणविशेष्यभावेति** । विशेषणतात्वसन्निकर्ष इत्यर्थः । **विशेषणविशेष्यस्वरूप एवेति** । अभावस्वरूप एव अधिकरणस्वरूप एवेत्यर्थः । एवकारार्थं विवृणोति । **नातिरिक्त इति** । विशेषणताख्यसन्निकर्षः नाभावाधिकरणाभ्यामतिरिक्तपदार्थ इत्यर्थः । प्रत्यक्षज्ञानमुपसंहरति । **मूले एवं सन्निकर्षजन्यमिति** । निरुक्तसन्निकर्षषट्कान्यतमतर्कजन्यज्ञानजन्यमित्यर्थः । करणस्वरूपं दर्शयति । **तत्करणमिन्द्रियमिति** । निरुक्तलक्षणलक्षितप्रत्यक्षप्रमाकरणमिन्द्रियमेवेत्यर्थः । प्रत्यक्षप्रमाणमुपसंहरति । **तस्मादिति** । इन्द्रियस्य प्रत्यक्षप्रमाणत्वादित्यर्थः । **इन्द्रियं प्रत्यक्षप्रमाणमिति सिद्धमिति** । इन्द्रियमेव प्रत्यक्षप्रमाणमिति ज्ञेयमित्यर्थः । तत्करणमिन्द्रियमित्यस्य प्रतीकमध्यत्वादिह तु संवलितमर्थमाह । **दीपिकायां असाधारणकारणत्वादिति**

मित्यर्थः । प्रत्यक्षप्रमाणमुपसंहरति । **तस्मादिति** ॥

इति प्रत्यक्षपरिच्छेदः समाप्तः ॥

---

**नी.** प्रकृष्टपदार्थप्रत्यक्षे योगजधर्मः प्रत्यासत्तिः इति संक्षेपः ॥

इति तर्कसंग्रहदीपिकाप्रकाशे भगवदर्पिते प्रत्यक्षपरिच्छेदः समाप्तः ॥

**रा.** वृत्तित्वात् । नातस्तत्रातिव्याप्तिः । प्रत्यक्षत्वानुमितित्वाद्यवच्छिन्नं प्रति इन्द्रियत्व-व्याप्तिज्ञानत्वादिनैव करणत्वात् तेषामेव कारणत्वमिति परमार्थः ॥

इति रामरुद्रकृतायां दीपिकाव्याख्यायां प्रत्यक्षपरिच्छेदनिरूपणम् ॥

**नृ.** प्रमितिनिरूपितव्यापारसंबन्धावच्छिन्नकारणतावत्त्वादित्यर्थः । इदं च हेतुप्रदर्शनं । **प्रत्यक्षज्ञानकरणमित्यर्थ इति** तत्करणमिति मूलस्यार्थ इत्यर्थः ॥

इति दीपिकाप्रकाशे प्रत्यक्षपरिच्छेदस्समाप्तः ॥

## अनुमानपरिच्छेदः ॥

अनुमानं लक्षयति—**अनुमितिकरणमिति** ॥ अनुमितिं लक्षयति—**परामर्शेति** ॥ ननु संशयोत्तरप्रत्यक्षेऽतिव्याप्तिः स्थाणुपुरुषसंशयानन्तरं पुरु-

### नीलकण्ठप्रकाशिका.

**अनुमानं लक्षयतीति** ॥ प्रत्यक्षोपजीवकत्वसंगत्यानुमानं निरूपयतीत्यर्थः । **परामर्शेतीति** ॥ तथा च प्रत्यक्षप्रमित्यपेक्षयाऽनुमितेर्विलक्षणप्रमात्वात् अनुमानस्य प्रमाणान्तरत्वं सिध्यतीति भावः । विपरीतज्ञानोत्तरप्रत्यक्षं प्रति विशेषदर्शनस्य हेतुत्वमङ्गीकुर्वतां मतमवलम्ब्य शङ्कते—**नन्विति** ॥ **स्थाणुपुरुषसंशयेति** ॥ इदं विरुद्ध-

### रामरुद्रीयम्.

**परामर्शेति** ॥ व्याप्यपक्षोभयवैशिष्ट्यावगाहि ज्ञानं परामर्शः । तज्जन्यज्ञानमनुमितिरित्यर्थः । यद्यपि व्याप्तेः साध्यहेतुभेदन भिन्नतया एकसाध्यहेतुघटितव्याप्तिज्ञानजन्यत्वस्य अन्यसाध्यान्यलिङ्गकानुमित्यादिरूपकार्येऽसत्त्वादव्याप्तिः । तथापि तादृशपरामर्शजन्यज्ञानवृत्त्यनुभवत्वन्यूनवृत्तिजातिमत्त्वस्य विवक्षितत्वात् न दोषः । **संशयेति** ॥

### नृसिंहप्रकाशिका.

प्रत्यक्षनिरूपणानन्तरं अनुमाननिरूपणे सङ्गतिप्रदर्शनायाह—**व्याख्यातं प्रत्यक्षमिति** ॥ तथा च प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्ताववश्यवक्तव्यत्वरूपावसरसङ्गत्यानुमाननिरूपणमिति भावः । अनुमानं लक्षयति—**मूले अनुमितिकरणमिति** । अनुमितिनिष्ठकार्यतानिरूपितव्यापारसंबन्धावच्छिन्नकारणत्वं अनुमानलक्षणमित्यर्थः । लक्ष्यतावच्छेदकं च अनुमानपदवाच्यत्वम् । प्रसङ्गात् अनुमितिलक्षणमाह—**परामर्शजन्यमिति** ॥ परामर्शजन्यत्वे सति ज्ञानत्वमनुमितिलक्षणमित्यर्थः । प्रत्यक्षादावतिव्याप्तिवारणाय सत्यन्तम् । परामर्शध्वंसेऽतिव्याप्तिवारणाय विशेष्यभागः । यद्यपि परामर्शप्रत्यक्षमपि विषयविधया परामर्शजन्यं, तथापि परामर्शनिरूपितसमवायसंबन्धावच्छिन्नजन्यत्वस्य तदर्थतया परामर्शजन्यप्रत्यक्षनिष्ठजन्यताया विषयतासंबन्धावच्छिन्नत्वेन समवायसंबन्धावच्छिन्नत्वाभावात् नातिव्याप्तिः । न चैवं सति परामर्शध्वंसस्य समवायसंबन्धावच्छिन्नजन्यत्वविरहेणैवानतिप्रसङ्गात् ज्ञानत्वरूपविशेष्यदलं व्यर्थमिति वाच्यमिष्टापत्तेः । कार्यताविशेषलाभायैव ज्ञानपदम् । न च तथापि वह्निव्याप्यधूमवत्पर्वतवानयं देश इति विशिष्टवैशिष्ट्यावगाहिबुद्धौ अतिव्याप्तिः, निरुक्तजन्यतायाः सत्त्वादिति वाच्यम् । निरुक्तकार्यतावच्छेदकतया सिद्धानुमितित्वजातिमत्त्वस्यैव लक्षण-

षत्वव्याप्यकरादिमानयम् इति परामर्शे सति पुरुष एव इति प्रत्यक्षजननात्। न च तत्रानुमितिरेवेति वाच्यम्। पुरुषं साक्षात्करोमि इत्यनुव्यवसायविरो-

---

## नीलकण्ठप्रकाशिका.

भावद्वयकोटिकसंशयाङ्गीकारेण। परे तु—**स्थाणुपुरुषेति**॥ स्थाणुत्वतदभावपुरुषत्वतद-भावकोटिकेत्यर्थ इत्याहुः। **पुरुष एवेति** निर्णयसूचनाय। **तत्र** संशयोत्तरप्रत्यक्षस्थले। **अनुव्यवसायविरोधादिति**॥ इदमुपलक्षणम्। 'पुरुषमनुमिनोमि' इत्यनुव्यवसाया-भावेन प्रमाणाभावादित्यपि द्रष्टव्यम्। संशयोत्तरप्रत्यक्षे जननीये पक्षतायाः परामर्शसह-

## रामरुद्रीयम्.

अयं स्थाणुर्वा पुरुषो वेति संशयानन्तरं अयं न पुरुष इति विपरीतनिश्चयानन्तरं च सत्य-पि सन्निकर्षादौ व्याप्यदर्शनं विना अयं पुरुष इति प्रात्यक्षिकनिश्चयानुत्पत्त्या भ्रमसंशयो-त्तरप्रत्यक्षं प्रति व्याप्यदर्शनस्य हेतुत्वेन प्रत्यक्षस्यापि तत्र परामर्शजन्यत्वादतिव्याप्ति-रिति भावः। न च वह्निव्याप्यधूमवत्पर्वतवान् देश इति विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षं प्रति विशेषणतावच्छेदकप्रकारकनिर्णयविधया परामर्शानुव्यवसायं प्रति विषयविधया परा-मर्शस्य हेतुत्वेन तामादायातिव्याप्तिदर्शनेन न्यूनतेति वाच्यम्। व्याप्यपक्षोभयवैशिष्ट्याव-गाहिज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यताया एव विवक्षणीयतया प्रत्यनुव्यवसाये विष-यत्वेनैव विशिष्टवैशिष्ट्यावगाहिबुद्धौ विशेषणतावच्छेदकप्रकारकानिर्णयत्वेनैव परामर्शस्य हेतुतया तमादायातिव्याप्तेरयोगात्। भ्रमसंशयोत्तरप्रत्यक्षस्य च व्याप्यप्रकारकात् व्या-प्यविशेष्यकाच्च ज्ञानादुत्पत्त्या तत्रैव व्याप्यपक्षोभयवैशिष्ट्यावगाहिज्ञानत्वेन परामर्शस्य हेतुत्वात् तामादायैवातिव्याप्तिरिति भावः। **न च तत्रेति**॥ संशयोत्तरप्रत्यक्षस्थले अनु-

## नृसिंहप्रकाशिका.

त्वस्वीकारेण उक्तदोषाभावात्, अनुमितित्वजातिसिद्ध्यर्थमेव परामर्शजन्यं ज्ञानं इत्यु-क्तम्। प्राञ्चस्तु—व्याप्तिज्ञानकरणकत्वमनुमितिलक्षणम्, न च व्याप्तिज्ञाननिष्ठानुभवत्वा-वच्छिन्नकारणतानिरूपितकार्यत्वस्य स्मृतौ सत्त्वादतिव्याप्तिरिति वाच्यम्। व्याप्तिज्ञानत्वा-वच्छिन्नकारणतायाः लक्षणघटकत्वात्, स्मृतिनिरूपितकारणतायाः अनुभवत्वावच्छिन्नत्वे-नोक्तदोषाभावादित्याहुः। नव्यास्तु—अनुमिनोमीत्यनुव्यवसायसिद्धा अनुमितिपदशक्य-तावच्छेदकतया वा सिद्धानुमितित्वजातिरेव लक्षणमिति प्राहुः। परामर्शजन्यं ज्ञानमिति यथाश्रुतमूलार्थमादाय आक्षिपति—**दीपिकायां नन्वित्यादिना**॥ **संशयोत्तर-प्रत्यक्ष इति**॥ अयं स्थाणुर्वा पुरुषो वेति संशयोत्तरकालीनैककोटिमात्रप्रकारक-प्रत्यक्ष इत्यर्थः। **अतिव्याप्तिरिति**॥ निरुक्तानुमितिलक्षणसत्त्वादित्याशयः। लक्षण-सत्त्वमुपपादयति—**स्थाणुपुरुषेति**॥ स्थाणुत्वस्थाणुत्वाभावपुरुषत्वपुरुषत्वाभावरूपचतु-ष्कोटिकसंशयोत्तरमित्यर्थः। एतस्य प्रत्यक्षजननादिति अग्रिमेणान्वयः। **इति परामर्शे सतीति**॥ इत्याकारकप्रत्यक्षे सतीत्यर्थः। **पुरुष एवेति प्रत्यक्षजननादिति**॥ अत्र-

**धादिति चेन्न, पक्षतासहकृतपरामर्शजन्यत्वस्य विवक्षितत्वात् । सिषाधयि-**

## नीलकण्ठप्रकाशिका.

कारित्वे प्रयोजनाभावेन पक्षतासहकृतपरामर्शजन्यत्वविवक्षणान्नातिव्याप्तिरित्याह—**पक्षतेति** ॥ एतेन 'वह्निव्याप्यधूमवत्पर्वतवानयं देशः' इति विशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रति विशेषणतावच्छेदकप्रकारकानिर्णयविधया 'वह्निव्याप्यधूमवान् पर्वतः' इति परामर्शस्य कारणत्वेऽपि न तत्रातिव्याप्तिः । पक्षतासहकृतपरामर्शजन्यत्वस्यासत्त्वेनातिव्याप्तेरभावादिति संक्षेपः । यद्यपि साध्यसंशयस्य पक्षतात्वेऽपि साध्यनिश्चयकाले अनुमितिवारणं संभवति, तथापि घनगर्जितेन मेघानुमितौ व्यभिचारः । अतोऽन्यादृशीं पक्षतामाह—**सिषाध-**

## रामरुद्रीयम्.

मितिसामग्र्या अपि सत्त्वेन अनुमितिरेवेति लक्ष्यत्वात् नातिव्याप्तिरिति भावः । यद्यपि भ्रमोत्तरप्रत्यक्षस्थले भावाभावघटितानुमितिसामग्र्यभावात् नानुमितिसंभव इति तत्रातिव्याप्तिर्दुर्वारैव । न च बाधबुद्धिसत्त्वेन भ्रमोत्तरं प्रत्यक्षमपि नोत्पद्यत इति वाच्यम् । लौकिकसन्निकर्षाजन्यत्वविशिष्टबुद्धिं प्रत्येव बाधबुद्धेः प्रतिबन्धकतया प्रत्यक्षस्य तत्र लौकिकसन्निकर्षजन्यत्वेन तदप्रतिबध्यत्वात् । तथापि ग्रन्थकृता संशयोत्तरप्रत्यक्ष एव अशोकवनिकान्यायेन पूर्वमतिव्याप्तेराशङ्कितत्तया न विरोध इति मन्तव्यम् । **अनुव्यवसायेति** ॥ संशयोत्तरप्रत्यक्षस्यानुमितित्वोपगमे तदुत्तरं साक्षात्करोमीति प्रतीतिर्न स्यात्, किन्तु अनुमिनोमीति स्यादिति भावः । **पक्षतेति** ॥ पक्षताजन्यत्वे सति परामर्शजन्यत्वं अनुमितेर्लक्षणम् । भ्रमसंशयोत्तरप्रत्यक्षे विशेषदर्शनविधया परामर्शस्य हेतुत्वेऽपि पक्षतायास्तद्धेतुत्वे मानाभावान्नातिव्याप्तिः । सिद्धिसत्त्वेऽपि प्रत्यक्षोत्पत्त्या सिद्ध्यभावरूपपक्षतायाः प्रत्यक्षहेतुत्वासंभवाच्चेति भावः । साध्यसंशयरूपपक्षता नानुमितिकारणम् । विनापि साध्यसंदेहं घनगर्जितेन मेघानुमानात्, नापि सिद्ध्यभावरूपायाः तस्याः तत्कारणत्वं असंभवात् । श्रोतव्यो मन्तव्य इति श्रुत्या आत्मनिश्चयवतापि अनुमितिबोधनेन व्यभिचारादित्यत आह—**सिषाधयिषेति** ॥ एतस्याः अनुमितौ कारणत्वमेवोपपादयति—

## नृसिंहप्रकाशिका.

त्यैवकारः इतिशब्दोत्तरं योज्यः । एवं चायं पुरुष इत्येव प्रत्यक्षजननादित्यर्थः फलितः । तथा च पूर्वोक्तचतुष्कोटिकसंशयोत्तरं पुरुषत्वव्याप्यकरादिप्रकारकपुरोवर्तिविशेष्यकप्रात्यक्षिकपरामर्शादयं पुरुष इति प्रत्यक्षस्य जायमानत्वेन तत्र निरुक्तलक्षणसत्त्वादतिव्याप्तिरिति भावः । **तत्रेति** ॥ प्रात्यक्षिकपरामर्शोत्तरमित्यर्थः । **अनुमितिरेवेति** ॥ अनुमितिरुत्पद्यते न प्रत्यक्षमित्यर्थः । तथा च तत्रानुमितेरेव उत्पत्त्या नातिव्याप्तिरिति भावः । **इत्यनुव्यवसायविरोधादिति** ॥ इत्याकारकसर्वानुभवसिद्धानुव्यवसायानुत्पत्तिप्रसङ्गादित्यर्थः । तथा च तादृशानुव्यवसायान्यथानुपपत्त्या प्रत्यक्षस्यैवोत्पत्तिरावश्यकीति भावः । इदमुपलक्षणम् । समानविषये प्रत्यक्षसामग्र्याः प्राबल्येन पुरुषत्वे चक्षुस्संयुक्तसमवायरूपलौकिकसन्निकर्षसत्त्वात् पुरुषत्वस्य प्रत्यक्षमेव जायत इत्यपि बोध्यम् । **पक्षतासह-**

**षाविरहविशिष्टसिद्ध्यभावः पक्षता । साध्यासिद्धिरनुमितिप्रतिबन्धिका । सिद्धिसत्त्वेऽपि अनुमिनुयाम् इतीच्छायामनुमितिदर्शनात् सिषाधयिषोत्तेजिका । ततश्चोत्तेजकाभावविशिष्टमण्यभावस्य दाहकारणत्ववत्सिषाधयिषाविरहवि-**

---

## नीलकण्ठप्रकाशिका.

**यिषेति ।** सिषाधयिषायाः साध्यानुमितीच्छायाः समवायेन योऽभावः स्वरूपसमवायोभयघटितसामानाधिकरण्यसंबन्धेन तद्विशिष्टायाः सिद्धेः समवायेन अभाव इत्यर्थः । **साध्यसिद्धिः** पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहिनिश्चयः । सिद्धौ सिषाधयिषाविरहवैशिष्ट्यनिवेशनस्य प्रयोजनं दर्शयति—**सिद्धिसत्त्वऽपीति** ॥ अत्र सिद्धिश्च 'पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्च' इति समूहालम्बनरूपा ।

## रामरुद्रीयम्.

**साध्यसिद्धिरिति ॥ उत्तेजिकेति ॥** प्रतिबन्धकतावच्छेदकीभूताभावप्रतियोगित्वं उत्तेजकत्वं, कारणीभूताभावप्रतियोगित्वं प्रतिबन्धकत्वमिति बोध्यम् । तत्पक्षक-

## नृसिंहप्रकाशिका.

**कृतपरामर्शजन्यत्वस्येति ॥** पक्षताजन्यत्वपरामर्शजन्यत्वोभयवत्त्वस्येत्यर्थः । **विवक्षितत्वादिति ।** परामर्शजन्यं ज्ञानमिति वाक्यतात्पर्यविषयार्थत्वादित्यर्थः । तथा च तादृशप्रत्यक्षस्य परामर्शजन्यत्वेऽपि पक्षताजन्यत्वाभावात् न तत्रातिव्याप्तिरिति भावः । पक्षतालक्षणं स्वरूपं चाह— **सिसाधयिषाविरहसहकृतेति ।** एककालावच्छिन्नं दैशिकविशेषणत्वसमवायोभयघटितसामानाधिकरण्यं तेन संबन्धेन समवायसंबन्धावच्छिन्नसिसाधयिषानिष्ठप्रतियोगिताकाभावविशिष्टो यस्साध्यप्रकारकपक्षविशेष्यकनिर्णयः तादृशनिर्णयत्वावच्छिन्नसमवायसंबन्धावच्छिन्नप्रतियोगिताकाभाववत्वं पक्षतालक्षणम् । तद्विशिष्टः पक्षतास्वरूपमित्यर्थः । सिद्धौ सिसाधयिषाविरहविशिष्टत्वप्रयोजनमाह—**साध्यसिद्धिरिति ॥** साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चय इत्यर्थः । तेन पर्वते समवायेन द्रव्यत्वादिरूपेण वह्नेः सिद्धावपि पाषाणमयत्वावच्छिन्ने संयोगेन वह्नित्वेन वह्नेस्सिद्धावपि न पर्वतो वह्निमानित्यनुमित्यनुपपत्तिः । **सिद्धिसत्त्वेऽपीति ॥** सिद्धिरूपप्रतिबन्धकसत्त्वेऽपीत्यर्थः । **अनुमिनुयामितीच्छायामिति ॥** सिसाधयिषासत्त्वे इत्यर्थः । **अनुमितेर्दर्शनादिति ॥** सिद्धिसमानाकारकानुमित्युत्पत्तेरित्यर्थः । **उत्तेजकेति ॥** प्रतिबन्धकनिष्ठसामर्थ्यविघटकेत्यर्थः । **ततश्चेति ॥** चोऽवधारणे । तत एवेत्यर्थः । सिसाधयिषाया उत्तेजकत्वादेवेति यावत् । **उत्तेजकाभावेत्यादि ॥** यथा मन्त्रादिरूपोत्तेजकसमवहितमणेर्दाहाप्रतिबन्धकतया तादृशोत्तेजकाभावविशिष्टमणेः प्रतिबन्धकत्वमङ्गीकृत्य तदभावस्य दाहकरणत्वमङ्गीकृतम्, तथा सिसाधयिषाकालीनसिद्धेः अप्रतिबन्धकतया तादृशोत्तेजकविरह-

## नीलकण्ठप्रकाशिका.

अतः परामर्शसंपत्तिरिति ध्येयम् । 'व्याप्तिविशिष्टपक्षधर्मताज्ञानम्' इत्यत्र व्याप्तिविशिष्टे पक्षधर्मता व्याप्तिविशिष्टपक्षधर्मता तज्ज्ञानमिति सप्तमीतत्पुरुषाङ्गीकारे व्यभिचारिलिङ्गकानुमितौ व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यत्वाभावेनाव्याप्तिरतो व्याप्तिविशिष्टपदस्य व्याप्ति-

## रामरुद्रीयम्.

तत्साध्यकतल्लिङ्गकानुमितौ सिद्धिसत्त्वे यादृशेच्छासत्त्वे तत्पक्षकतत्साध्यकतल्लिङ्गकानुमितिः प्रामाणिकी, तत्तदिच्छाभावकूटविशिष्टसिद्ध्यभावत्वेन कारणत्वं, अनुमितिगोचरेच्छात्वेनोत्तेजकत्वे सिद्धिसत्त्वे यत्किञ्चिद्गोचरं ज्ञानं जायतामिति इच्छायामपि अनुमित्यापत्तिः । यादृशेच्छायाः अनुमितिं विना न विषयसिद्धिः तादृशेच्छाया एवोत्तेजकत्वस्यानुभवसिद्धतया इष्टापत्त्ययोगात् । अनुमितित्वप्रकारकेच्छात्वेन उत्तेजकत्वे प्रात्यक्षिकसिद्ध्यनन्तरं प्रत्यक्षान्यज्ञानं जायतामितीच्छाबलात् अनुमित्यनुपपत्तेश्च । घटानुमितिसामग्रीसत्त्वे वह्निसिद्धिसत्त्वे अनुमितिर्जायतामितीच्छाबलात् वह्न्यनुमित्यापत्तेश्च । तत्पक्षकत्वतत्साध्यकत्वप्रकारकेच्छात्वेनोत्तेजकत्वे धूमपरामर्शसत्त्वे आलोकेन वह्न्यनुमितिर्जायतामिति इच्छाबलात् आलोकपरामर्शं विनापि वह्न्यनुमित्यापत्तेः तल्लिङ्गकत्वप्रकारकत्वमपि निवेश्य तल्लिङ्गकानुमितौ उत्तेजकत्वोपगमे तासामनुमितिर्जायतामित्यादीच्छानां असङ्ग्रहापत्तेरिति ध्येयम् । अत्र च अनुमितिर्जायतामित्यादीच्छाव्यक्तीनां सर्वासामुत्तेजकत्वेन तासामगत्या तत्तदिच्छात्वेनोत्तेजकत्वम् । तल्लिङ्गकानुमितौ तदन्यलिङ्गकत्वाप्रकारकतत्साध्यकत्वतत्पक्षकत्वतल्लिङ्गकत्वप्रकारकानुमितिविषयकेच्छात्वेन अनुगतरूपेणैवतादृशेच्छानामुत्तेजकत्वमुचितम् । एतासां तत्तद्व्यक्तित्वेनोत्तजकत्वे अनन्ताभावनिवेशाधिक्येन गौरवादिति दीधितिकृदनुयायिनः ।

## नृसिंहप्रकाशिका.

विशिष्टसिद्धेः प्रतिबन्धकत्वमङ्गीकृत्य तदभावस्य अनुमितिहेतुत्वमवश्यमङ्गीकार्यमित्यर्थः। अत्र सिसाधयिषाकालेऽपि संयोगादिव्यधिकरणसंबन्धावच्छिन्नसिसाधयिषानिष्ठप्रतियोगिताकाभावविशिष्टसिद्धिसत्त्वात् पक्षतानुपपत्तिः । अतस्समवायसंबन्धावच्छिन्नसिसाधयिषानिष्ठप्रतियोगिताकाभावनिवेशः। सिसाधयिषासत्त्वेऽपि समवायेन सिसाधयिषाभावस्य अभावीयदैशिकविशेषणतासंबन्धेन सिद्धौ सत्त्वात्पक्षतानुपपत्तिः । अतः निरुक्तसामानाधिकरण्यस्य सिद्धौ सिसाधयिषाविरहसंबन्धत्वमङ्गीकृतम् । सिसाधयिषाकालेऽपि सिद्धौ कालान्तरीणसिसाधयिषाविरहसामानाधिकरण्यसत्त्वात् तेन संबन्धेन सिद्धेः सिसाधयिषाविरहविशिष्टत्वाच्च पक्षतानुपपत्तिः । अतस्सामानाधिकरण्ये एककालावच्छिन्नत्वनिवेशः । सिसाधयिषा च तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रकारकानुमितिगोचरा तेन सिद्धौ सत्यां यत्किञ्चिद्गोचरं ज्ञानं जायतामितीच्छायामपि नानुमितिः । अनयैव दिशा सामानाधिकरण्यसंबन्धघटकसंबन्धविशेषणप्रयोजनमभ्यूह्यम् । समवायेन सिद्धिसत्त्वेऽपि संबन्धान्तरावच्छिन्नप्रतियोगिताकाभावसत्त्वात् पक्षतापत्तिवारणाय सिद्धिनिष्ठप्रतियोगितायां समवायसंबन्धावच्छिन्न-

**शिष्टसिद्ध्यभावस्याप्यनुमितिकारणत्वम् । परामर्शं लक्षयति—व्याप्तीति ॥ व्याप्तिविषयकं यत्पक्षधर्मताज्ञानं स परामर्श इत्यर्थः । परामर्शमभिनीय दर्श-**

---

## नीलकण्ठप्रकाशिका.

विषयकेऽत्यर्थमवलम्ब्य ज्ञानान्तपदेन कर्मधारयमङ्गीकरोति—**व्याप्तिविषयकमिति ॥**

## रामरुद्रीयम् .

**व्याप्तिविशिष्टस्येति ॥** षष्ठ्यर्थो विषयकत्वं, पक्षधर्मत्वं पक्षसंबन्धः । तथा च व्याप्ति-विशिष्टविषयकं पक्षसंबन्धावगाहि ज्ञानं परामर्श इति फलितम् । यद्यप्येवं सति वह्नि-व्याप्यो धूमः धूमवान् पर्वत इति समूहालम्बनादनुमित्यापत्तिः, तस्यापि व्याप्तिविशिष्ट-विषयकत्वात् पक्षसंबन्धावगाहित्वाच्च । तथाप्युद्देश्यतावच्छेदकविधेयभावमहिम्ना तयो-रवच्छेद्यावच्छेदकभावभानात् संसर्गतया पक्षसंबन्धविषयतानिरूपितव्याप्तिविशिष्टविषयता-शालित्वलाभेन समूहालम्बने च व्याप्त्यवच्छिन्नविषयकत्वपक्षसंबन्धविषयतयोः निरूप्य-निरूपकभावविरहेण नातोऽनुमित्यापत्तिरिति भावः । ज्ञानपदं च निश्चयार्थकं, तेन पर्वतो वह्निव्याप्यधूमवान न वेति संशयान्नानुमित्यापत्तिः । हेतुतावच्छेदकसंबन्धावच्छिन्नव्या-प्त्यवच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयस्यैव परामर्शत्वे वह्निव्याप्यो धूमः पर्वते इति ज्ञानादनुमित्यनुपपत्तिः इति न तथोक्तम् । इदं पुनरिहाव-

## नृसिंहप्रकाशिका.

त्वनिवेशः । अधिकं तु अस्मत्कृतमुक्तावलीप्रभायां अनुसन्धेयम् । **व्याप्तिविशिष्टप-क्षधर्मताज्ञानं परामर्श इति ॥** मणिकारोक्तपरामर्शलक्षणमाह—**मूले व्याप्तिविशिष्ट इति ॥** अत्र व्याप्तिविशिष्टश्चासौ पक्षधर्मश्चेत्युपाध्यायाभिमतकर्मधारयपक्षाश्रयणे व्याप्ति-विशिष्टत्वसमानाधिकरणपक्षधर्मताविषयकनिश्चयत्वं लक्षणमिति लभ्यते । तच्च वह्निव्या-प्यधूमवान् ह्रदः वह्निव्याप्यह्रदत्ववान् ह्रद इति भ्रमात्मकपरामर्शे च अव्याप्तम् । व्याप्तिविशिष्टश्च पक्षधर्मश्च तयोर्भाव इति मिश्राभिमतद्वन्द्वपक्षाश्रयणे उक्ताव्याप्तिवारणे-ऽपि वह्निव्याप्यो धूमः द्रव्यत्ववान् पर्वत इति ज्ञानेऽतिव्याप्तिरित्यायरुचिं हृदि निधाय दीधितिकाराभिमतज्ञानान्तकर्मधारयमाह —**दीपिकायां व्याप्तिविषयक-मिति ॥** व्याप्तिप्रकारकमित्यर्थः । व्याप्तिविशिष्टेत्यस्य प्रकारतासंबन्धेन व्याप्तिविशिष्टा-र्थकत्वात । **यत्पक्षधर्मताज्ञानमिति ॥** हेतोः यः पक्षसंबन्धावगाहिनिश्चय इत्यर्थः । व्याप्तिप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नवि-शेष्यताशालिनिश्चयत्वं परामर्शलक्षणमिति समुदितग्रन्थतात्पर्यार्थः । तेन वह्निव्याप्यधूमः पर्वतवान् इति ज्ञाने मणिकारमते वह्निव्याप्यधूमः पर्वत इति ज्ञाने च नाति-व्याप्तिः । अन्ये तु परामर्शत्वं परामर्शपदशक्यतावच्छेदकतया सिद्धो मानसत्व-व्याप्यो जातिविशेषः । सर्वत्र मानसपरामर्शादेवानुमितिस्वीकारात् क्षणविलम्बस्य शपथ-निर्णयत्वात् । अतस्तदेव लक्षणमित्याहुः । **परामर्शमभिनीय दर्शयतीति ॥** पराम-

यति—**यथेति** ॥ अनुमितिमभिनीय दर्शयति—**तज्जन्यमिति** ॥ परामर्शजन्यमित्यर्थः । व्याप्तिलक्षणमाह—**यत्रेति** ॥ यत्र धूमस्तत्राग्निः इति व्याप्तेरभिनयः । साहचर्यनियमः इति लक्षणम् । साहचर्यं सामानाधिकरण्यं,

---

## नीलकण्ठप्रकाशिका.

व्याप्यत्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयः परामर्श इति तु निर्गलितार्थः । **अभिनीय** अभिलापकशब्दमुच्चार्य । नियतसामानाधिकरण्यं सा-

## रामरुद्रीयम्.

धेयम्—व्याप्यप्रकारकपक्षप्रकारकज्ञानसाधारणम् निश्चयत्वमेकं दुर्वचं, निश्चयत्वस्य तदभावाप्रकारकत्वे सति तत्प्रकारकत्वेन व्याप्यप्रकारकनिश्चयत्वपक्षप्रकारकनिश्चयत्वयोः भेदात्, व्याप्यप्रकारतायां हेतुतावच्छेदकसंबन्धावच्छिन्नत्वस्य पक्षप्रकारतायां हेतुतावच्छेदकसंबन्धावच्छिन्नाधेयत्वसंबन्धावच्छिन्नत्वस्य निवेशनीयतया प्रकारसंबन्धभेदाच्च । किञ्चाहार्याप्रामाण्यज्ञानास्कन्दितपरामर्शादनुमित्यनुत्पत्त्या अनाहार्यत्वं अप्रमाण्यज्ञानानास्कन्दितत्वं च कारणतावच्छेदककोटौ निवेशनीयम् । तथा च व्याप्यप्रकारकपरामर्शे व्याप्याभाववति व्याप्यप्रकारकत्वरूपाप्रामाण्यज्ञानाभावो निवेशनीयः पक्षप्रकारकपरामर्शे पक्षाभाववति पक्षप्रकारकत्वरूपाप्रामाण्यज्ञानाभावो निवेशनीय इत्यतोऽपि पृथगेव तयोर्हेतुत्वमुपगन्तव्यम् । परस्परजन्यानुमितौ व्यभिचारश्च कार्यतावच्छेदककोटौ तत्तत्परामर्शाव्यवहितोत्तरत्वं निवेश्यैव वारणीयः । पक्षविशेष्यकपरामर्शस्यैवानुमितिहेतुत्वम् । अनुमतेः पक्षविशेष्यकत्वस्यैव तत्र विनिगमकत्वादिति वदन्ति । **अभिनीयेति** ॥ आकारं प्रदर्श्येत्यर्थः । **व्याप्तेरभिनय इति** ॥ यत्र धूमस्तत्राग्निरिति व्याप्तिज्ञानाकार इत्यर्थः । **लक्षणमिति** ॥ स्वरूपमित्यर्थः । सहचारः सामानाधिकरण्यं, तस्य हेतौ

## नृसिंहप्रकाशिका.

र्शलक्षणमुक्त्वा स्वरूपं दर्शयतीत्यर्थः । **मूले वह्निव्याप्यधूमवानयमिति ज्ञानमिति** ॥ इत्यादिनिश्चय एवेत्यर्थः । एवकारेण वह्निव्याप्यधूमः पर्वत इत्यादिनिश्चयव्यवच्छेदः । **परामर्श इति** ॥ परामर्शस्वरूपमित्यर्थः । अनुमितिस्वरूपमाह—**तज्जन्यमिति** ॥ परामर्शजन्यज्ञानत्वरूपलक्षणलक्षितानुमितिः पर्वतो वह्निमानित्याद्याकारकेत्यर्थः । व्याप्तिस्वरूपं व्याप्त्यभिलापकं वा आह—**यत्र धूमः तत्र अग्निरिति** ॥ इत्याकारकशब्दाभिलाप्यो वेत्यर्थः । **साहचर्यनियम इति** ॥ कृदभिहितन्यायात् नियतं साहचर्यमित्यर्थः । नियमत्वघटितसामानाधिकरण्यत्वमिति यावत् । **व्याप्तिरिति** ॥ व्याप्तेर्लक्षणमिति व्याप्तिरेव लक्षणमिति वार्थः । तथा च हेतुसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकसाध्यसामानाधिकरण्यत्वं व्याप्तेर्लक्षणम् । तादृशलक्षणलक्षितव्याप्तिः सद्धेतोर्लक्षणमिति भावः । व्याप्तिस्वरूपसद्धेतुलक्षणस्य यथाश्रुतस्य लक्षणसमन्वयप्रकारः अतिव्याप्तिवारण-

## नीलकण्ठप्रकाशिका.

ध्याभाववदवृत्तित्वादिरूपं न सम्भवति 'इदं वाच्यं, ज्ञेयत्वात्' इत्यादौ अव्याप्तेः । सा-

## रामरुद्रीयम्.

नियमः व्याप्तिरित्यर्थः । यत्र तादात्म्येन हेतुः तत्र साध्यसामानाधिकरण्यमिति सद्धेतुत्व-

## नृसिंहप्रकाशिका.

प्रकारश्च ऊह्यः। अत्र हेतुसमानाधिकरणत्वं हेतुतावच्छेदकसंबन्धेन हेतुतावच्छेदकावच्छिन्न-संबन्धिनि साध्यवत्ताग्रहविरोधितानियामकसंबन्धेन वर्तमानत्वरूपं ग्राह्यम् । तेन वह्नि-मान् धूमादित्यादौ समवायेन धूमाधिकरणे वह्निमदन्योन्याभावसत्त्वेऽपि, द्रव्यं विशि-ष्टसत्त्वादित्यादौ सत्ताधिकरणगुणादौ द्रव्यभेदसत्त्वेऽपि, तादात्म्यसंबन्धेन सद्धेतोः हेतुताव-च्छेदकसंबन्धेन हेत्वधिकरणाप्रसिद्धावपि, वह्निमान् धूमादित्यादौ धूमाधिकरणपर्वतादौ का-लिकसंबन्धेन वह्निमद्भेदसत्त्वेऽपि, घटाभिन्नं द्रव्यत्वादित्यादौ द्रव्यत्वाधिकरणे घटभिन्नभेदस्य घटत्वरूपस्य दैशिकविशेषणतासंबन्धेनावृत्तित्वेऽपि च नाव्याप्तिरतिव्याप्तिर्वा । अन्योन्याभाव-प्रतियोगितावच्छेदकता साध्यतावच्छेदकसंबन्धावच्छिन्ना ग्राह्या । तेन वह्निमान् धूमादि-त्यादौ हेत्वधिकरणपर्वतादौ समवायेन वह्निमद्भेदसत्त्वेऽपि नाव्याप्तिः। तादृशप्रतियोगिताव-च्छेदकतानवच्छेदकं यत् साध्यतावच्छेदकमिति विवक्षणीयं तेन वह्निमान् धूमादित्यादौ हेत्व-धिकरणपर्वतादौ तत्तद्वह्निमद्भेदसत्त्वेऽपि नाव्याप्तिः । साध्यतावच्छेदकावच्छिन्नसामानाधि-करण्यं साध्यतावच्छेदकावच्छिन्नसंबन्धिनि हेतुतावच्छेदकसंबन्धेन संबन्धित्वरूपं ग्राह्यम् । तेन तादात्म्येन साध्यतायां हेतुतायांचनाव्याप्तिः । तादृशसामानाधिकरण्यवत्त्वं स्वसमा-नाधिकरणहेतुतावच्छेदकसंबन्धेन बोध्यम् । तेन स्वरूपसंबन्धेन तादृशसामानाधिकरण्यस्य रासभादौ सत्त्वेऽपि नातिव्याप्तिः । यत्र साध्यतावच्छेदकं नाना तत्र साध्यतावच्छेदक-व्यक्त्यनुगतधर्मस्यैव परम्परासंबन्धेन साध्यतावच्छेदकत्वं स्वीक्रियते । तेन दण्डिमान् दण्डसंयोगादित्यादौ नाव्याप्तिः । ननु कालो घटवान् कालपरिमाणादित्यादौ अव्या-प्तिः। महाकालस्य कालिकसंबन्धेन सर्वाधारतया हेतुसमानाधिकरणान्योन्याभावप्रतियोगि-तानिरूपितसाध्यतावच्छेदककालिकसंबन्धावच्छिन्नावच्छेदकताप्रसिद्धेरिति चेन्न । हेतु-समानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकतासामान्ये यत्संबन्धावच्छिन्नत्वयद्धर्मा-वच्छिन्नत्वोभयाभावः तेन संबन्धेन तद्धर्मावच्छिन्नसामानाधिकरण्यस्य विवक्षितत्वात् । उक्तस्थले समवायेन घटवद्भेदादेः हेतुसमानाधिकरणतया तादृशान्योन्याभावप्रति-योगितानिरूपितसमवायसंबन्धावच्छिन्नावच्छेदकतायां निरुक्तोभयाभावसत्त्वात् नाव्या-प्त्यवकाश इति दिक् । **दीपिकायां व्याप्तेर्लक्षणमाहेति** ॥ व्याप्तिस्वरूपमाहेति व्याप्तेर्व्यावर्तकमाहेति व्याप्तिस्वरूपसद्धेतुलक्षणमाहेति चार्थः । यत्र धूमस्तत्राग्निरिति मूलस्य स्वरूपार्थकत्वमाह—**इति व्याप्तेरभिनय इति** ॥ इत्याकारकव्याप्तिस्वरूपमित्यर्थः । साहचर्यनियम इत्यंशस्य लक्षणपरत्वमाह—**इति लक्षणमिति** ॥ इत्याकारकवाक्यप्रति-

तस्य नियमः । हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं

## नीलकण्ठप्रकाशिका.

ध्याभावाप्रसिद्धेरित्यालोच्याह—**हेतुसमानाधिकरणेति** ॥ 'वह्निमान्धूमात्' इत्यादौ

## रामरुद्रीयम्.

नियमात् । सद्धेतुत्वं च व्याप्तिपक्षधर्मताविशिष्टहेतुत्वम् । व्याप्तिलक्षणस्य सद्धेतुमात्रं लक्ष्यं, असद्धेतुरलक्ष्यं न तु वृत्तित्वविशिष्टहेतुत्वं। तेन इदं वह्निमद्गगनादित्यत्र गगनहेतोः साध्याभाववदवृत्तित्वेऽपि न क्षतिः । न वा धूमवान् वह्नेरित्यादिव्यभिचारिहेतौ पक्षधर्मतासत्त्वेऽपि व्याप्तेरसत्त्वान्नातिव्याप्तिः । तथा च वह्निमान् धूमादित्यत्र धूमरूपसद्धेतौ लक्षणसमन्वयः । धूमसमानाधिकरणघटाभावाप्रतियोगिवह्निसामानाधिकरण्यरूपलक्षणस्य धूमे सत्त्वात्, तत्र च धूमरूपसद्धेतोः तादात्म्येन धूमे सत्त्वात् लक्ष्ये लक्षणसमन्वयः । धूमवान् वह्नेरित्यादौ च हेतुतावच्छेदकावच्छिन्नस्य तप्तायःपिण्डवृत्तिवह्नेः तादात्म्येन वह्नौ सत्त्वेऽपि तत्र वह्निरूपहेतुसमानाधिकरणधूमाभावाप्रतियोगित्वस्य धूमेऽसत्त्वात्, अप्रतियोगिसाध्यसामानाधिकरण्यस्य लक्षणस्य वह्नावभावान्नातिव्याप्तिः । नन्वेवं द्रव्यं सत्त्वादित्यादौ अतिव्याप्तिः । यत्र तादात्म्येन सत्ता तत्र द्रव्यत्वरूपसाध्याधिकरणे सत्तायां द्रव्यत्वसामानाधिकरण्यमिति व्याप्तेः द्रव्ये वृत्तित्वस्य सत्त्वात् । किंच नियमस्य व्याप्तिरूपत्वेन व्याप्तिलक्षणावान्तरप्रवेशेनानवस्थाप्रसङ्गश्चेत्यत आह—**तस्य नियम इति** ॥

## नृसिंहप्रकाशिका.

पाद्यं व्याप्तेर्लक्षणं व्याप्तिस्वरूपसद्धेतुलक्षणं चेत्यर्थः । सह चरति गच्छतीति सहचरः तस्य भावस्साहचर्यमिति व्युत्पत्त्या एकजातीयक्रियान्वयित्वरूपसाहचर्यलाभेन लक्षणद्वयस्य तादृशमूलार्थत्वासंभवात् तत्संरक्षणाय तत्पदस्य प्रकृतोपयोगिनमर्थमाह—**सामानाधिकरण्यमिति** ॥ साध्यसामानाधिकरण्यमित्यर्थः । **तस्येति** ॥ साध्यसामानाधिकरण्यस्येत्यर्थः । **नियम इति** ॥ व्याप्यत्वमित्यर्थः । साध्यवद्भेदसामानाधिकरण्याभाववत्त्वमिति यावत् । तथा च साध्यवद्भेदसामानाधिकरण्याभाववत्त्वे सति साध्यसामानाधिकरण्यं व्याप्तिरिति । अत्र लक्षणसमन्वयः । अतिव्याप्तिवारणप्रकारश्च स्फुटः । असद्धेतावतिव्याप्तिवारणाय सत्यन्तम् । संयोगेन गगनादिहेतावतिव्याप्तिवारणाय साध्यसामानाधिकरण्येति । यद्यपि तत्रातिव्याप्तिवारणाय लाघवात् वृत्तिमत्त्वविशेषणमेव दातुमुचितं, तथापि गगनादेरपि महाकाले कालिकविशेषणतया वृत्तिमत्त्वाङ्गीकारे हेतुतावच्छेदकसंबन्धेन वृत्तिमत्त्वं निवेश्यैव वारणीयतया तल्लाभायैव साध्यसामानाधिकरण्यमित्युक्तमिति ध्येयम् । यथाश्रुतमूलप्रतिपाद्यलक्षणस्य केवलान्वयिसाध्यकेऽव्याप्तिः । साध्यवदन्यस्य अप्रसिद्धेरित्यरुचिं हृदि निधाय हेतौ साध्यवद्भेदसामानाधिकरण्यज्ञाने जाते साध्ये हेतुसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकत्वहेतुसमानाधिकरणात्यन्ताभावप्रतियोगित्वयोः लाभ इव हेतौ साध्यवद्भेदसामानाधिकरण्याभावज्ञाने जाते साध्ये हेतुसमानाधिकरणान्योन्याभावप्रति-

**व्याप्तिरित्यर्थः। पक्षधर्मतास्वरूपमाह—व्याप्यस्येति॥ अनुमानं विभजते—**

---

## नीलकण्ठप्रकाशिका.

धूमसमानाधिकरणे योऽत्यन्ताभावो घटात्यन्ताभावः, तदप्रतियोगी वह्निः तत्सामानाधिकरण्यं धूमेऽस्तीति लक्षणसमन्वयः। धूमवान्वह्नेरित्यादौ तु धूमसामान्याभावस्यापि हेतुसमानाधिकरणतया तत्प्रतियोग्येव धूम इति नातिव्याप्तिः। न च वह्निमान्धूमादित्यादौ तत्तद्वह्न्यभावस्य चालिनीन्यायेन धूमसमानाधिकरणतया तादृशाभावाप्रतियोगित्वं न कस्यापि वह्नेरित्यव्याप्तिरिति वाच्यम्, अप्रतियोगिसाध्येत्यस्य प्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नेत्यर्थतात्पर्यकतयाऽदोषात्। प्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं निवेशनीयम्। तेन 'वह्निमान्धूमात्' इत्यादौ समवायेन वह्नित्वावच्छिन्नप्रतियोगिताकाभावस्य धूमसमानाधिकरणत्वेऽपि न क्षतिः। हेतुपदं हेतुतावच्छेदकावच्छिन्नपरम्। अतो 'द्रव्यं विशिष्टसत्त्वात्' इत्यादौ विशिष्टस्य शुद्धानतिरेकितया हेत्वधि-

## रामरुद्रीयम्.

**व्याप्तिरित्यर्थ इति॥** अथात्र हेत्वधिकरणे नानाव्यक्तिसाध्यके तत्तद्व्यक्त्यभावस्य एकव्यक्तिसाध्यके च विशिष्टाभावोभयाभावस्य च सत्त्वेन तत्प्रतियोगित्वात् साध्यस्य हेतुसमानाधिकरणाभावाप्रतियोगित्वाप्रसिद्धेः। हेतुसमानाधिकरणयत्किंचिदभावाप्रतियोगित्वविवक्षणे च व्यभिचारिमात्र एवातिव्याप्तिः। तादृशघटाभावाप्रतियोगिसाध्यसामानाधिकरण्यस्य हेतुमात्रे सत्त्वात्। न च स्वाश्रयप्रतियोगिकत्वस्वावच्छिन्नसामानाधिकरण्योभयसंबन्धेन साध्यतावच्छेदकविशिष्टान्यत्वेन हेतुसमानाधिकरणाभावो विशेषणीयः। तत्त-

## नृसिंहप्रकाशिका.

योगितानवच्छेदकत्वहेतुसमानाधिकरणात्यन्ताभावाप्रतियोगित्वयोरपि लाभप्रसङ्गादिति सिद्धान्तलक्षणे मणिकारोक्तप्राथमिकासिद्धान्तलक्षणपर्यवसानमित्याशयेन तल्लक्षणमेवाह—**हेतुसमानाधिकरणेत्यादि॥ इत्यर्थ इति॥** साहचर्यनियम इति मूले पर्यवसितार्थ इत्यर्थः। वह्निमान् धूमादित्यादौ हेतुसमानाधिकरणाभावो घटाभावादिरेव तदप्रतियोगित्वात् साध्यस्येति लक्षणसमन्वयः। धूमवान् वह्नेरित्यादौ हेतुसमानाधिकरणाभावो धूमाभावतत्प्रतियोगित्वात् साध्यस्येति नातिव्याप्तिः। यथाश्रुतैतल्लक्षणघटकदलप्रयोजनमेतल्लक्षणपरिष्कारः। तत्प्रयोजनञ्चास्मत्कृतमुक्तावलीप्रभायां अनुसन्धेयमिति दिक्। व्याप्तिविशिष्टपक्षधर्मतेत्यादिपरामर्शलक्षणघटकपक्षधर्मताशब्दार्थं निर्वक्ति—**मूले व्याप्यस्येति॥** व्याप्यतावच्छेदकावच्छिन्नस्येत्यर्थः। षष्ठ्यर्थो निरूपितत्वं तस्य पक्षधर्मत्वेऽन्वयः। पक्षधर्मतेत्यत्र सप्तमीतत्पुरुषघटकपक्षपदस्य पक्षतावच्छेदकावच्छिन्नार्थकत्वं, सप्तम्यर्थो निरूपितत्वं, धर्मतापदस्य हेतुतावच्छेदकसंबन्धावच्छिन्नसंबन्धित्वार्थकत्वं इत्याशयेनाह—**पर्वतादिवृत्तित्वमिति॥** पक्षतावच्छेदकपर्वतत्वावच्छिन्ननिरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नसंबन्धित्वमेवेत्यर्थः। **पक्षधर्मेति॥** पक्षधर्मताशब्दार्थ इत्यर्थः। निरुक्तलक्षण-

अनुमानमिति ॥ स्वार्थानुमान दर्शयति—स्वयमेवेति ॥ ननु पार्थिवत्वलो-

## नीलकण्ठप्रकाशिका.

करणगुणादिनिष्ठत्वेऽपि द्रव्यत्वाभावस्य नाव्याप्तिः । हेत्वधिकरणता हेतुतावच्छेदकसंबन्धावच्छिन्ना ग्राह्या । तेन 'वह्निमान्धूमात्' इत्यादौ वह्निसामान्याभावस्य धूमसमवायिनिष्ठत्वेऽपि नाव्याप्तिः । न चैवमपि 'कपिसंयोगी एतद्वृक्षत्वात्' इत्यादौ अव्याप्तिः, साध्यस्य हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नत्वादिति वाच्यम् । हेतुसमानाधिकरणात्यन्ताभावे प्रतियोगिवैयधिकरण्यस्य निवेशनीयत्वात् । केवलान्वयिसाध्यके तादृशस्य घटाभावादेः प्रसिद्धत्वान्नाव्याप्तिरिति । अधिकमस्मदीयमणिदीधितिव्याख्यायां बुद्धिकुशलैरनुसन्धेयम् । स्वार्थानुमानमिति ॥ स्वस्यार्थः प्रयोजनं साध्यसंशयनिवृत्तिरूपं

## रामरुद्रीयम्.

द्वयक्त्यभावविशिष्टाभावोभयाभावानां च निरुक्तोभयसंबन्धेन साध्यतावच्छेदकविशिष्टतया तानादाय नाव्याप्तिः । यत्तूक्तं—अप्रतियोगिपदं प्रतियोगितानवच्छेदकसाध्यतावच्छेदका-

## नृसिंहप्रकाशिका.

लक्ष्यानुमानं विभजते—अनुमानमिति ॥ अनुमितिकरणत्वरूपलक्षणलक्षितं लिङ्गविशेष्यकव्याप्तिप्रकारकज्ञानमित्यर्थः । द्विविधं स्वार्थं परार्थं चेति ॥ स्वार्थादिशब्दस्य भावप्रधानो निर्देशः । इति अभेदे । तस्य द्विविधमिति शब्दार्थैकदेशप्रकारद्वयेऽन्वयः । तथा च स्वार्थत्वपरार्थत्वाभिन्नप्रकारद्वयान्यतरविशिष्टमिति फलितार्थः । आद्यं दर्शयति—स्वार्थमिति ॥ स्वानुमितिहेतुरिति स्वसमवेतसामग्रीप्रयोज्यानुमितिः हेतुरित्यर्थः । सहचारज्ञानप्रयोज्यं यदनुमितिकरणं तदेव स्वार्थानुमानमित्यर्थः । स्वतन्त्रास्तु—पञ्चावयववाक्याप्रयोज्यव्याप्तिज्ञानं स्वार्थानुमानमित्याहुः । एतदेवोपपादयति—तथा हीत्यादिना ॥ स्वयमेवेति ॥ अनुमितसावान् कश्चित्पुरुष एवेत्यर्थः । तेन व्यभिचारशङ्कासामग्रीविरहवतः भूयोदर्शनं विना व्याप्तिग्रहेणोत्पत्तावपि न क्षतिः । एतस्य गत इत्युत्तरेणान्वयः। भूयोदर्शनेनेति ॥ यावद्धेत्वधिकरणेषु वह्निदर्शनेनेत्यर्थः । तृतीयार्थः प्रयोज्यत्वं, तस्य ग्रहधात्वर्थेऽन्वयः । तथा च निरुक्तभूयोदर्शनेन व्यभिचारशङ्कानिरासात् व्यभिचारज्ञानविरहविशिष्टसहचारज्ञानाच्च व्याप्तिग्रह इति भावः । यत्र धूमः तत्राग्निरितीति ॥ धूमव्यापकवह्निसमानाधिकरणो धूम इत्याकारकेत्यर्थः । वह्निपदस्य धूमव्यापकताविशिष्टवह्निलाक्षणिकत्वात् । एतस्यापि ग्रहधात्वर्थेऽन्वयः । महानसादौ व्याप्तिं गृहीत्वेति ॥ अधिकरणत्वरूपसामान्यधर्मेण महानसादिरूपाधिकरणविशेषघटितव्याप्तिविषयकप्रत्यक्षोत्तरमित्यर्थः । एतेन व्याप्तिस्माकरसंस्कारसत्त्वमाविष्कृतम् । गत इति ॥ प्राप्तवानित्यर्थः । एतेन वक्ष्यमाणसंशयजनकधर्मिज्ञानसंपत्तिस्सूचिता । तद्गते चाग्नौ सन्दिहान इति ॥ कोटिद्वयोपस्थित्यादिमहिम्नेत्यादिः । पर्वतवृत्त्यग्निविषयकसन्देहवानित्यर्थः । पर्वतविशेष्यक-

## नीलकण्ठप्रकाशिका.

यस्मात् इति व्युत्पत्त्या स्वीयसंशयनिवृत्तिप्रयोजनकानुमानमित्यर्थः । **पश्यन् इति** ॥

## रामरुद्रीयम्.

वच्छिन्नपरं, अतो न दोष इति । तन्न चारुतरं, एवमपि कपिसंयोगी एतद्वृक्षत्वात् इत्यादौ अव्याप्तिप्रसङ्गादिति वाच्यम् । संयोगी सत्त्वादित्यादौ अतिव्याप्तिप्रसङ्गात् । संयोगाभावस्य निरुक्तोभयसंबन्धेन साध्यतावच्छेदकविशिष्टतया घटाभावस्यैव लक्षणघटकत्वात् । न च तत्र गुणासमवेतसामान्याभावमादाय निरुक्तोभयसंबन्धेन साध्यतावच्छेदकविशिष्टान्यतया संयोगस्यापि तत्प्रतियोगित्वात् नातिव्याप्तिरिति वाच्यम् । एवमपि प्रमेयवान् वाच्यत्वादित्यादौ निरुक्तोभयसंबन्धेन साध्यतावच्छेदकविशिष्टान्यहेतुसमानाधिकरणाभावाप्रसिद्धया अव्याप्तेर्दुर्वारत्वात् । हेतुसमानाधिकरणाभावमात्रस्यैव प्रमेयत्वाश्रयप्रतियोगिकत्वात् प्रमेयत्वावच्छिन्नसमानाधिकरणत्वाच्चेति । मैवं । साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हि साध्यतावच्छेदकसंबन्धेन साध्यतावच्छेदकावच्छिन्नाधि-

## नृसिंहप्रकाशिका.

वह्नितदभावकोटिकसन्देहवान् पुरुष इति यावत् । **पर्वते धूमं पश्यन्निति** ॥ पर्वतविशेष्यकधूमप्रकारकप्रत्यक्षसमानकाल इत्यर्थः । तादृशप्रत्यक्षाव्यवहितोत्तरक्षण इति यावत् । तेन संस्कारस्य उद्बुद्धत्वमाविष्कृतम् । **व्याप्तिं स्मरति यत्र धूमस्तत्राग्निरितीति** ॥ पूर्वानुभवसमानाकारकधूमव्यापकवह्निसमानाधिकरणो धूम इत्याकारकव्याप्तिविषयकस्मृतिमान् भवतीत्यर्थः । **तदनन्तरमिति** ॥ व्याप्तिस्मृतिपक्षधर्मताज्ञानोभयानन्तरमित्यर्थः । एतेन वक्ष्यमाणविशिष्टवैशिष्ट्यावगाहिपरामर्शकारणसत्त्वं वक्ष्यमाणव्याप्त्यंशे अलौकिकप्रत्यक्षजनकोपनायकसत्त्वं चाविष्कृतम् । **अयं पर्वत इति ज्ञानमुत्पद्यत इति** ॥ अत्र वह्निकोटिकसंशयो यद्विशेष्यकः तद्विशेष्यकमेव तदपि ज्ञानमिति प्रात्यक्षिकमेवेति च स्फुटीकरणाय इदंत्वेन पक्षनिर्देश इति हृदयम् । **अयमेवेति** ॥ धूमाद्यंशे लौकिकनिरुक्तप्रात्यक्षिकानिश्चयोऽपीत्यर्थः । अपिशब्दात् स्मरणात्मकपरामर्शस्यापि संग्रहः । **लिङ्गपरामर्श इत्युच्यत इति** ॥ लिङ्गपरामर्शशब्देन तान्त्रिकैर्व्यवह्रियत इत्यर्थः । **तस्मादिति** ॥ तस्मादपीत्यर्थः। निरुक्तपरामर्शव्यापारकव्याप्तिज्ञानादपीति यावत् । अपिना वक्ष्यमाणपरार्थानुमानसमुच्चयः। **इति ज्ञानमनुमितिरिति**॥ इत्याकारकज्ञानं अनुमितिरित्यर्थः। स्वार्थानुमानं उपसंहरति— **तदेतदिति** ॥ सहचारज्ञानप्रयोज्यं प्रात्यक्षिकनिरुक्तपरामर्शद्वारा यदनुमितिकरणं तदेवेत्यर्थः । **स्वार्थानुमानमिति** ॥ स्वार्थानुमानशब्देन व्यवह्रियत इत्यर्थः । अत्र स्वयमेव भूयोदर्शनेनेत्यादियथाश्रुतमूलात् भूयोदर्शनस्य व्याप्तिग्राहकत्वं लभ्यते, तच्चायुक्तम् । भूयोदर्शनशब्दार्थस्य निर्दिष्टस्य निर्वक्तुमशक्यत्वात् भूयस्त्वस्य त्रित्वादिरूपत्वेनाननुगमात् व्यभिचाराच्चेत्याशयेनाक्षिपति—**दीपिकायां नन्वित्यादिना** ॥ **पार्थिवत्वलोहलेख्यत्वादाविति** ॥ पृथिवीत्वरूपहेतुलोहलेख्यत्वरूपसाध्ययोरित्यर्थः । आदिना वह्न्यादिरूपहेतु-

हृलेख्यत्वादौ शतशः सहचारदर्शनेऽपि वज्रमणौ व्यभिचारोपलब्धेर्भूयो-
दर्शनेन कथं व्याप्तिग्रह इति चेन्न । व्यभिचारज्ञानविरहसहकृतसह-

---

## नीलकण्ठप्रकाशिका.

एकसंबन्धिज्ञानं अपरसंबन्धिस्मारकं इति रीत्या दर्शनस्य स्मृतिहेतुत्वादित्यर्थः । **कथं व्याप्तिग्रह इतीति** ॥ व्यभिचारज्ञानदशायां न कश्चिदपि व्याप्तिनिश्चयमभ्युपैतीति भूयो- दर्शनस्य व्याप्तिनिश्चयहेतुत्वं न संभवतीति भावः। इदमुपलक्षणम्। भूयोदर्शनमित्यस्य भूय- सां दर्शनानां समाहार इति, भूयसां साध्यहेतूनां दर्शनमिति, भूयस्सु अधिकरणेषु दर्शनमि- ति वार्थः। नाद्यः, एकत्रैव सहचारदर्शनधारया व्याप्तिनिश्चयप्रसङ्गात् । न द्वितीयतृतीयौ, 'एतद्रूपवान् एतद्रसात्' इत्यादौ साध्यहेत्वोराधिकरणे च भूयस्त्वाभावेन व्याप्त्यनिश्चय- प्रसङ्गादित्यपि बोध्यम् । मणिकारसिद्धान्तमवलम्ब्याह— **व्यभिचारज्ञानविरहेति** ॥

## रामरुद्रीयम्.

करणे साध्यतावच्छेदकसंबन्धेन स्वप्रतियोगिमत्ताग्रहविरोधितानियामकसंबन्धेन वाच्यम्। अन्यथा संयोगेन धूमसामान्याभावस्यापि कालिकेन धूमाधिकरणवृत्तितया अतिव्याप्ति- प्रसङ्गात् । तथा चोक्तस्थले घटत्वाद्यात्मकाभावस्यैव लक्षणघटकत्वमुपपद्यते, साध्यवत्ता-

## नृसिंहप्रकाशिका.

धूमादिरूपसाध्ययोः परिग्रहः । **शतशस्सहचारदर्शनेऽपीति** ॥ शतत्वादिरूपभूयस्त्व- विशिष्टसामानाधिकरण्यविषयकप्रत्यक्षात्मककारणसत्त्वेऽपीत्यर्थः । **व्यभिचारोपलब्धे- रिति** ॥ हीरकायोगोलकाद्यन्तर्भावेन निरुक्तसाध्ये निरुक्तहेतुसमानाधिकरणाभावप्रति- योगित्वरूपव्यभिचारज्ञानोत्पत्तिसंभवादित्यर्थः । **भूयोदर्शनेन कथं व्याप्तिग्रह इति** ॥ व्याप्तिप्रत्यक्षं साक्षात् परम्परया वा कथं भूयोदर्शनजन्यमित्यर्थः । तथा च निरुक्तभूयो- दर्शनसत्त्वेऽपि स्वसामग्रीबलात् साध्ये हेत्वव्यापकत्वरूपव्यभिचारज्ञानोत्पत्तिसंभवेनाव्यभि- चरितसाध्यसामानाधिकरण्यरूपव्याप्तिग्रहानुत्पत्तेः भूयोदर्शनस्य साक्षात् व्यभिचारज्ञान- निवर्तनद्वारा वा न हेतुत्वसंभव इति भावः । इदमुपलक्षणम् । भूयोदर्शनशब्दार्थः भूयस्सु स्थानेषु साध्यसाधनसहचारदर्शनं, भूयसां साध्यसाधनानां सहचारदर्शनं, भूयांसि साध्य- साधनसहचारदर्शनानीति वा । नाद्यः, एतद्व्यक्तिवृत्तियावद्गुणवान् एतद्व्यक्तिवृत्तियाव- त्कर्मवत्त्वात् इत्यादौ व्याप्यग्रहप्रसङ्गः । साध्यहेत्वोरनेकाधिकरणाप्रसिद्ध्या निरुक्तभूयो- दर्शनरूपकारणाभावात् । न द्वितीयः; द्रव्यम् पृथिवीत्वादित्यादौ व्याप्त्यग्रहप्रसङ्गः साध्य- हेत्वोः भूयस्त्वाभावेन निरुक्तभूयोदर्शनाप्रसिद्धेः । नान्त्यः धूमवान् वह्नेरित्यादौ अयोगो- लकान्तर्भावेन व्यभिचारग्रहकालेऽपि व्याप्तिग्रहापत्तिः । महानसान्तर्भावेन वह्निधूमयोः सामानाधिकरण्यविषयकानेकदर्शनात्मकभूयोदर्शनसंभवेन कारणसत्त्वात् भूयस्त्वस्य त्रित्वच- तुष्ट्वादिरूपत्वेनानेकतया तादृशभूयस्त्वघटितभूयोदर्शनत्वेन हेतुतायां अनन्तकार्यकारण- भावापत्तिश्चेत्यपि बोध्यम् । **व्यभिचारज्ञानविरहसहकृतेति** ॥ व्यभिचारज्ञानविरहस्य

**चारज्ञानस्य व्याप्तिग्राहकत्वात् । व्यभिचारज्ञानं निश्चयः शङ्का च । तद्वि-**

---

## नीलकण्ठप्रकाशिका.

**व्याप्तिग्राहकत्वादिति॥** व्याप्तिश्च हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदक-साध्यतावच्छेदकावच्छिन्नसाध्याधिकरणवृत्तिताविशिष्टहेतुतावच्छेदकरूपैव । सामानाधिकर-ण्यान्तस्य रासभादिसाधारण्यात् धूमत्वादेः स्वरूपतो व्याप्यतावच्छेदकत्वं तादृशधूमत्वत्वा-दिरूपेण च व्याप्तित्वमित्यवच्छेद्यावच्छेदकयोरैक्येऽपि न क्षतिः । इत्थं च साध्यतावच्छे-दके तथाविधप्रतियोगितानवच्छेदकत्वांशग्रहे साध्यतावच्छेदके तथाविधप्रतियोगितावच्छे-दकरूपव्यभिचारग्रहाभावो विपरीतग्रहाभावविधया हेतुः । साध्यसमानाधिकरणवृत्तिहेतुता-वच्छेदकांशग्रहे तु विशेषणज्ञानविधया सामानाधिकरण्यज्ञानं हेतुरिति रीत्या व्यभिचारज्ञाना-भावसामानाधिकरण्यज्ञानयोर्व्याप्तिग्रहहेतुतेति ध्येयम् । वस्तुतस्तु हेतुव्यापकसाध्यसामाना-धिकरण्यमेव व्याप्तिः । न च व्याप्तेः रासभादिसाधारण्येन प्रमात्मकरासभलिङ्गकपरामर्शाद्भ्र-मात्मकवह्न्यनुमित्यापत्तिः, प्रमात्मकपरामर्शस्य भ्रमात्मकवह्न्यनुमित्यजनकत्वनियमसत्त्वेन इष्टापत्तेरयोगादिति वाच्यम् यद्धर्मावच्छिन्नव्यापकत्वं व्याप्तिघटकं, तद्धर्मधर्मितावच्छेदक-व्याप्तिप्रकारकनिश्चयस्यैवानुमितिहेतुत्वोपगमेनादोषात् । अत एव व्याप्तिशरीरे धूमत्वाप्रवे-

## रामरुद्रीयम्.

ग्रहविरोधिताघटकदैशिकविशेषणतासंबन्धेन तस्यावृत्तित्वात् प्रतियोगिमत्ताग्रहविरोधिता-घटकसमवायेन हेत्वधिकरणवृत्तित्वाच्चेति । तमादायैव लक्षणसमन्वयात् । यद्यप्येवं सति कालिकसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभावे साध्ये आत्मत्वादिहेतावव्याप्तिः । तत्र साध्यवत्ताग्रहविरोधिताघटककालिकसंबन्धेन साध्याधिकरणे वृत्तित्वस्यैवाप्रसिद्ध्या नि-रुक्तोभयसंबन्धेन साध्यतावच्छेदकविशिष्टाप्रसिद्धेः । तथापि निरुक्तोभयसंबन्धेन साध्यता-वच्छेदकाभाववत्त्वस्यैव हेतुसमानाधिकरणाभावे विशेषणत्वोपगमात् नानुपपत्तिः । घटा-

## नृसिंहप्रकाशिका.

सहचारज्ञानस्य चेत्यर्थः । **व्याप्तिग्राहकत्वादिति ॥** प्रतिबन्धकाभावविधया विशेषण-ज्ञानविधया च व्याप्तिप्रत्यक्षहेतुत्वादित्यर्थः । तथा चात्र भूयोदर्शनपदस्य व्यभिचारज्ञान-विरहसहकृतसहचारज्ञाने लाक्षणिकत्वात् नोक्तदोषप्रसक्तिरिति भावः । ननु व्याप्तिप्रत्यक्षे व्यभिचारज्ञानस्य न तादृशनिर्णयत्वेन प्रतिबन्धकत्वम्, व्यभिचारसंशयसत्त्वेऽपि तत्प्रत्यक्षा-पत्तेः, न चेष्टापत्तिः ग्राह्यसंशयस्य प्रत्यक्षप्रतिबन्धकतायाः सकलतान्त्रिकसिद्धत्वात् । न व्यभि-चारसंशयत्वेन, व्यभिचारनिश्चयकाले व्याप्तिप्रत्यक्षापत्तेरित्याशङ्क्य संशयनिश्चयसाधारणव्य-भिचारज्ञानत्वेन प्रतिबन्धकत्वमङ्गीकृत्य परिहरति—**व्यभिचारज्ञानं निश्चयश्शङ्का चेति ॥** तथा च व्याप्तिप्रत्यक्षे व्यभिचारसंशयनिश्चयसाधारणव्यभिचारज्ञानत्वेन प्रति-बन्धकत्वमङ्गीकृत्य तद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वेन हेतुत्वस्वीकारान्नोक्तदोष इति भावः । व्यभिचारज्ञानविरहः कस्मादित्यत आह—**तद्विरह इति ॥** व्यभिचारज्ञानत्वा-

रहः कचित्तर्कात्, क्वचित्स्वतःसिद्ध एव। धूमाग्न्योर्व्याप्तिग्रहे कार्यकारण-

---

## नीलकण्ठप्रकाशिका.

शेन लाघवमिति दिक्। **शङ्का चेति** ॥ व्यभिचारसंशयस्यापि व्याप्तिग्रहप्रतिबन्धकत्वानुभवात्तत्साधारणव्यभिचारज्ञानत्वावच्छिन्नाभावो हेतुरिति हृदयम्। **तद्विरहो** व्यभिचारशङ्काविरहः। **क्वचिदिति** ॥ तर्काभावेतरनिखिलकारणसमवधानस्थल इत्यर्थः। **क्वचित्स्वतःसिद्ध एवेति** ॥ इतरकारणविरहस्थले तादृशकारणविरहप्रयुक्त एवेत्यर्थः। तथा च तत्र तर्कापेक्षा नेति भावः। **धूमाग्न्योरिति** ॥ धूमाग्न्योर्व्याप्तिग्रहे उत्पत्त्य-

## रामरुद्रीयम्.

भावाधिकरणत्वादीनां प्रसिद्धेन स्वरूपसंबन्धेन स्वावच्छिन्नाधिकरणे कालिकसंबन्धावच्छिन्नवृत्तित्वेन रूपेण व्यधिकरणसंबन्धेन साध्यतावच्छेदकाभाववत्त्वस्य सौलभ्यात् इति सुधीभिश्चिन्तनीयम्। मूले पर्वतादिवृत्तित्वं पर्वताद्यनुयोगिको हेतुतावच्छेदकसंबन्ध इत्यर्थः। वह्निव्याप्यधूमवान् पर्वत इति परामर्शेनाधेयत्वानवगाहनादिति ध्येयम्। व्यभिचारज्ञाने-त्यादिसाध्ये हेतुसमानाधिकरणाभावप्रतियोगित्वज्ञानं व्यभिचारज्ञानं, तदभावश्च बाधाभावमुद्रया व्याप्तिज्ञाने कारणं, हेतुसमानाधिकरणाभावाप्रतियोगिसाध्यसमानाधिकरणवृत्तिहेतुतावच्छेदकमेव व्याप्तिः। तादृशसाध्यसामानाधिकरण्यस्य रासभादिसाधारणत्वात्। तत्र च सामानाधिकरण्यस्य विशेषणतया विशेषणज्ञानविधया तज्ज्ञानं हेतुरिति भावः। **शङ्का चेति** ॥ यद्यपि विशिष्टबुद्धौ बाधनिश्चयस्यैव प्रतिबन्धकतया व्यभिचारशङ्कायाः व्याप्तिनिश्चयप्रतिबन्धकत्वं न संभवति, तथापि प्रात्यक्षिकनिश्चये विशेषदर्शनाभावविशिष्टसंशयस्यापि प्रतिबन्धकतामताभिप्रायेणेदम्। अन्यथा पुनस्संशयसामग्र्येव निश्चयप्रतिबन्धिकेति मन्तव्यम्। **क्वचित् स्वतस्सिद्ध एवेति** ॥ संशयकारणीभूतको-

## नृसिंहप्रकाशिका.

वाच्छिन्नप्रतियोगिताकाभाव इत्यर्थः। **क्वचिदिति** ॥ व्यभिचारज्ञानोत्पादकसामग्रीसमवधानस्थल इत्यर्थः। **तर्कादिति** ॥ तर्कप्रयोज्य इत्यर्थः। ननु धूमो यदि वह्निव्यभिचारी स्यात्, तदा वह्निजन्यो न स्यात् इत्याकारकतर्कस्य धूमादिविशेष्यकवह्न्यादिव्यभिचारप्रकारकज्ञानत्वावच्छिन्नाभावप्रयोजकत्वं न संभवति। व्यभिचारज्ञानं प्रति तर्कस्य ग्राह्याभावाद्यनवगाहितया अप्रतिबन्धकत्वात् प्रतिबध्याभावस्यैव प्रतिबन्धकप्रयोज्यत्वादिति चेन्न। कार्यमात्रे कामिनीजिज्ञासाया इव व्यभिचारज्ञाने अनिष्टप्रसञ्जनात्मकतर्कस्यापि अनुभवानुरोधेन मणिमन्त्रादिन्यायेनेव प्रतिबन्धकत्वस्वीकारात् तर्कस्य व्यभिचारज्ञानाभावप्रयोजकत्वं निराबाधमिति भावः। **क्वचिदिति** ॥ व्यभिचारज्ञानोत्पादकसामग्रीविरहस्थल इत्यर्थः। **स्वतस्सिद्ध एवेति** ॥ स्वसामग्रीविरहप्रयोज्य एवेत्यर्थः। तर्कस्य व्यभिचारशङ्कानिवर्तकत्वं उदाहरणद्वारा दर्शयति—**धूमाग्न्योः व्याप्तिग्रह इति** ॥ धूमविशेष्यकवह्निनिरूपितव्याप्तिप्रकारकप्रत्यक्ष इत्यर्थः। **कार्यकारणेत्यादि** ॥ धूमो यदि

भावभङ्गप्रसङ्गलक्षणस्तर्को व्यभिचारशङ्कानिवर्तकः। ननु सकलवह्निधूमयोरसन्निकर्षात्कथं व्याप्तिग्रह इति चेन्न । वह्नित्वधूमत्वरूपसामान्यप्रत्यासत्त्या

---

## नीलकण्ठप्रकाशिका.

माने व्यभिचारशङ्कानिवर्तकः कार्यकारणभावभङ्गप्रसङ्गलक्षणस्तर्क इत्यन्वयः । स च तर्को

## रामरुद्रीयम्.

ट्युपस्थित्यादिविरहप्रयुक्त इत्यर्थः । ननु महानसे व्याप्तिग्रहवेळायां धूमसामान्ये व्याप्तिनिश्चये सत्येव वह्निव्याप्यो धूम इति स्मरणात् वह्निव्याप्यधूमवान् पर्वत इति परामर्शः संभवति, महानसे व्याप्तिप्रत्यक्षदशायां धूमान्तरस्यासन्निकर्षात् धूमसामान्ये व्याप्तिनिश्चयो न संभवत्येवेत्याशयेनाशङ्कते—**नन्वित्यादिना** ॥ मूले स्वार्थानुमानं स्वानुमितिहेतुरित्युक्तम् । तथा च परार्थानुमितिहेतुः परार्थानुमानमिति लभ्यते । अत्र च स्वपदं यदि अनुमानत्वेनाभिमतव्याप्तिज्ञानाश्रयपरं, तदा परार्थानुमानस्यापि स्वानुमितिहेतुत्वादसङ्गतिः। न्यायप्रयोगप्रयोज्यानुमानरूपव्याप्तिज्ञानस्यैव परार्थानुमानपरत्वं, व्याप्तिज्ञानप्रयोजकसहचारदर्शनन्यायप्रयोगादिकर्तृकपरमेव ; तथा च अनुरूपकेन सहचारदर्शनादिना यत्र व्याप्तिनिश्चयः तत् स्वार्थानुमानं, यत्र परप्रयुक्तन्यायप्रयोगात् अनुमानरूपव्याप्तिनिश्चयः, तत्

## नृसिंहप्रकाशिका.

वह्निव्यभिचारी, तदा वह्निजन्यो न स्यात् इत्याकारकवह्निजन्यत्वाभावापाद्यकतर्क इत्यर्थः ॥ **व्यभिचारशङ्कानिवर्तक इति** ॥ प्रतिबन्धकीभूतव्यभिचारज्ञानविरहप्रयोजक इत्यर्थः। ननु निरुक्तकारणबलात् सन्निकृष्टधूमविशेष्यकव्याप्तिप्रकारकप्रत्यक्षस्यैव जायमानतया कथं पर्वतीयधूमे व्याप्तिस्मरणं अनुभवस्मरणयोः समानप्रकारकसमानविशेष्यकत्वेन कार्यकारणभावात् । किञ्च सन्निकृष्टधूमे वह्निव्याप्तेः निश्चितत्वात् असन्निकृष्टधूमस्यानुपस्थितत्वात् धूमो वह्निव्याप्यः न वेति संशयानुपपत्तिरित्यभिप्रायेण शङ्कते—**नन्विति** ॥ **सकलवह्निधूमयोरिति** ॥ सकलवह्नेः सकलधूमस्य चेत्यर्थः । **असन्निकर्षादिति** ॥ चक्षुस्संयुक्तत्वाभावादित्यर्थः । **कथं व्याप्तिग्रह इति** ॥ सकलधूमविशेष्यकसकलवह्निनिरूपितव्याप्तिसामान्यप्रकारकप्रत्यक्षं कथमुत्पद्यत इत्यर्थः । तथा च पर्वतीयधूमे व्याप्तेरननुभूतत्वेन स्मरणासंभवात् पर्वतविशेष्यकव्याप्तिविशिष्टवैशिष्ट्यावगाहिपरामर्शस्य सुतरामसंभवात् पर्वतो वह्निमान् इत्यनुमितिरनुपपन्नेति भावः । इदमुपलक्षणम् । उक्तरीत्या धूमो वह्निव्याप्यो न वेति संशयोऽप्यनुपपन्न इत्यपि बोध्यम् । **धूमत्ववह्नित्वसामान्यप्रत्यासत्त्येति** ॥ प्राचीनमते इन्द्रियसंबन्धविशेष्यकज्ञानप्रकारताविशिष्टं यत् धूमत्ववह्नित्वरूपं सामान्यं तत्स्वरूपप्रत्यासत्त्येत्यर्थः ॥ नवीनमते— धूमत्ववह्नित्वरूपं यत् सामान्यं तद्विषयकज्ञानप्रत्यासत्त्येत्यर्थः। अत्रापि कदाप्यज्ञातसामान्यप्रत्यासत्त्या सर्वदा तदाश्रयसकलप्रत्यक्षापत्तिवारणाय अतीतादिज्ञानविषयधूमत्वादिप्रत्यासत्त्या सर्वदा सकलधूमसकलव-

## नीलकण्ठप्रकाशिका.

'धूमो यदि वह्निव्यभिचारी स्यात्तर्हि वह्निजन्यो न स्यात्' इत्याकारको बोध्यः । ननु महानसीयवह्निधूमयोः सन्निकृष्टत्वेन सहचारग्रहेऽप्यन्येषां वह्निधूमानामसन्निकर्षेण सहचारप्रत्यक्षासंभवेन निखिलधूमेषु व्याप्तिप्रत्यक्षं न संभवति । तथा च पर्वतीयधूमदर्शनेन व्याप्तिस्मरणासंभवात्परामर्शानुपपत्तिरित्याशयेन आशङ्कते—**नन्विति**॥ सकलवह्निधूमेषु लौकिकसन्निकर्षाभावेऽपि सामान्यलक्षणप्रत्यासत्त्यात्मकालौकिकसन्निकर्षसद्भावाद्वह्नित्वावच्छिन्नसामानाधिकरण्यत्वेन निखिलवह्निधूमसहचारप्रत्यक्षसंभवान्निखिलधूमेषु व्याप्तिग्रहः संभवति । एवं च पर्वतीयधूमेऽपि व्याप्तेर्गृहीतत्वेन धूमदर्शनेन व्याप्तिस्मरणसंभवान्न परामर्शानुपपत्तिरिति समाधत्ते—**वह्नित्वधूमत्वेति**॥ यद्यपि परार्थानुमानशब्दस्य परस्य मध्य-

## रामरुद्रीयम्.

परार्थानुमानमिति पर्यवसन्नम् । इदं च यत्त्वित्यादिमूलस्य यत्पञ्चावयववाक्यं प्रयुङ्क्ते

## नृसिंहप्रकाशिका.

ह्रयादिप्रत्यक्षापत्तिवारणाय च सामान्ये ज्ञानप्रकारताविशिष्टत्वनिवेशः । प्रकारतासंबन्धेन ज्ञानविशिष्टत्वं तदर्थः । धूमत्वादिप्रकारकस्मरणानन्तरं धूमत्वादिप्रकारकधूमत्वाद्याश्रयसकलप्रत्यक्षापत्तिवारणाय ज्ञाने इन्द्रियसंबन्धविशेष्यकत्वनिवेशः । यद्यप्युक्तापत्तिवारणाय सामान्ये इन्द्रियसंबन्धत्वनिवेशनमेवोचितं लाघवात्, तथापि धूलीपटले धूमत्वप्रत्यक्षानन्तरं धूमत्वस्येन्द्रियसंबन्धत्वाभावेन सकलधूमप्रत्यक्षानुपपत्त्या गुर्वपि तदेव विशेषणमुपात्तम् । इत्थं च धूमत्वस्येन्द्रियसंबद्धधूलीपटलविशेष्यकज्ञानप्रकारतावत्त्वात् नोक्तानुपपत्तिः । अधिकं त्वस्मत्कृतमुक्तावलीप्रभायामनुसन्धेयम् । निर्विकल्पकस्मृतिसाधारणं सामान्यविषयकज्ञानत्वं प्रत्यासत्तितावच्छेदकमिति नवीनमतम् । तेषामयमाशयः—निरुक्तसामान्यस्य प्रत्यासत्तित्वे धूमत्वनिर्विकल्पकतृतीयक्षण एव धूमत्वप्रकारकसकलधूमविशेष्यकप्रत्यक्षसंभवेन क्षणविलम्बः, धूमत्वादिलौकिकप्रत्यक्षसामग्रीसमवहितधूमत्वादिप्रकारकस्मरणद्वितीयक्षणे धूमत्वादिप्रकारकसकलधूमादिविशेष्यकप्रत्यक्षापलापः, प्रत्यासत्तितावच्छेदकगौरवं च मन्मते नोक्तदूषणत्रयम् । परन्तु केवलधूमत्वादिप्रकारकस्मरणादितः तादृशप्रत्यक्षापत्तिवारणाय तदिन्द्रियजन्यतद्धर्मप्रकारकतादृशप्रत्यक्षे तदिन्द्रियजन्यतद्धर्मप्रकारकबोधसामग्र्या अप्युपयोगित्वं वाच्यमिति न कश्चिद्दोष इति हृदयम् । परार्थानुमानं दर्शयति—**मूले यत्त्विति** ॥ **स्वयमेवेति** ॥ अनुमितिमानेवेत्यर्थः । एतस्य प्रयुङ्क्त इत्यनेनान्वयः । **धूमादग्निमनुमायेति** ॥ धूमलिङ्कवह्न्यनुमित्युत्तरमित्यर्थः । **परं बोधयितुमिति** ॥ स्वसमीपवृत्तिपुरुषोऽपि वह्न्यनुमितिमान् भवत्विति इच्छावानित्यर्थः । **पञ्चावयववाक्यं प्रयुङ्क्त इति** ॥ वक्ष्यमाणपञ्चावयवघटितवाक्यप्रयोक्ता भवतीत्यर्थः । तादृशवाक्यप्रयोज्यपक्षविशेष्यकव्याप्तिविशिष्टवैशिष्ट्यावगाहिमानसपरामर्शव्यापारकं तादृशवाक्यप्रयोज्यहेतुविशेष्यकव्याप्तिप्रकारकमानसिकज्ञानमिति शेषः । उदाहरणान्तेन हेतुविशेष्यकतादृशमानसस्य निगमनान्ते पक्ष-

## नीलकण्ठप्रकाशिका.

स्थस्य अर्थः प्रयोजनं साध्यानुमितिरूपं यस्मादिति व्युत्पत्त्या परसमवेतानुमितिकरण

## रामरुद्रीयम्.

तत् परार्थानुमानमिति योजनया वाक्यप्रयोगस्यानुमानत्वमिति लभ्यते, तच्चासङ्गतम्।

## नृसिंहप्रकाशिका.

विशेष्यकताद्दशमानसस्य च संभवादित्याशयः। तदुत्तरं यत्त्विति योज्यम्। तथा च सह-चारज्ञानाधीनव्याप्तिज्ञानकरणकानुमितिमता स्वसमीपवृत्तिपुरुषस्याप्येताद्दशानुमितिर्भवत्विति-तीच्छया प्रयुक्तोदाहरणान्तवाक्यप्रयोज्यहेतुविशेष्यकव्याप्तिप्रकारकमानसिकज्ञानम्, तेन प्रयुक्तनिगमनान्तवाक्यप्रयोज्यपक्षविशेष्यकव्याप्तिविशिष्टहेतुवैशिष्ट्यावगाहिमानसिकपरा-मर्शव्यापारकं यदिति समुदितग्रन्थार्थः। **तदिति** ॥ ताद्दशपरामर्शव्यापारकताद्दशव्याप्तिज्ञा-नमेवेत्यर्थः। **परार्थानुमानमिति** ॥ परार्थानुमानस्वरूपमिति परार्थानुमानशब्देन तान्त्रिकैः व्यवह्रियत इति वार्थः। यथाश्रुते वाक्यस्यानुमानत्वाभावेनासाङ्गत्यापत्तेः। तथा च न्याय-प्रयोज्यानुमानत्वं परार्थानुमानलक्षणमिति फलितम्। अत्रोचितानुपूर्विकप्रतिज्ञादिपञ्चसमु-दायत्वं न्यायत्वम्। व्युत्क्रमप्रयुक्तप्रतिज्ञादिपञ्चकसमुदायेऽतिव्याप्तिवारणायोचितानुपूर्वि-केति। तत्त्वं च कथकसंप्रदयाविरुद्धत्वं। परप्रतिपत्त्यर्थं गौतमादिभिः प्रतिज्ञाद्युत्तरमेव हेत्वादेः प्रयुक्तत्वाल्लक्षणसमन्वयः। तैः हेत्वाद्युत्तरं प्रतिज्ञादेरप्रयुक्तत्वान्नातिव्याप्तिः। ताद्दशावय-वद्वयसमुदायादावतिव्याप्तिवारणाय पञ्चकेति। न्यायवाक्यमुदाहरति—**यथेति** ॥ तथा चायं, तस्मात्तथेतीति प्राचीनमतानुसारेण। नवीनमते वह्निव्याप्यधूमवानयं त-स्मात् वह्निमानिति बोध्यम्। अत्र तथाशब्दस्य निपातातिरिक्तनामत्वाभावेन तथा-शब्दार्थवह्निव्याप्यधूमस्य संयोगरूपभेदसंबन्धेनेदंपदार्थपर्वतत्वावच्छिन्ने अन्वयसंभवेन उपनयवाक्यजन्यशाब्दबोधस्यैव परामर्शरूपतया तस्य निष्पन्नत्वेन तदर्थन्यायप्रयोगवै-यर्थ्यापत्तेः। एवं निगमनघटकतथाशब्दार्थस्य वह्नेस्संयोगेन इदंपदार्थपर्वतेऽन्वयसंभवेन निगमनवाक्यादेव अधिकं त्विति न्यायेन उद्देश्यानुमितिसमानाकारकज्ञानस्य निष्पन्नतया अनुमितेरनावश्यकत्वेन तदर्थं न्यायप्रयोगवैयर्थ्यापत्तेरित्याद्यरुचिं हृदि निधाय तथाशब्द-घटितोपनयादिकं परित्यज्य नवीनाः प्रकारान्तरेण उपनयादिकमङ्गीचक्रुरिति हृदयम्। परार्थानुमानमुपसंहरति—**अनेनेति** ॥ निरुक्तन्यायवाक्येनेत्यर्थः। तृतीयार्थः प्रयोज्यत्वं, तस्य प्रतिपादितेत्यत्र प्रतिपत्तावन्वयः। **प्रतिपादितादिति**। प्रतिपत्तिविषयाल्लिङ्गादित्यर्थः। न्यायप्रयोज्यमानसिकलिङ्गपरामर्शादिति यावत्। पञ्चम्यर्थो जन्यत्वम्, तस्य प्रतिपाद्यते इत्यत्र प्रतिपत्तावन्वयः। **परोऽपीति** ॥ स्वसमीपवर्तिपुरुषोऽपीत्यर्थः। **अग्निं प्रतिपद्य-त इति** ॥ वह्निविधेयकानुमितिमान् भवतीत्यर्थः। तदेतत् परार्थानुमानमिति शेषः। पञ्चावयववाक्यं प्रयुङ्क्ते इत्यनेनावयवानामुपस्थितत्वात् प्रसङ्गसङ्गत्या अवयवलक्षणम् त-त्स्वरूपञ्चाह—**प्रतिज्ञेत्यादि** ॥ अत्र चरमपदस्य प्रतिज्ञादिनिगमनान्तान्यमतमत्वावच्छिन्न-

## नीलकण्ठप्रकाशिका.

लिङ्गपरामर्शोऽर्थः । अत एव 'स्वार्थानुमितिपरार्थानुमित्योर्लिङ्गपरामर्श एव करणम्' इत्य-

## रामरुद्रीयम्.

सर्वत्र व्याप्तिज्ञानस्यैवानुमानत्वादिति वदन्ति । तथा च यत्र व्याप्तिज्ञानाय पञ्चावयव-

## नृसिंहप्रकाशिका.

लक्षणया तादृशान्यतमत्वं अवयवलक्षणम् । तद्विशिष्टं अवयवस्वरूपमित्यर्थो ल-भ्यते। हेत्वन्त एवावयव इति बौद्धकदेशिनः। उदाहरणान्त एव तथेति नवीनैकदेशिनः। उपनयान्त एव तथेति प्राचीनैकदेशिनः। एतत्सर्वमयुक्तमिति बोधनाय पञ्चेत्युक्तम् । हेत्व-न्तेन हेतोः गमकत्वबोधेऽपि व्याप्तिमत्त्वाबोधनात् उदाहरणान्तेन तदुभयबोधनेऽपि पक्षधर्म-त्वाबोधनात् उपनयान्तेनैतत्त्रितयबोधनेऽपि अबाधितत्वासत्प्रतिपक्षत्वाबोधनात्, एतत्सर्व-बोधनार्थं निगमनान्तस्य अवयवत्वं स्वीकार्यमित्याशयः । ननु निगमनस्य कथमबाधित-त्वादिबोधजनकत्वम् । तत्र तद्बोधकपदाभावादिति चेदत्र प्राञ्चः—निगमनघटकतत्पदस्या-बाधितत्वादिविशिष्टहेतौ लाक्षणिकत्वं स्वीक्रियते सर्वनाम्नि न लक्षणेति नियमस्य निर्यु-क्तिकत्वेन अश्रद्धेयत्वादित्याहुः । मणिकारप्रभृतयस्तु—वह्नौ निगमनवाक्यात् व्याप्ति-विशिष्टहेतुज्ञानज्ञाप्यत्वबोधानन्तरं प्रतिज्ञाहेतुवाक्याभ्यां एकवाक्यतया बोधितस्य वह्निनि-ष्ठधूमज्ञानज्ञाप्यत्वस्य पुनर्बोधने किं प्रयोजनमिति प्रयोजनजिज्ञासायां औचित्यावर्जनीय-तया अबाधितत्वादिबोधस्यैव पुनर्बोधनप्रयोजकत्वस्वीकारेण निगमनस्याबाधितत्वादि-विषयकबोधौपयिकत्वम् । तथा हि अयं हेतुः अबाधितत्वादिमान् साध्यनिष्ठहेतुज्ञानज्ञाप्य-त्वबोधकस्ववाक्यानन्तरोत्पन्नवाक्यबोधितसाध्यनिष्ठहेतुज्ञानज्ञाप्यत्वघटकहेतुत्वादित्यनुमाना-दबाधितत्वादिप्रकारकहेतुविशेष्यकानुमित्युत्पत्तौ निरुक्तहेतुतावच्छेदकघटकहेतुज्ञानज्ञाप्यत्व-स्य पुनर्बोधकतया निगमनस्याबाधितत्वादिविषयकबोधोपयोगित्वं इति प्राहुः। निरुक्तावयव-लक्षणस्य न्यायबहिर्भूतप्रतिज्ञादावतिव्याप्तिवारणाय लक्षणे न्यायान्तर्गतत्वमपि विशेषणीयम्। प्राञ्चस्तु—पर्वतो वह्निमानित्युदासीनवाक्ये प्रतिज्ञालक्षणस्य धूमादित्याद्युदासीनवाक्येषु हेत्वादिलक्षणस्य चातिव्याप्तिवारणाय प्रतिज्ञादिलक्षणेषु सर्वेषु न्यायान्तर्गतत्वविशेषणस्य व-श्यकतया उदासीनतादृशवाक्येषु निरुक्तविशेषणघटितप्रतिज्ञात्वाद्यभावादेव तादृशप्रतिज्ञा-त्वाद्यवच्छिन्नप्रतियोगिताकभेदपञ्चकावच्छिन्नप्रतियोगिताकभेदवत्त्वरूपप्रतिज्ञाद्यन्यतमत्व-रूपलक्षणस्यानतिप्रसक्तेरवयवलक्षणे न्यायान्तर्गतत्वविशेषणं नोपादेयमित्याहुः। तन्न, निरुक्त-प्रतिज्ञाद्यन्यतमत्वस्यावयवलक्षणत्वे लक्षणतावच्छेदकतादृशान्यतमत्वत्वघटकप्रतिज्ञात्वादौ पञ्चधा न्यायान्तर्गतत्वस्य निवेशनीयतया महागौरवात्। ननु न्यायान्तर्गतत्वघटितावयव-लक्षणं प्रतिज्ञाहेतुसमुदायादावतिव्याप्तमुभयं नैकमिति प्रतीत्यप्रसिद्ध्या व्यासज्यवृत्तिधर्माव-च्छिन्नानुयोगिताकैकदेशप्रतियोगिताकभेदानभ्युपगमेन प्रतिज्ञाहेतुसमुदायादौ प्रतिज्ञात्वा-द्यवच्छिन्नप्रतियोगिताकभेदासत्त्वेन निरुक्तान्यतमत्वसत्त्वात् न्यायान्तर्गतत्वाच्चेति चेन्न उचि

**सकलवह्निधूमज्ञानसंभवात्। तस्मादिति॥** लिङ्गपरामर्शादित्यर्थः। परार्थानुमानमाह—**यत्त्विति॥** यच्छब्दस्य 'तत्परार्थानुमानम्' इति तच्छब्देनान्वयः। पञ्चावयववाक्यमुदाहरति—**यथेति॥** अवयवस्वरूपमाह—**प्रतिज्ञेति॥** उदाहृतवाक्ये प्रतिज्ञादिविभागमाह—**पर्वतो वह्निमानिति॥** साध्यवत्तया पक्षवचनं प्रतिज्ञा। पञ्चम्यन्तं लिङ्गप्रतिपादकं हेतुः। व्याप्ति-

---

## नीलकण्ठप्रकाशिका.

प्रे मूलं साधु संगच्छते, तथापि परार्थानुमानप्रयोजके पञ्चावयववाक्ये परार्थानुमानशब्दस्यौपचारिकः प्रयोग इति मनसि कृत्वा मूलमवतारयति—**परार्थानुमानमाहेति॥** पञ्चावयववाक्यमित्यनेन पञ्च अवयवा यस्य वाक्यस्येति व्युत्पत्त्या प्रतिज्ञाद्यवयवपञ्चकसमुदायत्वं न्यायलक्षणं बोध्यम्। अनेन प्रतिपादिताल्लिङ्गादिति। मूलस्य प्रतिज्ञाद्यवयवपञ्चकसमुदायप्रयोज्याल्लिङ्गपरामर्शादित्यर्थः। **साध्यवत्तया पक्षवचनमिति॥** साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकपक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकबोधजनकवाक्यमित्यर्थः। उदाहरणाद्धेतुविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यज्ञानम्, न पक्षतावच्छेदकविशिष्टे, उपनयाच्च पक्षतावच्छेदकविशिष्टे हेतुतावच्छेदकविशिष्टवैशिष्ट्यज्ञानं, न तु साध्यतावच्छेदकविशिष्टज्ञानामिति तयोर्निरासः। वाक्यपदस्य न्यायात्रयत्रवाक्यपर-

## रामरुद्रीयम्.

वाक्यं प्रयुङ्क्ते तत् परार्थानुमानमिति अर्थलाभात् नासङ्गतिरिति ध्येयम्। **दीपिकायां साध्यवत्तयेति॥** साध्यतावच्छेदकविशिष्टसाध्यविशिष्टपक्षतावच्छेदकावच्छिन्नपक्षबोधकं वाक्यं प्रतिज्ञेत्यर्थः। अत्र च उदासीनपर्वतो वह्निमानिति वाक्ये अतिव्याप्तिवारणाय

## नृसिंहप्रकाशिका.

तानुपूर्विकावयवद्वयघटकभागद्वयाघटितत्वस्यापि विशेषणीयत्वात् प्रतिज्ञाहेतुसमुदायादौ पर्वतपदधूमपदादिरूपतादृशभागद्वयघटितत्वान्नातिव्याप्तिः। पर्वतो वह्निमानित्यादिप्रतिज्ञादेरपि पर्वतपदवह्निपदादिरूपभागद्वयघटितत्वादव्याप्तिवारणाय भागद्वये अवयवद्वयघटकत्वनिवेशः। प्रतिज्ञाहेतुसमुदायादेरपि प्रतिज्ञोदाहरणात्मकावयवद्वयघटकभागद्वयाघटितत्वात् तत्रातिव्याप्तिवारणायावयवद्वये उचितानुपूर्विकत्वनिवेशः। प्रतिज्ञादौ उदाहरणात्मकावयवस्य उचितानुपूर्विकत्वाभावात् नातिव्याप्तिरिति। एतल्लक्षणे प्रतिज्ञाद्यन्यतमत्वस्थाने प्रतिज्ञाद्यघटकत्वं वा निवेशनीयम्। तावतैव प्रतिज्ञाद्येकदेशादावतिव्याप्तिवारणसंभवाल्लाघवाच्च। अधिकं अन्यत्रानुसन्धेयम्। इत्यास्तां विस्तरः। प्रतिज्ञादिस्वरूपमाह—**पर्वतो वह्निमानितीति॥** मूले प्रतिज्ञादिलक्षणस्यानुक्तत्वात् न्यूनतापरिहाराय स्वयं लक्षणान्याह— **दीपिकायां साध्यवत्तयेति॥** साध्यवता वेति शेषः। अन्यथा पर्वतो वह्निमानिति प्रतिज्ञायामव्याप्त्यापत्तेः। साध्यप्रकारकं साध्यवत्त्वप्रकारकं वेत्यर्थः। **पक्षवचनमिति॥** पक्षतावच्छेदकावच्छिन्नविशेष्यताशालिबोधजनकवाक्य-

## नीलकण्ठप्रकाशिका.

त्वान्न्यायबहिर्भूतवाक्यन्युदासः । एवमग्रेऽपि । ‘अयं न दण्डी तद्दण्डसंयोगाजन्यद्रव्य-

## रामरुद्रीयम्.

न्यायान्तर्गतत्वमपि विशेषणीयम् । न्यायत्वं च उचितानुपूर्विकप्रतिज्ञादिपञ्चकवृत्तिसमुदायत्वं, न चैवमपि प्रतिज्ञात्वस्य न्यायान्तर्गतत्वात् न्यायत्वस्य प्रतिज्ञान्तर्गतत्वाच्च अन्योन्याश्रय इति वाच्यम्, न्यायलक्षणघटकीभूतप्रतिज्ञादौ न्यायान्तर्गतत्वविशेषणस्यानुपादेयत्वात् । प्रतिज्ञासमानार्थकोदासीनवाक्यस्य उचितानुपूर्विकत्वदळेनैव वारणसंभवादिति ध्येयम् । एवमग्रिमलक्षणेष्वपि बोध्यम् । **पञ्चम्यन्तेति** ॥ पञ्चम्यन्तं यद्धेतुतावच्छेदकावच्छिन्नहेतुप्रतिपादकं वाक्यं तद्धेतुरित्यर्थः । यद्यपि एवमपि तस्मादिति निगमनैकदेशेऽतिव्या-

## नृसिंहप्रकाशिका.

मित्यर्थः । तथा च साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारत्वसाध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नावच्छेदकतानिरूपिताभेदसंबन्धावच्छिन्नप्रकारत्वान्यतरनिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिबोधजनकवाक्यत्वं प्रतिज्ञालक्षणमिति भावः । अत्र चैत्रो जानाति चैत्रो ज्ञानवानित्याकारकप्रतिज्ञासंग्रहायान्यतरत्वेन तादृशप्रकारताद्वयनिवेशः । साध्यतावच्छेदकधर्मादिनिवेशनं साध्यतावच्छेदकसंबन्धादिनिवेशनप्रयोजनञ्चोह्यम् । न्यायबहिर्भूतपर्वतोवह्निमानित्यादिवाक्येऽतिव्याप्तिवारणाय वाक्यत्वनिवेशः । न्यायावयवत्वं तदर्थः । न चैतल्लक्षणस्यायंपदानुषङ्गपक्षे तस्माज्जानाति तस्मात् वह्निमानित्यादिनिगमनेऽतिव्याप्तिः । तस्यापि निरुक्तबोधजनकत्वात् न्यायावयवत्वाच्चेति वाच्यम् । साध्यनिष्ठप्रकारतायां तन्निष्ठावच्छेदकतायां च साध्यतावच्छेदकावच्छिन्नत्वविशेषणं परित्यज्य साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वस्य तादृशविशेषणत्वस्वीकारात् विशेष्यताभिन्नत्वस्य वा निवेशनीयत्वात् निरुक्तनिगमनजन्यबोधीयसाध्यनिष्ठप्रकारताया तन्निष्ठावच्छेदकताया वा साध्यतावच्छेदकातिरिक्तज्ञानज्ञाप्यत्वधर्मावच्छिन्नत्वेन तादृशधर्मनिष्ठप्रकारतानिरूपितविशेष्यतारूपत्वेन च नातिव्याप्तिः । तादृशबोधजनकत्वं तादृशबोधजनकतावच्छेदकानुपूर्व्याश्रयत्वरूपं ग्राह्यम् । तेन यादृशप्रतिज्ञावाक्यविशेषस्य सामग्र्यन्तरविरहप्रयुक्ततादृशशाब्दबोधाजनकत्वं तद्वाक्ये नाव्याप्तिः। अधिकमन्यत्रानुसन्धेयमिति दिक् । हेत्ववयवलक्षणमाह—**पञ्चम्यन्तेति** ॥ पञ्चम्यन्तत्वे सति लिङ्गप्रतिपादकत्वे सति वाक्यत्वं लक्षणमित्यर्थः । उदाहरणादित्रिषु अतिव्याप्तिवारणाय पञ्चम्यन्तत्वविशेषणम् । तेषां प्रथमान्तत्वान्नातिव्याप्तिः । घटो दण्डात् कम्बुग्रीवादिमत्त्वादितिन्यायघटकप्रतिज्ञायामतिव्याप्तिवारणाय लिङ्गप्रतिपादकत्वनिवेशः । उदासीनधूमादिति वाक्येऽतिव्याप्तिवारणाय विशेष्यदलम् । न्यायावयवत्वं तदर्थः । निगमनघटकतस्मादितिभागस्य निगमनावयवत्वेऽपि न्यायावयवत्वास्वीकारात् न तत्रातिव्याप्तिरित्याशयः । अस्मद्गुरुचरणास्तु—न्यायान्तर्गतत्वे सत्यवयवाघटकत्वं विशेष्यदलार्थः।

प्रतिपादकं उदाहरणम् । व्याप्तिविशिष्टलिङ्गप्रतिपादकं वचनमुपनयः । हेतु-

---

## नीलकण्ठप्रकाशिका.

त्वात् 'इत्यादौ प्रतिज्ञायां पञ्चम्यन्तत्वस्य सत्त्वादतिव्याप्तेर्वारणाय—लिङ्गप्रतिपादकमिति । हेतुप्रतिपादकमित्यर्थः । **व्याप्तिप्रतिपादकमिति** ॥ प्रकृतहेतुमति प्रकृतहेतुव्यापकसाध्यबोधकवाक्यमित्यर्थः । कथमुदाहरणस्य व्यापकत्वबोधकतेति चेत्, इत्थम् साध्यपदस्य हेतुव्यापकत्वविशिष्टे साध्ये निरूढलक्षणया । न च द्विरुक्तयत्पदस्य वैयर्थ्यमिति शङ्क्यम्, तादृशतात्पर्यग्राहकतया सार्थक्यात् । अथवा प्रथमयत्पदार्थे महानसे द्वितीययत्पदार्थे महानसान्यस्मिन्प्रकृतहेतुमत्त्वस्य तत्पदार्थे तस्मिन्साध्यस्य च शाब्दबोधे जाते उत्तरकाले व्यापकताबोधो मानसः । तथा च व्याप्तिप्रतिपत्तिपरत्वमुदाहरणस्याक्षतमिति न कश्चिद्दोष इति दिक् । **व्याप्तिविशिष्टलिङ्गप्रतिपादकमिति** ॥ पक्ष-

## रामरुद्रीयम्.

प्तिः दुर्वारा, हेतुनावच्छेदकविशिष्टहेतुविशेषितहेतुत्वविषयताबहिर्भूतविषयताशून्यबोधजनकवाक्यत्वविवक्षया निगमनस्थतस्मादितिपदस्य व्याप्तिविशेषितहेतुपरत्वेन एतद्दोषवारणसंभवेऽपि धूमादालोकवान्, पर्वतो वह्निमान् धूमादित्यादिस्थलीयप्रतिज्ञैकदेशधूमादितिभागे अतिव्याप्तिः दुर्वारैव । न च साध्यान्वितस्वार्थबोधकपञ्चम्यन्तत्वे सति निरुक्तबोधजनकवाक्यत्वं हेतुत्वं, अतो न दोष इति वाच्यम् । एवमपि धूमात् वह्निमतः सधर्मा, पर्वतो वह्निमान् धूमादित्यत्र प्रतिज्ञैकदेशे धूमादिभागेऽतिव्याप्तेर्दुर्वारत्वात्, तथापि प्रकृतपक्षविशेषणतापन्नसाध्यान्वितस्वार्थबोधकपञ्चम्यन्तत्वे सति निरुक्तबोधजनकवाक्यत्वस्य विवक्षणीयत्वात् न काप्यनुपपत्तिरिति मन्तव्यम् । **व्याप्तिप्रतिपादकमिति** ॥ ननु यो

## नृसिंहप्रकाशिका.

निगमनघटकतादृशभागस्य अतथात्वान्नातिव्याप्तिः इति व्याचकुः । प्राचीनमतानुसारेण उदाहरणस्य लक्षणमाह—**व्याप्तिप्रतिपादकमिति** ॥ व्याप्यत्वाभिमतवद्विशेष्यकव्यापकत्वावच्छिन्नवत्प्रकारकाभेदसंसर्गकबोधजनकवाक्यत्वमित्यर्थः । यथाश्रुते उपनयादेरपि तादृशत्वादतिव्याप्त्यापत्तेः । उदाहरणघटकवह्निपदस्य धूमव्यापकत्वविशिष्टवह्निपरतया वीप्सायत्तत्पदयोः तात्पर्यग्राहकतया च धूमवान् धूमव्यापकवह्निमानिति बोधसंभवाल्लक्षणसमन्वयः । नन्वेवं सति उदाहरणस्य व्याप्यबोधकत्वात् प्रयोगो व्यर्थ इति चेन्न । धूमवति धूमव्यापकत्वविशिष्टवह्निमतोऽभेदबोधेन व्यापकसामानाधिकरण्यरूपव्याप्तिबोधस्याप्यावश्यकत्वात् । अत्र दृष्टान्तप्रयोगस्य न सार्वत्रिकत्वं समयबन्धाधीनत्वात्, यत्पदस्यैव वीप्सा न तत्पदस्यापि प्रथमोच्चारितयत्पदवीप्सयैव प्राचीनमते व्यापकत्वविशिष्टवह्निबोधतात्पर्यग्रहसंभवेन, नवीनमते यत्पदद्वयेन यद्यद्धर्मावच्छिन्नमुपस्थाप्यते तत्तद्धर्मावच्छिन्नस्य एकतत्पदेनैव सर्वनामत्वात् उपस्थितिसंभवेन च तत्पदवीप्साया निष्फलत्वात् अत एव 'यद्यत्पापं प्रतिजहि जगन्नाथ नम्रस्य तन्मे' इति भवभूत्युक्ति-

**साध्यवत्तया पक्षप्रतिपादकं वचनं निगमनम् । अबाधितत्वादिकं निगमनप्रयोजनम् । अनुमितिकरणमाह—स्वार्थेति ॥ ननु व्याप्तिस्मृतिपक्षधर्मता-**

---

## नीलकण्ठप्रकाशिका.

तावच्छेदकविशिष्टविशेष्यकप्रकृतसाध्यव्याप्यहेतुप्रकारकबोधजनकवाक्यमित्यर्थः । पक्षधर्मताज्ञानार्थमुपनयः इति पाठे तु प्रयुज्यत इति शेषपूरणेन प्रदर्शितार्थ एव यथाकथंचित्सङ्गमनीयः । **हेतुसाध्यवत्तया पक्षवचनमिति** ॥ हेतुज्ञानज्ञाप्यत्वविशिष्टसाध्यवद्विषयकबो-

## रामरुद्रीयम्.

यो धूमवान् स सोऽग्निमानिति वाक्यात् कथं व्याप्तिप्रतिपत्तिरिति चेन्न । यो य इति वीप्सितयत्पदस्य तत्पदस्य चाग्निपदस्य धूमव्यापकवह्नौ लक्षणायां तात्पर्यग्राहकतया धूमवान् धूमव्यापकवह्निमानित्येव ततः शाब्दबोधोदयात् व्यापकसामानाधिकरण्यस्यैव व्याप्तित्वात् । अत्रेदमवधेयम् । धूमवान् धूमव्यापकवह्निमान्, वह्निव्याप्यो धूमः, इत्यादिवाक्यानामपि उदाहरणत्वापत्तिः । इष्टापत्तौ च कथकसंप्रदायविरोध इति वीप्सितयत्पदोत्तरहेतुतावच्छेदकहेतुमद्बोधकपदतत्पदोत्तरसाध्यतावच्छेदकविशिष्टसाध्यवद्बोधकपदसमुदायत्वमेवोदाहरणत्वं बोध्यम् । एतादृशवाक्यस्य व्याप्तिबोधे तात्पर्यमिति सूचनायैव व्याप्तिबोधकमुदाहरणमित्युक्तमिति ध्येयम् । अत एवोत्तरत्र पक्षधर्मताज्ञानार्थं उपनय इत्यादि वक्ष्यति । तथा च तत्रापि तथापदोत्तरायंपदत्वं उपनयत्वं, तस्य पक्षधर्मताबोधे तात्पर्यमिति प्रदर्शयितुमेव पक्षधर्मतेत्युक्तम् । अतो न धूमवान् पर्वत इत्यादेरुपनयत्वमित्यवधेयम् । अबाधितत्वादिकमित्यादिना असत्प्रतिपक्षत्वपरिग्रहः । अबाधितत्वादित्यादिकमित्यस्य तत्प्रतिपत्तिरर्थः । अबाधितत्वादेः निगमनप्रयोज्यत्वासंभवात् तत्प्रतिपत्तिश्च लक्षणयेति मन्तव्यम् । निगमनत्वं पदद्वयसमुदायत्वं, नातो वह्निरबाधितोऽसत्प्रतिपक्षश्चेति वाक्ये अतिव्याप्तिरिति । सामान्यतोऽवयवलक्षणं च प्रतिज्ञान्यतमत्वमिति निपुणतरमूहनीयम् । **अनुमितिकरणमाहेति** ॥ अनुमि-

## नृसिंहप्रकाशिका.

रपि साधु सङ्गच्छते इति । प्राचीनमतानुसारेण उपनयलक्षणमाह—**पक्षधर्मताज्ञानार्थमिति** ॥ व्याप्तिविशिष्टहेतोः पक्षवृत्तिज्ञानप्रयोजनकमित्यर्थः । तथा च हेतुतावच्छेदकसंबन्धेन व्याप्तिविशिष्टहेतुप्रकारकपक्षतावच्छेदकावच्छिन्नविशेष्यकबोधजनकन्यायावयवत्वमुपनयलक्षणमिति भावः । मतद्वयसाधारणनिगमनलक्षणमाह—**अबाधितत्वादीति** ॥ अबाधितत्वादिविशिष्टसाध्यविशिष्टबोध इत्यर्थः । **निगमनप्रयोजनमिति** ॥ निगमनकार्यमित्यर्थः । तथा चाबाधितत्वादिविशिष्टसाध्यविषयकबोधजनकन्यायावयवत्वं निगमनलक्षणमिति भावः । अत्र तथा चायमित्युपनयवाक्यजन्यशाब्दबोधस्य परामर्शरूपत्वेऽपि तादृशोपनयवाक्यजन्यबोधस्य वादिवाक्याधीनाप्रामाण्यशङ्काकवलिततया अप्रामाण्यज्ञानानास्कन्दितपरामर्शरूपत्वाभावेन महावाक्यजन्यमहाशाब्दबोधोत्तरकालीनमानसपरामर्शादे-

ज्ञानाभ्यामेव अनुमितिसंभवे विशिष्टपरामर्शः किमर्थमङ्गीकर्तव्य इति चेन्न, 'वह्निव्याप्यवानयम्' इति शाब्दपरामर्शस्थले परामर्शस्यावश्यकतया लाघ-

---

## नीलकण्ठप्रकाशिका.

धजनकवाक्यमित्यर्थः। उत्तरकालमबाधितासत्प्रतिपक्षितत्वविषयकबोधो मानसो द्रष्टव्यः।

## रामरुद्रीयम्.

तिकरणस्य निरूपणमाहेत्यर्थः । मूले लिङ्गपरामर्शस्य व्यापारत्वेन लिङ्गविशेष्यक-ज्ञानमित्यर्थः । न तु व्याप्तिविशिष्टलिङ्गवैशिष्ट्यावगाहिज्ञानं, तस्य नियतव्यापा-राभावेन अकरणत्वात्, फलोपहितकारणं करणमिति मतानुसारेणेदमित्यपि केचित् । ननु व्याप्तिप्रकारेण यल्लिङ्गज्ञानं तदेवानुमितिकरणं स्याद्यदि व्याप्तिविशिष्टलिङ्गवैशिष्ट्या-वगाहिज्ञानं व्यापारविधया अनुमितौ करणं भवेत्, तदेव, न धूमवान् पर्वत इति चाक्षुष-ज्ञानानन्तरं वह्निव्याप्यो धूम इति स्मरणे ज्ञानद्वयादेवानुमितिसंभवेन अनुमितौ विशिष्टप-रामर्शानपेक्षणात् इत्याशङ्कते—**नन्वित्यादिना** ॥ **शाब्दपरामर्श इति** ॥ लिङ्गदर्शन-व्याप्तिस्मरणाभ्यां विनैव शाब्दो यत्र वह्निव्याप्यधूमवानिति परामर्शः, तत्र विशिष्टपरामर्श-स्याप्यनुमितिपूर्वं उभयवादिसिद्धत्वेन धूमत्वप्रकारेण व्याप्तिपक्षधर्मताज्ञानयोः कारणताद्वय-कल्पनामपेक्ष्य पक्षे व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानत्वेन एककारणताया लघुत्वादिति भावः। यद्यपि वह्निव्याप्यधूमवानयमिति ज्ञानस्यापि धूमत्वप्रकारेण व्याप्तिपक्षधर्मताज्ञानतया नोक्तकारणताद्वयकल्पने व्यभिचारः। विशिष्टपरामर्शस्य कारणत्वे ज्ञानद्वयोत्तरं विशिष्टपरा-मर्शरूपधर्मिकल्पनागौरवं दुर्वारमेव । तथापि व्याप्यतावच्छेदकधूमत्वाद्यनवगाहिवह्निव्या-प्यवानितिपरामर्शात् शाब्दरूपादनुमित्युत्पत्त्या व्याप्यतावच्छेदकप्रकारेण व्याप्तिज्ञानादेः अनुमितिहेतुत्वव्यभिचारेणासंभवदुक्तिकमेव । न च व्याप्तेः हेतुतावच्छेदकघटिततया

## नृसिंहप्रकाशिका.

वानुमितिः स्वीकार्या। तत्र वह्निमदभिन्नः पर्वतः प्रतिज्ञावाक्यार्थः तदेकदेशवह्नौ धूमादिति हे-तुवाक्यार्थधूमज्ञानज्ञाप्यत्वस्यान्वयः । उदाहरणवाक्यात् उपदर्शितरीत्या धूमवान् धूमव्या-पकवह्निमानिति बोधः। उपनयनिगमनाभ्यां एकविशिष्टापरबोधोऽप्युपदर्शितप्राय एवेति वह्नि-व्याप्यधूमज्ञानज्ञाप्यवह्निमदभिन्नवह्निव्याप्यधूमवत्पर्वताभिन्नधूमव्यापकवह्निमदभिन्नधूमवद-भिन्नधूमज्ञानज्ञाप्यवह्निमदभिन्नः पर्वत इति महाशाब्दबोधप्रकार इति प्राचामाशयः । नवीनास्तु—उदाहरणस्यैव एकार्थबोधकत्वाभावादुदाहरणार्थघटितमहावाक्यबोधः सु-तरामप्रसिद्धः । तथा हि उदाहरणघटकयोः यत्तत्पदघटितवाक्ययोः नैकार्थबोधकत्वं द्विरुक्तयत्पदेन महानसतदन्ययोः महानसत्वादिना उपस्थितत्वात्, तत्पदेनापि तत्तद्रूपा-वच्छिन्नबोधात् महानसं धूमवत् वह्निमच्च, महानसान्यं धूमवद्वह्निमच्चेति वाक्यार्थ-चतुष्टयविषयकसमूहालम्बनबोध एव स्वीकार्यः । न च वीप्सायां व्यापकत्वबोधनात् धूमवान् धूमव्यापकवह्निमानित्याकारकैकविशिष्टार्थबोधोत्पत्तौ बाधकाभाव इति वाच्यम्

## नीलकण्ठप्रकाशिका.

ननु विशिष्टवैशिष्ट्यावगाहिपरामर्शस्यानुमितिं प्रति हेतुत्वे तत्रानन्यथासिद्धत्वनियतपूर्ववृत्तित्वयोर्द्वयोः कल्पनीयतया गौरवम् । 'वह्निव्याप्यो धूमः, धूमवान् पर्वतः' इति ज्ञानद्वयस्य तव मते विशिष्टपरामर्शं प्रति कारणत्वेन क्लृप्तस्य कारणत्वे तु अनन्यथासिद्धत्वमात्रस्य कल्पनीयतया लाघवमिति प्राभाकरः शङ्कते—**नन्विति** ॥ **वह्निव्याप्यवानयमिति** ॥ अत्र त्वदभिमतकारणस्य असत्त्वेन व्यभिचारान्न ज्ञानद्वयस्य कारणत्वं संभवतीति भावः । कथंचिदपि व्याप्यतावच्छेदकधूमत्वादेर्भानं परामर्शेन संभवतीति स्फोरणाय—शाब्देति । **लाघवेनेति** ॥ कल्पनालाघवेनेत्यर्थः । तथा हि ज्ञानद्वयेन अनन्यथासिद्धत्वनियतपूर्ववृत्तित्वयोः कल्पनापेक्षया विशिष्टपरामर्शे तत्कल्प-

## रामरुद्रीयम्.

व्याप्यतावच्छेदकविषयकं वह्निव्याप्यवानिति ज्ञानं न संभवत्येवेति, नाह्निसामान्याभाववदवृत्तित्वरूपव्याप्तेः व्याप्यतावच्छेदकाघटितत्वात् इति, धर्मिकल्पनागौरवस्य फलमुखत्वेना-

## नृसिंहप्रकाशिका.

यो य इत्यादेरनन्वितार्थकत्वप्रसङ्गात् । न च द्विरुक्तयत्पदस्यैव व्यापकत्वमर्थः। तस्यैव साध्यांशेऽन्वयस्वीकारान्नोक्तदोष इति वाच्यम् । नामार्थयोः भेदेनान्वयस्याव्युत्पन्नत्वात् । न च द्विरुक्तयत्पदस्यैव व्यापकत्वावच्छिन्नमर्थः । तस्य साध्यांशे अभेदेनान्वयः स्वीक्रियत इति वाच्यम् । सुन्दरो दण्डीत्यादौ मत्वर्थीयप्रकृत्युपस्थाप्यदण्डादौ सुन्दराभेदान्वयानुपपत्तिनिर्वाहाय मत्वर्थीयप्रकृत्युपस्थाप्ये असमस्तनामार्थस्य अभेदेन अन्वयोऽव्युत्पन्न इति नियमाङ्गीकारस्यावश्यकतया सापेक्षत्वेनासमर्थत्वात् साध्यादिपदोत्तरं तद्धितानुत्पत्त्या च निरुक्तयत्पदार्थव्यापकत्वविशिष्टस्याप्यभेदेनाप्यन्वयासंभवात् । न च वह्न्यादिपदस्यैव धूमादिव्यापकताविशिष्टवह्न्यादौ लक्षणां परिकल्प्य यत्तत्पदयोः तात्पर्यग्राहकत्वमङ्गीकृत्य च धूमवान् धूमव्यापकवह्निमान् इत्येकविशिष्टार्थबोधस्य स्वीकृतत्वात् तत्पक्षे नोक्तदोषप्रसक्तिरिति वाच्यम् । चैत्रो जानाति कृतिमत्त्वात्, यो यः करोति स जानातीत्यादिन्यायघटकोदाहरणघटकद्विरुक्तयत्पदस्य तात्पर्यग्राहकत्वस्वीकारे कृत्याश्रयबोधकपदाभावेन कृतिमान् कृतिव्यापकज्ञानवानिति बोधानुत्पत्त्या उदाहरणाभासत्वप्रसङ्गात् । तस्मात्पूर्वोक्तरीत्या वाक्यार्थचतुष्टयविषयकसमूहालम्बनबोध एव स्वीकार्यः । व्यापकताबोधस्तु तन्मूलको मानसः, साध्यपदस्य हेतुव्यापकताविशिष्टसाध्ये लक्षणां परिकल्प्य, महानसं धूमवत् धूमव्यापकवह्निमच्च, महानसान्यत् धूमवत् धूमव्यापकवह्निमच्चेति व्यापकत्वघटितवाक्यार्थचतुष्टयविषयकसमूहालम्बनबोधो वा स्वीकार्यः । परं तु सर्वमतेऽपि प्रतिज्ञाहेत्वोः विशिष्टैकार्थबोधकत्वमेवायंपदानुषङ्गपक्षे उपनयनिगमनयोः प्रत्येकबोधजनकत्वेऽपि अननुषङ्गपक्षे तयोरप्येकविशिष्टार्थबोधकत्वम् । वस्तुतोऽननुषङ्गपक्षेऽपि उपनयस्थायंपदार्थकेवलपक्षतावच्छेदकावच्छिन्ने निगमनार्थान्वयबोधेनैवेष्टसिद्धेः । उपनयप्रतिपाद्यविशिष्टार्थे निगमनार्थान्वये प्रमाणाभावेनाननुषङ्गपक्षेऽपि तयोर्नैक-

**वेन सर्वत्र परामर्शस्यैव कारणत्वात् । लिङ्गं न करणम्, अतीतादौ व्यभिचारात् । 'व्यापारवत्कारणं करणम्' इति मते परामर्शद्वारा व्याप्तिज्ञानं करणम् । तज्जन्यत्वे सति तज्जन्यजनको व्यापारः । अनुमानमुपसंहरति—तस्मादिति ॥ लिङ्गं विभजते—लिङ्गमिति ॥ अन्वयव्यतिरेकिणं**

---

## नीलकण्ठप्रकाशिका.

नस्यैव लर्थायस्त्वमिति । वस्तुतस्तु तद्धर्मावच्छिन्नविशेष्यकव्याप्तिप्रकारकनिश्चयविशिष्ट-तद्धर्मावच्छिन्नप्रकारकपक्षतावच्छेदकावच्छिन्नविशेष्यकनिश्चयस्यैव कारणतावच्छेदकत्वं ज्ञानद्वयसाधारण्येन तन्मते मन्तव्यम् । नैयायिकमते तु—व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयत्वं कारणतावच्छेदकमिति कारणतावच्छेदकलाघवं अवधेयम् । विनिगमनाविरहेण ज्ञायमानलिङ्गत्वेनापि कारणत्वं वदतामाचार्याणां मतं निरस्यति—**लिङ्गं न करणमिति ॥ व्यभिचारादिति ॥** तत्राप्यनुमितेरनुभवसिद्धत्वेन तदव्यवहितपूर्वं भूतभविष्यद्धूमादेरसत्त्वादिति भावः । **मत इति ॥** 'फलायोगव्यवच्छिन्नं कारणं करणम्' इति मते परामर्श एव करणमिति ध्येयम् । करणेऽतिव्याप्तिवारणाय—**तज्जन्यत्वे सतीति ॥** यद्यप्यनुमाननिरूपणस्यैव प्रतिज्ञातत्वेन तद्विभाग एवोचितः, तथापि लिङ्गस्य त्रैविध्ये प्रदर्शिते तज्ज्ञानस्य त्रैविध्यं फलतीति मनसि कृत्वाह—**लिङ्गं विभजत**

## रामरुद्रीयम्.

दोषत्वाच्चेति भावः। ज्ञायमानलिङ्गं परामर्शव्यापारकमनुमितिकरणमिति आचार्यमतं निराकुरुते—**अतीतादाविति ॥** अतीतानागतलिङ्गकानुमितौ लिङ्गस्य व्यभिचारेण करणत्वासंभवादिति भावः । उपसंहरति—**व्यापारवदिति ॥** विशेषणतावच्छेदकप्रकारकज्ञानरूपव्याप्तिप्रकारकज्ञानस्य परामर्शहेतुत्वात् परामर्शद्वारा व्याप्तिज्ञानं करणमित्याह—**परामर्शेति ॥** व्यापारलक्षणमाह—**तज्जन्यत्वे सतीति ॥ मूले लिङ्गपरामर्श इति ॥**

## नृसिंहप्रकाशिका.

विशिष्टार्थप्रतिपादकत्वमिति सारम् । इत्थं च न्यायघटकेन प्रतिज्ञासहितहेतुवाक्येन उदाहरणादिप्रत्येकवाक्येन च तावदर्थविषयकसमूहालम्बनबोधोत्तरमेव मानसपरामर्शः । तद्व्यापारकनिरुक्तबोधात्मकव्याप्तिज्ञानादेवानुमितिः स्वीकार्येति प्राहुः । एतन्मते निरुक्तवाक्यार्थचतुष्टयविषयकसमूहालम्बनबोधजनकन्यायावयवत्वमुदाहरणलक्षणम् । पक्षतावच्छेदकावच्छिन्ने साध्यव्याप्तिविशिष्टहेतुविशिष्टाभेदबोधकन्यायावयवत्वमुपनयलक्षणम् । निगमनलक्षणं तु निरुक्तमेवेति बोध्यम् । अनुमितिकरणस्वरूपमाह—**मूले स्वार्थेति ॥** स्वार्थानुमितौ परार्थानुमितौ चेत्यर्थः । **लिङ्गपरामर्श एवेति ॥** लिङ्गविशेष्यकव्याप्तिज्ञानमेवेत्यर्थः। एवकारेण लिङ्गस्य कारणत्वव्यवच्छेदः । अतीतादिलिङ्गकानुमितौ व्यभिचारात् लिङ्गं न करणमिति भावः । उपसंहरति—**तस्मादिति ॥** निरुक्तव्याप्तिज्ञानस्यैव व्याप्तिविशिष्टवैशिष्ट्यावगाहिपरामर्शद्वारा अनुमितिकरणत्वादित्यर्थः । **लिङ्गपरामर्श इति ॥** व्याप्तिवि-

## नीलकण्ठप्रकाशिका.

**इति** ॥ 'अन्वयेन व्यतिरेकेण च व्याप्तिमत्' इति मूलस्य 'अन्वयसहचारग्रहग्राह्य-

## रामरुद्रीयम्.

लिङ्गविशेष्यकज्ञानमित्यर्थः, न तु पक्षे व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानं, तस्य व्यापारा-भावेनाकरणत्वादिति ध्येयम् । अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वयव्यतिरेकीति मूले अन्वयनिरूपितव्याप्तिव्यतिरेकनिरूपितव्याप्त्युभयवत्त्वं अन्वयव्यतिरेकिलक्षणमिति

## नृसिंहप्रकाशिका.

शिष्टवैशिष्ट्यानवगाहिपरामर्शव्यापारकलिङ्गविशेष्यकव्याप्तिग्रह इत्यर्थः। **अनुमानमिति**॥ अनु-मानप्रमाणस्वरूपमित्यर्थः । यत्र धूमवान् पर्वत इति प्रत्यक्षज्ञानानन्तरं धूमः वह्नि-व्याप्य इति स्मरणं, यत्र चोद्बोधकानन्तरसमवधानवशादादौ तादृशस्मरणमनन्तरमेव तादृ-शप्रत्यक्षम्, तत्र व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयं विनापि अनुमित्यङ्गीकर्तृमीमांसकमतं दूषयितुं तन्मतं उपन्यस्यति---**दीपिकायां नन्वित्यादिना** ॥ **व्याप्तिस्मृतिपक्षध-र्मताज्ञानाभ्यामेवेति** ॥ हेतुविशेष्यकव्याप्तिप्रकारकज्ञानहेतुप्रकारकपक्षविशेष्यकज्ञाना-भ्यामपीत्यर्थः । **अनुमितिसंभव इति** ॥ तन्मते तद्धर्मावच्छिन्नलिङ्गकानुमितिं प्रति समवायघटितसामानाधिकरण्यसंबन्धेन तद्धर्मावच्छिन्नविशेष्यकव्याप्तिप्रकारकग्रहविशिष्टत-द्धर्मावच्छिन्नप्रकारकपक्षविशेष्यकनिश्चयत्वेन हेतुतया ज्ञानद्वयस्यापि तादृशकारणतावच्छे-दकविशिष्टत्वादिति भावः । **विशिष्टपरामर्श इति** ॥ व्याप्तिविशिष्टवैशिष्ट्यावगाहि-निश्चय इत्यर्थः । **किमर्थं अङ्गीकार्य इति** ॥ निरुक्तज्ञानद्वयस्थले अनुमितिपूर्वं विशिष्ट-परामर्शकल्पनं किंप्रयोजनमित्यर्थः । तथा च प्रयोजनाभावात् ज्ञानद्वयस्थले अनुमिति-पूर्वं विशिष्टपरामर्शकल्पनमनुचितामिति भावः । न च निरुक्तनिश्चयत्वावच्छिन्नस्य व्यापा-रवत्कारणत्वरूपकरणत्वान्यथानुपपत्त्या तत्कल्पनमावश्यकमिति वाच्यम् । फलायोगव्य-वच्छिन्नकारणत्वस्यैव नवीनमतभूततन्मतेऽपि कारणत्वपदार्थत्वात् । तादृशकरणत्वस्य ज्ञान-द्वयसाधारणत्वादिति भावः । **वह्निव्याप्यवानयमिति** ॥ केवलवह्निव्याप्यत्वावच्छिन्न-संयोगसंबन्धावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयात्मकव-ह्निव्याप्यवानयमित्याकारक इत्यर्थः । **शाब्दपरामर्शस्थल इति** ॥ वह्निव्याप्यवानय-मिति शब्दप्रयोज्यमानसप्रत्यक्षस्थल इत्यर्थः । यथाश्रुते तादृशवाक्यजन्यशाब्दबोधस्य पक्षतावच्छेदकावच्छिन्नसंयोगेन हेतुप्रकारकत्वाभावेन परामर्शरूपत्वाभावात् असाङ्गत्या-पत्तेः । **परामर्शस्येति** ॥ अनुमित्यनुरोधेनेत्यादिः । व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चय-त्वस्यैवेत्यर्थः । **आवश्यकतयेति** ॥ कारणतावच्छेदकत्वावश्यकतयेत्यर्थः । तथा च ता-दृशनिश्चयत्वस्य कारणतावच्छेदकत्वानङ्गीकारे मीमांसकमतसिद्धलिङ्गतावच्छेदकघटितनिरु-क्तनिश्चयत्वरूपकारणतावच्छेदकविशिष्टस्य तत्राभावादनुमितिर्न स्यादिति भावः। ननुलिङ्गता-वच्छेदकानवगाहिनिरुक्तमानसपरामर्शोत्तरं लिङ्गतावच्छेदकावगाहिपरामर्शं कल्पयित्वैवानु-मितिः स्वीक्रियते क्षणविलम्बस्य शपथनिर्णयत्वात् । तथा च तत्र नानुमित्यनुपपत्तिः । अत

## नीलकण्ठप्रकाशिका.

व्याप्तिमत्त्वे सति व्यतिरेकसहचारग्रहग्राह्यव्याप्तिमत्' इत्यर्थं मनसि कृत्वा तादृशव्या-

## रामरुद्रीयम्.

लभ्यते। तच्चासंभवि, हेतौ वह्निव्याप्तिसत्त्वेऽपि वह्न्यभावव्याप्तिविरहात्। न च व्यति-रेकिप'. न प्रकृतसाध्यपरं, अपि तु यत्किंचिदभावपरं। तथा च धूमादेरपि जलत्वाभावा-

## नृसिंहप्रकाशिका.

आह—**लाघवेन चेति**॥ लिङ्गतावच्छेदकघटितनिरुक्तनिश्चयत्वापेक्षया व्याप्तिविशिष्ट-वैशिष्ट्यावगाहिनिश्चयत्वस्य लघुत्वेन चेत्यर्थः। लिङ्गतावच्छेदकानवगाहिशाब्दमानसपरा-मर्शस्थले लिङ्गतावच्छेदकावगाहितादृशनिश्चयकल्पनागौरवेण ज्ञानद्वयस्थले व्याप्तिविशिष्ट-वैशिष्ट्यावगाहिनिश्चयकल्पनागौरवस्य तुल्यत्वेनादोषत्वात् लिङ्गतावच्छेदकघटितनिरुक्त-निश्चयत्वापेक्षया व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयत्वस्य लघुत्वाच्चेति निर्गलितार्थः। **परामर्शस्यैवेति**॥ व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयस्यैवेत्यर्थः। **कारणत्वादिति**॥ तादृशनिश्चयत्वेन फलायोगव्यवच्छिन्नकारणत्वस्वीकारादित्यर्थः। तथा च विशिष्टवैशिष्ट्याव-गाहिनिश्चयस्य नवीनमते फलायोगव्यवच्छिन्नकारणत्वरूपकरणत्वाङ्गीकारवत् प्राचीनमते फ-लायोगव्यवच्छिन्नकारणत्वघटितव्यापारत्वाङ्गीकारात् शाब्दमानसपरामर्शस्थलेऽपि तादृश-परामर्शद्वारा शाब्दबोधात्मकव्याप्तिज्ञानस्य करणत्वं संभवति। शाब्दमानसपरामर्शस्य फलायोगव्यवच्छिन्नकारणत्वघटितव्यापारत्वप्रतिपादनात्। नवीनमते—सर्वत्र विशिष्टवै-शिष्ट्यावगाहिपरामर्श एव करणमिति लभ्यत इति न किंचिदनुपपन्नमिति भावः। **लिङ्ग-परामर्श एव करणमिति** मूलोक्तैवकारव्यवच्छेद्यं स्पष्टयति—**लिङ्गं न करण-मिति**॥ लिङ्गं परामर्शद्वारा न करणमित्यर्थः। तत्र हेतुमाह—**अतीतादाविति**॥ अतीतादिलिङ्गकानुमितावित्यर्थः। आदिना अनागतपरिग्रहः। **व्यभिचारादिति**॥ व्यतिरेकव्यभिचारादित्यर्थः। अतीतादिलिङ्गविषयकपरामर्शे तादृशलिङ्गस्य विषयविधया कारणत्वाभावेन परामर्शस्य तद्व्यापारत्वासंभवात् व्यापारसंबन्धेन लिङ्गाभावेऽपि अनुमि-त्युत्पत्तेरिति भावः। स्वार्थानुमितिपरार्थानुमित्योः लिङ्गपरामर्श एव करणमिति मूलम्। व्याप्ति-विशिष्टवैशिष्ट्यावगाहिनिश्चयरूपलिङ्गपरामर्शः नवीनमतसिद्धफलायोगव्यवच्छिन्नकारणत्व-रूपकरणत्वाश्रय इत्यर्थमित्याशयेन प्राचीनमतसिद्धव्यापारवत्कारणत्वरूपकरणत्वाश्रया-प्रतिपादनात् न्यूनतापरिहाराय स्वयं तन्मतसिद्धतादृशकारणताश्रयमाह—**व्यापारवत् कारणमिति**॥ व्यापारसंबन्धावच्छिन्नकारणताश्रयमेवेत्यर्थः। यथाश्रुते घटादेः चक्षुस्संयोगरू-पव्यापारवत्त्वात् विषयविधया प्रत्यक्षकारणत्वाच्च चक्षुरादिवत् घटादेरपि प्रत्यक्षकरणत्वाप-त्तेः। **करणमिति मत इति**॥ करणस्वरूपमिति वक्तृप्राचीनमत इत्यर्थः। व्यापारसंबन्धावच्छि-न्नकारणत्वमेव करणत्वं, तदाश्रय एव करणशब्दार्थ इति वक्तृप्राचीनमत इति फलितार्थः। **परामर्शद्वारेत्यादि**॥ परामर्शरूपव्यापारसंबन्धावच्छिन्नकारणत्वरूपकरणत्वाश्रयं व्याप्ति-ज्ञानमेवेत्यर्थः। व्यापारलक्षणमाह—**तज्जन्यत्वे सतीति**॥ चक्षुर्जन्यप्रत्यक्षजनकालोका-

लक्षयति—**अन्वयेनेति** ॥ हेतुसाध्ययोर्व्याप्तिरन्वयव्याप्तिः, तदभावयोर्व्या-

---

## नीलकण्ठप्रकाशिका.

प्तिद्वयं प्रकाशयति—**हेतुसाध्ययोरिति** ॥ अन्वयमात्रव्याप्तिकस्वरूपकेवलान्वयिलक्षणे

## रामरुद्रीयम्.

दिव्याप्यत्वान्नासङ्गतिरिति वाच्यम् । तथा सति केवलान्वयिसाध्यकज्ञेयत्वादेरपि गगना-भावादिव्याप्यत्वेनान्वयव्यतिरेकित्वापत्तेः इत्याशङ्कानिरासाय अन्वयपदं प्रकृतसाध्यपरत्वेन व्यतिरेकपदं च प्रकृतसाध्याभावपरत्वेन—**हेतुसाध्ययोरित्यादि** ॥ यद्यपि धूमे वह्न्यभाव-निरूपितव्याप्तिः न साक्षात्, तथापि स्वं वह्न्यभावनिष्ठव्यतिरेकव्याप्तिः स्वाश्रयव्यापकी-

## नृसिंहप्रकाशिका.

दौ अतिव्याप्तिवारणाय सत्यन्तम् । चक्षुर्ध्वंसादावतिव्याप्तिवारणाय विशेष्यभागः । तज्ज-न्यत्वतज्जन्यजनकत्वोभयवत्त्वं व्यापारलक्षणमिति फलितार्थः । तेन विनिगमनाविरहा-प्रसक्तिः । तस्माल्लिङ्गपरामर्शोऽनुमानमिति उपसंहारवाक्येन लिङ्गस्योपस्थितत्वात् प्रसङ्गसङ्गत्या लिङ्गं विभजते—**मूले लिङ्गं त्रिविधमिति** । अत्र व्याप्यत्वं लिङ्गसामा-न्यलक्षणमिति बोध्यम् । अन्वयव्यतिरेकिलक्षणमाह—**अन्वयेनेति** ॥ अन्वयसहचारेणे-त्यर्थः । साध्यसाधनसहचारेणेति यावत् । तृतीयार्थो ज्ञानज्ञाप्यत्वं, तस्य व्याप्तौ अन्वयः । **व्यतिरेकेण चेति** ॥ व्यतिरेकसहचारेण चेत्यर्थः । साध्याभावसाधनाभावसहचारेणेति यावत् । तृतीयार्थो ज्ञानज्ञाप्यत्वं, तस्यापि व्याप्तावन्वयः । चकारस्तूक्तसमुच्चायकः । तथा च साध्यसाधनसहचारज्ञानजन्यज्ञानविषयत्वसाध्याभावसाधनाभावसहचारज्ञानजन्यज्ञानवि-षयत्वोभयविशिष्टव्याप्त्याश्रयत्वं निरुक्तान्वयसहचारज्ञाननिरुक्तव्यतिरेकसहचारज्ञानोभयज-न्यज्ञानविषयव्याप्त्याश्रयत्वं वा अन्वयव्यतिरेकिलक्षणमिति भावः । अन्ये तु—अन्वयव्या-प्तिमत्त्वव्यतिरेकव्याप्तिमत्त्वोभयवत्त्वमेव तन्मूलप्रतिपाद्यं तदेव लक्षणमित्याहुः । तन्न, केवलव्यतिरेकिण्यतिव्याप्त्यापत्तेः । अत्र पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यत्र गन्धवत्त्वहेतावतिव्याप्तिवारणाय व्याप्तावन्वयसहचारज्ञानजन्यज्ञानविषयत्वस्य तज्ज्ञाने तज्ज्ञानजन्यत्वस्य वा निवेशः । घटोऽभिधेयः प्रमेयत्वादित्यत्र प्रमेयत्वरूपकेवलान्वयिहेता-वतिव्याप्तिवारणाय व्याप्तौ व्यतिरेकसहचारज्ञानज्ञाप्यत्वस्य तज्ज्ञाने तज्ज्ञानजन्यत्वस्य वा निवेश इति हृदयम् । अन्वयव्यतिरेकिलिङ्गं दर्शयति—**यथेति** ॥ वह्नौ साध्ये धूमवत्त्वं हेतुरिति वह्निसाध्यकधूमवत्त्वरूपलिङ्गं अन्वयव्यतिरेकिलिङ्गमित्यर्थः । तत्र व्याप्तेरन्वयसह-चारज्ञानज्ञाप्यत्वादिकमुपपादयति—**यत्रेति** ॥ यादृशाधिकरण इत्यर्थः । **तत्रेति** ॥ तादृ-शाधिकरण इत्यर्थः । **इत्यन्वयव्याप्तिरिति** ॥ इत्याकारकान्वयसहचारज्ञानज्ञाप्यव्याप्ति-रित्यर्थः । तत्र व्यतिरेकसहचारज्ञानज्ञाप्यव्याप्तिमत्त्वादिकमुपपादयति—**यत्रेति** ॥ यादृशा-धिकरण इत्यर्थः । **वह्निर्नास्तीति** ॥ वह्न्यभाव इत्यर्थः । **तत्रेति** ॥ तादृशाधिकरण इत्यर्थः । **तत्र धूमोऽपि नास्तीति** ॥ धूमाभावोऽपीत्यर्थः । **इति व्यतिरेकव्या-**

## नीलकण्ठप्रकाशिका.

मात्रपदेन व्यतिरेकव्याप्तेर्व्यवच्छेद्यतया सिद्ध्यसिद्धिभ्यां व्याघात इत्यालोच्य प्रकारान्त-

## रामरुद्रीयम्.

भूताभावप्रतियोगितावच्छेदकवत्त्वसंबन्धेन तस्याः धूमनिष्ठत्वं बोध्यम्। वस्तुतस्तु वह्न्य-भावनिष्ठधूमाभावनिरूपितव्याप्तिज्ञानं न धूमहेतुकानुमितौ कारणं, तथा सति सामानाधि-

## नृसिंहप्रकाशिका.

**प्तिरिति** ॥ इत्याकारकव्यतिरेकसहचारज्ञानज्ञाप्यव्याप्तिरित्यर्थः । तत्र वर्तत इति लक्षणसमन्वय इति शेषः। केवलान्वयिलक्षणमाह—**अन्वयमात्रेति** ॥ अन्वयसहचार-ज्ञानमात्रजन्यज्ञानविषयव्याप्तिमदित्यर्थः । तथा च व्यतिरेकसहचारज्ञानाजन्यत्वान्वय-सहचारज्ञानजन्यत्वोभयविशिष्टज्ञानविषयव्याप्त्याश्रयत्वं केवलान्वयिलिङ्गस्य लक्षणमिति भावः। अत्रान्वयव्यतिरेकिण्यतिव्याप्तिवारणायाजन्यत्वान्तम् । तादृशज्ञानाजन्यवह्निव्या-प्योधूमइत्याकारकशब्दादिज्ञानविषयव्याप्तिविशिष्टधूमादावतिव्याप्तिवारणाय जन्यत्वान्तम्। व्यतिरेकसहचारज्ञानजन्यज्ञानविषयत्वशून्यव्याप्तिमत्त्वं वा तल्लक्षणवाक्यार्थः । शाब्दादि-ज्ञानविषयधूमादिनिष्ठव्याप्तेः कदाचित् व्यतिरेकसहचारज्ञानजन्यज्ञानविषयत्वात् न कुत्रापि अतिव्याप्तिः । अथवा **अन्वयमात्रव्याप्तिकमिति** ॥ अन्वय एवान्वयमात्रं व्याप्तिः यस्येति व्युत्पत्त्या व्यतिरेकव्याप्तिशून्यत्वे सति अन्वयव्याप्तिमत्त्वं लक्षणमिति लभ्यते । तत्र व्याप्तेः अन्वयत्वेन निवेशे प्रयोजनविरहात् विशेषणविशेष्यभावे विनिगमनाविरहाच्च व्यतिरेकव्याप्तिशून्यत्वव्याप्तिमत्त्वोभयवत्त्वं लक्षणं फलितम्। एवञ्च न काप्यनुपपत्तिः । लक्ष्यं निदर्शयति—**यथेति** ॥ **घट इतीति** ॥ इत्यादिन्यायघटकहेतु दप्रतिपाद्यप्रमेय-त्वादित्यर्थः । लक्ष्ये लक्षणं योजयति—**तत्रेति** ॥ निरुक्तन्याय इत्यर्थः । प्रतिपाद्यत्वं सप्तम्यर्थः, तस्य प्रमेयत्वे अभिधेयत्वे चान्वयः । **प्रमेयत्वाभिधेयत्वयोरिति** ॥ तत्स्वरूपहेतुसाध्ययोरित्यर्थः । संबन्धित्वं षष्ठ्यर्थः, तस्य व्याप्तावन्वयः । **व्यति-रेकव्याप्तिर्नास्तीति** ॥ व्यतिरेकसहचारज्ञानज्ञाप्यव्याप्तिरप्रसिद्धेत्यर्थः । तयो-र्व्यतिरेकाभावादिति भावः। **अथवा व्यतिरेकव्याप्तिर्नास्तीति** ॥ व्यतिरेकव्याप्तिरप्र-सिद्धेत्यर्थः । तथा च प्रमेयत्वाभिधेयत्वयोः केवलान्वयित्वेन व्यतिरेकाप्रसिद्ध्या प्रमेयत्वनिष्ठाभिधेयत्वनिरूपितव्यतिरेकव्याप्तिः सुतरामप्रसिद्धेति भावः । तयोर्व्यतिरेकाभा-वमुपपादयति—**सर्वस्येति** ॥ केवलव्यतिरेकिणो लक्षणमाह—**व्यतिरेकमात्रव्याप्ति-कमिति** ॥ व्यतिरेकसहचारज्ञानमात्रज्ञाप्यव्याप्तिकमित्यर्थः । तथा चान्वयसहचारज्ञानजन्य-ज्ञानविषयताशून्यव्याप्तिमत्त्वं केवलव्यतिरेकिणो लक्षणमिति भावः। अन्ये तु—व्यतिरेक-मात्रव्याप्तिकमिति अन्वयव्याप्तिशून्यत्वे सति व्यतिरेकव्याप्तिमत्त्वं लक्षणमित्यर्थ इत्याहुः। तन्न, व्यतिरेकिण्यन्वयव्याप्तिसंभवेनासंभवापत्तेः । व्यतिरेकन्यायमात्रघटकहेतुपदप्रतिपाद्य-हेतुस्वरूपलक्ष्यं दर्शयितुमादौ व्यतिरेकन्यायवाक्यमुदाहरति—**यथेति** ॥ **पृथिवीति** ॥ अयं पक्षनिर्देशः। पृथिवीसामान्यमित्यर्थः । **इतरेभ्यो भिद्यत इति** ॥ जलत्वाद्यवच्छिन्न-

प्तिर्व्यतिरेकव्याप्तिः। केवलान्वयिनो लक्षणमाह—**अन्वयेति**॥ केवलान्वयिसाध्यकं लिङ्गं केवलान्वयि। [वृत्तिमत्] अत्यन्ताभावाप्रतियोगित्वं केवलान्वयि-

---

## नीलकण्ठप्रकाशिका.

रेण परिष्करोति—**केवलान्वयिसाध्यकमिति**॥ केवलान्वयिसाध्यकव्यतिरेकहेतोः संग्रहाय साध्ये केवलान्वयित्वं निवेशितम्। तदेव निर्वक्ति—**अत्यन्ताभावेति**॥ निरव-

## रामरुद्रीयम्.

करण्यांशस्याधिकस्य निवेशेन गुरुतरोक्तपरंपरासंबन्धनिवेशे च कारणतावच्छेदकगौरवात्। किन्तु साध्याभावव्यापकीभूताभावप्रतियोगित्वप्रकारेण हेतुमत्ताज्ञानमेवानुमितौ कारणं, लाघवात्। इत्थं च व्यतिरेकेणेत्यत्र व्यतिरेकपदं साध्याभावहेत्वभावपरं, तृतीयार्थः वैशिष्ट्यं, तच्च घटकतारूपं। तथा च तादृशव्याप्तेः साक्षादेव हेतुनिष्ठत्वान्नानुपपत्तिरिति ध्येयम्। यद्यपि स्वरूपान्वयव्यतिरेकव्याप्तिमत्त्वं पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वादिति व्यतिरेकिणि तावत् व्यक्तीकृतं, तथापि प्रकृतानुमित्यव्यवहितपूर्वगृहीतोभयव्याप्तिमत्त्वस्यैव तात्पर्यविषयत्वान्नानुपपत्तिरिति भावः। अन्वयव्याप्तिकमात्रमित्यत्र मात्रपदार्थो यदि अन्वयव्याप्तीतरशून्यत्वं, तदा असंभवः। घटोऽभिधेयः प्रमेयत्वादित्यादौ अन्वयव्याप्तिभिन्नाभिधेयत्वादेः सत्त्वात्। यदि व्यतिरेकव्याप्तिशून्यत्वं तदर्थः, तदाप्युक्तकेवलान्वयिहेताव्व्याप्तिः। तत्र व्यतिरेकव्याप्त्यप्रसिद्धेः इत्याशयेन स्वयं केवलान्वयिनो लक्षणमाह—**केवलान्वयिसाध्यकमिति**॥ साध्यनिष्ठं केवलान्वयित्वं निर्वक्ति—**अत्यन्तेति**॥

## नृसिंहप्रकाशिका.

प्रतियोगिताकचतुर्दशभेदवतीत्यर्थः। न च कर्तृकरणयोस्तृतीयेत्यनुशासनेन करणे कर्तरि च तृतीयाभिधानात् पत्रशतकं युगपत् सूच्या चैत्रेण भिद्यते इत्यत्र सूचीचैत्रपदोत्तरमिव इतरपदोत्तरं तृतीयापत्तिरिति वाच्यम्। पच्यन्ते माषाः, भिद्यते कुसूलं, लूयते केदार इत्यत्र कर्तृत्वे लकारेऽपि कर्मलकारवत् रूपसाधुता संभवतीत्यर्थककर्मवत्कर्मणा तुल्यक्रिया इत्यनुशासनेन माषादिकर्मणः कर्तृत्वं स्वीकृत्य माषाः स्वयमेव पच्यन्ते इत्यादिबोधवत् पृथिवी भिद्यत इत्यत्रापि स्वयमेव पृथिवी भिद्यत इत्यर्थस्वीकारेण इतरेषां कर्तृत्वाद्यभावात् नेतरपदोत्तरं तृतीयापत्तिः। किन्तु अन्यारादित्यादिसूत्रेणान्योन्याभावार्थकपदयोगे प्रतियोगिवाचकपदोत्तरं प्रकृतेः पञ्चमीविधानात् इतरपदोत्तरं प्रकृते पञ्चम्येवेति। तस्मान्न तथेत्याकारकव्यतिरेकन्यायमात्रघटकहेतुपदप्रतिपाद्यहेतुः केवलव्यतिरेकिलिङ्गमिति तात्पर्यार्थः। एतादृशगन्धवत्त्वलिङ्गे लक्षणमुपपादयति—**अत्रेति**॥ निरुक्तकेवलव्यतिरेकिलिङ्ग इत्यर्थः। **इत्यन्वयदृष्टान्तो नास्तीति**॥ इत्याकारकहेतुसाध्यघटितसामानाधिकरण्यग्राहकाधिकरणन्नास्तीत्यर्थः। तत्र हेतुमाह—**पृथिवीमात्रस्येति**॥ पृथिवीत्वेन रूपेण पृथिवीत्वाश्रयस्य सर्वस्येत्यर्थः। **पक्षत्वादिति**॥ अनुमित्युद्देश्यत्वादित्यर्थः। तथा चानुमितिपूर्वं पक्षे साध्याज्ञानात् पक्षातिरिक्ते साध्यासत्त्वाच्चान्वयसहचारज्ञानासंभवेन

## नीलकण्ठप्रकाशिका.

च्छिन्नवृत्तिमदत्यन्ताभावेत्यर्थः। तेन गगनाभावसंयोगाभावादिसाध्यकहेतोः संग्रहः। घट-

## रामरुद्रीयम्.

यद्यपि एवं सति गगनाभावस्य केवलान्वयित्वं न संभवति गगनाभावस्य गगनात्मकात्यन्ताभावप्रतियोगित्वात्। यदि च गगनाभावाभावत्वं गगनस्य न स्वीक्रियते प्रतियोगित्वस्य स्वरूपसंबन्धात्मकतया गगने तद्विरोधेऽपि गगनाभावप्रतियोगित्वासंभवात्। अस्तु वा अत्यन्ताभावस्य तदात्मता, गगनं च न संसर्गाभावः भावत्वात्, अथैवं घटाभावादेरपि केवलान्वयित्वापत्तिः, तस्य घटात्मकाभावप्रतियोगित्वेऽपि घटस्य भावत्वेन न

## नृसिंहप्रकाशिका.

गन्धवत्त्वनिष्ठेतरभेदनिरूपितव्याप्तेरन्वयसहचारज्ञानज्ञाप्यत्वाभावाल्लक्षणसमन्वय इति भावः। अन्वयेन व्यतिरेकेण च व्याप्तिमदिति मूलस्य निरुक्तार्थकत्वं प्रदर्शयति—**दीपिकायां हेतुसाध्ययोः व्याप्तिरिति** ॥ अत्र सामानाधिकरण्यज्ञानज्ञाप्यत्वरूपसंबन्धः षष्ठ्यर्थः, तस्य व्याप्तावन्वयः। तथा च हेतुविशेष्यकसाध्यसामानाधिकरण्यप्रकारकज्ञानज्ञाप्यव्याप्तिः प्रकृते अन्वयव्याप्तिशब्दार्थ इति भावः। न तु हेतुसाध्ययोः व्याप्तिरित्यस्य हेतुनिष्ठसाध्यनिरूपिता व्याप्तिरित्यर्थः। व्यतिरेकव्याप्तेरपि हेतुनिष्ठत्वात् साध्यनिरूपितत्वाच्चासाङ्गत्यापत्तेः। **तदभावयोरिति** ॥ साध्याभावसाधनाभावयोरित्यर्थः। अत्रापि सामानाधिकरण्यज्ञानज्ञाप्यत्वरूपसंबन्धः षष्ठ्यर्थः। तस्यापि व्याप्तावन्वयः। न तु साध्याभावनिष्ठहेत्वभावनिरूपितव्याप्तिरित्यर्थः। तस्य साध्याभावलिङ्गकहेत्वभावविधेयकानुमितावेवोपयोगित्वेन प्रकृतसाध्यानुमितावनुपयोगित्वात् अर्थान्तरत्वप्रसङ्गात्। केवलान्वयिलिङ्गस्य मूलोक्तलक्षणगौरवं हृदि निधाय लघुभूतं लक्षणं स्वयमेवाह—**केवलान्वयिसाध्यकमिति** ॥ केवलान्वयिनिरूपितव्याप्तिमत्त्वं केवलान्वयिलक्षणमित्यर्थः। तेन केवलान्वयिनिरूपितव्याप्त्याश्रयस्य व्यतिरेकित्वेऽपि लक्ष्यत्वमेवेति गम्यते। साध्यनिष्ठकेवलान्वयित्वं निर्वक्ति—**वृत्तिमदिति** ॥ इदञ्चाकाशात्यन्ताभावादेः केवलान्वयित्वसंरक्षणाय। अन्यथा तादृशाभावस्यापि आकाशात्मकाभावप्रतियोगित्वेन केवलान्वयित्वानुपपत्तेः। सर्वाधारताप्रयोजकसंबन्धभिन्नसंबन्धेन वृत्तिमत्त्वं विवक्षितम्। तेनाकाशस्यापि महाकाले कालिकसम्बन्धेन वृत्तावपि न क्षतिः। वृत्तिमत्त्वं निरवच्छिन्नं ग्राह्यम्। तेन कपिसंयोगाभावादेरपि समवायेन वृत्तिमत्कपिसंयोगप्रतियोगित्वेऽपि न क्षतिः। प्रतियोगिता च केवलान्वयितावच्छेदकत्वेनाभिमतसम्बन्धावच्छिन्ना ग्राह्या। तेनाकाशाभावस्यापि संयोगेन योऽभावः तत्प्रतियोगित्वेऽपि न क्षतिः। तादृशप्रतियोगितानवच्छेदको यः केवलान्वयितावच्छेदकत्वेनाभिमतः धर्मः तद्वत्त्वमिति विवक्षणीयम्। तेनाकाशाद्यभावस्यापि तादृशद्वित्वाद्यवच्छिन्नाभावप्रतियोगित्वेऽपि न क्षतिः। तथा च सर्वाधारताप्रयोजकसंबन्धभिन्नसंबन्धावच्छिन्ननिरवच्छिन्नवृत्तिताश्रयाभावीयतत्संबन्धावच्छिन्नप्रतियोगितानवच्छेदकतद्धर्मवत्त्वं, तेन संबन्धेन तेन रूपेण केवलान्वयित्वमिति फलितम्।

त्वम् । ईश्वरप्रमाविषयत्वं सर्वपदाभिधेयत्वं च सर्वत्रास्तीति व्यतिरेकाभावः ।

---

## नीलकण्ठप्रकाशिका.

पदाभिधेयत्वस्य पटादावसत्त्वेन सर्वतः सत्त्वासंभवादाह—**सर्वपदाभिधेयत्वमिति** ॥

## रामरुद्रीयम् .

संसर्गाभावात्मकत्वमिति चेत्, तर्हि अत्यन्ताभावो वृत्तिमत्त्वेन विशेषणीयः इति विभाव्यते, तदा कपिसंयोगाभावादेः केवलान्वयित्वं न स्यात्, कपिसंयोगाद्यात्मकवृत्तिमदत्यन्ताभावप्रतियोगित्वात्, तथापि अत्यन्ताभावस्य प्रतियोगिव्यधिकरणत्वेन विशेषणीयतया नानुपपत्तिः । प्रतियोगिव्यधिकरणत्वं च न प्रतियोग्यधिकरणभिन्नत्वम् । तथा सति संयोगादेरपि केवलान्वयित्वापत्तेः, अपि तु प्रतियोग्यनधिकरणवृत्तित्वं, न चैवं गगनस्यापि केवलान्वयित्वापत्तिः, तदधिकरणाप्रसिद्धया तदभावस्य प्रतियोगिव्यधिकरणत्वासंभवात् इति वाच्यम् । स्वप्रतियोगितावच्छेदकसम्बन्धसामान्ये यदभावप्रतियोगिप्रतियोगिकत्वयदभावाधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्वोभयाभावः, तत्त्वस्य प्रतियोगिव्यधिकरणरूपत्वात् इति ध्येयम् । ननु अभिधेयत्वं पदशक्तिमत्त्वमेव, तच्च घटपटादिपदभेदेन भिन्नमिति पदादिनिष्ठात्यन्ताभावप्रतियोग्येवेति कथमभिधेयत्वस्य निरुक्तकेवलान्वयित्वं इत्याशङ्कायां आह—**सर्वेति** ॥ अत्रेदमवधेयम् । तत्कालीनतत्पुरुषीयतत्साध्यहेतुकानुमित्यौपयिकान्वयव्यतिरेकोभयव्याप्तिमत्तल्लिङ्गत्वमेव तत्काले तत्पुरुषं प्रति तत्साध्यककेवलान्वयिव्यतिरेकिहेतुत्वमिति अवश्यं विवक्षणीयम् । वस्तुगत्या अन्वयव्यतिरेकिव्याप्तिमत्त्वस्य पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वादिति केवलव्यतिरेकिहेतुसाधारणत्वात् । तथा च केवलान्वयिसाध्यकहेतोरेव केवलान्वयित्वे अन्वयव्याप्तिग्रहमात्रेणैव धूमवत्त्वादिना वह्न्यनुमितिः, तादृशानुमित्युपधायकधूमादिहेतोः तुरीयतापत्तिः । न च तत्कालीनतत्पुरुषीयानुमित्यौपयिकत्वं न तादृशानुमित्युपधायकग्रहविषयत्वम्, अपि तु तादृशानुमित्यव्यवहितपूर्वकाले ग्रहयोग्यत्वमेव । योग्यता चान्वयव्याप्तौ पक्षातिरिक्ते साध्यसहचरितसाधनवद्वृत्तित्वं, व्यतिरेकव्याप्तौ च पक्षातिरिक्तसाध्यसाधनाभाववद्वृत्तित्वम् । तथा च वह्निधूमयोः केवलान्वयव्याप्तिमात्रात् यत्र अनुमितिः तत्रापि व्यतिरेकव्याप्तौ तादृशानुमित्यव्यवहितपूर्वकालीनग्रहयोगत्वमक्षतमेव । पक्षातिरिक्ते ह्रदादौ वह्निधूमाभावयोः सहचारसत्त्वादिति न तस्य तुरीयतापत्तिरिति वाच्यम् । एवमपि सर्वं वह्निमत् धूमादित्यत्र पक्षातिरिक्ताप्रसिद्धया तादृशानुमितिकारणधूमहेतोः तुरीयतापत्तेः दुर्वारत्वात् । पक्षातिरिक्तेत्यस्यानुपादाने तु पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वादिति केवलव्यतिरेकिहेतोरपि अन्वयव्यतिरेकित्वापत्तिः । पृथिव्यामितरभेदगन्धयोः सहचारसत्त्वात्

## नृसिंहप्रकाशिका.

एवं च न काप्यनुपपत्तिरिति भावः। साध्यस्य केवलान्वयित्वमुपपादयति—**ईश्वरप्रमाविषयत्वं चेति**॥ चकारात् तादृशेच्छाविषयत्वतादृशकृतिविषयत्वादेः परिग्रहः। **सर्वत्रास्ती-**

**केवलव्यतिरेकिणो लक्षणमाह—व्यतिरेकेति ॥ तदुदाहरति—यथेति । नन्वितरभेदः प्रसिद्धो वा न वा । आद्ये यत्र प्रसिद्धस्तत्र हेतुसत्त्वे अन्वयित्वम्, असत्त्वे असाधारण्यम् । द्वितीये साध्यज्ञानाभावात्कथं तद्विशिष्टानुमितिः ।**

---

## नीलकण्ठप्रकाशिका.

**मूले व्यतिरेकमात्रव्याप्तिकमिति** ॥ निश्चितव्यतिरेकमात्रव्याप्तिकमित्यर्थः । तेन पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वादित्यादौ अन्वयव्याप्तिः सत्त्वेऽपि न लक्षणासङ्गतिः । **इतरभेदः** पृथिवीतरत्वावच्छिन्नप्रतियोगिताकभेदः । **अन्वयित्वमिति** ॥ अन्वयसहचारग्रहग्राह्यव्याप्तिमत्त्वं स्यादित्यर्थः । तथा च प्रसिद्धानुमानमिव एतदप्यन्वयव्यतिरेक्येव

## रामरुद्रीयम्.

इति महदसमञ्जसम् । वस्तुतस्तु मूलगतान्वयमात्रव्याप्तिकत्वमेव केवलान्वयित्वमुपगन्तव्यम् । तदर्थश्च प्रकृतानुमित्युपधायकज्ञानविषयव्याप्तित्वव्यापकस्वनिष्ठान्वयव्याप्तिकत्वम् । इत्थं च यत्रान्वयव्याप्तिग्रहमात्रेणैव वह्न्याद्यनुमितिः, तत्रापि धूमादिहेतोः केवलान्वयित्वं न तुरीयतापत्तिरिति सर्वमनाकुलम् । **मूले केवलव्यतिरेकमात्रव्याप्तिकमिति** ॥ अत्रापि प्रकृतानुमित्युपधायकज्ञानविषयव्याप्तित्वव्यापकस्वनिष्ठव्यतिरेकव्याप्तिःत्वक त्वामि त्यर्थो बोध्यः । यथाश्रुते व्यापकसामानाधिकरण्यरूपान्वयव्याप्तेरपि गन्धादिरूपकेवलव्यतिरेकिहेतौ सत्त्वेन अन्वयव्याप्तिशून्यत्वस्य तत्रासत्त्वात्, असाङ्गत्यापत्तेः । अनुमित्यव्यवहितपूर्वगृहीतान्वयव्याप्तिशून्यत्वस्य विवक्षणे च यादृशानुमित्यव्यवहितपूर्वं अन्वयव्याप्तिग्रहो नास्त्येव अप्रसिद्धिप्रसङ्ग इति ध्येयम् । **दीपिकायामितरभेद इति** ॥ पृथिवीतरभेद इत्यर्थः । **प्रसिद्धो न वा** ज्ञातो वा न वा । **यत्र प्रसिद्ध इति** ॥ यस्मिन् अधिकरणे पृथिवीतरेषां सर्वेषां भेदो गृहीतः, तत्रैवेत्यर्थः । गृहीतान्वयसहचारकत्वेन अन्वयव्याप्तिज्ञानस्यापि संभवादिति भावः । **असत्त्व इति** ॥ घटादौ क्वापि पृथिवीतरभेदनि-

## नृसिंहप्रकाशिका.

ति ॥ सर्वत्र वृत्तीत्यर्थः **इति व्यतिरेकाभाव इति** ॥ इति हेतोः अभावप्रतियोगित्वाभाव इत्यर्थः । ननु पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादिना इतरभेदसाध्यकगन्धवत्त्वरूपलिङ्गस्य केवलव्यतिरेकित्वमुक्तम् । तदयुक्तमित्याक्षिपति—**नन्वित्यादिना** ॥ **इतरभेदः प्रसिद्धो न वेति** ॥ प्रसिद्धो यः इतरभेदः स साध्यत्वेनाभिमतः, अप्रसिद्धो यः इतरभेदः साध्यत्वेनाभिमतो वेत्यर्थः । जलत्वाद्यवच्छिन्नप्रतियोगिताकैकैकभेदः साध्यत्वेनाभिमतः, जलत्वाद्यवच्छिन्नप्रतियोगिताकचतुर्दशभेदः साध्यत्वेनाभिमतो वेति यावत् । आद्यपक्षमपि पक्षैकदेशे प्रसिद्धतादृशैकैकभेदः साध्यत्वेनाभिमतः पक्षातिरिक्तप्रसिद्धतादृशैकैकभेदः साध्यत्वेनाभिमतो वेति विकल्प्याद्यं दूषयति—**हेतुसत्त्वेऽन्वयित्वमिति** ॥ हेतुसत्त्वप्रयुक्तमन्वयित्वमित्यर्थः । तथा च निश्चितसाध्यवद्घटादिवृत्तित्वेनान्वयित्वापत्त्या गन्धवत्त्वरूपहेतोः केवलव्यतिरेकित्वं न स्यादिति भावः । द्वितीयं दूषयति—

विशेषणज्ञानाभावे विशिष्टज्ञानानुदयात्प्रतियोगिज्ञानाभावाद्व्यतिरेकव्याप्तिज्ञानमपि न स्यादिति चेन्न । जलादित्रयोदशान्योन्याभावानां त्रयोद-

---

## नीलकण्ठप्रकाशिका.

स्यादित्यर्थः । **असाधारण्यमिति** ॥ सपक्षव्यावृत्तत्वरूपासाधारण्याक्रान्तत्वादिति भावः । अप्रसिद्धसाध्यकेऽपि साध्यविशेषणकानुमितिरेवेत्यभिप्रायेणाह—**साध्येत्यादि** ॥ **व्यतिरेकव्याप्तीति** ॥ साध्याभावव्यापकाभावप्रतियोगित्वरूपेत्यर्थः । पृथिवीतरसामान्यभेदो न साध्यते, अपि तु जलादिभेदकूटं साध्यते । तथा च नोक्तदोषावसर इत्याह—**जलादीति** ॥ जलादीनां ये त्रयोदशान्योन्याभावास्तेषां कूटं साध्यत इत्यर्थः ।

## रामरुद्रीयम्.

श्चयो नास्त्येव, अपि तु गन्धशून्य एव क्वचिदितरभेदनिश्चय इति उच्यते, तदा गन्धरूपहेतोः असाधारण्यमेव, निश्चितसाध्यवद्व्यावृत्तत्वात् । तथा च सद्धेतोरेव लक्षणीयतया केवलव्यतिरेकिलक्षणलक्ष्याप्रसिद्धिरित्यखिलार्थः । **प्रतियोगिज्ञानाभावादिति** ॥ साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्याप्तिज्ञाने साध्याभावज्ञानस्यावश्यमपेक्षिततया तज्ज्ञाने च प्रतियोगिज्ञानविधया साध्यज्ञानस्य अपेक्षितत्वेन साध्यज्ञानाभावे व्यतिरेकव्याप्तिज्ञानमपि न संभवतीति भावः । **जलादित्रयोदशान्योन्याभावेति** ॥ यद्यप्यष्टद्रव्यषट्पदार्थानां भेद एव पृथिव्यां साधनीयः, तथा च जलादिचतुर्दशेति वक्तव्ये त्रयोदशेत्यभिधानं अनुचितम् । न च पृथिव्यां भावत्वेनैवाभेदाभावभेदस्य सिद्धतया भावानामेव भेदः सन्दिग्ध इति स एव साधनीयः । अतो न त्रयोदशाभिधानासङ्गतिरिति वाच्यम् । तथा सति अभाव एव त्रयोदशभेदस्य सिद्धतया गन्धवत्त्वे तद्व्यावृत्तत्वेन असाधारण्या-

## नृसिंहप्रकाशिका.

**हेतुविरहे असाधारण्यमिति** ॥ हेत्वसत्त्वप्रयुक्तं असाधारण्यमित्यर्थः । तथा च निश्चितसाध्यवद्व्यादिव्यावृत्तित्वेनासाधारण्यापत्त्या तादृशहेतोः व्यतिरेकित्वं न स्यादिति भावः । द्वितीयपक्षं दूषयति—**साध्यज्ञानाभावादिति** ॥ कथं तद्विशिष्टानुमितिरिति निरुक्तचतुर्दशभेदप्रकारकपृथिवीविशेष्यकानुमितिः कथमुत्पद्यत इत्यर्थः । तत्र हेतुमाह—**विशेषणज्ञानाभाव इति** ॥ विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वादिति भावः । ननु कारणाभावात् तत्प्रकारकानुमितिर्मा भूत् पृथिव्यामितरभेदः इत्याकारकतद्विशेष्यकानुमितिः परज्ञायतामित्याशङ्कां कारणाभावप्रदर्शनेन परिहरति—**प्रतियोगिज्ञानाभावादिति** ॥ निरुक्तचतुर्दशभेदरूपसाध्यात्मकप्रतियोगिज्ञानाभावादित्यर्थः । **व्यतिरेकव्याप्तिज्ञानमपीति** ॥ तादृशव्याप्तिज्ञानमेवेत्यर्थः । **न स्यादिति** ॥ नोत्पत्तुमर्हतीत्यर्थः । तथा च तादृशेतरभेदरूपसाध्यात्मकप्रतियोगिज्ञानाभावात् इतरभेदाभावरूपसाध्याभावज्ञानासंभवेन तद्धटितव्यतिरेकव्याप्तिज्ञानस्यैव अनुत्पत्त्या कारणाभावात् तद्विशेष्यकानुमितिरपि सुतरां न संभवतीति भावः । उक्तदोषनिराकरणपूर्वकं द्वितीयपक्षमेव सिद्धान्तयति—**जलादित्रयो**

शसु प्रत्येकं प्रसिद्धानां मेलनं पृथिव्यां साध्यते । तत्र त्रयोदशत्वावच्छि-न्नभेदात्मकसाध्यस्यैकाधिकरणवृत्तित्वाभावान्नान्वयित्वासाधारण्ये । प्रत्येका-

---

## नीलकण्ठप्रकाशिका.

समुदायस्य प्रसिद्ध्यसंभवादाह—**प्रत्येकमिति** ॥ **त्रयोदशत्वावच्छिन्नेति** ॥ अनु-मितेः पूर्वं निश्चितसाध्यतावच्छेदकावच्छिन्नवतो धर्मिण एवाप्रसिद्ध्या न तत्र हेतोः

## रामरुद्रीयम्.

पत्तिः । ननु अस्तु जलादित्रयोदशेत्यत्र अतद्गुणसंविज्ञानबहुव्रीह्यादरेण जलभेदस्य तदति-रिक्तत्रयोदशानां च लाभेन चतुर्दशभेदानान्नानुपपत्तिरिति समाधानमपि न मनोरमम् ।

## नृसिंहप्रकाशिका.

**दशान्योन्याभावानां इत्यादिना** ॥ ननु जलादिप्रतियोगिकचतुर्दशभेदानामेव साध्य-त्वेनाभिमततया जलादित्रयोदशान्योन्याभावानामित्यसङ्गतम् । तादृशत्रयोदशभेदानामेव साध्यत्वेनाभिमतत्वे प्रत्येकं प्रसिद्धानामित्युक्तिरसङ्गता । जलादित्रयोदशेत्यत्र अतद्गुण-संविज्ञानबहुव्रीहिस्वीकारपक्षे तादृशसमासलभ्यस्य तेजःप्रभृत्यभावान्तसमुदायघटकप्रत्ये-कप्रतियोगिकभेदत्रयोदशत्वावच्छिन्नस्य जल एव प्रसिद्धिसंभवात् । तद्गुणसंविज्ञानबहुव्रीहि-पक्षे तु तल्लभ्यस्य जलप्रभृतिसमवायान्तसमुदायघटकप्रत्येकप्रतियोगिकभेदत्रयोदशत्वावच्छि-न्नस्याभाव एव प्रसिद्धिसंभवाच्च । न च प्रत्येकं प्रसिद्धानामित्यस्य समुदायस्यापि प्रसिद्ध्युपलक्षकतया न तादृशग्रन्थासङ्गतिरिति वाच्यम् । तथा सति साध्यतावच्छेदकता-दृशभेदत्रयोदशत्वावच्छिन्नप्रकारकनिश्चयविशेष्यगन्धरूपहेतोरवृत्तित्वेनासाधारण्यापत्त्या व्य-तिरेकित्वानुपपत्तिरिति चेत्, अत्र केचित्—अभावस्यातिरिक्तपदार्थत्वमङ्गीकुर्वतां प्राभाक-राणां मतमनुसृत्य त्रयोदशत्वावच्छिन्नान्योन्याभावानां इत्युक्तम् ॥ अतो न पूर्वो-क्तदोष इत्याहुः । तन्न, तादृशत्रयोदशान्योन्याभावानां जलादिषु प्रत्येकं प्रसिद्धानां तन्मते जलादिरूपतया जलादिरूपत्रयोदशभेदस्य पृथिव्यामसत्त्वेन गन्धवत्त्वलिङ्गेन तत्साधनासंभवात् पृथिवीनिष्ठस्य तादृशत्रयोदशभेदस्य च पृथिवीरूपतया जलादिषु प्रत्येकं प्रसिद्ध्यभावेनाप्रसिद्धयोक्तरीत्या व्यतिरेकव्याप्तिज्ञानासंभवेन तत्साधनासंभ-वात् । परे तु—त्रयोदशपदस्य चतुर्दशत्वावच्छिन्नलक्षणया चतुर्दशान्योन्याभावला-भः । त्रयोदशसु प्रत्येकमित्यत्रापि त्रयोदशशब्दस्य चतुर्दशार्थकत्वेन त्रयोदशत्वाव-च्छिन्नसाध्यस्येत्यस्यापि चतुर्दशत्वावच्छिन्नसाध्यस्येत्यर्थाङ्गीकारेण च न पूर्वोक्तदोष इत्याहुः। तच्चिन्त्य। वस्तुतस्तु जलादित्रयोदशान्योन्याभावानामित्यस्य जलाद्यन्यतमत्वप्रतियोगिका-भावानां जलाद्यन्यतमप्रतियोगिकत्वविशिष्टानां त्रयोदशत्वावच्छिन्नानां अभावानाञ्चेत्यर्थः । प्राथमिकार्थभूतजलाद्यभावान्तान्यतमाभावानां प्रसिद्धिः कुत्रेत्याशङ्क्याह—**त्रयोदशस्वि-ति** ॥ तादृशैकैकाभावस्य त्रयोदशस्वेव प्रसिद्धत्वात् तत्सङ्गतिः । द्वितीयार्थभूतजलाद्यन्यत-मप्रतियोगिकत्वविशिष्टत्रयोदशत्वावच्छिन्नान्योन्याभावानां प्रसिद्धिः कुत्रेत्यत आह—

धिकरणप्रसिद्ध्या साध्यविशिष्टानुमितिः व्यतिरेकव्याप्तिनिरूपणं चेति ।

---

## नीलकण्ठप्रकाशिका.

सत्त्वासत्त्वनिबन्धने अन्वयित्वासाधारण्ये इति समुदितार्थः । प्रत्येकं प्रसिद्धावपेक्षाबुद्धिविशेषविषयत्वरूपसमुदायत्वविशिष्टज्ञानं संभवति । तथा च विशेषणतावच्छेदकप्रकारकनिर्णयस्य सद्भावात्साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाह्यनुमितिः व्यतिरेकव्याप्तिज्ञानं च संभवतीत्याह—**प्रत्येकाधिकरणेत्यादिना** ॥ यद्यपि जलादिचतुर्दशान्योन्याभावानां चतुर्दशसु

## रामरुद्रीयम्.

अतद्गुणसंविज्ञानबहुव्रीह्यङ्गीकारे जलातिरिक्तानामेव बाह्यार्थतया तत्रैव इतरपदार्थान्वयस्य व्युत्पत्तिसिद्धतया जलस्य भेदेन अन्वयासंभवात् चतुर्दशभेदलाभस्यानुपपत्तिः । तथापि मीमांसकैरर्थापत्तिप्रमाणेनैव पृथिव्यामितरभेदसिद्धिस्वीकारेण प्रत्येकं व्यतिरेक्यनुमानेनेतरभेदस्य साधनीयतया तन्मते अभावस्याधिकरणात्मकतया अतिरिक्तस्याभावपदार्थस्य असत्त्वेन चतुर्दशभेदसाध्ये प्रतियोग्यप्रसिद्ध्यापत्त्या त्रयोदशभेदः साधनीय इति भावः । **प्रत्येकाधिकरणप्रसिद्ध्येति** ॥ तेजसि जलभेदस्य जले तेजोभेदस्यापि

## नृसिंहप्रकाशिका.

**प्रत्येकमिति** ॥ तादृशत्रयोदशत्वविशिष्टस्यैकैकस्मिन्नेव प्रसिद्धत्वात् तत्सङ्गतिः । तथा च जलाद्यभावान्तान्यतमप्रतियोगिकानां त्रयोदशसु प्रसिद्धानां भेदानां मेलनं पृथिव्यां साध्यते इत्येकोऽर्थः, जलाद्यन्यतमप्रतियोगिकत्वविशिष्टत्रयोदशत्वविशिष्टभेदानां प्रत्येकं प्रसिद्धानां मेलनं पृथिव्यां साध्यत इत्यपरोऽर्थः फलितः । **त्रयोदशत्वावच्छिन्नसाध्यस्येति** ॥ त्रयोदशत्वावच्छेदेन प्रसिद्धो यः एकैकतादृशाभावः तद्घटितचतुर्दशात्मकसमुदायस्येति त्रयोदशत्वावावच्छिन्नो यः तादृशभेदघटितैकैकसमुदायः तद्घटितचतुर्दशात्मकसमुदायस्येति वार्थः । तथा च जलाद्यभावान्तान्यतमप्रतियोगिकचतुर्दशत्वविशिष्टभेदस्य कुत्राप्यप्रसिद्धत्वात् प्रथमपक्षे नान्वयित्वं, न वा साधारण्यं, त्रयोदशत्वावच्छिन्नैकैकतादृशभेदसमुदायघटितचतुर्दशसमुदायस्यापि कुत्राप्यप्रसिद्धत्वात् द्वितीयपक्षेऽपि नान्वयित्वं न वा साधारण्यमित्यर्थः । **प्रत्येकाधिकरणप्रसिद्ध्येति** ॥ प्राथमिकसाध्यघटकैकाभावस्य त्रयोदशत्वावच्छेदेन प्रसिद्ध्या द्वितीयसाध्यघटकस्य त्रयोदशत्वावच्छिन्नात्मकतादृशभेदघटितैकैकसमुदायस्य एकैकाधिकरणे प्रसिद्ध्या चेत्यर्थः । **साध्यविशिष्टानुमितीति** । साध्यतावच्छेदकावच्छिन्नप्रकारकानुमितिरित्यर्थः । विशेषणज्ञानसत्त्वादिति भावः । **व्यतिरेकव्याप्तिनिरूपणं चेति** । व्यतिरेकव्याप्तिज्ञानमपीत्यर्थः । संभवतीति शेषः । तथा च साध्यरूपप्रतियोगिज्ञानरूपकारणसत्त्वेन साध्याभावज्ञानसंभवात् तद्घटितव्यतिरेकव्याप्तिज्ञानं निराबाधमिति भावः । ननु त्रयोदशसु प्रसिद्धजलाद्यभावान्तान्यतमप्रतियोगिकैकैकभेदघटितचतुर्दशत्वावच्छिन्नस्य साधनेनैवेष्टसिद्धेः प्रत्येकप्रसिद्धजलाद्यभावान्तान्यतमप्रतियोगिकत्वविशिष्टभेदघटितत्रयोदशत्वावच्छिन्नात्मकैकैकसमुदाय-

## नीलकण्ठप्रकाशिका.

प्रत्येकं प्रसिद्धानमिति रीत्या वक्तुमुचितम्, तथापि अर्थापत्तेः प्रमाणान्तरत्वमङ्गीकुर्वन्तं प्राभाकरमाक्षेप्तुं व्यतिरेकव्याप्तेरनुमित्यङ्गत्वस्य प्रदर्शनीयतया तन्मतसाधारण्येन व्यतिरेकव्याप्तिं प्रदर्शयितुं जलादित्रयोदशेत्यादिकथनम्। न च तन्मते चतुर्दशान्योन्याभावाः प्रसिद्धाः। अभावस्याधिकरणात्मकस्य तेनाङ्गीकारादिति ध्येयम् । केचित्तु—जलमेवादिर्येषां त्रयो-

## रामरुद्रीयम्.

प्रसिद्धया तत्तदधिकरणे त्रयोदशप्रतियोगिकत्रयोदशभेदानां ज्ञाने सति एते त्रयोदशभेदा इति विशेषणतावच्छेदकप्रकारकज्ञानसंभवेन त्रयोदशभेदप्रकारकानुमितेः त्रयोदशभेदाभाव-

## नृसिंहप्रकाशिका.

घटितचतुर्दशत्वावच्छिन्नसाधनं व्यर्थमिति चेन्न । जलाद्यभावान्तान्यतमप्रतियोगिकैकैकभेदस्य त्रयोदशसु प्रसिद्धिः न प्रात्यक्षिकी । जलाद्यभावान्तानां मध्ये जलत्वादिना अतीन्द्रियजलादेरपि प्रविष्टतया तत्साधारण्येन प्रत्यक्षासंभवात् । किन्त्वनुमित्यात्मकसिद्धिर्वाच्या । तत्र तेजस्त्वावच्छिन्नादिकं जलभिन्नं शीतस्पर्शाद्यभावात्, जलत्वावच्छिन्नवायुत्वावच्छिन्नादिकं तेजोभिन्नं उष्णस्पर्शाद्यभावात्, जलत्वावच्छिन्नतेजस्त्वावच्छिन्नाकाशत्वावच्छिन्नादिकं वायुभिन्नं सदागतिमत्त्वाभावात् इत्येवंरीत्यैव जलत्वादिरूपतत्तदसाधारणधर्मावच्छिन्नेषु त्रयोदशस्वपि निरुक्तैकैकहेतुनैव जलत्वाद्यवच्छिन्नप्रतियोगिताकैकैकभेदः साधनीयः । अन्यथा तेजः जलभिन्नं उष्णस्पर्शवत्त्वात्, वायुः जलभिन्नः सदागतिमत्त्वात्, आकाशं जलभिन्नं शब्दवत्त्वात् इत्यादिरीत्या तत्तदधिकरणेषु तत्तल्लिङ्गैः जलभेदस्य एवंरीत्या बहुभिः लिङ्गैः तेजोभेदस्य वाय्वादिभेदस्य च साधनीयतया बहूनां लिङ्गानां उपस्थितिकल्पनाप्रयुक्तगौरवापत्तेः। एवं च येन येन लिङ्गेन त्रयोदशसु जलादिप्रतियोगिकैकैकभेदः साध्यते, तेनैव लिङ्गेन पृथिव्यामपि जलादिप्रतियोगिकचतुर्दशभेदस्यापि जलभेदत्वादिना साधनसंभवात् त्रयोदशसु प्रसिद्धिकाल एव पृथिव्यामपि सिद्धिसंभवेन पृथिवी इतरेभ्यो भिद्यत इत्यादिना पृथिव्यामितरभेदसाधनस्य सिद्धसाधनदोषापत्त्या अयुक्तत्वात्। न च पृथिव्यां निरुक्तचतुर्दशभेदानां प्रत्येकरूपेण सिद्धत्वेऽपि चतुर्दशत्वेनासिद्धत्वात् न सिद्धसाधनमिति वाच्यम् । चतुर्दशभेदानां प्रत्येकरूपेण सिद्धिमात्रेण पृथिव्याः गुणादिषट्पदार्थान्तर्भूतत्वजलाद्यष्टपृथिव्यान्तर्भूतत्वशङ्कानिराससंभवेन चतुर्दशत्वेन सिद्धेरनावश्यकत्वात् । न च प्रत्येकप्रसिद्धजलाद्यभावान्तान्यतमप्रतियोगिकत्वविशिष्टभेदत्रयोदशत्वावच्छिन्नघटितचतुर्दशभेदसाधननिष्कृष्टकल्पेऽपि सिद्धसाधनतादवस्थ्यमिति वाच्यम् । एकैकधर्मावच्छिन्न एव तादृशभेदत्रयोदशत्वावच्छिन्नस्य साधनीयतया तन्मात्रवृत्तिहेतोरेव लिङ्गत्वेन तादृशहेतूनां पृथिव्यामभावेन सिद्धसाधनाभावात् । न च जलादिकं पक्षीकृत्य भेदत्रयोदशत्वावच्छिन्नसाधने जलपृथिव्यन्यतरत्वादेरपि हेतुत्वसंभवात् तादृशहेतुनैव पक्षेऽपि तादृशभेदत्रयोदशत्वावच्छिन्नसाधनसंभवेन सिद्धसाधनतादवस्थ्यमिति वाच्यम्। जलादौ तादृशभेदत्रयोदशत्वावच्छिन्नासिद्धेः पूर्वं पृथिवीत्वावच्छिन्नप्रतियोगिताकभेदजलत्वाद्यव-

पक्षलक्षणमाह—**सन्दिग्धेति** ॥ ननु श्रवणानन्तरभाविमननस्थले अव्याप्तिः ।

## नीलकण्ठप्रकाशिका.

दशानामिति विग्रहेण जलादिप्रतियोगिकानां चतुर्दशानामित्यर्थः । **त्रयोदशस्विति** ॥ जलादीत्यादिः । उक्तविग्रहेण चतुर्दशस्वित्यर्थः । अग्रेऽप्येवं बोध्यमित्याहुः । **मूले सन्दिग्धसाध्यवानिति** ॥ विशेष्यतासंबन्धेन साध्यप्रकारकसंशयविशिष्ट इत्यर्थः । सपक्षलक्ष-

## रामरुद्रीयम्.

विषयकव्यतिरेकव्याप्तिज्ञानस्य च नानुपपत्तिरिति भावः । इत्थं च सर्वत्र पक्षविशेष्यकैवानुमितिरित्यभ्युपेयेत्युक्तम् । वस्तुतस्तु पृथिवीतरत्वव्यापकीभूताभावप्रतियोगिगन्धवती

## नृसिंहप्रकाशिका.

च्छिन्नप्रतियोगिताकभेदतादृशभेदद्वयावच्छिन्नप्रतियोगिताकभेदस्य सामान्यभेदपर्यवसितस्य सिद्ध्यसंभवेन तस्य लिङ्गत्वासंभवात् । न च तथापि पृथिवीत्वजलत्वाद्यन्यतरत्वावच्छिन्नस्यैव हेतुत्वमिति वाच्यम् । विशेषणीभूतनिरुक्तान्यतरत्वस्य जलत्वत्वादिरूपधर्मान्तरघटितत्वेन तद्विशिष्टतादृशान्यतरत्वस्यापि जलत्वत्वादिरूपस्वसमानाधिकरणधर्मान्तरघटितत्वेन व्याप्यतावच्छेदकत्वासंभवात् । न च पृथिवीजलोभयत्वमेव हेतुरस्त्विति वाच्यम् । पृथिवीसामान्ये जलसामान्ये च एकोभयत्वासत्त्वेन भागासिद्ध्यापत्तेः । न च पृथिवीजलोभयत्वत्वेन हेतुत्वस्वीकारात् नोक्तदोष इति वाच्यम् । तथा सति पृथिवीजलोभयत्वस्य पृथिवीत्वसामानाधिकरण्यजलत्वसामानाधिकरण्यविशिष्टोभयत्वरूपस्य तत्त्वेन हेतुत्वेन स्वरूपासिद्ध्यापत्तेः । तादृशोभयत्वस्य सामानाधिकरण्यसंबन्धेन पृथिवीत्वजलत्वविशिष्टोभयत्वरूपतया विशेषणीभूतपृथिवीत्वजलत्वयोः एकत्रावर्तमानतया विशिष्टहेतोरपि कुत्राप्यवर्तमानत्वात् तादृशसामानाधिकरण्योपलक्षितोभयत्वस्य तत्त्वेन हेतुत्वे तादृशोभयत्वत्वरूपहेतुतावच्छेदकधर्माश्रयजलतेजोनिष्ठोभयत्वादिकं आदाय तेजःप्रभृतिषु व्यभिचारापत्तेः, व्याप्यतावच्छेदककोटावुपलक्षणतया पदार्थनिवेशे मानाभावाच्च । तस्मात् शीतस्पर्शादिरूपप्रत्येकमात्रवृत्तिहेतुनैव जलादिनिष्ठभेदत्रयोदशत्वावच्छिन्नस्य साधनीयतया तादृशहेतोः पक्षावृत्तित्वेन तेन हेतुना पृथिव्यां तादृशत्रयोदशभेदस्य साधनासंभवात्, द्वितीयपक्षे न सिद्धसाधनावकाश इत्यास्तां विस्तरः । प्राचीनाभिमतपक्षलक्षणमाह—**मूले सन्दिग्धेति** ॥ अत्र सन्दिग्धपदस्य साध्यपदेन कर्मधारयो न संभवतीति, मत्वर्थीयप्रत्ययान्तकर्मधारयार्थप्रतिपत्तिकरः बहुव्रीहिसमासो यदि, तदा कर्मधारयात्परतः मत्वर्थीयप्रत्ययो न भवतीत्यर्थस्य न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर इत्यनुशासनस्य विरोधापत्त्या तादृशसमासात् मत्वर्थीयापत्तेः । किन्तु सन्दिग्धश्चासौ साध्यवांश्चेति विग्रहः । साध्यवत्त्वेन सन्दिह्यमानत्वं तदर्थः । तथा च साध्यवत्त्वप्रकारतानिरूपितसन्देहविशेष्यत्वं पक्षलक्षणमिति नोक्तदोषावकाश इति ध्येयम् । निरुक्तलक्षणस्य लक्ष्यं निदर्शयति—**यथेति** ॥ **धूमवत्त्वहेताविति** ॥ धूमवत्त्वहेत्वाधिकरण-

**तत्र वेदवाक्यैरात्मनो निश्चितत्वेन सन्देहाभावात् । किञ्च प्रत्यक्षेऽपि वह्नौ यत्रेच्छयानुमितिस्तत्राव्याप्तिरिति चेन्न, उक्तपक्षताश्रयत्वस्य पक्षलक्षणत्वात् ।**

---

## नीलकण्ठप्रकाशिका.

णादिकमप्येवं परिष्कर्तव्यम् । पक्षलक्षणस्याव्याप्तिमाशङ्कते—**दीपिकायां नन्विति** ॥ संशयविघटकशाब्दबुद्धिस्थलेऽव्याप्तिमुक्त्वा प्रत्यक्षस्थलेऽपि तामाह—**किञ्चेति** ॥ **उक्तेति** ॥ सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपपक्षताश्रयत्वस्य पक्षलक्षणत्वादित्यर्थः ।

## रामरुद्रीयम्.

पृथिवीति परामर्शात् पृथिव्यामितरभेद इति साध्यविशेष्यकानुमित्युपगमे क्षतिविरहात्, एतावदायासो विफल एव । साध्यविशेष्यकानुमितौ साध्यज्ञानस्य प्रतियोगित्वानभ्युपगमेन प्रसिद्धसाध्यस्थले साध्यविशेष्यकानुमितेरपि वारणासंभवादिति ध्येयम् । **उक्तपक्षतेति** ॥

## नृसिंहप्रकाशिका.

मित्यर्थः । यद्यपि यथा पर्वत इति एतावतैव लक्ष्यनिर्देशसंभवात् मध्ये धूमवत्त्वादिहेताविन्युक्तिः निरर्थिका, तथापि पर्वते धूमेन वह्निसाधने धूमवत्त्वहेतोः पञ्चरूपोपपन्नत्वघटकपक्षसत्त्वमुपपादयितुं तदुक्तमिति ध्येयम् । एवमग्रेऽपि । इदानीमेतल्लक्षणं दूषयित्वा नवीनाभिमतलक्षणं सिद्धान्तयितुमाक्षिपति—**दीपिकायां नन्वित्यादिना** ॥ **श्रवणान्तरभाविमननस्थल इति** ॥ अशरीर इत्यादिवेदवाक्यजन्यदेहेन्द्रियादिभिन्नत्वप्रकारकात्मविशेष्यकशाब्दबोधोत्तरकालीनतादृशानुमित्युद्देश्य इत्यर्थः । अव्याप्तिमुपपादयति—**तत्रेति** ॥ निरुक्तानुमित्युद्देश्यभूतात्मनीत्यर्थः । एतस्य सन्देहाभावादित्यनेनान्वयः । सन्देहाभावे हेतुमाह—**वेदवाक्यैरिति** ॥ अशरीरमित्यादिवेदवाक्यैरित्यर्थः । **निश्चितत्वे चेति** ॥ देहेन्द्रियादिभिन्नत्वप्रकारतानिरूपितनिश्चयीयविशेष्यताश्रयत्वेनेत्यर्थः । **सन्देहाभावादिति** ॥ देहेन्द्रियादिभिन्नत्वप्रकारतानिरूपितसंशयीयविशेष्यत्वाभावादित्यर्थः । नन्वनुमित्युद्देश्यमात्रस्य नेदं लक्षणं, किन्तु श्रवणानुत्तरानुमित्त्युद्देश्यमात्रस्येति नोक्तदोष इत्यत आह—**किञ्चेति** ॥ **प्रत्यक्षेऽपि वह्नाविति** ॥ निश्चितेऽपि वह्नावित्यर्थः । वह्निनिष्ठप्रकारतानिरूपितनिश्चयीयविशेष्यताश्रयपर्वते सत्यपीति याव ( । **यत्रेति** ॥ यदुद्देश्यकेत्यर्थः । एतस्यानुमितावन्वयः अथवा यत्रेति यादृशपर्वतादावित्यर्थः । **अनुमितिरिति** ॥ विशेष्यतासंबन्धेनानुमितिरित्यर्थः । **इच्छायामिति** । सिसाधयिषायां सत्यामित्यर्थः । **अव्याप्तिरिति** ॥ तथा च पर्वतादौ वह्न्यादिनिश्चयकाले साध्यसन्देहरूपपक्षताभावादव्याप्तिरित्यर्थः । तादृशानुमितौ केवलसिद्ध्यभावस्य पक्षतामतेऽपि प्रकृते सिसाधयिषाकाले सिद्धिसत्त्वेऽपि अनुमितेर्जायमानत्वादव्याप्तिरिति भावः । **निरुक्तपक्षताश्रयत्वस्येति** । परिष्कृतसिसाधयिषाविरहविशिष्टसिद्ध्यभावस्येत्यर्थः । आश्रयत्वकथनं दैशिकविशेषणतासंबन्धेन तस्य लक्षणत्वप्रतिपादनाय । **लक्षणत्वादिति** ॥ तथा चानुमित्युद्देश्यमात्रस्य लक्ष्यत्वे सर्वत्र परिष्कृतसिसाधयिषादिविरहविशिष्टसिद्ध्यभावरूपलक्षणसत्त्वात् न तत्रातिव्याप्तिरिति भावः ।

**सपक्षलक्षणमाह—निश्चितेति ॥ विपक्षलक्षणमाह—निश्चितेति ॥ एवं सद्धेतून्निरूप्य असद्धेतून्निरूपयितुं विभजते—सव्यभिचारेति ॥ अनुमिति-**

---

## नीलकण्ठप्रकाशिका.

**सद्धेतून्निरूप्य** व्याप्त्यादिविशिष्टहेतून्निरूप्येत्यर्थः । सद्धेतुनिरूपणे असद्धेतुस्मरणात्प्रसङ्गसङ्गत्या तन्निरूपणमिति भावः। **मूले हेत्वाभासा इति** ॥ हेतुवदाभासन्त इति

## रामरुद्रीयम्.

सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपपक्षतेत्यर्थः । एवं सद्धेतुनिरूपणानन्तरं तत्त्वनिर्णयादिरूपैककार्यत्वसङ्गत्याऽसद्धेतुनिरूपणाय तेषां विभागो मूलकृता कृतः । तत्र च सामान्यलक्षणानभिधानेन मूलकृतो न्यूनतामाशंक्य स्वयं तदाह—**अनुमितीति** ॥

## नृसिंहप्रकाशिका.

इदमुपलक्षणम् । विशेष्यतासंबन्धेन प्रतिज्ञावाक्यजन्यशाब्दबोधवत्त्वमुपनयवाक्यजन्यशाब्दबोधवत्त्वं वा पक्षलक्षणमित्यपि बोध्यम्। सपक्षलक्षणमाह—**मूले निश्चितेति** ॥ साध्यवत्त्वेन निर्श्चीयमानत्वं सपक्षलक्षणमित्यर्थः । साध्यवत्त्वप्रकारतानिरूपितनिश्चयीयविशेष्यत्वं सपक्षलक्षणमिति फलितार्थः । लक्ष्यं दर्शयति—**यथेति** ॥ **तत्रैव महानसमिति** ॥ तत्र महानसमेवेति योजना, धूमरूपहेत्वधिकरणं महानसमेवेत्यर्थः। एतेन हेतोः सपक्षसत्त्वमाविष्कृतम्। विपक्षलक्षणमाह—**निश्चितेति** ॥ निश्चितश्चासौ साध्याभाववांश्चेति विग्रहः। साध्याभाववत्त्वेन निश्चयीयमानत्वं तदित्यर्थः। तथा च साध्याभाववत्त्वप्रकारतानिरूपितनिश्चयीयविशेष्यत्वं विपक्षलक्षणमिति फलितार्थः । लक्ष्यं दर्शयति—**यथेति** ॥ **तत्रैव महाह्रद इति** ॥ तत्र महाह्रद एवेति योजना। धूमवत्त्वरूपहेत्वनधिकरणं महाह्रद एवेत्यर्थः । एतेन हेतोः विपक्षात् व्यावृत्तत्वमाविष्कृतम्। ननु विपक्षनिरूपणानन्तरं दुष्टहेतुनिरूपणमयुक्तं सङ्गत्यभावादित्याशङ्कां सङ्गतिप्रदर्शनेन परिहरति—**एवमिति** ॥ व्याप्तिविशिष्टपक्षधर्मत्वनिरूपणेनेत्यर्थः । **सद्धेतूनिति** ॥ व्याप्तिपक्षधर्मताविशिष्टहेतूनित्यर्थः । **निरूप्येति** ॥ लक्षणस्वरूपविभागबोधकव्यापारानन्तरमित्यर्थः । एतेन विपक्षनिरूपणं न प्रकृतं, सद्धेतुनिरूपणमेव प्रकृतम् । किन्तु हेतोः सत्त्वघटकपक्षधर्मत्वनिरूपणप्रसङ्गसङ्गत्या विपक्षनिरूपणं कृतम् । तथा च सद्धेतुनिरूपणानन्तरं हेतुप्रसङ्गसङ्गत्या असद्धेतुनिरूपणमिति सूचितम्। **असद्धेतून्निरूपयितुमिति** ॥ असद्धेतूनां प्रत्येकलक्षणं निर्वक्तुमित्यर्थः। **विभजत इति** ॥ तत्तदसाधारणरूपेण लक्ष्यज्ञानं विना तत्तद्धर्मावच्छिन्नस्य लक्षणप्रतिपादनासंभवादिति भावः। ननु मूले लक्षणमप्रतिपाद्यासद्धेतुविभजनमनुचितम्। अजिज्ञासितत्वात् अर्थान्तरदोषः। सामान्यलक्षणाप्रतिपादनेन न्यूनता च । न च मूलस्थहेत्वाभासशब्देन हेतुवदवभासन्त इति व्युत्पत्त्या दुष्टहेतुलाभात् दोषवत्त्वरूपलक्षणस्यापि लाभेन नोक्तदोषद्वयावकाश इति वाच्यम्। दोषसामान्यलक्षणस्य प्रतिपादनात् पूर्वं, तस्यासद्धेतुलक्षणत्वासंभवात् इत्याशङ्कां दोषसामान्यलक्षणप्रतिपादनेन परिहरति—**अनुमितीति** ॥ ह्रदत्वाव-

## नीलकण्ठप्रकाशिका.

हेत्वाभासाः। दुष्टहेतवो निरूप्यन्त इत्यर्थः। ननु सामान्यधर्मप्रकारकज्ञानमन्तरा विशेषजिज्ञासानुदयेन सव्यभिचारेत्यादिना विभागोऽनुचित इत्याशङ्कां परिजिहीर्षुः दोषलक्षणेऽभिहिते दोषवत्त्वरूपदुष्टलक्षणस्याऽतिस्फुटत्वाल्लाभो भवतीत्याशयेन दोषसामान्यलक्षण-

## रामरुद्रीयम्.

इदं च दोषाणामेव लक्षणम्। दोषलक्षणे ज्ञाते तद्वत्त्वरूपदुष्टलक्षणस्यातिस्फुटतया लाभो भवतीति प्रथमं तन्नाभिहितं, अनुमितिप्रतिबन्धकं यत् यथार्थज्ञानं तद्विषयत्वं हेतुदोषत्वमित्यर्थः। अत्र चानुमितिपदं साध्यव्याप्यहेतुमान् पक्षः साध्यवान् इत्यनुमितिपरम्।

## नृसिंहप्रकाशिका.

च्छिन्नोद्देश्यकसंयोगादिसंबन्धावच्छिन्नवह्नित्वाद्यवच्छिन्नविधेयताशाल्यनुमितिसामान्येत्यर्थः। तेन अनुमितिसामान्यप्रतिबन्धकयथार्थज्ञानस्याप्रसिद्धत्वेऽपि नासंभवः। अत्र ह्रदस्संयोगेन वह्न्यभाववानित्यादिज्ञानस्य द्रव्यं वह्निमत्, ह्रदो द्रव्यवान्, समवायेन वह्निमान् इत्यादिज्ञानं प्रत्यप्रतिबन्धकतयाऽसंभववारणाय प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यकत्वादिनिवेशनं, विधेयतायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशनं चेति हृदयम्। **तत्करणेति** ॥ निरुक्तानुमितिनिरूपितासाधारणकारणताश्रयसाध्यतावच्छेदकावच्छिन्ननिरूपितव्याप्तिविशिष्टप्रकृतहेतुतावच्छेदकसंबन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयेत्यर्थः। तेन प्राचीनमते व्याप्तिज्ञानस्यैवानुमितिकरणतया हेत्वभाववत्पक्षादिरूपासिद्धिविषयकज्ञानस्य तादृशव्याप्तिज्ञानाप्रतिबन्धकत्वेऽपि असिद्ध्यादौ नाव्याप्तिः। अत्र द्रव्यव्याप्यवह्निमानित्यादिज्ञानं प्रति वह्निर्धूमव्यभिचारीत्यादिज्ञानस्याप्रतिबन्धकतया तत्राव्याप्तिवारणाय व्याप्तौ साध्यतावच्छेदकावच्छिन्नत्वनिरूपितत्वनिवेशः। संयोगेन धूमाभाववान् ह्रदः इत्यादिज्ञानस्य संयोगेन द्रव्यवान् ह्रदः कालिकसंबन्धेन धूमवान् ह्रद इत्यादिज्ञानाप्रतिबन्धकतया हेत्वभाववत्पक्षरूपस्वरूपासिद्ध्यादावतिव्याप्तिवारणाय हेतुनिष्ठप्रकारतायां हेतुतावच्छेदकसंबन्धावच्छिन्नत्वहेतुतावच्छेदकावच्छिन्नत्वयोर्निवेशः। धूमाभाववान् ह्रद इत्यादिज्ञानकालेऽपि संयोगेन धूमवद्द्रव्यमिति ज्ञानोत्पत्त्या तत्रैवाव्याप्तिवारणाय विशेष्यताया पक्षतावच्छेदकावच्छिन्नत्वनिवेश इति हृदयम्। पर्वतो वह्निमानित्यनुमितिं प्रति पर्वतो वह्न्यभाववानिति भ्रमस्य प्रतिबन्धकतया तद्विषयवह्न्यभावादावतिव्याप्तिवारणाय ज्ञाने यथार्थत्वनिवेशः। तत्त्वञ्च भगवज्ज्ञानावृत्तिविषयताशून्यत्वं ज्ञानभेदेन विषयताभेदाभ्युपगमात् तेन पर्वतो वह्न्यभाववानित्यादिभ्रमस्यापि पर्वतत्वाद्यंशे यथार्थत्वेऽपि न क्षतिः। नन्वनुमितितत्करणान्यतरप्रतिबन्धकत्वं न तादृशान्यतरनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकत्वरूपम्। पर्वतो वह्निमान् ह्रदश्च वह्निमानित्यादिसमूहालम्बनानुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकाश्रयह्रदो वह्न्यभाववानित्याकारकयथार्थविषयज्ञानवह्न्यभाववद्ध्रदस्य पर्वतो वह्निमान् धूमादित्यादि-

प्रतिबन्धकयथार्थज्ञानविषयत्वं हेत्वाभासत्वम् । सव्यभिचारं विभजते—स

## नीलकण्ठप्रकाशिका.

माह—**अनुमितीति** ॥ **हेत्वाभासत्वमिति**॥ हेतोराभासा हेत्वाभासाः हेतुनिष्ठा दोषाः तेषां भावस्तत्त्वमित्यर्थः । 'हदो वह्निमान्' इत्याद्यनुमितिं प्रति 'वह्न्यभाववान् ह्रदः' इत्यादिबाधनिश्चयप्रतिबन्धकः । प्रमात्मकतादृशनिश्चयविषयत्वं वह्न्यभाववद्ध्रदादाव-क्षतमिति लक्षणसमन्वयः । अत्रानुमितिपदमजहल्लक्षणया अनुमितितत्करणान्यतर-परम् । तेन व्यभिचारादिज्ञानस्य परामर्शप्रतिबन्धकतयैव निर्वाहादनुमित्यप्रतिबन्धकत्वेऽपि व्यभिचारादिषु नाव्याप्तिः । 'पर्वतो निर्वह्निः' इति बाधभ्रमस्य 'पर्वतो वह्निमान्' इत्यनुमितिप्रतिबन्धकत्वात्तद्विषयवह्न्यभावादावतिव्याप्तिरतो **यथार्थेति** ॥ भ्रमभिन्नेत्यर्थः ।

## रामरुद्रीयम्.

तेन व्यभिचारज्ञानविषये वह्न्यभावादौ अतिव्याप्तिवारणाय **यथार्थेति** ॥ तत्र वह्न्य-भावादेः दोषत्वे तद्वत्त्वमादाय सद्धेतोरपि दुष्टत्वापत्तेरिति भावः । अथैवमपि ह्रदो वह्न्य-

## नृसिंहप्रकाशिका.

स्थलीयदोषत्वापत्तेः । नापि तादृशान्यतरत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकस्वघटि-तरूपं, तादृशान्यतरत्वस्य कस्यचित् प्रतिबध्यतानवच्छेदकतया असंभवापत्तेः । न च तादृशान्यतरत्वव्यापकप्रतिबध्यताघटितलक्षणकरणात् नोक्तदोष इति वाच्यम् । अनुमिति-परामर्शोभयविरोध्याश्रयासिद्ध्यादौ लक्षणसमन्वयसंभवेऽपि परामर्शाविरोधिनि बाधादौ अनुमित्यविरोधिनि व्यभिचारादौ व्याप्तिप्रसङ्गादिति चेन्न । अनुमितितत्करणान्यतर-प्रतिबन्धकेत्यन्तेन निरुक्तानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वनिरुक्तपराम-र्शत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकान्यतरवत्त्वस्य विवक्षितत्वान्नोक्तदोष इति दिक् । **हेत्वाभासत्वमिति** ॥ हेतुदोषत्वमित्यर्थः । हेतोराभास इति व्युत्पत्त्या हेतुदोष-स्यापि हेत्वाभासशब्दार्थत्वादिति भावः । नन्वेतस्य दोषलक्षणत्वे वस्तुमात्रेऽपि अतिव्याप्तिः । निरुक्तप्रतिबन्धकत्वद्वयान्यतराश्रयह्रदो वह्न्यभाववान् घटश्चेत्याकारकयथार्थज्ञानविषयत्वस्य घटादावपि सत्त्वादिति चेन्न । विषयत्वान्तेन यथार्थज्ञाननिष्ठनिरुक्तप्रतिबन्धकत्वद्वयान्यतरा-वच्छेदकविषयतावत्त्वस्य विवक्षितत्वात्, घटादिविषयतायाः निरुक्तावच्छेदकत्वविरहेणा-तिव्याप्तेरभावात् । न चैवमपि ह्रदो वह्निमान् धूमादित्यादौ केवलवह्न्यभावादेरपि दोषत्वा-पत्तिः । तद्विषयताया अपि प्रतिबन्धकतावच्छेदकघटकत्वादिति वाच्यम् । यथार्थज्ञानतादृश-निष्ठप्रतिबन्धकतावच्छेदकघटकत्वादिति वाच्यम् । यथार्थज्ञाननिष्ठतादृशप्रतिबन्धकतावच्छे-दकत्वात् स्वावच्छिन्नविषयतासामान्यधर्मवत्त्वस्य विवक्षितत्वात् केवलवह्न्यभाव इति ज्ञानी-यवह्न्यभावत्वावच्छिन्नविषयताया अपि सामान्यान्तर्गतत्वेन तस्यानवच्छेदकत्वात् नाति-व्याप्तिः । नन्वेवं सति यथार्थेति व्यर्थं, पर्वतो वह्न्यभाववानिति भ्रमीयवह्न्यभावत्वावच्छि न्नविषयताया निरुक्तप्रतिबन्धकतावच्छेदकत्वेऽपि तादृशविषयतासामान्यान्तर्गतायाः वह्न्य-

## नीलकण्ठप्रकाशिका.

अथैवमपि वह्न्यभाववद्ध्रदात्मकबाधैकदेशे वह्न्यभावादावतिव्याप्तिः । 'वह्न्यभाववान् ह्रदः' इत्याकारकयथार्थज्ञानविषयत्वस्य तत्र सत्त्वादिति चेन्न। यद्रूपावच्छिन्नविषयकज्ञान-सामान्यमनुमितिप्रतिबन्धकं तद्रूपावच्छिन्नत्वं दोषत्वमित्यर्थपर्यवसानेनादोषात्। वह्न्य-भावत्वावच्छिन्नविषयकस्य 'वह्न्यभाववान् ह्रदः' इति ज्ञानस्यानुमितिप्रतिबन्धकत्वेऽपि तादृशज्ञानसामान्यान्तर्गतस्य 'वह्न्यभाववान्' इत्याकारकज्ञानस्याप्रतिबन्धकत्वेन वह्न्य-भावत्वादेर्यद्रूपपदेन उपादानासंभवात् । न च तर्हि यथार्थपदं व्यर्थम् । पर्वतो निर्वह्निरिति भ्रमविषयेऽपि वह्न्यभावादावतिव्याप्तेरुक्तरीत्यैव वारणादिति वाच्यम्।

## रामरुद्रीयम्.

भाववानिति यथार्थज्ञानविषये उदासीनघटादावतिव्याप्तिर्दुर्वारैव । न च यथार्थज्ञानीयानु-मितिप्रतिबन्धकतावच्छेदकविषयतावत्त्वं विवक्षितम्, अतो नातिव्याप्तिरिति वाच्यम् । तथापि तादृशयथार्थज्ञानविषयवह्न्यादिप्रत्येकपदार्थेऽतिव्याप्तेर्दुर्वारत्वात् । न च विशिष्टस्य दोषत्वे तद्घटकपदार्थानामपि दोषपदार्थत्वमिष्टमेवेति वाच्यम्। वह्निर्दोषः अभावो दोषः इति व्यवहाराभावेन वह्नित्वादिना तेषां दोषपदार्थत्वे इष्टापत्तेरयोगादिति चेन्न । यथार्थ-ज्ञानवृत्तियद्रूपावच्छिन्नविषयतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तितद्रूपावच्छिन्नत्वं हेत्वाभा-सत्वमित्यर्थे तात्पर्यात् । न चैवं यथार्थज्ञानवृत्तीति व्यर्थं, वह्नित्वावच्छिन्नविषयकत्वादी-नां अनुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वात् निर्वह्निः पर्वत इत्यादिभ्रमविषयक-

## नृसिंहप्रकाशिका.

भाव इति ज्ञानीयवह्न्यभावत्वावच्छिन्नविषयताया अतथात्वेन तद्धर्मावच्छिन्नस्य दोषत्वाप्र-सक्त्या सद्धेतावतिव्याप्त्यप्रसक्तेरिति चेत् इष्टमेव । एतद्विषयतासामान्यलाभायैव तत्पदो-पादानादिति। इदमुपलक्षणम्। यादृशपक्षकयादृशसाध्यकहेतौ यावन्तो दोषास्संभवन्ति तावद-न्योन्यत्वं तत्पक्षकतत्साध्यकतद्धेतुकदोषसामान्यलक्षणम् । पञ्चत्वकथनन्तु गौरश्वः घट-त्वादित्यादिसंनवस्थलाभिप्रायेणेत्यपि बोध्यम् । निर्वह्निः पर्वतो वह्निमान् धूमादित्यादौ निर्वह्निपर्वतेऽपि वह्निप्रकारकज्ञानस्य स्वविरुद्धधर्मधर्मितावच्छेदकस्वप्रकारकज्ञानरूपतया आहार्यरूपत्वेन प्रकृतानुमितेरप्रसिद्ध्या वह्निमत्पर्वतादिरूपाश्रयासिद्ध्यादावव्याप्तिमिति के-षाञ्चिद्दूषणमपास्तम् । अनुमित्यघटितलक्षणस्योक्तत्वात् । प्राञ्चस्तु—व्यभिचाराद्यन्यतमत्वं हेत्वाभाससामान्यलक्षणमित्याहुः । सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकालाहेत्वा-भासा इति सूत्रकृदनुरोधेन हेत्वाभासान् विभजते—**मूले सव्यभिचारेत्यादिना** ॥ अत्र प्रकरणसमः सत्प्रतिपक्षः, साध्यसम असिद्धिः, अतीतकालः बाधितः इति बोध्यम् । एतेनानेकान्तः विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः इत्यादिना हेत्वाभासविभजनं सूत्रक्रमवि-रुद्धमिति गम्यते । ननु ग्रन्थान्तरे अनेकान्तत्वादिना विभागः, अत्र तु सव्यभिचार-त्वादिना कथं विभागः कृत इत्यत आह—**सव्यभिचारोऽनैकान्तिक इति** ॥

**त्रिविध इति ॥ साधारणं लक्षयति—तत्रेति ॥ उदाहरति—यथेति ॥**

---

## नीलकण्ठप्रकाशिका.

ज्ञानविशेषतात्पर्यग्राहकतया यथार्थपदसार्थक्यात् । एवं च यद्रूपावच्छिन्नविषयकानाहार्या-प्रामाण्यज्ञानानास्कन्दितनिश्चयसामान्यं प्रकृतानुमितिप्रतिबन्धकं, तद्रूपावच्छिन्नत्वं दोषत्व-मित्यर्थः पर्यवसितः । तेन वह्न्यभाववद्ध्रदविषयकस्याहार्यस्याप्रामाण्यज्ञानविशिष्टस्य संशयस्य च अनुमित्यप्रतिबन्धकत्वेऽपि नासंभव इत्यलं पल्लवितेन । परे तु—इदं दुष्टानामेव लक्षणम् । परन्तु—ज्ञायमानव्यभिचारादेः प्रतिबन्धकत्वमभ्युपेत्य । तदर्थस्त्वनुमितिप्रति-बन्धका ये व्यभिचारादयः एकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसंबन्धेन तत्प्रकारकय-थार्थज्ञानविशेष्यत्वम् । धूमवान्वह्नेरित्यादौ धूमाभाववद्वृत्तित्वविशिष्टवह्निर्व्यभिचारः, उक्त-संबन्धेन 'तद्वान्वह्निः' इत्याकारकयथार्थज्ञानविशेष्यत्वमस्तीति लक्षणसमन्वयः । अनुमि-तिपदस्य प्रकृतानुमितिपरतया सद्धेतावनुमितिप्रतिबन्धकीभूतव्यभिचारादीनामप्रसिद्धत्वा-न्नातिव्याप्तिः । यथार्थपदानुपादाने दर्शितसंबन्धेन व्यभिचारप्रकारकभ्रमविशेष्यत्वस्य सद्धेतावपि सत्त्वेनातिव्याप्तिः स्यादिति तन्निवेश इत्याहुः। **स त्रिविध इतीति** ॥ सामा-न्यलक्षणं तु साधारणाद्यन्यतमत्वं स्फुटम् । **मूले तत्रेति** ॥ साधारणादिमध्य इत्यर्थः ।

## रामरुद्रीयम्.

वह्नित्वावच्छिन्नादौ अतिव्याप्तेरप्रसिद्धेः, वह्न्यभाववत्पर्वतत्वादिरूपविषयस्याप्रसिद्ध्यैव यत्पदेन तस्योपादानासंभवादिति वाच्यम् । अभावत्वेन ह्रदावगाहिन्यां अभाववान् वह्न्यभाववानिति बुद्धावपि वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयतासत्त्वेन तत्र ह्रदो वह्निमानि-त्यनुमितिप्रतिबन्धकताविरहेण चासंभवापत्त्या तद्वारणाय तत्सार्थक्यम् । न चैवमपि सं-शयाहार्याप्रामाण्यज्ञानास्कन्दिततादृशनिश्चयेष्वपि वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयतायाः स-त्त्वेन तत्र च प्रतिबन्धकताविरहेणासंभवतादवस्थ्यमिति चेन्न । न यथार्थज्ञानेत्यत्र ज्ञान-पदस्य अनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयपरत्वात् । याथार्थ्यं च यावद्भ्रमभिन्नत्वं, न तु तद्वति तत्प्रकारकत्वम् । तेन निर्वह्निः पर्वत इत्यादिभ्रमस्यापि वह्नित्वाद्यंशे यथार्थत्वेऽ-पि न क्षतिः । न चैवमपि जातित्वादिना ह्रदत्वाद्यवगाहिन्यां जातिमान् वह्न्यभाववानिति बुद्धावपि वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयतासत्त्वात्, तस्याश्च ह्रदो वह्निमानित्यनुमित्यप्रति-बन्धकतयासंभवो दुर्वार एवेति वाच्यम् । लक्ष्यतावच्छेदकत्वेनाभिमतयद्रूपावच्छिन्न-विषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं यद्रूपावच्छिन्नविषयतात्वं तद्रूपावच्छि-न्नविषयताशून्यत्वेन उक्तनिश्चयस्य विशेषणीयत्वेन जातित्वादिना ह्रदत्वावगाहिन्यास्तादृश-

## नृसिंहप्रकाशिका.

तथा च सव्यभिचारशब्दवाच्य एवानैकान्तिकशब्दवाच्य इत्यर्थ इति । **सव्यभिचारं वि-भजते—स त्रिविध इति** ॥ अत्र साधारणाद्यन्यतमत्वं सव्यभिचारसामान्यलक्षणमिति बोध्यम् । **साधारणं लक्षयति—तत्रेति** ॥ साधारणादित्रिक इत्यर्थः । घटकत्वं

## नीलकण्ठप्रकाशिका.

**साध्याभाववद्वृत्तिरिति** ॥ साध्यतावच्छेदकधर्मसंबन्धावच्छिन्नप्रतियोगिताकाभाववन्निरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नाधेयतावानित्यर्थः । तेन वह्निमान् धूमादित्यादौ हेतुमति पर्वतादौ तत्तत्साध्याभावस्य संबन्धान्तरावच्छिन्नसाध्यसामान्याभावस्य च सत्त्वेऽपि साध्याभाववति धूमावयवादौ समवायादिना धूमादेर्वृत्तित्वेऽपि च नातिव्याप्तिः । तत्र च साध्याभाववत्तायां संबन्धविशेषावच्छिन्नत्वानिवेशे वह्निमान्धू-

## रामरुद्रीयम्.

बुद्धेः तादृशजातित्वावच्छिन्नविषयताकत्वादेव निराससम्भवादिति भावः । मेयत्वविशिष्टवह्न्यभाववद्ध्रदादिरूपबाधादौ अतिव्याप्तिवारणाय यद्रूपावच्छिन्नं तादृशविशिष्टान्तराघटितत्वेनापि विशेषणीयमिति सङ्क्षेपः । **मूले साध्याभाववद्वृत्तिरिति** ॥ प्रतियोगिव्यधिकरणसाध्याभाववद्वृत्तित्वविशिष्टप्रकृतहेतुतावच्छेदकावच्छिन्नसाधारण्यरूपो हेतुदोषः, तद्वान् हेतुः साधारणः । ननु अत्र हेतोः दुष्टत्वं केन संबन्धेन विवक्षितम्, न तावदभेदेन तद्वत्त्वं शक्यं विवक्षितुम् । तथा सति वह्न्यभाववद्ध्रदादिरूपदोषस्य तेन संबन्धेन धूमादावसत्त्वात्, ह्रदपक्षकवह्निसाध्यकधूमादिहेतोः दुष्टत्वानुपपत्तेः, नापि येनकेनचित् संबन्धेन । तथा सति सद्धेतोरपि कालिकादिसंबन्धेन दोषवत्त्वात् दुष्टत्वापत्तेः । न च कालिकसंबन्धेन वह्न्यभाववद्ध्रदस्य धूमरूपसद्धेतौ सत्त्वेऽपि पर्वते धूमेन वह्नेः साधने धूमो दुष्ट इति व्यवहारस्यापत्तिः न संभवत्येव । साधनपदस्य लक्षणया धूमलिङ्गकानुमितिपरतया पर्वत

## नृसिंहप्रकाशिका.

सप्तम्यर्थः, तस्य साधारणानैकान्तिक इत्युत्तरेणान्वयः । **साध्याभाववद्वृत्तिरिति** ॥ साध्यमभावो यस्येति व्युत्पत्त्या साध्यवद्भेदवद्वृत्तिरित्यर्थः । प्राञ्चस्तु—साध्येन अभावः साध्याभावः इति व्युत्पत्त्या साध्यावच्छिन्नप्रतियोगिताकभेद एव साध्याभावशब्दार्थ इत्याहुः । तेन न यथाश्रुते कपिसंयोग्येतद्वृक्षत्वादित्यादौ एतद्वृक्षत्वादेः कपिसंयोगाभाववद्वृत्तित्वादतिव्याप्त्यापत्तिः । न चैतल्लक्षणं विरुद्ध अतिव्याप्तं इति वाच्यम् । तस्यापि लक्ष्यत्वात् उपधेयसङ्करेऽप्युपाधेरसाङ्कर्यादिति न्यायेन विरुद्धस्यापि सव्यभिचारत्वेन लक्ष्यत्वात् । प्राञ्चस्तु—व्यभिचारलक्षणे साध्यसामानाधिकरण्यस्यापि विशेषणीयत्वात् नोक्तातिव्याप्तिरित्याहुः । अत्र निरुक्तव्यभिचारस्य व्याप्तिघटकव्यापकत्वग्रहविरोधितया दूषकत्वं हेतौ साध्यवदन्यवृत्तित्वज्ञाने सति औचित्यावर्जनीयतया साध्ये हेतुसमानाधिकरणाभावत्वप्रतियोगित्वस्यापि ग्रहसंभवात् । अथवा साधनसमानाधिकरणाभावप्रतियोगिसाध्यमेव साधारणपदार्थः । हेतौ तद्वत्त्वञ्च स्वविषयकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसंबन्धेनेति बोध्यम् । प्राञ्चस्तु—निरुक्तसाधारणस्य साध्यवदन्यावृत्तित्वरूपव्याप्तिग्रहरूपविरोधितया दूषकत्वं तज्ज्ञानस्य ग्राह्याभावावगाहितया तादृशव्याप्तिज्ञानप्रतिबन्धकत्वात् । अथवा निरुक्तसाधारणस्य व्यापकत्वग्रहविरोधितया दूषकत्वं तज्ज्ञानस्य व्यापकताग्रहं प्रति समानविषयकत्वेन प्रतिबन्धकत्वादित्याहुः। साधारणमुदाहरति—**यथेत्यादिना** ॥

असाधारणं लक्षयति—**सर्वेति** ॥ अनुपसंहारिणो लक्षणमाह—**अन्वयेति** ॥

---

## नीलकण्ठप्रकाशिका.

मादित्यादौ वह्न्याद्यभावस्य कालिकसंबन्धेन पर्वतादौ वृत्तेरतिव्याप्तिः । दैशिकविशेषणताविशेषावच्छिन्नत्वानिवेशे घटत्वाभावादिसाध्यकव्यभिचारिणि साध्याभावस्य घटत्वादेर्विशेषणताविशेषेणाधिकरणाप्रसिद्ध्याऽव्याप्तिः । अतः साध्यतावच्छेदकसंबन्धेन साध्यवत्ताग्रहं प्रति येन संबन्धेन साध्याभाववत्तानिश्चयः प्रतिबन्धकः, तेन संबन्धेन साध्याभाववत्त्वं विवक्षणीयम् । वह्न्यादौ साध्ये तादृशसंबन्धो दैशिकविशेषणता, घटत्वाभावादौ च साध्ये समवायस्तथेति न दोषः । 'कपिसंयोगी एतद्वृक्षत्वात्' इत्यादौ तादृशसंबन्धो निरवच्छिन्नदैशिकविशेषणतेति दिक् । न च विरुद्धेऽतिव्याप्तिरिति भ्रमितव्या । उपधेयसङ्करे-

## रामरुद्रीयम्.

इत्यस्य पर्वतत्वावच्छिन्नपक्षार्थकतया वह्निरित्यस्य वह्नित्वावच्छिन्नरूपसाध्यकत्वार्थकतया साधनपदोत्तरसप्तम्या निरूपितत्वार्थकतया तस्य च दुष्धात्वर्थस्य प्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकावच्छिन्नस्य एकदेशे प्रतिबन्धकत्वे अन्वयोपगमेन निष्ठाप्रत्ययस्य च येनकेनचित् संबन्धेन संबन्ध्यर्थकतया उक्तवाक्यात् पर्वतत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नलिङ्गकानुमितित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकत्वावच्छिन्नसंबन्धी धूम इत्यर्थस्यैव बोधकतया तादृशरूपावच्छिन्नस्यैवाप्रसिद्धया तादृशव्यवहारापादनासंभवात्, केवलधूमो दुष्ट इति व्यवहारापादने च इष्टापत्तिरिति वाच्यम् । एवमपि वह्निना धूमसाधने रासभो दुष्ट इति व्यवहारापत्तेर्दुर्वारत्वात् । तत्र हि धूमसाध्यकवह्निहेतुकानुमितिनिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकावच्छिन्नस्य धूमाभाववद्वृत्तित्वविशिष्टवह्नेः कालिकादिना रासभेऽपि सत्त्वात् इति चेत्, सत्यम् । तथापि स्वविषयकज्ञानविषयवृत्तिहेतुतावच्छेदकवत्त्वसंबन्धेन दोषवत्त्वस्य विवक्षणीयतया वह्नित्वादेः रासभादौ असत्त्वात् न कश्चिद्दोषः । मूले असाधारणस्य लक्षणमाह—**सर्वसपक्षेति** ॥ सपक्षस्साध्यवान्, न तु निश्चितसाध्यवान् निश्चितसाध्यवदवृत्तित्वज्ञा-

## नृसिंहप्रकाशिका.

असाधारणं लक्षयति—**सर्वेति** ॥ अत्र सपक्षत्वं साध्यप्रकारतानिरूपितनिश्चयीयविशेष्यत्वं, स्वीयतादृशविशेष्यतासंबन्धेन निश्चयवत्त्वं वा तद्व्यावृत्तत्वं तादृशनिश्चयवन्निरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वसामान्याभाववत्त्वं, तादृशसामान्याभावलाभायैव सर्वपदं, न तु तस्यापि लक्षणघटकता व्यर्थत्वात् । एवं विपक्षत्वं साध्याभावप्रकारतानिरूपितनिश्चयीयविशेष्यत्वं स्वीयतादृशविशेष्यतासंबन्धेन निश्चयवत्त्वं वा । तद्व्यावृत्तत्वञ्च तादृशनिश्चयवन्निरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वसामान्याभाववत्त्वम् । एतल्लाभायैव सर्वपदमुक्तम् । तथा च स्वीयसाध्यप्रकारतानिरूपितविशेष्यतासंबन्धेन निश्चयवद्वृत्ति-

## नीलकण्ठप्रकाशिका.

ऽप्युपाधेरसङ्कर इति न्यायात्, तस्य विरुद्धसाधारण्येऽपि क्षतिविरहात्। **सर्वसपक्षव्यावृत्त इति॥** सपक्षवृत्तित्वसामान्याभाववानित्यर्थः। सर्वपदं सपक्षवृत्तित्वसामान्याभावनिवेशस्फोरकम्। सपक्षपदं निश्चितसाध्यवदर्थकम्। शब्देऽनित्यत्वसाधकशब्दत्वादिसद्धेतावपि पक्षे साध्यसन्देहदशायामसाधारण्यस्येष्टत्वादिति संप्रदायविदः। नवीनास्तु—सद्धेतावपि पक्षे साध्यसन्देहदशायामसाधारण्यस्य प्रकृतपरामर्शकालिकविरुद्धपरामर्शदशायां सत्प्रतिपक्षस्य च स्वीकारे बाधभ्रमदशायां बाधस्याप्यङ्गीकारापत्तेः। न हि वैषम्ये युक्तिं पश्यामः। एवं चात्र सपक्षपदं केवलसाध्यवत्परम्। 'शब्दो नित्यः शब्दत्वात्' इत्यादिसाध्यवदवृत्तिहेतोरेव लक्ष्यतेति न कोऽपि दोष इति प्राहुः। **अन्वयेति॥**

## रामरुद्रीयम्.

तस्य साध्यसामानाधिकरण्यग्रहविरोधित्वेन अनुमितितत्करणज्ञानविरोधित्वप्रसङ्गात्, असाधारण्यज्ञानं च तद्धटकसामानाधिकरण्यांशे प्रतिबन्धकमिति बोध्यम्। विपक्षव्यावर्तकत्वं च निश्चितसाध्याभाववद्व्यावृत्तत्वम्। अनित्यशब्दे शब्दत्वस्य वृत्तित्वात्। इदं च स्वरूपकीर्तनम् न तु लक्षणविष्टम्, दूषकतायां तस्य अप्रयोजकत्वात्। अत एवाग्रे शब्दत्वं नित्येभ्योऽनित्येभ्यश्च व्यावृत्तमित्युक्तम्। तेनानित्येभ्योऽपीति द्रष्टव्यम्। मूले अनुपसंहारिणो लक्षणमाह—**अन्वयेति॥** तथा च केवलान्वयिसाध्यसन्देहरूपपक्षताकत्वं अनुपसंहारित्वमिति पर्यवसितम्। सर्वत्र साध्यसन्देहे क्वाप्यन्वयव्यतिरेकसहचारनिश्चयासंभ-

## नृसिंहप्रकाशिका.

त्वसामान्याभाववत्त्वं स्वीयसाध्याभावप्रकारतानिरूपितविशेष्यतासंबन्धेन निश्चयवद्वृत्तित्वसामान्याभाववत्त्वोभयविशिष्टहेतुतावच्छेदकवत्त्वमसाधारणस्य लक्षणमिति फलितम्। तत्र वह्निसाध्यकधूमहेतोरपि विपक्षव्यावृत्तत्वात्, अतिव्याप्तिवारणाय सपक्षव्यावृत्तत्वनिवेशः। धूमस्यापि तप्तायःपिण्डरूपयत्किञ्चित्सपक्षव्यावृत्तत्वात्तद्दोषतादवस्थ्यम्। अतः सपक्षनिरूपितवृत्तित्वसामान्याभावनिवेशः पर्वतो वह्निमान् पर्वतहृदान्यतरत्वादित्यादौ साधारणानैकान्तिके तादृशान्यतरत्वेऽतिव्याप्तिवारणाय विपक्षव्यावृत्तत्वनिवेशः। तादृशहेतोरपि कासारादिरूपयत्किञ्चिद्विपक्षव्यावृत्तत्वादतिव्याप्तिवारणाय विपक्षवृत्तित्वसामान्याभावनिवेशः. अवृत्तावतिव्याप्तिवारणाय तादृशहेतोः हेत्वाभाससामान्यलक्षणाक्रान्तत्वसंपादनाय च विशेष्यदलनिवेश इति बोध्यम्। असाधारणमुदाहरति—**यथेत्यादिना॥** लक्षणमुपपादयति—**शब्दत्वमित्यादिना॥** अत्रासाधारणस्यानित्यदोषत्ववादिप्राचीनमताभिप्रायेण इदं लक्षणम्। यदा शब्दे नित्यत्वभ्रमस्तदा नासाधारण्यं; तत्र हेतोर्निश्चितत्वात्। नवीनमते तु—साध्यवन्निरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नवृत्तितानवच्छेदकहेतुतावच्छेदकवत्त्वमसाधारणलक्षणम्। एतस्य व्याप्तिघटकसामानाधिकरण्यग्रहविरोधित्वं दूषकताबीजमिति बोध्यम्। **अन्वयव्यतिरेकदृष्टान्तरहित इति॥** साध्यसामानाधिकरण्यग्रा

**विरुद्धं लक्षयति—साध्येति ॥ सत्प्रतिपक्षं लक्षयति—यस्येति ॥ असिद्धं विभजते—असिद्ध इति ॥ आश्रयासिद्धमुदाहरति—गगनेति ॥ स्वरूपासिद्धमुदाहरति—यथेति ॥ व्याप्यत्वासिद्धस्य लक्षणमाह—सोपाधिक**

---

## नीलकण्ठप्रकाशिका.

अन्वयव्यतिरेकदृष्टान्तरहितत्वं च किंचिद्विशेष्यकनिश्चयाविषयसाध्यकत्वे सति किंचिद्विशेष्यकनिश्चयाविषयसाध्याभावकत्वम् । नवीनमते तु—अत्यन्ताभावाप्रतियोगित्वविशिष्टसाध्यादिकत्वमेवानुपसंहारित्वम् । तज्ज्ञानस्य व्यतिरेकव्याप्तिज्ञानप्रतिबन्धकता । **साध्याभावव्याप्त इति** । साध्याभावव्याप्तिः साध्यवदवृत्तित्वम् । असाधारण्यस्य तु निश्चितसाध्यवदवृत्तित्वरूपतया नाभेदः।नवीनमते तु—साध्याभावस्य व्यतिरेकव्याप्तिः साध्यव्यापकाभावप्रतियोगित्वरूपेति नासाधारण्याभेदः । एतादृशव्याप्तिविशिष्टहेतुमत्ताज्ञानं साक्षादनुमितिप्रतिबन्धकमिति ध्येयम् । **यस्य साध्याभावेत्यादि** ॥ यत्संबन्धि यत्साध्यं तदभावव्याप्यहे-

## रामरुद्रीयम्.

वेन कारणविघटनद्वारा व्याप्तिनिश्चयप्रतिबन्धकत्वमेवैतस्य फलमिति भावः । इदं च प्राचीनमतानुसारेण । नव्यमते तु—यद्विषयकं ज्ञानं साक्षादनुमितौ तज्जनकज्ञाने वा प्रतिबन्धकं तस्यैव हेतुदोषतया सर्वत्र साध्यसन्देहस्य स्वरूपतः व्याप्तिनिश्चयजनकसहचारनिश्चये सहचारनिश्चयात्मकव्याप्तिनिश्चये वा विरोधित्वेऽपि तज्ज्ञानस्य परामर्शानुमित्योः अप्रतिबन्धकतया नोक्तानुपसंहारित्वस्य हेत्वाभासत्वसंभवः । उक्तकारणद्वारा व्याप्तिनिश्चये विरोधित्वेऽपि तज्ज्ञानस्य हेत्वाभासत्वरूपसामान्यलक्षणानाक्रान्तत्वादिति तन्मते अत्यन्ताभावाप्रतियोगिसाध्यकस्य अत्यन्ताभावाप्रतियोगिहेतोश्चानुपसंहारित्वं बोध्यम् । एतज्ज्ञानं च व्यतिरेकव्याप्तिज्ञाने प्रतिबन्धकम् । इत्थं च सव्यभिचारसामान्यलक्षणं व्याप्तिग्रहप्रतिबन्धकतानतिरिक्तवृत्तिविषयताकत्वमेवेति ध्येयम् । विरुद्धं लक्षयति—**साध्याभावव्याप्तेति** ॥ एतज्ज्ञानं च पक्षधर्मताज्ञानसहकारेण साक्षादनुमितिप्रतिबन्धकम् ।

## नृसिंहप्रकाशिका.

हकदृष्टान्तशून्यत्वसाध्याभावसामानाधिकरण्यग्राहकदृष्टान्तशून्यत्वोभयविशिष्टहेतुरित्यर्थः । तादृशहेतुमुदाहरति—**यथा सर्वमनित्यमित्यादिना** ॥ प्रमेयत्वहेतौ अनुपसंहारित्वमुपपादयति—**अत्रेति** ॥ निरुक्तप्रमेयत्वलिङ्गकानुमान इत्यर्थः । **सर्वस्यापीति** ॥ वस्तुमात्रस्यैवेत्यर्थः । **पक्षत्वादिति** ॥ साध्यवत्त्वेन सन्दिह्यमानत्वादित्यर्थः । **दृष्टान्तो नास्तीति** ॥ साध्यप्रकारकनिश्चयविशेष्यं साध्याभावप्रकारकनिश्चयविशेष्यं च नास्तीत्यर्थः। तथा च प्रकृतहेतोर्निरुक्तदृष्टान्तद्वयशून्यताद्वयवत्त्वाल्लक्षणसमन्वय इति भावः । विरुद्धलक्षणमाह—**साध्याभावव्याप्त इति** ॥ साध्याभावव्याप्तहेतुमत्पक्षतावच्छेदकावच्छिन्नो विरोधः । तद्वान् हेतुर्विरुद्ध इत्यर्थः । एतेन साध्याभावव्याप्तिप्रकारकहेतुविशेष्यकज्ञान-

## नीलकण्ठप्रकाशिका.

त्वन्तरस्य ज्ञानं पक्षेऽस्ति स सत्प्रतिपक्ष इत्यर्थः । प्रकृतसाध्यव्याप्यत्वेन ज्ञायमानो यः प्रकृतहेतुस्ततोऽन्यस्मिन्हेतौ साध्याभावव्याप्यत्वज्ञानदशायामेव तस्य सत्प्रतिपक्षतेति सूचनाय हेत्वन्तरमितीति प्राञ्चः । नवीनाः पुनरेवं वर्णयन्ति—यत्संबन्धिसाध्याभावव्याप्यहेत्वन्तरस्य पक्षे सत्त्वं स तथाविध इत्यर्थः इति । **आश्रयासिद्धो यथेति** ॥ आश्रयासिद्धिश्च पक्षे पक्षतावच्छेदकविरहः, पक्षतावच्छेदकविरहवान्पक्षो वा । **स च नास्त्येवेति** ॥ अरविन्दस्य प्रसिद्धत्वात् ' सविशेषणे हि ' इति न्यायेनारविन्दे गगनीयत्वं नास्तीति पर्यवसितोऽर्थः । स्वरूपासिद्धिश्च पक्षे हेत्वभावो हेत्वभाववान्पक्षो वा । ननु सोपाधिकस्य अतिरिक्तस्य सद्भावात्कथं पञ्चहेत्वाभासा इत्यत आह—**सोपाधिक**

## रामरुद्रीयम्.

साध्याभावव्याप्यो हेतुः, हेतुमान् पक्ष इति ज्ञानद्वयसत्त्वे पक्षे साध्यवत्ताज्ञानानुत्पत्तेः । यद्यपि साध्याभावव्याप्यहेतुविषयकत्वं नानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिपक्षधर्मताज्ञान-

## नृसिंहप्रकाशिका.

स्यानुमितितत्करणान्यतरप्रतिबन्धकत्वाभावात् तादृशव्याप्यत्वस्य न विरोधरूपदोषत्वं तद्विशिष्टहेतोर्न दुष्टत्वमिति दूषणं प्रत्युक्तम् । निरुक्तविरोधज्ञानस्य तदभावव्याप्यवत्तानिश्चयत्वेन प्रतिबन्धकत्वात् । तत्र साध्याभावव्याप्तत्वम् साध्यमभावो यत्रेति व्युत्पत्त्या साध्यवद्भेदव्याप्यत्वरूपं ग्राह्यम् । तेन कपिसंयोग्येतद्वृक्षत्वादित्यादौ एतद्वृक्षत्वरूपहेतोः कपिसंयोगाभावरूपसाध्याभावव्याप्यत्वेऽपि न विरुद्धत्वापत्तिः । इत्थं च स्वसाध्यवद्भेदनिरूपितव्याप्तिविशिष्टस्वात्मकहेतुमत्पक्षतावच्छेदकावच्छिन्नो विरोधः, तद्वान् स्वात्मको हेतुः विरुद्ध इति फलितम् । प्राञ्चस्तु—साध्याभावव्याप्तत्वं स्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्याभावत्वकत्वरूपं ग्राह्यम् । तेन नोक्तदोषप्रसक्तिरित्याहुः । अस्मद्गुरुचरणास्तु—साध्याभावशब्दस्य स्वसाध्यविरुद्धसाध्याभावार्थतया नोक्तदोषप्रसक्तिरिति व्याचक्रुः। विरुद्धमुदाहरति—**यथा शब्दो नित्य इत्यादि** ॥ **नित्यत्वाभावेनेति** ॥ नित्यत्ववद्भेदेनेत्यर्थः । नाशप्रतियोगित्ववद्भिन्नभेदेनेति यावत् । सत्प्रतिपक्षं लक्षयति—**यस्येति** ॥ स्वसाध्यवद्भेदनिरूपितव्याप्तिविशिष्टस्वभिन्नहेतुमत्पक्षतावच्छेदकावच्छिन्नः सत्प्रतिपक्षदोषः तद्वान् स्वात्मको हेतुः सत्प्रतिपक्ष इत्यर्थः । अत्र परस्पराभावव्याप्यवत्ताज्ञानात् परस्परानुमितिप्रतिबन्धः दूषकताबीजमिति बोध्यम् । ननु विरोधप्रतिरोधयोः तदभावव्याप्यवत्पक्षतावच्छेदकावच्छिन्नरूपत्वे स्वरूपैक्यादनुमितिप्रतिबन्धरूपदूषकताबीजैक्याच्च कथं भिन्नहेत्वाभासत्वमिति चेन्न । विरोधस्थले साध्याभावसाधकहेतुरेव साध्यसाधकत्वेनोपन्यस्त इति स्थापनवादिनं प्रति अशक्तिविशेषरूपपुरुषदोषोत्थापकत्वं विरोधस्य, प्रतिरोधस्थले साध्यसाधकहेतोः साध्याभावसाधकहेतोश्च भिन्नतया निरुक्ताशक्तिविशेषरूपपुरुषदोषोत्थापकत्वं न प्रतिरोधस्येति तादृशदोषोत्थापकत्वरूपदूषकताबीजान्तरसत्त्वात् विरोधस्य प्रतिरोधकहेतोर्भेदाङ्गीकार आवश्यक इति भावः । सत्प्रतिपक्षमुदाहरति—**यथेत्यादिना** ॥ असिद्धं

## नीलकण्ठप्रकाशिका.

**इति** । व्याप्यत्वासिद्धिः व्याप्त्यभावः, तस्याः सोपाधिकहेतौ नियमेन सत्त्वात्सोपाधिको व्याप्यत्वासिद्ध एव न त्वतिरिक्तो हेत्वाभास इति भावः । उपाधेर्दोषत्वमसंभवीति दीपिकायां व्यक्तीभविष्यत्यग्रे । अत्रेदमवधेयम् । साध्ये साध्यतावच्छेदकाभावः साध्याप्रसिद्धिः । हेतौ हेतुतावच्छेदकाभावः साधनाप्रसिद्धिः । यथा काञ्चनमयवह्निमान्काञ्चनमयधूमात्, इत्यादौ तद्रूहदशायां हेतुतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टव्याप्तिग्रहप्रतिबन्धः फलम् । तयोर्व्याप्यत्वासिद्धावन्तर्भावान्न हेत्वाभासाधिक्यमिति । **साध्यव्यापकत्व इति** ॥ साध्यव्यापकत्वसाधनाव्यापकत्वे एकरूपेण एकसंबन्धेन च ग्राह्ये ।

## रामरुद्रीयम्.

विरहकालीन-तज्ज्ञानस्यानुमित्यप्रतिबन्धकत्वात् । तथापि यद्रूपावच्छिन्नविषयकनिश्चयसामान्ये अनुमित्यप्रतिबन्धकत्वपक्षधर्मताग्रहकालीनत्वोभयाभावः, तत्त्वस्यैव निरुक्तलक्षणपर्यवसितार्थस्य विवक्षणीयत्वात् नानुपपत्तिः । पक्षवृत्तित्वे सति साध्याभावव्याप्यत्वमेव विरुद्धत्वं

## नृसिंहप्रकाशिका.

विभजते—**असिद्धस्त्रिविध इति** ॥ अत्र साधारण्यादित्रिकभिन्नत्वे सति परामर्शनिरूपितज्ञाननिष्ठप्रतिबन्धकतायां विषयतासंबन्धावच्छिन्नावच्छेदकत्वमाश्रयासिद्ध्याद्यन्यतमत्वं वा असिद्धिसामान्यलक्षणम् । तद्वान् हेतुः असिद्ध इति बोध्यम् । एतेनासिद्धिरूपदोषसामान्यस्यासिद्धरूपहेतोश्च लक्षणानुक्तेः मूलकारस्य न्यूनता विभागानुपपत्तिश्चेति दूषणं प्रत्युक्तम् । आश्रयासिद्धमुदाहरति—**आश्रयासिद्धो यथेति** ॥ अत्र पक्षतावच्छेदकाभाववत्पक्षत्ववत्त्वम् आश्रयासिद्धिलक्षणम् । तादृशाश्रयासिद्धिरूपदोषवत्त्वं आश्रयासिद्धरूपहेतोः लक्षणम् । प्रकृते गगनीयत्वाभाववदरविन्दत्ववत्त्वाद्दोषे लक्षणसमन्वयः । तादृशारविन्दरूपदोषवत्त्वात् अरविन्दत्वरूपासिद्धहेतौ लक्षणसमन्वयः । उक्तलक्षणमेव सङ्गमयति—**अत्रेत्यादिना** ॥ स्वरूपासिद्धमुदाहरति—**स्वरूपासिद्धो यथेत्यादिना** ॥ प्रकृतपक्षे हेतुवैशिष्ट्यग्रहनिष्ठप्रतिबध्यतानिरूपितप्रकृतपक्षतावच्छेदकप्रकारकग्रहाप्रतिबन्धकज्ञाननिष्ठप्रतिबन्धकतायां विषयतासंबन्धावच्छिन्नावच्छेदकत्वं हेत्वभाववत्पक्षतावच्छेदकवत्त्वं वा स्वरूपासिद्धिसामान्यलक्षणम् । तद्वान् हेतुः स्वरूपासिद्धिः । आश्रयासिद्धिव्याप्यत्वासिद्ध्योः अतिव्याप्तिवारणाय प्रतिबन्धकान्तं ज्ञानविशेषणमिति बोध्यम् । स्वरूपासिद्धिमुदाहरति—**यथेत्यादिना** ॥ तदुपपादयति—**अत्रेत्यादिना** ॥ अत्राश्रयासिद्धिस्वरूपासिद्धिभिन्नासिद्धित्वं व्याप्यनवच्छेदकत्वविशिष्टहेतुतावच्छेदकत्वं वा व्याप्यत्वासिद्धिलक्षणम् । तादृशहेतुतावच्छेदकवत्त्वं व्याप्यत्वासिद्धहेतोर्लक्षणम् । यथा पर्वतो वह्निमान् प्रमेयधूमादित्यादौ प्रमेयधूमत्वस्य धूमत्वरूपव्याप्यतावच्छेदकधर्मान्तरघटितत्वेन गुरुतया न व्याप्यतावच्छेदकत्वमिति प्रमेयधूमत्वरूपव्याप्यासिद्धिदोषे लक्षणसमन्वयः । तादृशदोषवत्त्वात् प्र-

## नीलकण्ठप्रकाशिका.

तेन 'वह्निमान् धूमात्' इत्यादौ तत्तद्वह्नौ वह्नित्वेन साध्यव्यापकत्वस्य तत्तद्वह्नित्वेन साधनाव्यापकत्वस्य च सत्त्वेऽपि नातिव्याप्तिः, न वा संयोगेन साध्यव्यापकस्य वह्नेः समवायेन साधनाव्यापकत्वेऽपि तत्रातिव्याप्तिः । मूलोक्तोपाधिलक्षणेऽव्याप्तिं वारयितुं ल-

## रामरुद्रीयम्.

अतो नोक्तदोष इति तु न संभवति । गगनपक्षकनित्यत्वसाध्यककार्यत्वादेः विरुद्धत्वानुपपत्तेरिति साध्याभावव्याप्यवत्पक्ष एव सत्प्रतिपक्षः, एतज्ज्ञानं साक्षादनुमितिविरोधि । तद्वत्ताज्ञानं प्रति तदभावव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वात् । असिद्धिसामान्यलक्षणं च आश्रयासिद्ध्याद्यन्यतमत्वं, आश्रयासिद्धित्वं च विशिष्टपक्षग्रहप्रतिबन्धकतानतिरिक्तवृत्तिविषयताकत्वं, स च पक्षतावच्छेदकाभाववत्पक्षः । व्याप्यत्वासिद्धिस्तु हेतौ

## नृसिंहप्रकाशिका.

मेयधूमरूपहेतोः दुष्टत्वम् । इत्थञ्च तद्धर्मविशेष्यकव्याप्यनवच्छेदकत्वग्रहस्य तद्धर्मावच्छेदेन व्याप्तिग्रहप्रतिबन्धकत्वात् प्रकृतहेतुतावच्छेदकावच्छेदेन व्याप्तिग्रहप्रतिबन्धो दूषकताबीजम् । एतस्य स्फुटत्वात् मूलकृता न प्रदर्शितम् । अतो न न्यूनतेति बोध्यम् । ननु व्यभिचारज्ञानस्येव उपाधिप्रकारकज्ञानस्यापि व्याप्तिज्ञानप्रतिबन्धकतया उपाधेरपि हेत्वाभासान्तरत्वात् कथं हेतुदोषाणां पञ्चत्वं, कथं वा दुष्टहेतूनां पञ्चधा विभाग इत्याशङ्कां परिहरति—**सोपाधिक इति** ॥ **व्याप्यत्वासिद्ध इति** ॥ व्याप्यत्वमव्यभिचरितत्वं असिद्धमवर्तमानं यत्रेति व्युत्पत्त्या व्यभिचार्येवेत्यर्थः । तथा चोपाधिविशिष्टहेतौ उपाधिव्यभिचारेण साध्यव्यभिचारोन्नयने सति व्यभिचारस्यैव दोषत्वं तज्ज्ञानस्य ग्राह्याभावावगाहित्वेन साक्षात् व्याप्तिज्ञानप्रतिबन्धकत्वात् उपाधिज्ञानस्य व्यभिचारज्ञानजननद्वारा व्याप्तिज्ञानविघटकत्वेऽपि ग्राह्याभावानवगाहित्वेन साक्षात् व्याप्तिज्ञानाप्रतिबन्धकत्वात् । एवं च तादृशव्यभिचारस्य दोषत्वाङ्गीकारेणैव सर्वसामञ्जस्ये उपाधेः हेतुदोषत्वाङ्गीकारे प्रमाणाभावान्नोक्तदोष इति भावः । प्रसङ्गसङ्गत्या उपाधिं लक्षयति—**साध्यव्यापकत्वे सतीति** ॥ साध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकसाधनवन्निष्ठाभावप्रतियोगितावच्छेदकधर्मवत्त्वमुपाधिलक्षणमित्यर्थः । तेन सद्धेतोरपि विभिन्नरूपेण साध्यव्यापकत्वसाधनाव्यापकत्वविशिष्टयत्किञ्चित्पदार्थवत्त्वेऽपि न सोपाधिकत्वापत्तिः । व्यापकत्वादिस्वरूपमाह—**साध्यसमानाधिकरणेत्यादिना** ॥ सोपाधिकहेतुं दर्शयितुं उपाधिं दर्शयति—**यथेत्यादिना** ॥ आर्द्रेन्धनसंयोगे उपाधिलक्षणमुपपादयति—**यत्रेति** ॥ उपसंहरति—**एवमित्यादिना** ॥ उक्तरीत्येत्यर्थः । **सोपाधिकत्वादिति** ॥ आर्द्रेन्धनसंयोगरूपोपाधिमत्त्वेत्यर्थः । वह्निमत्त्वं धूमसाध्यकवह्निमत्त्वमित्यर्थः । **व्याप्यत्वासिद्धमिति** ॥ व्यभिचारीत्यर्थः । तथा च निरुक्तवह्निमत्त्वहेतोः आवश्यकव्यभिचारदोषवत्त्वादेव दुष्टत्वनिर्वाहेण नोपाधेः दोषान्तरत्वमिति भावः । न्यूनतापरिहाराय उपाधिं विभजते—

इति ॥ उपाधेर्लक्षणमाह—साध्येति ॥ उपाधिश्चतुर्विधः केवलसाध्यव्यापकः, पक्षधर्मावच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकः, उदासीनधर्मावच्छिन्नसाध्यव्यापकश्चेति । आद्यः आर्द्रेन्धनसंयोगः । द्वितीयो यथा वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात् इत्यत्र बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्व-

---

## नीलकण्ठप्रकाशिका.

क्ष्यलक्षणभेदं प्रदर्शयति—**उपाधिश्चतुर्विध इति** ॥ यद्धर्मविशिष्टसाध्यव्यापकत्वं तद्धर्मविशिष्टसाधनाव्यापकत्वं लक्षणे निवेशनीयम् । अन्यथा पर्वतत्वात्मकपक्षधर्मावच्छिन्नसाध्यव्यापकस्य कस्यचिद्धूमत्वावच्छिन्नाव्यापकत्वादतिव्याप्तिः स्यादिति ध्येयम् । **उदासीनेति** ॥ पक्षधर्मसाधनधर्माभ्यां भिन्नेत्यर्थः । **बहिर्द्रव्यत्वम्** आत्मान्यद्र-

## रामरुद्रीयम्.

विशिष्टव्याप्त्यभावरूपा । साध्यहेत्वोः साध्यतावच्छेदकहेतुतावच्छेदकयोर्विरहः साध्यहेत्वप्रसिद्धिः । तल्लक्षणं च व्यभिचारज्ञानवृत्तिव्याप्तिग्रहप्रतिबन्धकतानतिरिक्तवृत्तिविषयताकत्वम् । इत्थं च व्यभिचारसामान्यलक्षणन्तु न व्याप्तिग्रहप्रतिबन्धकतानतिरिक्तवृत्तिविषयताकत्वम् । तथा सति व्याप्यत्वासिद्धौ अतिप्रसङ्गात् । किन्तु साधारणाद्यन्यतमत्वमेव । यत्र च व्यभिचारोऽप्रसिद्धः तत्रापि भ्रमात्मकः तद्ग्रहः सुलभ एवेति न कश्चिद्दोष इति ध्येयम् । बाधस्तु पक्षे साध्याभावादिः । तल्लक्षणन्तु विशिष्टपक्षसाध्यग्रहाविरोधित्वे सति पक्षे साध्यग्रहप्रतिबन्धकतानतिरिक्तवृत्तिविषयताकत्वम् । प्रतिबन्धकता च ज्ञानवैशिष्ट्यानवच्छिन्नत्वेन विशेषणीया ।

## नृसिंहप्रकाशिका.

**दीपिकायामुपाधिश्चतुर्विध इति** ॥ **केवलसाध्यव्यापक इति** ॥ साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नसाध्यनिष्ठव्याप्यतानिरूपितव्यापकताश्रय इत्यर्थः । यथाश्रुते उद्भूतरूपशाकपाकजत्वादिरूपोपाधेरपि तत्स्थलीयसाध्यस्यैव अव्याप्यत्वेन केवलत्वविशेषणाव्यावर्तकतापत्त्या असाङ्गत्यापत्तेः । **पक्षधर्मावच्छिन्नसाध्यव्यापक इति** ॥ पक्षवृत्तित्वेनाभिमतयत्किञ्चिद्धर्मविशिष्टसाध्यतावच्छेदकावच्छिन्ननिरूपितव्यापकताश्रय इत्यर्थः । एवमग्रेऽपि । **उदासीनधर्मावच्छिन्नसाध्यव्यापक इति** ॥ पक्षधर्मभेदसाधनभेदोभयविशिष्टस्वाभिमतयत्किञ्चिद्धर्मविशिष्टसाध्यतावच्छेदकावच्छिन्ननिरूपितव्यापकताश्रय इत्यर्थः । प्राथमिकोपाधिमुदाहरति—**आर्द्रेन्धनसंयोग इति** ॥ धूमवान् वह्नेरित्यादौ आर्द्रेन्धनसंयोग इत्यर्थः । तस्य धूमत्वमात्रावच्छिन्ननिरूपितव्यापकताश्रयत्वादिति भावः । द्वितीयोपाधिस्थलं तादृशोपाधिञ्चोदाहरति—**द्वितीयो यथेति** ॥ **बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकमिति** ॥ सामानाधिकरण्यसंबन्धेनात्मभिन्नद्रव्यत्वविशिष्टं यत्प्रत्यक्षविषयत्वं, तादृशविषयतात्वावच्छिन्ननिरूपितव्यापकताश्रयमित्यर्थः । उद्भूतरूपरूपोपाधेः केवलप्रत्यक्षनिरू-

व्यापकमुद्भूतरूपवत्त्वम् । तृतीयो यथा—प्रागभावो विनाशी जन्यत्वादित्यत्र जन्यत्वावच्छिन्नानित्यत्वव्यापकं भावत्वम् । चतुर्थो यथा—प्रागभावो विनाशी प्रमेयत्वात् इत्यत्र जन्यत्वावच्छिन्नानित्यत्वव्यापकं भावत्वम् । बा-

## नीलकण्ठप्रकाशिका.

व्यत्वम् । इदं केवलप्रत्यक्षत्वस्यैव साध्यत्वानुसारेण । **प्रागभावो विनाशी जन्यत्वादिति** ॥ अत्र जन्यत्वं पक्षधर्मो न भवतीति साधनावच्छिन्नसाध्यव्यापकत्वघटितलक्षणम् । **अनित्यत्वव्यापकमिति** ॥ विनाशित्वव्यापकमित्यर्थः । जन्यत्वस्योदासीनत्वं

## रामरुद्रीयम्.

तेन सत्प्रतिपक्षादौ नातिव्याप्तिः, तदभावव्याप्यवत्ताज्ञानस्य जलं वह्न्यभावव्याप्यं जलवांश्च ह्रद इति ज्ञानसाधारण्यानुरोधेन ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतायाः स्वीकरणीयत्वाच्चेति वह्न्यभावाभाववदवृत्तिमान् पक्ष इति व्याप्त्यंशे निर्धर्मितावच्छेदकनिश्चयस्य ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकतायाः वक्तुमशक्यतया तादृशनिश्चये ज्ञानवैशिष्ट्यानवच्छिन्नैव प्रतिबन्धकता अभ्युपेयेति तद्विषये अव्याप्तिर्दुर्वारैवेति विभाव्यते, तदा पक्षे साध्यवैशिष्ट्यग्रहप्रतिबन्धकतावच्छेदकभूतविषयतासाध्याभावानुमितिजनकतानवच्छेदकत्वेन विशेषणीयेति मन्तव्यम्। साध्याभावादिश्च प्रतियोगिव्यधिकरणत्वेनापि विशेषणीयः, अन्यथा कपिसंयोग्येतद्वृक्षत्वादित्यादेरपि बाधितत्वापत्तेः । न च वृक्षः कपिसंयोगाभाववानित्याकारकनिश्चयस्याव्याप्यवृत्तित्वज्ञानानास्कन्दितस्य वृक्षः कपिसंयोगीत्यनुमितिप्रतिबन्धकतया तद्विषये

## नृसिंहप्रकाशिका.

पितविषयतात्वावच्छिन्ननिरूपितव्यापकत्वाभावादिति भावः । यद्यपि केवलरूपस्यापि निरुक्तव्यापकत्वघटितोपाधित्वसंभवात् उद्भूतरूपत्वेन उपाधित्वकथनमसङ्गतम् । तथापि साध्यसमव्याप्तत्वघटितोपाधिलक्षणवादिप्राचीनमते केवलरूपस्य पक्षधर्मावच्छिन्नसाध्यव्यापकत्वेऽपि परमाण्वन्तर्भावेन व्यभिचारेण विशिष्टसाध्यव्यापकत्वाभावात् तस्योपाधित्वन्न संभवतीति उद्भूतरूपत्वेन उपाधित्वकथनम् । न च परमाणुनिष्ठरूपस्यापि उद्भूतरूपत्वेन व्यभिचारतादवस्थ्यात् तादृशविशिष्टरूपेणापि नोपाधित्वसंभव इति वाच्यम् । उद्भूतपदस्य प्रत्यक्षविषयार्थकतया लौकिकविषयताविशिष्टार्थकतया वा परमाणुरूपस्य न तादृशोद्भूतत्वमिति नोक्तदोषप्रसक्तिरित्याशयः । तृतीयोपाधिस्थलं तादृशोपाधिञ्चोदाहरति—**यथा प्रागभावो विनाशीत्यादिना** ॥ **भावत्वमिति** ॥ भावत्वस्य केवलसाध्यव्यापकत्वाभावात् जन्यत्वस्य पक्षावृत्तित्वेन पक्षधर्मावच्छिन्नसाध्यव्यापकत्वाभावात् भावत्वे निरुक्तोपाधिद्वयलक्षणं न संभवतीति । **साधनावच्छिन्नेत्यादि**॥ तृतीयोपाधिलक्षणमावश्यकमिति भावः । चतुर्थोपाधिस्थलं तादृशोपाधिं च दर्शयति—**चतुर्थस्त्विति** ॥ चतुर्थोपाधिरेवेत्यर्थः । **अत्यन्ताभावो विनाशी प्रमेयत्वादित्यत्रेति** ॥ इत्यादिन्यायघटकहेतुपदप्रतिपाद्यप्रमेयत्वहेताविल्यर्थः । **भावत्वमिति** ॥ भाव-

धितस्य लक्षणमाह—यस्येति ॥ अत्र बाधस्य ग्राह्याभावनिश्चयत्वेन,

### नीलकण्ठप्रकाशिका.

सम्पादयितुं प्रमेयत्वादिति ॥ बाधस्य साध्याभाववत्तानिश्चयस्य । ग्राह्याभावनि-

### रामरुद्रीयम्.

बाधानात्मके उक्तसामान्यलक्षणस्यातिव्याप्तिरिति वाच्यम् । अव्याप्यवृत्तित्वज्ञानास्कन्दित-प्रतिबन्धकज्ञानेऽपि कपिसंयोगाभाववत्पक्षविषयकत्वसत्त्वेन प्रतिबन्धकतातिरिक्तवृत्तित्वात्, सामान्यलक्षणे अव्याप्यवृत्तित्वज्ञानानास्कन्दितत्वस्यानुपयोगात् प्रतियोगिवैयधिकरण्या-वच्छिन्नकपिसंयोगाभावाभावज्ञानस्य व्याप्यवृत्तित्वज्ञानास्कन्दितस्यापि प्रतिबन्धकत्वमेव साध्यवत्ताज्ञानं प्रतीति न तत्सङ्ग्रहसंभव इति ध्येयम् । बाधादीनां प्रतिबन्धकताया बीज-माह—**दीपिकायां अत्रेत्यादिना । विरोधिज्ञानसामग्रीत्वेन** ॥ साध्याभावानुमिति-

### नृसिंहप्रकाशिका.

त्वं चतुर्थोपाधिरेवेति पूर्वेणान्वयः । प्रकृते भावत्वस्य केवलसाध्यव्यापकत्वाभावात्, जन्य-त्वस्यात्यन्ताभावावृत्तित्वेन पक्षधर्मावच्छिन्नसाध्यव्यापकत्वाभावात्, जन्यत्वस्य प्रकृतसाधन-भिन्नत्वेन साधनावच्छिन्नसाध्यव्यापकत्वाभावाच्च भावत्वे निरुक्तोपाधिलक्षणत्रयन्न संभव-तीति तस्योपाधित्वानुपपत्त्या लक्षणान्तरप्रणयनमावश्यकमिति भावः । बाधस्य बाधित-हेतोश्च लक्षणमाह—**मूले यस्येति** ॥ यत्पदं प्रकृतहेतुपरं, ज्ञानज्ञाप्यत्वरूपसंबन्धः षष्ठ्यर्थः । तस्य साध्यपदार्थे प्रकृतसाध्यतावच्छेदकावच्छिन्ने अन्वयः। **प्रमाणान्तरेण निश्चित इति**॥ पक्ष इति शेषः । इदञ्च पक्षे साध्याभावसत्त्वे प्रमाणोपन्यासाय, न तु तस्यापि लक्षणघट-कता ह्रदो वह्निमान् धूमादित्यादौ ह्रदे वह्न्यभावनिश्चयशून्यस्य पुंसः धूमरूपहेतोः बाधित-त्वानापत्तेः । किन्तु निरवच्छिन्नविशेषणतासंबन्धेन साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्य-तावच्छेदकावच्छिन्नाभाववत्पक्षतावच्छेदकवत्त्वं, दैशिकविशेषणतासंबन्धेन साध्यवद्भेद-विशिष्टपक्षतावच्छेदकवत्त्वं वा बाधस्य लक्षणम् । स्वविषयकज्ञानविषयप्रकृतहेतुतावच्छेद-कवत्त्वसंबन्धेन बाधरूपदोषवत्त्वं बाधितहेतोर्लक्षणमिति फलितम् । एवं च न काप्यनुपपत्तिः। बाधितहेतुमुदाहरति—**यथेत्यादिना** ॥ पदार्थत्वहेतोः बाधितत्वमुपपादयति—**अत्रेति** ॥ इत्यादिन्यायघटकहेतुपदप्रतिपाद्यहेतावित्यर्थः । एतस्य बाधितत्वमिति परेणान्वयः । **स्पा-र्शनप्रत्यक्षेण गृह्यत इति** ॥ इदञ्च पक्षीभूतवह्नौ उष्णत्वरूपसाध्याभावसत्त्वे प्रमाणोपन्या-साय, न तु तस्यापि लक्षणघटकतोक्तदोषापत्तेः । तथा च पदार्थत्वहेतोः निरुक्तसंबन्धेन उष्णत्वरूपसाध्याभाववद्वह्नित्वावच्छिन्नवत्त्वात् बाधितत्वं निराबाधमिति भावः । इदमुप-लक्षणम् । उत्पत्तिकालीनघटो गन्धवान् पृथिवीत्वादित्यत्र पृथिवीत्वरूपहेतोरपि बाधितत्वं बोध्यम् । एतेन व्यभिचारादिदोषान्तरसङ्कीर्णबाधविशिष्टहेतोरुदाहृतत्वेऽपि असङ्कीर्ण-बाधविशिष्टहेतोरनुदाहृतत्वात् न्यूनतेति शङ्का परास्ता । बाधादिपञ्चदोषाणां दूषकताबीजं दर्शयति—**दीपिकायां तत्रेति** ॥ दोषपञ्चकमध्ये इत्यर्थः । घटकत्वं सप्तम्यर्थः । तस्य बाधस्येत्यादौ प्रत्येकमन्वयः । **बाधस्येति** ॥ निरुक्तबाधविषयकनिश्चयस्येत्यर्थः । ग्रा-

**सत्प्रतिपक्षस्य विरोधिज्ञानसामग्रीत्वेन साक्षादनुमितिप्रतिबन्धकत्वम् । इतरेषां तु परामर्शप्रतिबन्धकत्वम् । तत्रापि साधारणस्याव्यभिचाराभावरूपतया, विरुद्धस्य सामानाधिकरण्याभावतया व्याप्यत्वासिद्धस्य**

---

## नीलकण्ठप्रकाशिका.

**श्चयत्वेनेति** ॥ अनुमितिप्रतिबन्धकत्वमित्यनेनान्वयि । **विरोधिज्ञानसामग्रीत्वेनेति** ॥ इदं प्राचीनमते । वस्तुतस्तु विरोधिपरामर्शस्य साध्याभावव्याप्यवत्तानिश्चयत्वेनैव प्रतिबन्धकत्वं लाघवात् इति ध्येयम् । **इतरेषां** व्यभिचारादिग्रहाणाम् । **तत्रापि** व्यभिचारादिग्रहेष्वपि । **साधारणस्येति** ॥ भावप्रधाननिर्देशतया साधारण्यस्येत्यर्थः । **अव्यभिचाराभावतया** ॥ तद्ग्रहस्येति शेषः । व्याप्तिज्ञानप्रतिबन्धकत्वमित्यनेनान्वयः।

## रामरुद्रीयम्.

सामग्रीत्वेन । **सामानाधिकरण्याभाववत्तयेति** ॥ इत्थं च साध्यासामानाधिकरण्यं विरोध इत्येकदेशमतानुसारेण, साध्याभावव्याप्यहेतोः विरोधित्वे त्वदुक्तरीत्या साक्षादनुमितिप्र-

## नृसिंहप्रकाशिका.

**ध्याभावनिश्चयत्वेनेति** ॥ तदभावावगाहिनिश्चयत्वेनेत्यर्थः । एतस्य साक्षादनुमितिप्रतिबन्धकत्वमिति परेणान्वयः । **सत्प्रतिपक्षस्येति** ॥ साध्याभावव्याप्यहेतुविशिष्टपक्षतावच्छेदकावच्छिन्नविषयकनिश्चयस्येति यावत् । **विरोधिज्ञानसामग्रीत्वेनेति** ॥ तदभावव्याप्यवत्तानिश्चयत्वेनेत्यर्थः । **साक्षादनुमितिप्रतिबन्धकत्वमिति** ॥ अनुमितिकारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वमित्यर्थः । **इतरेषामिति** ॥ बाधप्रतिरोधभिन्नदोषाणामित्यर्थः। तादृशदोषनिश्चयानामिति यावत् । **परामर्शप्रतिबन्धकत्वमिति** ॥ अत्रापि साक्षादित्यनुषज्यते । परामर्शकारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वमित्यर्थः। बाधप्रतिरोधभिन्नानां मध्ये केषाञ्चित् व्यापकताग्रहप्रतिबन्धकज्ञानविषयत्वं, केषाञ्चित् सामानाधिकरण्यग्रहप्रतिबन्धकज्ञानविषयत्वं, केषाञ्चित् पक्षधर्मताज्ञानप्रतिबन्धकज्ञानविषयत्वमिति स्फुटीकरणायाह—**तत्रापीति** ॥ बाधप्रतिरोधभिन्नहेतुदोषेष्वपीत्यर्थः । घटकत्वं सप्तम्यर्थः । तस्य साधारण्येत्यादौ प्रत्येकमन्वयः, अपिशब्दः साधारणादीनां एकधर्मावच्छिन्ननिरूपितविरोधित्वाभावसूचकः । **साधारणस्येति** ॥ साध्यनिष्ठसाधनसमानाधिकरणाभावप्रतियोगित्वरूपस्येत्यर्थः । **अव्यभिचाराभावतयेति** ॥ साधनसमानाधिकरणाभावाप्रतियोगित्वरूपव्यापकत्वाभावरूपतयेत्यर्थः। तज्ज्ञानस्येति शेषः। एतस्य परामर्शप्रतिबन्धकत्वमित्युत्तरेणान्वयः । एवमग्रेऽपि । **विरुद्धस्य साध्यसामानाधिकरण्याभावतयेति** ॥ इदं च हेतुनिष्ठसाध्याभावासामानाधिकरण्यं विरोध इति मताभिप्रायेण । मूलकाराभिमतसाध्याभावव्याप्यहेतुमत्पक्षविरोधिनिश्चयस्य उक्तरीत्या अनुमितिविरोधित्वमिति बोध्यम् । **व्याप्यत्वासिद्धस्येति** ॥ प्रकृतहेतुतावच्छेदकावच्छेदेन

**विशिष्टव्याप्त्यभावतया, असाधारणानुपसंहारिणोः व्याप्तिसंशयाधायकत्वेन व्याप्तिज्ञानप्रतिबन्धकत्वम्, आश्रयासिद्धिस्वरूपासिद्ध्योः पक्षधर्मताज्ञानप्रति-**

---

## नीलकण्ठप्रकाशिका.

एवमग्रेऽपि । हेतौ साध्याभाववद्वृत्तित्वस्यैव साध्यतावच्छेदके हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वस्यापि व्यभिचारतया तदूहस्य हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावरूपो योऽव्यभिचारस्तदूहप्रतिबन्धकतेति भावः । हेतौ साध्याभाववद्वृत्तित्वप्रकारकग्रहस्य व्याप्तिग्रहप्रतिबन्धकत्वं तु मणिमन्त्रादिन्यायेन । **विशिष्टव्याप्त्यभावतया** हेतुव्यापकतावच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्याभावरूपतया । **व्याप्तिसंशयाधायकत्वेनेति** ॥ हेतावसाधारण्यादिज्ञानदशायां हेतुसाध्ययोः सामानाधिकरण्यनिश्चयासंभवेन पक्षान्तर्भावेन च साध्यसंशयसत्त्वेन व्याप्तिसंशयसंभवान्न व्याप्तिनिर्णय इति प्राचीनमतमभिप्रेत्येदम् । **पक्षधर्मताज्ञानप्रतिबन्ध-**

## रामरुद्रीयम्.

तिबन्धकत्वमेवेति ध्येयम् । व्याप्तिसंशयजनकत्वेन संशयं प्रति साधारणधर्मवद्धर्मिज्ञानस्यासाधारणवद्धर्मिज्ञानस्य च कारणत्वेन तत्तदभावसहचरितत्वस्य साधारणत्वेन तत्तदभाववद्व्यावृत्तत्वस्यासाधारण्यरूपत्वेन अनित्यघटनित्यगगनादिव्यावृत्तशब्दत्ववत्ताज्ञानात्

## नृसिंहप्रकाशिका.

व्याप्यत्वाभावरूपव्याप्यत्वासिद्धरूपदोषस्येत्यर्थः। **व्याप्त्यभावतयेति** ॥ व्याप्त्यभावरूपतयेत्यर्थः । **असाधारणानुपसंहारिणोरिति** ॥ निश्चितसाध्यवद्व्यावृत्तत्वनिश्चयसाध्याभाववद्व्यावृत्तत्वोभयविशिष्टहेतुरूपासाधारणस्य साध्यसामानाधिकरण्यग्राहकदृष्टान्तरहितत्वसाध्याभावसामानाधिकरण्यग्राहकदृष्टान्तराहितत्वोभयविशिष्टहेतुरूपानुपसंहारिणश्चेत्यर्थः। तादृशासाधारणविषयकनिश्चयस्य तादृशानुपसंहारिविषयकनिश्चयस्य चेति यावत् । **व्याप्तिसंशयाधायकत्वेनेति** ॥ व्याप्तिसंशयजनकत्वेनेत्यर्थः । तथा च तत्तदभावसहचरितधर्मद्वयवत्ताज्ञानस्येव तद्विरुद्धतदभावविरुद्धधर्मोभयवत्ताज्ञानस्यापि व्याप्तिसंशयहेतुतायाः सकलतान्त्रिकसिद्धान्तसिद्धतया निश्चितसाध्यवद्व्यावृत्तत्वस्य व्याप्तिविरुद्धधर्मरूपतया निश्चितसाध्याभाववद्व्यावृत्तत्वस्य व्यभिचारविरुद्धधर्मरूपतया तादृशधर्मद्वयवत्ताज्ञानस्य व्याप्तिसंशयहेतुतावश्यकत्वात् । एवं साध्यसामानाधिकरण्यग्राहकदृष्टान्तरहितत्वस्य व्याप्तिविरुद्धधर्मरूपतया साध्याभावसामानाधिकरण्यग्राहकदृष्टान्तरहितत्वस्य व्यभिचारविरुद्धधर्मरूपतया तादृशधर्मद्वयवत्ताज्ञानस्यापि व्याप्तिसंशयहेतुत्वावश्यकत्वादिति भावः । **परामर्शप्रतिबन्धकत्वमिति** ॥ साधारणज्ञानस्य परामर्शनिष्ठव्याप्तिज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं, विरुद्धज्ञानस्य तु परामर्शनिष्ठसामानाधिकरण्यप्रकारकग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं व्याप्यत्वासिद्ध-

वन्धकत्वम् । उपाधिस्तु व्यभिचारज्ञानद्वारा व्याप्तिज्ञानप्रतिबन्धकः ।

## नीलकण्ठप्रकाशिका.

**कत्वमिति ॥** पक्षे पक्षतावच्छेदकविरहस्य हेतुविरहस्य च निश्चयदशायां हेतौ पक्षतावच्छेदकविशिष्टपक्षवृत्तित्वग्रहासंभवादिति भावः । ननु पक्षत्वोक्तिरसंगता, हेतौ उपाधिग्रहदशायामपि व्याप्तिनिश्चयासंभवेन उपाधिज्ञानस्य व्याप्तिनिश्चयप्रतिबन्धकताया अवश्यं वक्तव्यतया उपाधेरपि हेत्वाभासलक्षणाक्रान्तत्वादत आह—**उपाधिस्त्विति ॥ व्यभिचारज्ञानद्वारेति ॥** तथा च हेत्वाभासलक्षणे साक्षादनुमितितत्करणान्यतरप्रतिबन्धकत्वस्यैव निवेशनीयतया परमुखनिरीक्षकस्योपाधेर्न हेत्वाभासत्वमिति भावः । ननु तथापि सिद्धिसत्त्वेऽनुमित्यनुदयात्तद्विषयस्य साध्यवत्पक्षस्यापि हेत्वाभासत्वमावश्यक-

## रामरुद्रीयम्.

शब्दे साध्यसन्देहात् शब्दातिरिक्ते क्वापि शब्दत्वस्य अनिश्चयात् शब्दे यदि नित्यत्वं तदा नित्यत्वव्याप्यंशब्दत्वं, यदि च तत्रानित्यत्वं तदा शब्दत्वमनित्यत्वव्याप्यमिति सन्देहोक्तेरिति भावः । एवं सर्वत्र साध्यसन्देहेऽपि साध्यसाध्याभावयोः सहचारसन्देहात् साध्यसाध्याभावयोः व्याप्तिसन्देह इति, अनुपसंहारित्वमपि व्याप्तिसंशायकमिति भावः । इदमपि प्राचीनमतानुसारेण । नव्यमते—निष्कर्षस्तु पूर्वमस्माभिः प्रदर्शित एवेति ध्येयम् । ननु उपाधेरपि ज्ञानं व्याप्तिज्ञानप्रतिबन्धकमिति तत्रोक्तलक्षणमतिव्याप्तमिति तस्य बाधाद्यनन्तर्भावेन लक्ष्यत्वाङ्गीकारासंभवादित्यत आह—**उपाधिस्त्विति । व्यभिचारज्ञानद्वारेति ॥** साध्यव्याप्यहेतुमान् पक्षस्साध्यवान् इत्याकारकानुमितिनिरूपितसाक्षात्प्रतिबन्धकतानतिरिक्तवृत्तिविषयताकत्वमेव हेत्वाभाससामान्यलक्षणम् । उपाधि-

## नृसिंहप्रकाशिका.

ज्ञानस्य तद्धर्मावच्छिन्ने व्याप्तिज्ञाननिरूपितप्रतिबन्धकत्वमसाधारणज्ञानस्य अनुपसंहारिज्ञानस्य चोक्तरीत्या व्याप्तिसंशयजनकतया व्याप्तिप्रकारकनिश्चयप्रतिबन्धकत्वमिति भावः । **आश्रयासिद्धिस्वरूपासिद्ध्योरिति ॥** पक्षतावच्छेदकाभाववत्पक्षरूपाश्रयासिद्धेः हत्वभाववत्पक्षरूपस्वरूपासिद्धेश्चेत्यर्थः । ज्ञानस्येति यावत् ॥ **पक्षधर्मताज्ञानप्रतिबन्धकत्वेनेति॥** परामर्शप्रतिबन्धकत्वमिति पूर्वेणान्वयः। आश्रयासिद्धज्ञानस्य पक्षतावच्छेदकप्रकारक-, पक्षविशेष्यकज्ञानप्रतिबन्धकत्वेन स्वरूपासिद्धिज्ञानस्य पक्षतावच्छेदकावच्छिन्ने हेतुप्रकारकग्रहप्रतिबन्धकत्वेनेत्यर्थः । तथा च बाधादिपञ्चदोषाणां साक्षादनुमितितत्करणान्यतरप्रतिबन्धकज्ञानविषयतया हेत्वाभासत्वं आवश्यकमिति भावः। उपाधेर्निरस्तं हेत्वाभासान्तरत्वमुपसंहरति--**उपाधिस्त्विति ॥** अवधारणार्थकतुशब्दः व्यभिचारज्ञानद्वारेत्युत्तरं योज्यः। उपाधिप्रकारकज्ञानस्येत्यर्थः । **स्वव्यभिचारेण साध्यव्यभिचारज्ञानद्वारेति ॥** उपाधिव्यभिचारलिङ्गकसाध्यव्यभिचारानुमितिजननद्वारैवेत्यर्थः । **व्याप्तिज्ञानप्रतिबन्धकत्वमिति ॥** तथा च साक्षादनुमितितत्करणान्यतरप्रतिबन्धकज्ञानविषयत्वाभावात् नोपाधेर्हे-

सिद्धसाधनं तु पक्षताविघटकतया आश्रयासिद्धावन्तर्भवतीति प्राञ्चः ।

### नीलकण्ठप्रकाशिका.

सित्याशङ्क्यं जरन्नैयायिकानां मतमवलम्ब्येष्टापत्त्या परिहरति—**सिद्धसाधनं त्विति** ॥ **पक्षताविघटकतयेति** ॥ तन्मते पक्षतायाः साध्यसंशयरूपतया तद्विघटकत्वं साध्यनिश्चयस्याक्षतमिति भावः । **अन्तर्भवतीति** ॥ तथा च न विभागव्याघात इति भावः ।

### रामरुद्रीयम्.

ज्ञानन्तु न साक्षाद्व्याप्तिज्ञानप्रतिबन्धकं, तज्जन्यव्यभिचारज्ञानस्यैव व्याप्तिज्ञानप्रतिबन्धकत्वादिति न तत्रातिव्याप्तिरिति भावः । ननु सिद्धेरपि अनुमितिप्रतिबन्धकतया तद्विषये सामान्यलक्षणमतिव्याप्तं, तस्यापि बाधाद्यनन्तर्भूतत्वात् लक्ष्यत्वासंभवात् । न च सिषाधयिषाकाले सिद्धिसत्त्वेऽप्यनुमित्युत्पत्त्या साध्यवत्पक्षविषयकत्वं नानुमितिप्रतिबन्धकतानतिरिक्तवृत्तीति वाच्यम् । यादृशपक्षसाध्यकस्थले सिद्धिसत्त्वे सिषाधयिषया कदाचिदपि नानुमितिः, तादृशस्थले साध्यवत्पक्षादौ अतिव्याप्तेर्दुर्वारत्वात् इत्यत आह—**सिद्धसाधनं त्विति** ॥ सिद्धिविषयीभूतसाध्यवत्पक्षादिरित्यर्थः । **आश्रयासिद्धाविति** ॥ आश्रयः पक्षः पक्षताविशिष्टः, पक्षताविघटनेन पक्षताविशिष्टपक्षस्यासिद्धेरिति भावः । ननु विशिष्टपक्षग्रहप्रतिबन्धकग्रहविषयस्यैवाश्रयासिद्धिरूपतया कथं सिद्धिविषयस्य आश्रयासिद्धावन्तर्भावः । पक्षतावच्छेदकीभूतपर्वतत्वादिना पर्वतादिवृत्तित्वज्ञानमेवानुमितौ हेतुः, न तु पक्षतयातत्पर्वतवृत्तित्वज्ञानस्य स्वरूपसत्याया एव पक्षतायाः अनुमितौ उपयोगित्वात् । सिद्धिविषये तूक्तलक्षणस्य नातिव्याप्तिः । तद्धर्मावच्छिन्नपक्षकतद्धर्मावच्छिन्नसाध्यकानुमितित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताघटितं हि सामान्यलक्षणम् । नीलपर्वतो वह्निमान्, पर्वतः कपिलवह्निमान् इत्याद्यनुमितेरपि अधि-

### नृसिंहप्रकाशिका.

त्वाभासान्तरत्वमिति भावः। सिद्धसाधनरूपदोषस्य हेत्वाभासान्तरत्वमिति शङ्कानिराकरणाय कृतेष्वन्तर्भावमाह—**सिद्धसाधनं त्विति** ॥ अवधारणार्थकतुशब्दः आश्रयासिद्धावित्युत्तरं योज्यः । **पक्षधर्मताविघटकतयेति** ॥ हेतोः पक्षतावच्छेदकविशिष्टपक्षवृत्तिविघटकतयेत्यर्थः । पक्षतावच्छेदकविशिष्टपक्षग्रहप्रतिबन्धकतयेति यावत् । **आश्रयासिद्धावन्तर्भवतीति** ॥ आश्रयासिद्धावेवान्तर्भवतीत्यर्थः । तथा च सिद्धसाधनस्थले सिद्ध्यभावरूपपक्षताया अभावात् सिद्ध्यभावरूपपक्षत्वप्रकारकायंपक्षइतिज्ञानं प्रति सिद्धिमान् इत्याकारकज्ञानस्य ग्राह्याभावावगाहितया पक्षत्वप्रकारकग्रहप्रतिबन्धकत्वादिति भावः । ननु पक्षतावच्छेदकरूपेण पक्षज्ञानस्यानुमित्युपयोगित्वेऽपि पक्षत्वप्रकारकज्ञानस्य न हेतुत्वम् । सिद्ध्यभावरूपपक्षतायाः प्रतिबन्धकाभावविधया स्वरूपसत्या एव कारणत्वात् । तथा च सिद्धसाधनस्यानुमितितत्करणान्यतरप्रतिबन्धकज्ञानविषयत्वाभावाद्धेत्वाभासत्वम-

निग्रहस्थानान्तरमिति नवीनाः ॥

इति तर्कसंग्रहदीपिकायामनुमाननिरूपणम् ॥

## नीलकण्ठप्रकाशिका.

दर्शितमतमतिशिथिलमित्यालोच्याह—**निग्रहेति** ॥ न च सिद्धान्तेऽनुमितिं प्रति सिद्धेः प्रतिबन्धकतया तद्विषयस्य कथं हेत्वाभासता नेति वाच्यम्। सिषाधयिषायाः सिद्धिनिष्ठ-प्रतिबन्धकतायामुत्तेजकतया केवलं सिषाधयिषासहितासिद्धौ प्रतिबन्धकत्वाभावेन तद्वि-षये उक्तहेत्वाभासलक्षणासंस्पर्शात् । अधिकमस्मदीयाभिनवदीधितिव्याख्यायां तर्ककर्क-शविचारचातुरीधुरीणैरनुसन्धेयम् ॥

इति तर्कसंग्रहदीपिकाप्रकाशे भगवदर्पितेऽनुमानपरिच्छेदः समाप्तः ॥

## रामरुद्रीयम्.

कन्त्वित्यादिन्यायेन पर्वतत्वावच्छिन्नपक्षकत्वात् वह्नित्वावच्छिन्नविधेयकत्वाच्च । तासां च पर्वतो वह्निमानित्यादिसिद्धेः न प्रतिबन्धकत्वम्, अधिकावगाहिन्यामनुमितौ सिद्धेरप्रति-बन्धकत्वात् सिद्धिविषये उक्तलक्षणासत्त्वात् इत्यतो हेत्वाभासबहिर्भावत्वं तस्य व्यवस्थाप-यति—**निग्रहस्थानान्तरमिति** ॥ अधिकन्यूनादिवत् हेत्वाभासभिन्नमेव निग्रहस्थान-मित्यर्थः ॥

इति रामरुद्रकृतायां दीपिकाव्याख्यायां अनुमानपरिच्छेदः ॥

## नृसिंहप्रकाशिका.

प्रामाणिकमिति अस्वरसं हृदि निधाय सिद्धसाधनस्य नवीनाभिमतपुरुषदोषरूपैकविंशति-निग्रहस्थानान्तर्भावमेव मूलकाराभिमतमिति सूचयितुमाह—**निग्रहस्थानान्तरमिति** ॥

इति श्रीनृसिंहपण्डितविरचितायां दीपिकाप्रकाशिकायामनुमा-नपरिच्छेदः समाप्तः ॥

## अथोपमानम् ॥

उपमानं लक्षयति—**उपमितिकरणमिति** ॥

इति तर्कसंग्रहदीपिकायां उपमानपरिच्छेदः ॥

---

### नीलकण्ठप्रकाशिका.

**उपमानं लक्षयतीति** ॥ अवसरसङ्गत्योपमानं निरूपयतीत्यर्थः । उपमितिस्वरूपं व्युत्पादयति—**मूले संज्ञेति** ॥ **संज्ञा** गवयपदम्, **संज्ञी** गवयः, तयोः संबन्धः शक्तिः, तज्ज्ञानमित्यर्थः । लक्षणं तु उपमिनोमीत्यनुव्यवसायगम्योपमितित्वमेव । **वाक्यार्थं स्मरन्गोसदृशं पिण्डं पश्यतीति** ॥ एतेन स्मरणं सादृश्यदर्शनजन्यमुद्बोधकान्तरजन्यं वा । उभयमपि सादृश्यदर्शनसहकारि, न तु सादृश्यदर्शनजन्यमेव स्मरणं सहकारीति सूचितम् । प्राञ्चस्तु—'वाक्यार्थं स्मरन्' इत्यत्र वर्तमानसामीप्ये प्रत्ययः । वाक्यार्थं स्मरिष्यन्नित्यर्थः । एवं च वाक्यार्थस्मरणस्य सादृश्यदर्शनजन्यतालाभेन व्यापारतालाभ इत्याहुः । **तदनन्तरमित्यादि** ॥ सादृश्यदर्शना-

### रामरुद्रीयम्.

मूले अवसरसङ्गत्या उपमानं निरूपयति—**उपमितिकरणमिति** ॥ उपमितित्वावच्छिन्नकार्यतानिरूपितकारणताशालित्वं उपमानस्य लक्षणम् । अतिदेशवाक्यार्थस्मरणात्मकव्यापारेऽतिव्याप्तिवारणाय कारणत्वमुपेक्ष्य करणत्वमुपात्तम् । व्यापारस्य व्यापारान्तरविरहेण अकरणत्वात् नातिव्याप्तिः, करणस्य इन्द्रियाघटितमूर्तिकत्वेन उपोद्घातसङ्गत्या उपमितिं लक्षयतीति । **संज्ञेति** ॥ **संज्ञा** वाचकशब्दः **संज्ञी** वाच्यार्थः, तयोस्संबन्धः शक्तिः, सा च अस्माच्छब्दादयमर्थो बोद्धव्य इति ईश्वरेच्छारूपा, पदार्थान्तरं वेत्यन्यदेतत्, तद्विषयकं ज्ञानं उपमितिरित्यर्थः । यद्यपि शक्तिविषयकं ज्ञानं अनुमितिरूपं शाब्दरूपं च भवति, तथा हि 'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतस्सिद्धपदस्य वृद्धाः ॥' इत्यभियुक्तोक्तेः । व्याकरणको-

### नृसिंहप्रकाशिका.

अनुमाननिरूपणानन्तरं उपमाननिरूपणे सङ्गतिं सूचयति—**मूले व्याख्यातमनुमानमिति** ॥ तथा चानुमानस्य उपमानापेक्षया बहुवादिसम्मतत्वेन तज्ज्ञानेन निरसनीयाल्पवादिकत्वज्ञानात् प्रथममत्रैव शिष्यजिज्ञासा जायते, तन्निरूपणेन तादृशजिज्ञासानिवृत्तौ अवश्यवक्तव्यत्वरूपावसरसङ्गत्या उपमाननिरूपणमिति भावः । उपमानलक्षणमाह—**उपमितिकरणमिति** ॥ उपमितित्वावच्छिन्नकार्यतानिरूपितव्यापारसम्बन्धावच्छिन्नकारणत्वमुपमानलक्षणमित्यर्थः । अत्रोपमितित्वमुपमिनोमीत्यनुव्यवसायसिद्धः उपमिति-

## नीलकण्ठप्रकाशिका.

नन्तरम् । गवयो गवयपदवाच्य इत्याकारिका गवयत्वरूपलघुधर्मधर्मितावच्छेदककोपमिति-

## रामरुद्रीयम् .

शाप्तवाक्यैः शाब्दरूपशक्तिग्रहस्य उपमानातिरिक्तोक्तभिन्नेभ्यश्च आनुमानिकशक्तिग्रहस्य च प्रतिपादनात् । एवं पदार्थशक्तिग्रहस्य लौकिकप्रत्यक्षासंभवेऽपि ज्ञानलक्षणाद्यलौकिकसन्निकर्षेण तत्प्रत्यक्षसंभवात् प्रत्यक्षानुमितिशाब्देषु उपमितिलक्षणमतिव्याप्तं, तथापि ज्ञानपदस्य स्वनिरूपितव्याप्तिशक्तिज्ञानाजन्यज्ञानकरणकानुभावार्थकतया न तेष्वतिव्याप्तिः, अनुमित्यात्मकशक्तिज्ञानस्य शक्तिनिरूपितव्याप्तिज्ञानजन्यत्वात् शक्तिविषयकशाब्दबोधस्य च शक्तिनिरूपितशक्तिज्ञानजन्यत्वात् , प्रत्यक्षस्य ज्ञानकरणकत्वाभावात्, स्मृतेरप्यनुभवकरणकतया शक्तिज्ञानव्याप्तिज्ञानाजन्यतया च तत्रातिव्याप्तिवारणाय ज्ञानपदस्य निरुक्तानुभवार्थकत्वेन व्याख्यातम् । न च स्वनिरूपितत्वं विहाय शक्तिज्ञानव्याप्तिज्ञानाजन्यत्वनिवेशेनैव सकलानुमितिशाब्दानां वारणसंभवेन शक्तिविषयकत्वमव्यावर्तकामिति वाच्यम्, उपमितिमात्रस्यैवातिदेशवाक्यार्थस्मरणजन्यत्वेन अतिदेशवाक्यार्थस्य च तत्तत्पदवाच्यत्वघटितत्वेन सामान्यतः शक्तिज्ञानाजन्यत्वनिवेशे अव्याप्तिप्रसङ्गात् । वह्निव्याप्यालोकसदृशो धूमपदवाच्य इति अतिदेशवाक्यार्थज्ञानजन्योपमितौ व्याप्तिज्ञानजन्यत्वसत्त्वेन सामान्यतो व्याप्तिज्ञानाजन्यत्वनिवेशे तादृशोपमितौ अव्याप्तिप्रसङ्गाच्च । तथा च पर्वतो वह्निमानित्याद्यनुमितिशाब्दबोधयोः शक्तिनिरूपितव्याप्तिज्ञानाजन्यत्वसत्त्वेन तत्रातिव्याप्तिवारणायैव शक्तिज्ञानेऽपि शक्तिविषयकत्वस्य सार्थकत्वात् । शक्तिविषयकशक्तिज्ञानाजन्यत्वमा-

## नृसिंहप्रकाशिका.

पदशक्यतावच्छेदकतया वा सिद्धो जातिविशेषः । तद्वत्त्वमेवोपमितिसामान्यलक्षणमिति बोध्यम् । **संज्ञासंज्ञीति** ॥ पदपदार्थयोः वाच्यवाचकरूपसम्बन्धप्रकारकज्ञानमित्यर्थः । इदञ्च शक्तिपरिच्छित्तिरेवोपमितिरिति मणिकारोक्तेः शक्तिज्ञानात्मकैव उपमितिरिति स्फुटीकरणाय । न तु लक्षणपरम् । तादृशसंबन्धत्वज्ञानत्वस्य व्याकरणादिजन्यशक्तिज्ञानेऽपि सत्त्वेनातिव्याप्त्यापत्तेः । प्राञ्चस्तु—सादृश्यप्रकारकं ज्ञानं करणमतिदेशवाक्यार्थस्मरणं व्यापार इत्याहुः । तन्मते उद्बोधकान्तरवशात् यत्रैकदातिदेशवाक्यार्थस्मरणं सदृशवस्तुना सह चक्षुस्संयोगश्च तदुत्तरं सादृश्यप्रकारकपिण्डविशेष्यकप्रत्यक्षम् तादृशस्मरणस्यैव सादृश्यज्ञानात्मकविशेषणज्ञानत्वेन पूर्वं सत्त्वात् तत्रातिदेशवाक्यार्थस्मृतिव्यापारकसादृश्यप्रकारकप्रत्यक्षरूपकारणाभावादुपमित्यनुपपत्तिरूपदोषं हृदि निधाय स्वमतसिद्धकरणं व्यापारं चाह—**तत्करणमिति** ॥ **सादृश्यज्ञानमिति** ॥ सादृश्यप्रकारकप्रत्यक्षद्वारकं सादृश्यज्ञानात्मकमतिदेशवाक्यार्थविषयकस्मरणरूपं ज्ञानमित्यर्थः । न च यत्र सादृश्यप्रकारकप्रत्यक्षोत्तरमेवातिदेशवाक्यार्थस्मरणं तदुत्तरमेवोपमितिः । तत्रातिदेशवाक्यार्थस्मरणोत्पत्तेः प्राग्व्यापारसहितकारणसत्त्वात् । व्यापारवत्त्वसम्बन्धेन स्मृतिकाल एवोपमित्यापत्तिरिति वाच्यम् । तादृशस्मृतिपूर्वमतिदेशवाक्यार्थस्मरणरूपसहकारिकारणा-

## नीलकण्ठप्रकाशिका.

रुत्पद्यत इत्यर्थः। इदमुपलक्षणम्। वैधर्म्यदर्शनेनाप्युपमितिरिरिति ध्येयम्। वैशेषिकास्तु—पद-ताच्यत्वव्याप्यसादृश्यादिपरामर्शात्पदवाच्यत्वस्यानुमितिरेव, अतो नोपमानं प्रमाणान्तरमि-

## रामरुद्रीयम्

त्रनिवेशे चानुमितिमात्रेऽतिव्याप्तिः। अतः शक्तिनिरूपितव्याप्तिशक्तिज्ञानजन्यत्वनिवेशः। व्याप्तिशक्तिज्ञानोभयजन्यनिवेश इत्यर्थः। यद्यप्येवं सति व्याप्तौ शक्तिपक्षकानुमितौ अतिव्याप्तिर्दुर्वारैव। तथापि शक्तिविषयकत्वस्य शक्तिनिष्ठमुख्यप्रकारताकत्वनियमार्थरूपकत्वात् नातिव्याप्तिः। मुख्या च प्रकारता विशेष्यतावच्छेदकनिष्ठप्रकारता न, किन्तु विशेष्यतानवच्छेदकप्रकारता। अवच्छेदकविधया शक्त्यवगाह्यनुमित्यादेरपि व्युदासात्। यदि चाप्रसिद्धसाध्यकस्थले पक्षविशेष्यकानुमितिः प्रामाणिकी तदा मुख्यप्रकारतोद्देश्यताभिन्नत्वेनापि विशेषणीयेति न कश्चिद्दोष इति ध्येयम्। वस्तुतस्तु पदपदार्थयोरित्यादिकं तच्च लिङ्गपरामर्शः, न तु परामृश्यमानं लिङ्गमितिवत् उपमितेः स्वरूपकथनमेव। तथा चायं गवयपदवाच्य इत्याकारकं ज्ञानमेव उपमितिरित्यर्थः। लक्षणन्तु उपमिनोमीत्यादिप्रतीतिसिद्धोपमितित्वरूपजातिमत्त्वमेवेति नानुपपत्तिगन्धोऽपीत्यवधेयम्। **तत्करणमिति** ॥ उपमितिकरणमित्यर्थः। सादृश्यज्ञानं व्याप्तिविशेष्यकसादृश्यप्रकारकनिश्चय इत्यर्थः। स चायं गोसदृश इत्याकारकः, तथा चोक्तम्। 'सादृश्यधीर्गवानां तु या स्यात् सा करणं मतम्' इति। सादृश्यज्ञानस्योपमितिकरणत्वमेवोपपादयति—**कश्चिदित्यादि** ॥ गवय इत्यस्य गवयपदवाच्य इत्यर्थः। अत्र चातिदेशवाक्यार्थज्ञाने गोसादृश्यस्य गवयपदवाच्यस्य सामानाधिकरण्यमात्रेणैव भानम्, न तु तत्पदवाच्यतावच्छेदकत्वेनापि। तथा सति अग्रे अयं गवयपदवाच्य इत्याकारिकायाः गवयत्वजातेः तत्पदवाच्यतावच्छेदकत्वावगाहिन्याः उपमितेर्विरोधापत्तेः। गोसदृशत्वापेक्षया गवयत्वजातेः लघुत्वेन तस्या एव

## नृसिंहप्रकाशिका.

न्तरविरहेण तादृशस्मृतिकाले उपमित्यापादनासम्भवात्। इदानीं सादृश्यप्रकारकप्रत्यक्षव्यापारकसादृश्यज्ञानस्योपमानत्वमुपपाद्य उपमितेराकारविशेषमाह—**तथा हीत्यादिना** ॥ **कश्चित् इति** ॥ ग्रामीण इति शेषः। **गवयशब्दार्थमिति** ॥ गवयपदशक्यमित्यर्थः। **अजानान इति** ॥ विशेषरूपेण ज्ञानशून्य इत्यर्थः। विशेषरूपेण गवयशब्दार्थजिज्ञासया यं कञ्चनारण्यकं उद्दिश्य कीदृशो गवयशब्दार्थ इति प्रश्नानन्तरमिति शेषः। **कुतश्चिदिति** ॥ यस्मात्कस्माचिदित्यर्थः। **इति वाक्यं श्रुत्वेति** ॥ इत्याकारकातिदेशवाक्यार्थश्रवणकरणगोसादृश्यावच्छिन्नविशेष्यकगवयपदवाच्यत्वप्रकारकशाब्दबोधोत्तरं इत्यर्थः। **वनं गते वाक्यार्थे स्मरन् इति** ॥ वाक्यार्थं स्मरन् वनं गत इति योजना। निरुक्तशाब्दबोधजन्यतत्समानाकारकसंस्कारात् गोसादृश्यविशिष्टवस्तुदर्शनेच्छारूपोद्बोधकसहकृतात् जायमानगोसादृश्यावच्छिन्नविशेष्यकगवयपदवाच्यत्वप्रकारकस्मृतिधाराविशिष्टस्सन् अरण्यं प्रविष्टः ग्रामीण इति समुदितवाक्यार्थः। **गोसदृशं**

## नीलकण्ठप्रकाशिका.

त्याहुः। तच्चिन्त्यम्। व्याप्तिज्ञानमन्तरापि पदवाच्यत्वप्रमितेरनुभवसिद्धत्वादित्यन्यत्र विस्तरः॥

इति तर्कसंग्रहदीपिकाप्रकाशे भगवदर्पिते उपमानपरिच्छेदः समाप्तः ॥

## रामरुद्रीयम्.

उपमित्याः शक्यतावच्छेदकत्वावगाह्यौचित्यादिति । **श्रुत्वेति** ॥ एतादृशशाब्दबोधानन्तरमित्यर्थः । वनं गत इत्यनन्तरं गोसदृशं पिण्डम् पश्यन् वाक्यार्थं स्मरतीति पाठः समीचीनः । स्मरन् पश्यतीति व्यत्ययस्तु प्रामादिकः । तथा हि—अत्र शतृप्रत्ययस्य वर्तमाने लटश्शतृशानचाविति सूत्रेण वर्तमानकालीनार्थकत्वेऽपि वाक्यार्थस्मरणसदृशप्रत्यक्षयोस्समानकालीनत्वं नाभिमतम् । अपि तु सदृशप्रत्यक्षोत्तरक्षणे वाक्यार्थस्मरणमित्येव विवक्षितम् । प्रयोगाधिकरणीभूतकालस्यापि वर्तमानकालत्वात् । अत एव पाकपूर्वभाविव्यापारदशायामपि पचामीत्यादिप्रयोगस्यानुभाविकत्वात् । विभुविशेषगुणानां यौगपद्यनिषेधेन स्मरणप्रत्यक्षयोरेकदाऽसंभवात् । व्यत्ययस्तपाठे तु वाक्यार्थस्मरणोत्तरमेव सादृश्यप्रत्यक्षस्य अभिधानक्रमेण प्रतीत्या सादृश्यप्रतीतेः व्यापारान्तरविरहेण सादृश्यज्ञानस्योपमितिकरणत्वानुपपत्तेः । सादृश्यज्ञानोत्तरं वाक्यार्थस्मरणोपगमे च एकसंबन्धिज्ञानस्यापरसंबन्धिस्मारकतया विशिष्टवाक्यार्थघटकसादृश्यज्ञाने सति तद्घटितविशिष्टवाक्यार्थस्मरणोत्पत्त्या वाक्यार्थस्मरणस्यैव व्यापारत्वसंभवेन सादृश्यज्ञानस्य उपमितिकरणत्वोपपत्तिरिति ध्येयम् । **तदनन्तरमिति** ॥ सादृश्यप्रत्यक्षोत्तरकालीनवाक्यार्थस्मरणानन्तरमित्यर्थः । **असाविति** ॥ गवयत्वावच्छिन्न इत्यर्थः ॥

इति रामरुद्रकृतायां दीपिकाव्याख्यायां उपमानपरिच्छेदः समाप्तः ॥

## नृसिंहप्रकाशिका.

**पिण्डं पश्यतीति** ॥ तादृशस्मरणसमकालोत्पन्नचक्षुस्संयोगात् सादृश्यरूपविशेषणज्ञानात्मकतादृशस्मरणसहकृतात सास्नादिरूपगोसादृश्यप्रकारकगोभिन्नवस्तुविशेष्यकप्रत्यक्षवान् भवतीत्यर्थः । **तदनन्तरमिति** ॥ निरुक्तप्रत्यक्षाव्यवहितोत्तरक्षण इत्यर्थः । **अयमिति** ॥ गवयत्वावच्छिन्न इत्यर्थः । न तु इदंत्वावच्छिन्न इत्यर्थः । तथा सति गवयान्तरे गवयपदस्य शक्तेरगृहीततया गवयपदात् गवयान्तरबोधानापत्तेः । **इत्युपमितिरिति**॥ गवयपदवाच्यत्वेन सह इन्द्रियसंबन्धाभावात् गवयपदवाच्यत्वप्रकारकप्रमितेः न प्रत्यक्षरूपत्वं, व्याप्तिज्ञानाभावान् नानुमितित्वं इति अन्यथानुपपत्त्या तादृशप्रमितेरुपमितिरूपत्वमावश्यकमिति भावः । **उत्पद्यत इति** ॥ तथा च उक्तसादृश्यप्रकारकवस्तुविशेष्यकप्रत्यक्षरूपव्यापारसहकृतातिदेशवाक्यार्थस्मरणात्मकोद्बोधकाभिन्नसादृश्यज्ञानात्मकोपमानप्रमाणान्निरुक्तोपमितिस्वरूपविलक्षणप्रतीतिः निराबाधैवेति भावः ॥

इति नृसिंहप्रकाशिकायामुपमानपरिच्छेदः समाप्तः ॥

## अथ शब्दखण्डः ॥

शब्दं लक्षयति—**आप्तेति** ॥ आप्तं लक्षयति—**आप्तस्त्विति** ॥ वाक्यलक्षणमाह—**वाक्यमिति** ॥ पदलक्षणमाह—**शक्तमिति** ॥ अर्थस्मृत्यनु-

---

### नीलकण्ठप्रकाशिका.

**शब्दं लक्षयतीति** ॥ उपजीव्योपजीवकत्वसङ्गत्या शब्दं निरूपयतीत्यर्थः । अत्र ज्ञायमानशब्दस्य शब्दप्रमाणतया शब्दे उपमानोपजीवकत्वाभावादुपमितिशाब्दबोधरूपफलयोः संगतिर्बोध्या । तथा हि—शक्तिपरिच्छित्तिरेवोपमितिः । तस्याश्च—शाब्दबोधोपजीव्यत्वेन फलयोरुपजीव्योपजीवकत्वसंभवः । तादृशसंगतेश्च फलनिष्ठत्वेऽपि स्वाश्रयकरणत्वात्मकपरम्परासंबन्धेन करणनिष्ठत्वात्करणयोरनन्तराभिधानप्रयोजकत्वम् । शब्दज्ञानस्य प्रमाणत्वाङ्गीकर्तृनवीनमते तूपमितेः शक्तपदविषयकत्वेन शब्दप्रमाणतया तत्र च उपमानजन्यत्वस्याक्षततया स्वरूपयोरपि संगतिरिति मन्तव्यम् । **मूले आप्तवाक्यं शब्द इति** ॥ शब्द इति लक्ष्यनिर्देशः । प्रमाणशब्द इति तदर्थः । आप्तवाक्यमिति लक्षणम् । भवति हि पयसा सिञ्चतीत्यादिशब्दः आप्तोक्तवाक्यम् । न तु वह्निना सिञ्चतीत्यादि-

### रामरुद्रीयम्.

उपमाननिरूपणानन्तरं उपमानोपजीवकत्वसङ्गत्या शब्दं निरूपयितुमाह—**आप्तेति** ॥ शक्तिमत्त्वेन पदज्ञानस्यैव शब्दप्रमाणतया तस्य च अयं गवयो गवयपदवाच्य इत्याकारकोपमितिरूपस्य सादृश्यज्ञानरूपोपमानजन्यत्वेन उपजीवकत्वं बोध्यम् । **वाक्यमिति** ॥ वाक्यज्ञानमित्यर्थः । तेन मौनिश्लोकादौ वाक्यविरहेऽपि शाब्दबोधोत्पत्त्या वाक्यस्य शाब्दबोधकारणत्वासंभवेऽपि न क्षतिः । तत्रापि वाक्यानुमानेन वाक्यज्ञानसत्त्वात् । अनाप्तोच्चरितत्वप्रकारकवाक्यज्ञाने अतिव्याप्तिवारणाय आप्तपदनिवेशनम् । शब्दः शब्दप्रमाणमित्यर्थः । **आप्तश्च यथार्थवक्ता** ॥ प्रकृतवाक्यार्थविषयकयथार्थज्ञानप्रयोज्यशब्दोच्चारणकर्ता । **तद्वाक्यम्** तदुच्चरितवाक्यम् । अत्र च प्रकृतवाक्यार्थज्ञाने यथा-

### नृसिंहप्रकाशिका.

उपजीव्योपजीवकभावसङ्गत्या प्रसङ्गसङ्गत्या वा उपमाननिरूपणानन्तरं शब्दप्रमाणं निरूपयति—**आप्तवाक्यमिति** ॥ आप्तोच्चरितवाक्यमित्यर्थः । **शब्द इति** ॥ शब्दप्रमाणमित्यर्थः । इदञ्च ज्ञायमानशब्दस्य प्रमाणत्ववाद्याचार्यमतानुसारेण । सिद्धान्ते तु वाक्यज्ञानं शब्दप्रमाणमिति बोध्यम् । एतेन वाक्याभावेऽपि मौनिकर्तृकलिप्यादिज्ञानजन्यवाक्यज्ञानात् शाब्दबोधोत्पत्त्या व्यभिचारेण वाक्यस्य शब्दप्रमाणत्वं न सङ्गच्छत इति दूषणमपास्तम् । आप्तलक्षणमाह—**आप्तस्त्विति** ॥ अवधारणार्थकतुशब्दः वक्ता इत्युत्तरं योज्यः । **यथार्थवक्तेति** ॥ प्रकृतार्थप्रमातैवेत्यर्थः । तथा च तादृशप्रमातृत्वमाप्तलक्षणं,

## नीलकण्ठप्रकाशिका.

शब्दः तदुच्चारणकर्तुः यथार्थवक्तृत्वरूपाप्तत्वाभावात् । प्रकृतवाक्यार्थगोचरयथार्थज्ञानजन्यवाक्यं प्रमाणशब्द इति तु निष्कर्षः । वाक्यप्रयोगे वाक्यार्थज्ञानस्य हेतुत्वाल्लक्षणसंगतिः । स्फुटमेतत् शब्दमणौ । मीमांसकमतनिरासकत्वेनाग्रिममूलमवतारयितुं तन्मतसाधारण्येन शक्तिपदार्थमाह—**अर्थस्मृत्यनुकूलेति** ॥ शाब्दबोधजनकार्थस्मृत्यनुकूलो

## रामरुद्रीयम्.

र्थत्वं च सर्वांशे भ्रमभिन्नत्वं। तेन वह्निना सिंचतीति वाक्यजन्यज्ञानस्य किंचिदंशे प्रमात्वेऽपि न क्षतिः । प्रकृतवाक्यार्थत्वं च तत्कालीनतत्पुरुषीयप्रकृतवाक्यजन्यप्रतीतिविषयत्वं । तद्विषयकत्वं च ज्ञाने तत्समानविषयकत्वं । तथा च तत्कालीनतत्पुरुषीयप्रकृतवाक्यत्वं तत्कालीनतत्पुरुषीयप्रमाणशब्दत्वमिति पर्यवसितम् । उच्चारणं च शब्दप्रयोगानुकूलो व्यापारः । तत्कालीनतत्पुरुषीयत्वनिवेशनं च कालविशेषे पुरुषविशेषस्य पयःकरणकसेकबोधो वह्निनाःसिञ्चतीति वाक्यात् लक्षणया शक्तिभ्रमेण वा यदि जातः तदा तत्काले तत्पुरुषं प्रति तादृशवाक्यस्य प्रामाण्योपपत्तये यत्काले यत्पुरुषस्य तेन वह्निकरणकसेकबोधः तत्काले तं प्रति तस्यैव प्रामाण्योपपत्तये चेति बोध्यम् । वाक्यत्वनिवेशनं च उच्चारणध्वंसेऽतिव्याप्तिवारणाय बोध्यम् । यद्यपि उक्तवाक्यप्रयोक्तुः वह्निकरणकसेकबुबोधयिषातः कस्यचित् तेनं पयःकरणकबोधोऽपि तं प्रति प्रामाण्यमुपपादयितुं न शक्यते । तादृशज्ञाने वक्तुरिच्छाप्रयोज्योच्चारणजन्यत्वस्य तत्रासंभवात् । तथापि तत्र पयःकरणकसेकबोधेच्छाविरहेऽपि ईश्वरीयतथाविधेच्छाप्रयोज्यत्वस्य वह्निना सिञ्चतीति वाक्योच्चारणे सत्त्वात् न प्रामाण्यानुपपत्तिः । ईश्वरेच्छायाः कार्यमात्रजनकत्वात् । अत एव शुकोच्चारितवाक्यस्य अर्थबु-

## नृसिंहप्रकाशिका.

तादृशप्रमातृकर्तृकवाक्यत्वं शब्दप्रमाणलक्षणमिति भावः । आप्तपदवाच्यत्वं लक्ष्यतावच्छेदकमिति बोध्यम् । अत्र तादृशप्रमातृकर्तृकवाक्यत्वापेक्षया तादृशप्रमाजन्यवाक्यत्वस्य लघुतया तस्यैव शब्दप्रमाणत्वलक्षणत्वमुचितम् । वाक्यप्रयोगे वाक्यार्थज्ञानस्य हेतुत्वात् लक्षणसङ्गतिरिति बोध्यम्। प्राञ्चस्तु—शब्दप्रमितिकरणत्वं तल्लक्षणं । शाब्दत्वं शाब्दयामीति प्रतीतिसाक्षिको जातिविशेष इत्याहुः । वाक्यं लक्षयति—**वाक्यं पदसमूह इति** ॥ पदसमुदायत्वं वाक्यस्य लक्षणमित्यर्थः । अत्रापि वाक्यपदवाच्यत्वं लक्ष्यतावच्छेदकमिति बोध्यम् । वाक्यमुदाहरति—**यथा गामानयेतीति** ॥ इत्याकारकं वाक्यमित्यर्थः । गोपदाम्पदाङ्पूर्वकनीञ्धातुपदलोट्पदात्मकपदचतुष्टयघटितत्वादिति भावः । पदलक्षणमाह—**शक्तं पदमिति** ॥ निरूपकतासंबन्धेन शक्तिमत्त्वं पदलक्षणमित्यर्थः । अत्र पदशब्दवाच्यत्वं लक्ष्यतावच्छेदकमिति बोध्यम् । मूलकारस्य न्यूनतापरिहाराय शक्तेः लक्षणं वदन् शक्तेरतिरिक्तपदार्थत्ववादिमीमांसकमतनिराकरणपरतया अस्मात्पदादयमित्यादिमूलं व्याचष्टे—**दीपिकायां अर्थस्मृत्यनुकूलेति** ॥ स्मृतिविशेषजनकतावच्छेदकेत्यर्थः । स्मृ-

**कूलपदपदार्थसंबन्धः शक्तिः । सा च पदार्थान्तरमिति मीमांसकाः । तन्निरा-**

---

## नीलकण्ठप्रकाशिका.

घटादिपदघटादिरूपार्थयोः संबन्धः शक्तिरित्यर्थः । **अनुकूलत्वम्** इह प्रयोजकत्वम् । तच्च कारणतावच्छेदकपदपदार्थसंबन्धेऽप्यस्ति । अतः पदपदार्थसंबन्धस्य शाब्दबोधजनकस्मृतिजनकत्वाभावेऽपि न क्षतिः । अर्थस्मृत्यनुकूलत्वस्य अदृष्टादिसाधारण्याद्विशेष्यमिति ध्येयम् । **पदार्थान्तरमिति** ॥ तत्तत्पदार्थतावच्छेदकाभावकूटवदित्यर्थः । तेनाति-

## रामरुद्रीयम्.

बोधयिषाप्रयोज्यत्वाभावेऽपि ईश्वरेच्छामादायैव तद्वाक्ये प्रामाण्यनिर्वाहः । यस्य च उक्तवाक्यात् वह्निकरणकसेकबोध एव जातः । तद्वाक्यजन्ययथार्थज्ञानाप्रसिद्ध्या तं प्रति तस्य प्रामाण्यापत्तिः इत्यवधेयम् । एतेन किंचिद्विषयकयथार्थवक्तुः प्रतारणपूर्वकवाक्येऽपि आप्तोच्चरितत्वसत्त्वात् तस्यापि प्रामाण्यापत्तिः । यदि च सर्वांशे यथार्थवक्तृत्वं विवक्षितं तदा ईश्वरीयस्यैव तथात्वं बोध्यम् । लौकिकवाक्यानां प्रामाण्यानुपपत्तिरिति केनचित्प्रलपितमप्यपास्तम् । **शक्तमितीति** ॥ यद्यपि सुप्तिङन्तं पदमिति वैयाकरणाः । सुप्तिङन्तचयो वाक्यमिति वाक्यलक्षणं, तैस्तदनुसारेणाभिहितम् । तथापि घटमित्यादितोऽपि घटनिरूपितं कर्मत्वमिति बोधात् तादृशार्थे तस्य प्रामाण्यच्च तत्राव्याप्तिमाशङ्क्य तदुपेक्षितम् । **अर्थस्मृतीति** ॥ एकसंबन्धिज्ञानस्य अपरसंबन्धिस्मारकतया पदपदार्थयोः परस्परसंबन्ध एव । पदज्ञानादर्थस्मृतिः संभवतीति शक्तेः पदार्थस्मृत्यनुकूलत्वम् । **पदार्थान्तरमितीति** ॥ कॢप्तसंसर्गत्वाभावादिति भावः । यद्यपि स्वरूपस्यैव कॢप्तस्य संबन्धतोचिता। समवायस्थाने तैः स्वरूपस्यैव संबन्धत्वाङ्गीकारात् । तथापि नानास्वरूपसंबन्धत्वकल्पनामपेक्ष्य

## नृसिंहप्रकाशिका.

तिविशेषं प्रति वृत्तिज्ञानसहितपदज्ञानस्य हेतुत्वादिति भावः । अत्र स्मृतावर्थविषयकत्वविशेषणं अव्यावर्तकम् । अर्थाविषयकस्मृतेरप्रसिद्धेः । किन्तु स्वरूपकीर्तनमिति बोध्यम् । अत्र कालिकसंबन्धस्यापि पदपदार्थसंबन्धत्वात् तत्रातिव्याप्तिवारणायार्थस्मृत्यनुकूलत्वं तादृशसंबन्धविशेषणम्। पदस्यापि तादृशार्थस्मृत्यनुकूलत्वेन तत्रातिव्याप्तिवारणाय विशेष्यदलम् । न चेदं लक्षणं लक्षणायामतिव्याप्तम् । तस्यार्थस्मृत्यनुकूलत्वात् पदपदार्थसंबन्धत्वाच्चेति वाच्यम् । लक्षणाभिन्नत्वेनापि विशेषणीयत्वात् । **तन्निरासार्थमाहेति**॥ तन्मतनिराकरणाय कॢप्तपदार्थेष्वन्तर्भावमाहेत्यर्थः । मूले अस्मात्पदादिति पञ्चम्याः ज्ञानजन्यत्वार्थकतया एतत्पदज्ञानजन्यत्वं लभ्यते । तस्य बुधधात्वर्थेऽन्वयः । तथा चैतत्पदज्ञानजन्यबोधविषयतावान् अयमर्थो भवत्वित्याकारिकेश्वरेच्छा शक्तिरित्यर्थः । न च घटपदजन्यबोधविषयत्वप्रकारिकाया भगवदिच्छायाः सर्वविषयत्वेन घट इव पटेऽपि विषयतासंबन्धेन सत्त्वात्पटस्यापि घटपदशक्यत्वापत्तिरिति वाच्यम् । घटपदजन्यबोधविषयतायाः घट एव सत्त्वेन तादृशविषयत्वप्रकारतानिरूपितेच्छीयविशेष्यतापि घट एव स्वीक्रियते । भग-

**सार्थमाह—अस्मादिति ॥ डित्थादीनामिव घटादीनामपि संकेत एव शक्तिः**

---

## नीलकण्ठप्रकाशिका.

रिक्तपदार्थत्वस्यान्यमताप्रसिद्धत्वेऽपि न व्याघातः। **अस्मात्पदादयमर्थो बोद्धव्य इत्या-**

## रामरुद्रीयम्.

अतिरिक्तस्यैकसंसर्गस्य कल्पनमेव न्याय्यमित्यभिप्रायेण तथोक्तमित्यवधेयम् ॥ **डित्था-दीनामिति ॥ आधुनिकेति ॥** डित्थादिशब्दानामित्यर्थः । आधुनिकसङ्केतितेन शक्त्यभावस्य सर्वसम्मतत्वात् । तत्र सङ्केतसंबन्धेनैव पदस्य पदार्थसंबन्धित्वात् यथार्थ-स्मारकत्वं तथा शक्तत्वेनाभिमतघटादिपदानामपि ईश्वरसङ्केतरूपसंबन्धेनैव अर्थस्मारकत्वो-पपत्तौ अतिरिक्तसंबन्धकल्पनाया अन्याय्यत्वात् इति भावः । अत्र च डित्थादिपदानि एकादशेऽहनि पित्रा सङ्केतिताभिन्नान्येव ग्राह्याणि । तेषां शक्तेरेवोपयोगात् । एकादशेऽह-नि पिता नाम कुर्यादिति, एतेन एकादशेऽहनि पितृसङ्केतितनाम्ना तदर्थो बोद्धव्य इति ईश्वरेच्छाया उन्नयनादित्यवधेयम् । न च शक्तेरीश्वरसंकेतरूपत्वे घटादिपदशक्तिः घटे न स्यात् । तस्य घटाद्यवृत्तित्वात् । अथ विषयतासंबन्धेन तस्य घटवृत्तित्वमिति चेत्, तस्य सर्वविषयकतया घटपटविषयकसङ्केतस्य विषयतया वस्तुमात्रसाधारण्येन वस्तुमात्र एव घटपदस्य शक्त्यापत्तेरिति वाच्यम् । घटपदबोध्यत्वप्रकारतानिरूपितविशेष्यतासं-बन्धेन घटपदसङ्केतस्यैव घटपदशक्तत्वात् । ईश्वरेच्छायाः सर्वविषयकत्वेऽपि उक्तविशे-ष्यतासंबन्धेन तस्य घटमात्रवृत्तित्वात् घटपदबोध्यत्वेन घटपदार्थस्यैव तया वहनात् । अन्यथा तस्यापि संबन्धादित्यापत्तेः । अथ शक्तिभ्रमादिना घटपदात् घटादिनानावि-षयकबोधस्यापि अनुभवसिद्धत्वेन घटादिविषयस्यापि भगवदिच्छा स्वीकरणीयैव । तस्य तन्मात्रविषयकत्वात् । तथा च घटादावपि पटादिपदशक्तिकल्पनाशक्यवारणैव । न च तत्प-दार्थविषयकबोधेच्छायां ईश्वरोचरितत्वं तदर्थशक्तित्वं घटादिबोधेच्छया चेश्वरस्य पटादि-पदोच्चारणे मानाभावात् पटादिपदे घटशक्तिमत्त्वापत्तेः अयोगात् इति वाच्यम् । एव-

## नृसिंहप्रकाशिका.

वज्ज्ञानस्य भ्रमत्वापत्त्या घटपदजन्यबोधविषयत्वप्रकारतानिरूपितभगवज्ज्ञानीयविशेष्य-तायाः पटेऽनङ्गीकारेण भगवदिच्छाया अपि तत्समानाकारकत्वात् । तथा च तत्पदजन्य-बोधविषयत्वप्रकारतानिरूपितस्वीयविशेष्यतासंबन्धेनेश्वरेच्छावत्त्वं तत्पदशक्यत्वमिति फ-लितम् । अतो न कश्चिद्दोष इति भावः । इदमुपलक्षणम् । इदंपदममुमर्थं बोधयत्वित्या-कारिका भगवदिच्छापि शक्तिः । सा च पदनिष्ठा, एतदर्थविषयकबोधजनकत्वप्रकारता-निरूपितस्वीयविशेष्यतासंबन्धेन भगवदिच्छायाः पद एव सत्त्वात् घटादिविषयकबो-धजनकत्वप्रकारकभगवदिच्छायाः विशेष्यतासंबन्धेन घटपदे सत्त्वेऽपि निरुक्तविशे-ष्यतासंबन्धेन पटादिपदे अवर्तमानतया पटादिपदानां न घटादिनिरूपितवाचकत्वापत्तिरिति बोध्यम् । एतेन वाचकत्वशक्तेरनुक्ततया मूलकारस्य न्यूनतेति शङ्का निरस्ता । जाति

**न तु पदार्थान्तरमित्यर्थः । ननु गवादिपदानां जातावेव शक्तिः, विशेषणतया जातेः प्रथममुपस्थितत्वात् । व्यक्तिलाभस्तु आक्षेपादिति केचित् । तन्न, गामानये-**

---

## नीलकण्ठप्रकाशिका.

**द्वि** मूलस्य एतत्पदजन्यबोधविषयोऽयमर्थः । इत्याकारकेश्वरेच्छा शक्तिरित्यर्थः । **न तु पदार्थान्तरमिति ॥** न चेश्वरीयज्ञानस्येच्छायाः कृतेर्वा शक्तिरूपत्वमिति विनिगमनाविरहादतिरिक्तैव शक्तिरिति वाच्यम्, आधुनिकसंकेतस्येच्छारूपतया शक्तेरपि इच्छारूपत्वे सङ्केतज्ञानस्यानुगतकार्यकारणभावः संभवति नान्यथा, इत्येवं विनिगमकसंभवेन, इच्छाया एव शक्तित्वस्वीकारात् । न च भगवदिच्छायाः सकलविषयिण्याः शक्तित्वस्वीकारे घटपदबोद्धव्यत्वप्रकारकेच्छायाः पटेऽपि सत्त्वाद्घटपदवाच्यत्वस्यातिप्रसङ्गः । एवं गङ्गापदजन्यबोधविषयत्वप्रकारकेच्छायास्तीरेऽपि सत्त्वेन शक्त्यैव तद्बोधसंभवे लक्षणोच्छेदापत्तिरिति वाच्यम् । यतस्तत्तत्पदवाच्यत्वं तत्तत्पदजन्यबोधविषयत्वप्रकारतानिरूपितेश्वरेच्छीयविशेष्यतावत्त्वम् । तादृशप्रकारतानिरूपितविशेष्यतासम्बन्धेन तदिच्छावत्त्वं वा । तथा च तादृशस्य घटपदवाच्यत्वस्य पटेऽसत्त्वान्नातिप्रसङ्गः । गङ्गादिपदजन्यत्वस्य बोधांशे, बोधविषयत्वस्य च तीरांशे, स्वातन्त्र्येण भानमीश्वरेच्छायामुपेयते । इत्थं च विशकलितभानस्थले निरूप्यनिरूपकभावापन्नविषयताया अभावेन गङ्गापदजन्यत्वप्रकारतानिरूपितबोधविषयितानिरूपितविशेष्यतासंबन्धेन इच्छावत्त्वस्य तीरेऽसत्त्वेन न क्षतिरिति संक्षेपः । विशिष्टे शक्तिं व्यवस्थापयितुं मीमांसकमतमुपन्यस्य दूषयति—**गवादीति ॥** विशेषणीभूतजातिग्रहमन्तरा विशिष्टग्रहासंभवेन विशिष्टे शक्तिकल्पनं न संभवति । अतो जातिग्रहस्य प्रथममपेक्षितत्वेन जातावेव शक्तिकल्पनमुचितं लाघवादित्याह—**विशेषणतयेति ॥ प्रथममुपस्थितत्वादिति ॥** विशिष्टग्रहात्पूर्वमवगतत्वादित्यर्थः । कथं तर्हि व्यक्तिलाभ इत्यत आह —**व्यक्तीति ॥ आक्षेपादिति ॥** अर्थापत्तिप्रमाणादित्यर्थः ।

## रामरुद्रीयम्

मपि वेदस्थलाक्षणिकपदादावपि बोधो घटपदजन्यो भवतु, बोधविषयः पटो भवत्विति विशकलितविशेषेणैव तस्यास्तन्मात्रविषयकत्वमुपेयते। न तु घटपदजन्यबोधविषयत्वावच्छिन्नप्रकारतानिरूपितघटनिष्ठविशेष्यताशालिपटो घटपदशक्यः इत्यप्रयोगात् इति चोहनीयम्। **विशेषणतयेति ॥** एतच्चापाततः। विशिष्टबुद्धौ विशेषणज्ञानस्य जातिशक्तिवादिभिः

## नृसिंहप्रकाशिका.

शक्तिवादिमीमांसकमतं निरसितुं तन्मतमाक्षिपति—**दीपिकायां गवादिशब्दानामिति ॥** तन्मते पश्वादिशब्दानां लाघवेन पश्वादावेव शक्ततया गवादिशब्दानामित्युक्तम् । परमते जात्यवच्छिन्नवाचकानां शब्दानामित्यर्थः । **जातावेव शक्तिरिति ॥** निरवच्छिन्नशक्तिरित्यर्थः । एवकारेण व्यक्तिषु शक्तिनिरासः । जातिशक्तिस्वीकारे युक्तिमाह—**विशेषणतयेति ॥ प्रथमोपस्थितत्वादिति ॥** विशिष्टबुद्धौ विशेषणज्ञानस्य

त्यादौ वृद्धव्यवहारेण सर्वत्रानयनादेर्व्यक्तावेव संभवेन, जातिविशिष्टव्यक्तावेव

## नीलकण्ठप्रकाशिका.

**व्यक्तावेव संभवेनेति ॥** अनुपपत्तिप्रतिसंधानशून्यतादशायामपि व्यक्तिभानस्यानुभवसिद्धत्वेन चेत्यपि बोध्यम्। **विशिष्टव्यक्तावेवेति ॥** एवकारेण केवलजातिकल्पनव्यवच्छेदः। अत्रेदं बोध्यम्। जातितद्वैशिष्ट्यतदाश्रयेषु त्रिषु शक्तिः कल्पनीया पदार्थद्वयसंबन्धस्यैव पदद्वयसमभिव्याहारलभ्यत्वेनान्यस्याशक्यस्य शाब्दबोधे भानासंभवादिति। नव्यास्तु—लक्ष्यतावच्छेदकत्वग्रहमात्रेण लक्ष्यतावच्छेदकस्य यथा शाब्दबोधे भानं तथा शक्यतावच्छेदकत्वग्रहमात्रेण शक्यतावच्छेदकस्यापि शाब्दबोधे भानं संभवतीति शक्यतावच्छेदके च शक्तिर्न

## रामरुद्रीयम्.

मीमांसकैः कारणत्वानङ्गीकारात्। गोत्वत्वेन गोत्वज्ञानस्य व्यक्तिज्ञानात् पूर्वं असंभवात् गोत्वस्य गोघटितत्वात् निर्विकल्पकेऽपि स्वरूपतो गोत्वविषयके व्यक्तिभानस्यावश्यकत्वात्। गोत्वस्य व्यक्त्युपस्थित्यपेक्षया पूर्वमुपस्थितत्वासंभवात् इति यद्यपि प्रतिभाति, तथापि केवलव्यक्तिषु नैयायिकैरपि शक्त्यनभ्युपगमेन गोत्वविशिष्ट एव शक्तिरभ्युपगम्यते। तथा च स्वरूपतो गोत्वज्ञानस्य गोत्वविशिष्टविषयकतया गोत्वविशिष्टापेक्षया गोत्वस्य न्यायमते च प्रथममुपस्थितत्वेन गोत्व एव शक्तिरभ्युपेयेत्यभिप्रायेणैव लक्षितं चैतत्। किं च व्यक्तीनामानन्त्यात् जातावेव शक्तिरुचितेत्यपि बोध्यम् ॥ ननु गामानयेत्यादौ व्यक्तिविषयकशाब्दबोधो न स्यात् व्यक्तौ शक्त्यभावादित्यत आह—**व्यक्तीति ॥** आक्षेपः अनुपपत्तिप्रतिसन्धानम् तथा च गोत्वे आनयनकर्मकत्वानुपप-

## नृसिंहप्रकाशिका.

हेतुत्वेन जातिरूपविशेषणज्ञानं विना तत्प्रकारेण व्यक्तिज्ञानासंभवादिति भावः। इदमुपलक्षणम्। अनेकव्यक्तिषु शक्तिसंबन्धकल्पनापेक्षया एकस्यां जातावेव शक्तिसंबन्धः कल्प्यते लाघवादित्यपि बोध्यम्। एतेन लोमलाङ्गूलत्वरूपपशुत्वज्ञानं विना तत्प्रकारेण पशुज्ञानासंभवेन लोमलाङ्गूलानां प्रथमोपस्थिततया पशुपदस्यापि लोमलाङ्गूलेषु शक्तिकल्पनापत्तेः। अतः प्रथमोपस्थितत्वं न शक्तिकल्पकमिति दूषणमपास्तम्। ननु गवादिपदानां व्यक्तिषु शक्त्यनङ्गीकारे गोपदाधीनशाब्दबोधे कथं गवादेः विषयत्वं गवादिपदनिरूपितवृत्तिशून्यत्वात्। अन्यथा गवादिपदाधीनशाब्दबोधे घटादेरपि विषयत्वापत्तेरित्याशङ्कां परिहरति—**व्यक्तिलाभस्त्विति ॥** व्यक्तेः शाब्दबोधविषयत्वन्त्वित्यर्थः। अवधारणार्थकतुशब्दः आक्षेपादित्युत्तरं योज्यः। **आक्षेपादिनेति ॥** व्यक्तिभानं विना जातिभानं अनुपपन्नं इत्यर्थापत्त्यधीनव्यक्त्युपस्थित्यादिनैवेत्यर्थः। आदिना लक्षणाज्ञानाधीनव्यक्त्युपस्थितिपरिग्रहः। तथा च अन्यथानुपपत्तिप्रमाणेन लक्षणाज्ञानेन वा जायमानव्यक्त्युपस्थित्यैव व्यक्तेः शाब्दबोधविषयत्वेसंभवेऽपि व्यक्तावपि शक्तिर्नाङ्गीकर्तव्येति भावः। **गामानयेत्यादाविति** । गवादिपदस्य व्यक्तिशक्तत्वावश्यकत्वदिति शेषः। आ-

**शक्तिकल्पनात् । शक्तिग्रहश्च वृद्धव्यवहारेण । व्युत्पित्सुर्बालो 'गामानय' इत्युत्तमवृद्धवाक्यश्रवणानन्तरं मध्यमवृद्धस्य प्रवृत्तिमुपलभ्य गवानयनं च**

---

## नीलकण्ठप्रकाशिका.

कल्पनीयेति वदन्ति । **शक्तिग्रहश्च वृद्धव्यवहारेणेति** ॥ शक्तिग्रहस्तु वृद्धव्यवहारादिना संभवतीत्यर्थः । आदिना व्याकरणादिपरिग्रहः । अत एव "शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥" इत्यभियुक्तोक्तिः सङ्गच्छते । व्याकरणात्प्रकृतिप्रत्ययादीनां शक्तिग्रहः । उपमानात् शक्तिग्रहस्तु अधस्ताद्दर्शितः । 'अप्येकदन्तहेरम्बलम्बोदरगजाननाः' इति कोशादेकदन्तादिशब्दा गणेशत्वविशिष्टे शक्ता इत्यर्थकात् गणेशत्वविशिष्टे शक्तिग्रहः । तत्रैकदन्तादिशब्दानामेव पदार्थतया तेषां विभिन्नत्वेन द्वन्द्वोपपत्तिः । 'कोकिलः पिकपदवाच्यः' इत्याप्तवाक्यात्पिकपदस्य कोकिले शक्तिग्रहः । व्यवहारतः शक्तिग्रहमुपपादयति—**व्युत्पित्सुरिति** ॥ शक्तिग्रहेच्छावानित्यर्थः । **उत्तमवृद्धेति** ॥ प्रयोजकवृद्धेत्यर्थः । **मध्यमवृद्ध-**

## रामरुद्रीयम्.

त्तिप्रतिसन्धानेन स्वाश्रयव्यक्तौ तदन्वयतात्पर्यं परिकल्प्य व्यक्तिविषयकशाब्दबोध इति भावः । ननु एवमपि व्यक्त्युपस्थापकपदाभावात् कथं शाब्दबोधः । न च पदाभावेऽपि गोत्वं किंचिदाश्रितं जातित्वादित्यनुमानेन व्यक्त्युपस्थितौ सत्यां शाब्दबोधो नानुपपन्न इति वाच्यम् । तथा सति पदज्ञानाभावेऽपि प्रत्यक्षादिना उपस्थितघटादीनां शाब्दबोधापत्तेरित्यत आह—**आदिनेति** ॥ आदिना लक्षणापरिग्रहः । तथा च गोपदादिलक्षणयैव उपस्थित्या तद्विषयकशाब्दबोध इति भावः । व्यवहारादेव हि पदानां शक्तिनिर्णयः । व्यवहारश्चानयनादिरूपः । **क्रियाविशेष एव** ॥ क्रियाजन्यसन्निहितदेशसंयोगरूप इत्यर्थः । तस्य जातावसंभवेन वृद्धव्यवहारात् जातिविशिष्टव्यक्तावेव शक्तिरवधार्यत इति समाधत्ते—**गामानयेत्यादाविति** ॥ व्यवहारेण शक्तिग्रहमेवोपपादयति—**शक्तिग्रहश्चेति** ॥

## नृसिंहप्रकाशिका.

दिना घटमानयेत्यादेः परिग्रहः। सप्तम्यर्थो घटकत्वं तस्याध्याहृतगवादिपदेऽन्वयः । **वृद्धव्यवहारादिति** ॥ प्रयोजकवृद्धप्रयुक्तगामानयेत्यादिवाक्यश्रवणादित्यर्थः । प्रयोज्यत्वं पञ्चम्यर्थः । तस्यानयनादौ अन्वयः । **सर्वत्रेति** ॥ परमते जातिवाचकपदमात्रस्येत्यर्थः । एतस्य शक्तिकल्पनादित्युत्तरेणान्वयः । **आनयनादेरिति** ॥ प्रयोज्यवृद्धकर्तृकानयनादेरित्यर्थः । **व्यक्तावेव संभवेनेति** । जातिविशिष्टव्यक्तावेव वृत्तित्वेनेत्यर्थः । एतस्याध्याहृतव्यक्तिशक्तित्वावश्यक इति पूर्वेणान्वयः । **शक्तिकल्पनादिति** ॥ शक्तिकल्पनाया युक्तत्वादित्यर्थः । अत्र गामानयेत्यादिप्रयोजकवृद्धप्रयुक्तवाक्यश्रवणाधीनप्रयोज्यवृद्धकर्तृकानयनादेः गवादावेव संभवेन गामानयेत्यादिवाक्यघटकगवादिपदानां जातावेव शक्तिस्वीकारे

दृष्ट्वा मध्यमवृद्धप्रवृत्तिजनकज्ञानस्यान्वयव्यतिरेकाभ्यां वाक्यजन्यत्वं निश्चित्य 'अश्वमानय गां बधान' इति वाक्यान्तरे आवापोद्वापाभ्यां गोपदस्य गोत्व-

---

## नीलकण्ठप्रकाशिका.

**स्येति** ॥ प्रयोज्यवृद्धस्येत्यर्थः। गवानयनं दृष्ट्वा प्रवृत्तिमुपलभ्य चेत्यन्वयः। उपलभ्येत्यस्यानुमायेत्यर्थः। 'इयं क्रिया प्रयत्नपूर्विका विलक्षणक्रियात्वात्स्वीयक्रियावत्' इत्यनुमानप्रयोगो बोध्यः। **प्रवृत्तिजनकज्ञानस्य** गवानयनगोचरप्रयत्नजनकगवानयनज्ञानस्य। वाक्यस्य विशिष्टेऽर्थे शक्तिर्न कल्पनीया, तादृशार्थस्य समभिव्याहारलभ्यत्वात् 'अनन्यलभ्यो हि शब्दार्थः' इति न्यायादित्यभिसन्धिमाह—**अश्वमानयेत्यादि** ॥ **आवापोद्वापाभ्या-**

## रामरुद्रीयम्.

गवानयनं कर्तव्यमित्याकारकप्रवृत्तिजनकवाक्यज्ञानस्य गामानयेति वाक्यजन्यत्वावधारणेऽपि गामिति भागस्य अयमर्थः आनयनेति भागस्यायमर्थः। विशिष्यज्ञातुमशक्य-

## नृसिंहप्रकाशिका.

वह्निना सिञ्चतीतिवाक्यवत् गामानयेत्यादिवाक्यानामपि अयोग्यत्वापत्त्या तादृशवाक्यघटकगवादिपदानां व्यक्तिशक्तत्वावश्यकत्वे लाघवाय परमते जातिवाचकगवादिपदमात्रस्य जातिविशिष्टकल्पनाया एव युक्तत्वादिति समुदितग्रन्थतात्पर्यार्थः। ननु पदज्ञानसमये शक्तिग्रहे सति अर्थस्मृतिश्शाब्दबोधश्च स्यात् शक्तिग्रह एव नोत्पत्तुमर्हति कारणाभावादित्यत आह—**शक्तिग्रहश्चेति** ॥ अनुक्तसमुच्चायकचशब्दः व्यवहारादित्युत्तरं योज्यः। तथा च "शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च। वाक्यस्य शेषाद्विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः॥" इति प्राचीनगाथाप्रतिपाद्यव्याकरणादिप्रत्येककारणैः शक्तिग्रहसंभवेऽपि अव्युत्पन्नस्य व्याकरणादिना शक्तिग्रहासम्भवात् व्यवहारात शक्तिग्रहोऽभिहित इति भावः। व्यवहाराच्छक्तिग्रहमुपपादयति—**व्युत्पित्सुरिति** ॥ गवादिपदानां अर्थविशेषे शक्तिग्रहेच्छावानित्यर्थः। **बाल इति** ॥ गवादिपदानामर्थविशेषे शक्ति अजानान इत्यर्थः। न तु स्तनन्धय इत्यर्थः। तस्य वदनेच्छायाः असंभवेन बालपदस्य व्युत्पित्सुपदसामानाधिकरण्यानुपपत्तेः। **इत्युत्तमवृद्धवाक्यश्रवणानन्तरमिति**॥ इत्याकारकं यत्प्रयोजकवृद्धोच्चरितं वाक्यं तादृशवाक्यप्रयोज्यशाब्दबोधानन्तरमित्यर्थः। **मध्यमवृद्धस्येति** ॥ प्रयोज्यवृद्धस्येत्यर्थः। **प्रवृत्तिमुपलभ्येति**॥ प्रयत्नसाध्यं गमनं दृष्ट्वेत्यर्थः। **गवानयनञ्चेति** ॥ तदनन्तरमित्यादिः। प्रयोज्यवृद्धप्रेरितगोकर्मकानयनञ्चेत्यर्थः। **मध्यमवृद्धप्रवृत्तिजनकज्ञानस्येति**॥ प्रयोज्यवृद्धसमवेतगवानयनानुकूलप्रवृत्तिजनकगवानयनविशेष्यकेष्टसाधनताज्ञानस्येत्यर्थः। **अन्वयव्यतिरेकाभ्यामिति** ॥ तादृशवाक्यश्रवणोत्तरं प्रवृत्तिदर्शनात् तादृशवाक्यश्रवणात्पूर्वं प्रवृत्त्यदर्शनाच्चेत्यर्थः। **वाक्यजन्यत्वमिति** ॥ गामानयेति वाक्यश्रवणप्रयोज्यत्वमित्यर्थः। **निश्चित्येति** ॥ प्रमीयेत्यर्थः। **इति वाक्यान्तर इति** ॥ इत्याकारकप्रयोजकवृद्धप्रयुक्तवाक्या-

**विशिष्टे शक्तिः, अश्वपदस्य अश्वत्वविशिष्टे शक्तिरिति व्युत्पद्यते। ननु सर्वत्र कार्ये-**

## नीलकण्ठप्रकाशिका.

**मिति ॥** आवापः संग्रहः । उद्वापः त्यागः । **व्युत्पद्यत इति ॥** व्युत्पत्त्याश्रयो भवतीत्यर्थः । वाक्यशेषाद्यथा—'यवमयश्चरुर्भवति' इत्यत्र यवशब्दः आर्यव्यवहाराद्दीर्घशूकविशिष्टस्य वाचकः, म्लेच्छव्यवहारात्प्रियङ्गोर्वाचको वेति सन्देहे 'वसन्ते सर्वसस्यानां जायते पत्रशातनम् । मोदमानाश्च तिष्ठन्ति यवाः कणिकशालिनः ॥' इति वाक्यशेषाद्दीर्घशूकविशिष्टे शक्तिनिर्णयः । प्रियङ्गौ तु शक्तिभ्रमात्प्रयोगः । विवरणाद्यथा 'पचति पाकं

## रामरुद्रीयम्.

मेवेति कथं व्यवहारतो गवादिपदशक्तिग्रह इत्यत आह—**आवाप इति ॥** आवापः देशान्तरस्थद्रव्यस्य सन्निकृष्टदेशविक्षेपः । उद्वापः स्थितस्य पदार्थस्य परित्यागः । यद्यपि केवलव्यवहारमात्रं न शक्तिग्राहकं, किन्तु व्याकरणादिकमपि । तथापि व्याकरणादितः शक्तिग्रहोऽपि व्यवहारसापेक्ष एव । कर्तरीत्यादिव्याकरणस्थशबादिपदादेः शक्तिग्रहस्य व्यवहारसापेक्षत्वेन व्यवहारं विना व्याकरणादितोऽपि शक्तिग्रहानुपपत्तिरिति व्यवहारस्यैव मुख्यत्वेन उल्लेखः । कार्यान्विते पदानां शक्तिरिति प्राभाकरमतमुदाहरति—**नन्वित्यादिना ॥** कार्यं कृत्या साधनीयम् । तत्परत्वं च व्यवहारे तत्साध्यकत्वम् ।

## नृसिंहप्रकाशिका.

न्तरे श्रुते सतीत्यर्थः । प्रयोज्यवृद्धस्य तादृशवाक्यान्तरश्रवणप्रयोज्यशाब्दबोधे सतीति यावत् । तदनन्तरं मध्यमवृद्धकर्तृकं गोबन्धनमश्वानयनञ्च दृष्ट्वेति शेषः । **आवापोद्वापाभ्यामिति ॥** गोरेवानयनबन्धनोभयवत्त्वात् अश्वस्यैवानयनाश्रयत्वाच्चेत्यर्थः । **इति व्युत्पद्यत इति ॥** इत्याकारकनिर्णयवान्भवतीत्यर्थः । अत्र शक्तिर्द्विविधा स्मारिकानुभाविकी चेति । गवादिपदानां गोत्वादिजातौ स्मारिका शक्तिः, कार्यान्वितगवादावानुभाविकी, गवादिपदानां लाघवात् । गोत्वजातौ शक्तिः व्यक्तिः आक्षेपलभ्येति । आप्तवाक्यात् जातौ स्मारिका शक्तिः गृह्यते । अत एव ईदृशशक्तिग्रहात् निरुक्ताक्षेपसहकृतात् गोत्वादिप्रकारकगवादिविशेष्यकस्मरणं जायते । गामानयेत्याकारकप्रयोजकवृद्धव्यवहारात् पूर्वोक्तक्रमेण आवापोद्वापाभ्यां गवादिपदानां कार्यान्वितगवादावानुभाविकी शक्तिर्गृह्यते । अत एव गामानयेत्यादिवाक्यश्रवणानन्तरं सर्वेषां कार्यान्वितगवादिविषयकशाब्दबोधो जायते । न च गवादिपदानां कार्यान्वितगवादावानुभाविकशक्तिस्वीकारे गौरस्तीति वाक्यादपि कार्यान्वितगवादिविषयकशाब्दबोधापत्तिरिति वाच्यम् । तादृशवाक्यस्य कार्यान्वितगवादिविषयकशाब्दत्वव्यापकं यत्कार्यताविषयकशाब्दत्वं तदवच्छिन्नजनककार्यत्वस्मृतिजनकतावच्छेदककार्यत्वनिष्ठशक्तिनिरूपितलिङादिपदघटितत्वाभावात् गौरस्तीति वाक्यात् न कार्यान्वितगवादिविषयकशाब्दबोधापत्तिरिति प्राभाकरमतं दूषयितुं तन्मतमुपन्यस्यति—**नन्वित्यादिना॥**

**परत्वाद्व्यवहारस्य कार्यपरवाक्य एव व्युत्पत्तिर्न सिद्धपर इति चेन्न। 'काश्यां त्रिभुवनतिलको भूपतिरास्ते' इत्यादौ सिद्धेऽपि व्यवहारात्, 'विकसितपद्मे**

---

## नीलकण्ठप्रकाशिका.

करोति' इत्यत्र यत्नार्थककरोतिना सर्वाख्यातव्याख्यानात् आख्यातस्य यत्नत्वविशिष्टे शक्तिग्रहः। सिद्धपदसान्निध्याच्छक्तिग्रहस्तु 'विकसितपद्मे मधुकर' इत्याद्यग्रिमग्रन्थेन स्फुटीभविष्यतीत्यलं पल्लवितेन। **व्यवहारस्य** ॥ कार्यपरत्वादिति योजना। कार्यपरत्वं च—कृतिसाध्यानयनादिरूपक्रियातात्पर्यकत्वम्। व्युत्पत्तिः शक्तिग्रहः। व्यवच्छेद्यं स्फुटयति—**न सिद्धेति** ॥ **सिद्धेऽपि व्यवहारादिति** ॥ तथा च सिद्धेऽपि शक्तिग्रहस्तत्वा-

## रामरुद्रीयम्

**कार्यपर एवेति** ॥ वाक्य इति शेषः। **व्युत्पत्तिः** शक्तिग्रहः। **न सिद्धपर इति** ॥ आकाशो विभुः नित्यश्चेत्यादावित्यर्थः। **सिद्धेऽपीति** ॥ तादृशवाक्यश्रवणानन्तरं श्रोत्रा हतराजानं प्रत्युपसर्पणादिव्यवहारदर्शनादित्यर्थः। प्रसिद्धपदं धर्मिपदम्। तत्समभिव्याहारप्रासद्धमधुकरपदस्य। **व्युत्पत्तिदर्शनात्** शक्तिग्रहात्। सिद्धेऽपीत्यस्य सिद्धपरवाक्येऽपी-

## नृसिंहप्रकाशिका.

सर्वत्र व्यवहारस्य कार्यपरत्वादिति योजना। **सर्वत्रेति** ॥ सर्वस्येत्यर्थः। **व्यवहारस्येति** ॥ गवादिपदमात्रस्येत्यर्थः। **कार्यपरत्वादिति** ॥ कार्यान्वितशक्तत्वादित्यर्थः ॥ **कार्यपरवाक्य एवेति** ॥ कार्यतावाचकलिङादिपदघटितवाक्य एवेत्यर्थः। **व्युत्पत्तिरिति** ॥ शाब्दबोधसमर्थत्वमित्यर्थः। **न सिद्धपर इति** ॥ न लिङाद्यघटितवाक्य इत्यर्थः। व्युत्पत्तिरिति पूर्वेणान्वयः। तथा च गवादिपदानां कार्यान्वितगवादौ आनुभाविकशक्तिमत्त्वेऽपि कार्यान्वितविषयकशाब्दत्वव्यापककार्यताविषयकशब्दत्वावच्छिन्नं प्रति कार्यतावाचकलिङादिपदज्ञानस्य हेतुतया गामानयेत्यादिवाक्यस्य लिङादिपदघटितत्वेन तज्ज्ञानरूपकारणबलात् शाब्दबोधसत्त्वेऽपि गौरस्तीत्यादीनां लिङादिपदघटितत्वाभावेन तज्ज्ञानरूपकारणाभावात् तादृशवाक्यस्य न शाब्दबोधसमर्थत्वमिति भावः। अत्र गामानयेत्यादिप्रयोजकवृद्धव्यवहारात् पूर्वोक्तक्रमेणावापोद्वापाभ्यां कार्यान्विते पदानां प्रथमतः शक्तिग्रहेऽपि पश्चात्कार्यस्यानयनादेः धातुलभ्यत्वात् कृतिसाध्यत्वरूपकार्यत्वस्य लिङादिपदलभ्यत्वात् अन्वयस्य वाक्यार्थतया भानसंभवाच्च, अनन्यलभ्यस्यैव शब्दार्थत्वनियमादिति निपुणतरविवेचनाय कार्यान्वितत्वांशं परित्यज्य गवादिपदानां गवादिमात्रे शक्तिर्निर्णीयते। युक्तं चैतत्। धातुपदलिङादिपदासमभिव्याहृतगवादिपदादपि कार्यान्वितविषयकशाब्दबोधो यदि प्रामाणिकः, तदा गवादिपदानां कार्यान्वितगवादौ अनायत्या शक्तिः प्रसज्येत। प्राभाकरैरपि लिङाद्यसमभिव्याहृतगवादिपदादेः कार्यान्वितगवादिविषयकशाब्दबोधस्यानङ्गीकृतत्वेन

**मधुकरस्तिष्ठति' इत्यादौ प्रसिद्धपदसमभिव्याहारात्सिद्धेऽपि मधुकरादिव्युत्पत्तिदर्शनाच्च । लक्षणापि शब्दवृत्तिः । शक्यसंबन्धो लक्षणा । गङ्गायां**

---

## नीलकण्ठप्रकाशिका.

वश्यकः । अन्यथा तत्रानुभवसिद्धस्य शाब्दबोधस्यापलापापत्तेरिति भावः ।

## रामरुद्रीयम्.

त्यर्थः । तेनासिद्ध एव शक्तिग्रह इति प्राभाकरेण अनुक्तत्वेऽपि नासङ्गतिः । ननु गङ्गायां घोष इत्यादौ गङ्गापदस्य तीरे शक्त्यभावात् कथं तद्विषयकशाब्दबोधः वृत्त्या पदजन्य पदार्थोपस्थितेः शाब्दबोधे हेतुत्वात् वृत्तेश्च शक्तिरूपत्वात् । अन्यथा घटादिपदात् समवायेन आकाशोपस्थितेः शाब्दबोधहेतुत्वापत्तिरित्यत आह—**लक्षणेति** ॥ **शक्यसंबन्ध इति** ॥ तथा च उक्तस्थले उक्तशक्यार्थप्रवाहसामीप्यरूपशक्यसंबन्धात्मकलक्षणयैव पदजन्यपदार्थोपस्थितेः सत्त्वात् नानुपपत्तिरि ति भावः । ननु गङ्गापदात् तीरप्रवाहयोरुभयोरपि शाब्दबोधस्यानुभवसिद्धत्वात् उभयत्रापि शक्तिरेवास्तु गङ्गापदप्रतिपाद्यत्वस्य अविशेषादित्यत आह—**गङ्गायामिति** ॥ न च तीर एव शक्तिः लक्षणयैव प्रवाहबोध

## नृसिंहप्रकाशिका.

कार्यान्विते पदानां शक्तिकल्पनमेवऽप्रामाणिकमेव । परन्तु यत्र कार्यान्वितविषयकशाब्दबोधः प्रामाणिकः गामानयेत्यादौ तत्र कार्यान्वितविषयकशाब्दत्वव्यापककार्यताविषयकशाब्दत्वावच्छिन्नसमर्थलिङादिपदसमाभिव्याहारोऽपि अस्त्येव । यत्र कार्यत्वाविषयकशाब्दबोधः प्रामाणिकः भूतले गौरस्तीत्यादौ तत्र आकाङ्क्षादिज्ञानसहकृततत्तत्पदार्थस्मृतिभिस्तत्तदर्थानां परस्परोपश्लेषावगाहिशाब्दबोधोत्पत्तौ बाधकाभावात् लिङाद्यघटितवाक्यस्यापि शाब्दबोधसमर्थत्वं दुर्वारमित्याशयेन समाधत्ते—**काश्यामिति** ॥ **सिद्धेऽपि व्यवहारादिति** ॥ कार्यानन्वितभूपतिविषयकस्याविषयस्यापि शाब्दबोधस्य जायमानत्वादित्यर्थः । ननु आनयेत्यादिवृद्धव्यवहाराभावात् भूपतिशब्दस्य शक्तेरेवागृहीततया कथं शाब्दबोधः इत्याशङ्क्य प्रसिद्धपदसान्निध्यात् गृहीतशक्तिकपदघटितलिङाद्यघटितवाक्यान्तरस्थले शाब्दबोधमुपपाद्य परिहरति—**विकसितपद्म इत्यादाविति** ॥ **प्रसिद्धपदसमभिव्याहारादिति** ॥ मधुकरशब्दार्थस्य विकसितपद्मवृत्तित्वज्ञानादित्यर्थः । **सिद्धेऽपीति** ॥ कार्यानन्वितभृङ्गत्वाद्यवच्छिन्नेऽपीत्यर्थः । **मधुकरादिव्युत्पत्तिदर्शनाच्चेति** ॥ मधुकरादिशब्दानां शक्तिग्रहस्य जायमानत्वाच्चेत्यर्थः । चकारो वार्थः । स तु पूर्वोक्तहेतावस्वरससूचकः । तथा च विकसितपद्म इत्यादौ वृद्धव्यवहाराभावेऽपि प्रसिद्धपदसान्निध्यात् मधुकरादिशब्दानां शक्तिग्रहसंभवेनाकाङ्क्षादिज्ञानसहकृततत्तदर्थोपस्थित्या तत्तदर्थविषयकशाब्दबोधोत्पत्तौ बाधकाभावात् पदानां कार्यान्विते शक्तिकल्पनस्य शाब्दबोधमात्रस्य कार्यान्वितविषयकत्वकल्पनस्य चाप्रामाणिकतया प्राभाकरमतं निर्युक्तिकमिति भावः । अत्रार्थस्मृत्यनुकूलपदपदार्थसंबन्धः द्विविधः—शक्तिः लक्षणा चेति । तत्र शक्तिस्वरूपं

**घोष इत्यत्र गङ्गापदवाच्यप्रवाहसंबन्धादेव तीरोपस्थितौ तीरेऽपि शक्तिर्न कल्प्यते । सैन्धवादौ लवणाश्वयोः परस्परसंबन्धाभावान्नानाशक्तिकल्पनम् ।**

---

## नीलकण्ठप्रकाशिका.

**तीरेऽपि शक्तिर्न कल्प्यत इति** ॥ गङ्गापदस्येति शेषः । नन्वेवं सैन्धवादिपदानां नानार्थकत्वानुपपत्तिः, एकत्र शक्तिरन्यत्र लक्षणयैव निर्वाहादत आह—**सैन्धवादाविति** ॥ आदिना हर्यादिपरिग्रहः । **संबन्धाभावादिति** ॥ संयोगादिरूपसंबन्धाभावादित्यर्थः । इदमुपलक्षणम्—प्रसिद्धयोरर्थयोः कुत्र लक्षणेत्यत्र विनिगमकाभावेनोभयत्र शक्तिकल्पन-

## रामरुद्रीयम्.

इति विनिगमनाविरह इति वाच्यम् । प्रवाहशक्तौ प्रयोगबाहुल्यस्यैव विनिगमकत्वादिति भावः । नन्वेवं नानार्थस्थलेऽप्येकत्रैव शक्तिरस्तु । इतरार्थानां लक्षणयैव बोधसंभवः इत्यत आह—**सैन्धवादाविति** ॥ यद्यपि लवणाश्वयोरपि एकदेशोद्भवत्वादिरूपः कश्चित्संबन्धः संभवत्येव । तथाप्युभयत्रैव सैन्धवपदस्य स्वारसिकपदप्रयोगात् एकप्रयोगबाहुल्यादेकत्र विनिगमकाभावाच्च उभयत्र शक्तिरित्येव तत्त्वम् । अत एव हरिशब्दवाच्ययोरश्वसूर्ययोः आधाराधेयभावरूपसंबन्धसत्त्वेऽपि उभयत्रैव शक्तिरभ्युपेयते । परन्तु नानार्थस्थलेऽपि गुरुधर्मावच्छिन्ने लक्षणैव न शक्तिः, लाघवस्यैव तत्र विनिगमकत्वात् इति

## नृसिंहप्रकाशिका.

मूले प्रतिपादितम् । लक्षणास्वरूपाप्रतिपादनेन मूलकारस्य न्यूनतापरिहाराय स्वयं लक्षणास्वरूपमाह—**लक्षणापीति** ॥ अपिना शक्तिः समुच्चीयते । **शब्दवृत्तिरिति** ॥ पदनिरूपितः अर्थनिष्ठः अर्थस्मारकसंबन्ध इत्यर्थः । लक्षणास्वरूपमाह—**शक्यसंबन्ध इति** ॥ तत्पदशक्यसंबन्धः तत्पदलक्षणेत्यर्थः । ननु गङ्गापदस्य प्रवाह इव तीरेऽपि शक्तिकल्पनयैव सामञ्जस्ये लक्षणायाः वृत्त्यन्तरत्वस्वीकारो व्यर्थ इत्याशङ्कां परिहरति—**गङ्गायामिति** ॥ **इत्यत्रेति** ॥ इत्याकारकवाक्यघटकेत्यर्थः । तस्य गङ्गापदेऽन्वयः । **गङ्गापदवाच्यप्रवाहसंबन्धादेवेति** ॥ लक्षणारूपगङ्गापदशक्यसंबन्धादेवेत्यर्थः । तज्ज्ञानादेवेति यावत् । **तीरोपस्थिताविति** ॥ गङ्गातीरवृत्तिः घोष इत्याकारकशाब्दबोधजनकतीरस्मृतिसंभव इत्यर्थः । **न कल्प्यत इति** ॥ तथा च तीरे संयोगादिरूपगङ्गापदशक्यप्रवाहसंबन्धस्य सिद्धत्वात् तज्ज्ञानादेव तीरोपस्थितिसंभवे तीरेऽपि शक्तिर्नाङ्गीक्रियते । नानाधर्मावच्छिन्ने भगवदिच्छारूपशक्तिकल्पने गौरवादिति भावः । ननु तर्हि सैन्धवादिपदानामपि गौरवात् लवणत्वाश्वत्वादिरूपनानाधर्मावच्छिन्ने शक्तिर्नाङ्गीकर्तव्येत्यत आह—**सैन्धवादाविति** ॥ सैन्धवपदादावित्यर्थः । आदिना हरिपदादिपरिग्रहः । परस्परसंबन्धाभावात् लवणाश्वयोर्मध्ये एकस्मिन्नियतस्य परंपरासंबन्धस्याभावादित्यर्थः । **नानाशक्तिकल्पनमिति** ॥ अन्यथानुपपत्त्या लवणत्वाश्वत्वादिरूपशक्यतावच्छेदकभेदनानेकशक्तिकल्पनेमावश्यकमित्यर्थः । प्रसङ्गसङ्गत्या शिष्यबुद्धिवैशद्याय लक्ष-

**लक्षणा त्रिविधा—जहल्लक्षणा, अजहल्लक्षणा, जहदजहल्लक्षणा चेति । यत्र वाच्यार्थस्यान्वयाभावः तत्र जहल्लक्षणा । यथा मञ्चाः क्रोशन्तीति । यत्र**

---

## नीलकण्ठप्रकाशिका.

स्यावश्यकेति । **मञ्चा इति** ॥ मञ्चपदं मञ्चस्थपुरुषे लाक्षणिकम् । वाच्यार्थस्य क्रोशनकर्तृत्वान्वयाभावादित्यर्थः । **वाच्यार्थस्यापीति** ॥ अपिना लक्ष्यसमुच्चयः ।

## रामरुद्रीयम्.

ध्येयम् । **मञ्चा इति** ॥ आक्रोशनकर्तृत्वं मञ्चस्थपुरुष एवान्वेति । न तु मञ्चे, बाधादिति भावः । छत्रिणं इत्यत्र छत्रिपदं छत्र्यच्छत्रिसमुदाये लाक्षणिकम् । समुदायान्तर्गतच्छत्र्यच्छत्रिषु गमनकर्तृत्वान्वयात् । जहल्लक्षणा सोऽयं देवदत्तः तत्वमसीत्यादौ तद्देशकालवृत्तित्वविशिष्टस्य सर्वज्ञत्वादिविशिष्टचैतन्यस्य च तत्पदार्थत्वात् , एतद्देशकालवृत्तित्वविशिष्टस्य किंचिज्ज्ञत्वादिविशिष्टचैतन्यस्य च त्वंपदार्थत्वात् , तद्देशकालवृत्तित्वैतद्देशकालवृत्तित्वसर्वज्ञत्वकिंचिज्ज्ञत्वादिविशेषणानां परस्परभेदेन विशिष्टयोरभेदासंभवेन विशेषणांशं परित्यज्य विशेष्यमात्रस्यैव बोधाभ्युपगमादिति । न चैवं नीलत्वघटत्वयोः भेदात् नीलो घट इत्यत्रापि अभेदशाब्दबोधो न स्यात् । वस्तुतस्तु घटो घट इत्यादौ निराकारतया शाब्दबोधानभ्युपगमेन विशेषणभेद एवाभेदशाब्दबोध इति कथमेतदिति वाच्यम् । यतो ह्याकाशस्यैकत्वेऽपि देवदत्तस्य श्रोत्रं यज्ञदत्तस्य श्रोत्रं इत्यत्राभेदबोधानुदयेन विरुद्धदेशकालावच्छिन्नयोः नाभेदप्रत्ययः सर्वज्ञत्वकिंचिज्ज्ञत्वाभ्यां च विशिष्टयोर्नाभेदप्रत्ययः अनुभवसिद्धः । नीलत्वघटत्वयोश्च न तथा । तत्वमसीत्यत्र अभेदप्रत्यय इति न रसतेति । न चैवमपि विशेष्यभूतव्यक्तिमात्रबोधोपगमे घटो घट इत्यत्रैवाभेदशाब्दबोधानुपपत्तिरिति वाच्यम् । उक्तस्थलद्वयस्य वेदान्तिमताभिप्रायेणैव ग्रन्थकृद्भिरुक्तत्वात् । तन्नये सन्निकृष्टस्थले शब्दतः प्रत्यक्षात्मकशाब्दबोधस्याप्यभ्युपगमेन उक्तस्थलद्वये निर्विकल्पकप्रत्यक्षात्मक-

## नृसिंहप्रकाशिका.

णां विभजते—**लक्षणा त्रिविधेति** ॥ जहल्लक्षणां निर्वक्ति—**यत्रेति** ॥ यस्मिन्पद इत्यर्थः । **वाच्यार्थस्यान्वयाभाव इति** ॥ लक्षणाघटकवाच्यार्थविषयकशाब्दबोधजनकत्वाभाव इत्यर्थः । **तत्र जहतीति** ॥ तत्पदनिष्ठा लक्षणा जहल्लक्षणेत्यर्थः । स्वघटकशक्याविषयकशाब्दबोधप्रयोजकलक्षणात्वं जहल्लक्षणात्वम् । तन्निरूपकपदं जहल्लाक्षणिकमिति भाव इति प्राञ्चः । एतन्मते मञ्चाः क्रोशन्तीत्यादौ मञ्चादिपदस्य केवलपुरुषत्वावच्छिन्ने लक्षणास्वीकारे पुरुषाः क्रोशन्तीति बोधस्यैव जायमानतया सा जहल्लक्षणैव । मञ्चस्थपुरुषत्वावच्छिन्ने लक्षणास्वीकारे मञ्चस्थपुरुषाः क्रोशन्तीति बोधस्यैव जायमानतया तादृशबोधस्य लक्षणाघटकशक्यविषयकतया सा अजहल्लक्षणैवेति बोध्यम् । नव्यास्तु—**यत्रेति** ॥ यादृशपद इत्यर्थः । **वाच्यार्थस्यान्वयाभाव इति** ॥ समाभव्या-

**वाच्यार्थस्याप्यन्वयः, तत्र अजहदिति । यथा छत्रिणो गच्छन्तीति । यत्र वाच्यैकदेशत्यागेन एकदेशान्वयः, तत्र जहदजहदिति । यथा तत्त्वमसीति ।**

---

## नीलकण्ठप्रकाशिका.

**छत्रिण इति** ॥ एकसार्थवाहित्वेन छत्र्यच्छत्रिषु गमनकर्तृत्वान्वयः । तात्पर्यानुपपत्तिरेव लक्षणाबीजम् । न च छत्रीत्यस्य मतुबर्थकेनिप्रत्ययान्तस्य पदसमूहरूपत्वेन तच्छक्त्याप्रसिद्ध्या तत्संबन्धरूपलक्षणाया अभावेन कथमिदमुदाहरणमिति वाच्यम् । 'प्रतिपाद्यसंबन्ध एव लक्षणा' इत्येतदभिप्रायेण तदुदाहरणदर्शनात् । अन्यथा 'काकेभ्यो दधि रक्ष्यताम्' इत्याद्युदाहर्तव्यम् । अत्र काकपदस्य काकतदितरसाधारणदध्युपघातकत्वावच्छिन्नपरत्वात् । केचित्तु छत्रपदस्यैकसार्थे लक्षणा । तद्धितार्थः सम्बन्धी । तथा चैकसार्थसंबन्धिनो गच्छन्तीत्यन्वयबोध इत्याहुः । **तत्त्वमसीति** ॥ तत्पदवाच्ये सर्वज्ञत्वादिविशिष्टे

## रामरुद्रीयम्.

शाब्दबोधस्यैव तैरभ्युपगमात् । न्यायमते 'स कीचकैर्मारुतपूर्णरन्ध्रैः' इत्यत्र कीचकपदमेवो-

## नृसिंहप्रकाशिका.

हृतपदार्थे स्वशक्यार्थस्य संवन्धाभाव इत्यर्थः । स्वशक्यानन्वितसमभिव्याहृतपदार्थविषयकशाब्दबोधजनकत्वमिति यावत् । **तत्र जहतीति** ॥ तादृशपदनिष्ठा लक्षणा जहल्लक्षणेत्यर्थः । तथा च स्वघटकशक्यानन्वितसमभिव्याहृतपदार्थविषयकशाब्दबोधप्रयोजकलक्षणात्वं जहल्लक्षणात्वं, तन्निरूपकं पदं जहल्लाक्षणिकमिति भावः । एतन्मते मञ्चाः क्रोशन्तीत्यादिवाक्यघटकमञ्चादिपदस्य केवलपुरुषत्वावच्छिन्नलक्षणैव मञ्चस्थपुरुषत्वावच्छिन्नलक्षणापि जहल्लक्षणैवोभयोरपि लक्षणयोः स्वघटकशक्यानन्वितक्रोशनरूपसमभिव्याहृतपदार्थविषयकशाब्दबोधप्रयोजकत्वादिति बोध्यम् । अजहत्स्वार्था लक्षणा निर्वक्ति—**यत्रेति** ॥ यत्पद इत्यर्थः । **वाच्यार्थस्य अन्वय इति** ॥ लक्षणाघटकशक्यार्थविषयकबोधजनकत्वमिति लक्षणाघटकशक्यान्वितसमभिव्याहृतपदार्थविषयकबोधजनकत्वमिति वा मतभेदेनार्थः । **तत्र अजहदिति** ॥ तत्पदनिष्ठा लक्षणा अजहल्लक्षणेत्यर्थः । तथा च स्वघटकशक्यार्थविषयकशाब्दबोधप्रयोजकलक्षणात्वं स्वघटकशक्यान्वितसमभिव्याहृतपदार्थविषयकशाब्दबोधप्रयोजकलक्षणात्वं वा अजहल्लक्षणात्वम् । तन्निरूपकपदं अजहल्लाक्षणिकमिति भावः । अजहल्लक्षणास्थलमुदाहरति—**यथेति** ॥ **छत्रिण इति** ॥ योद्धुमित्यादिः । अन्तःपुरं छत्रिणो गच्छन्तीत्यादौ छत्रिपदस्य एकसार्थवाहित्वेन लक्षणाया अप्रसक्तेः एकसार्थवाहित्वं च छत्रिरथगजतुरगोष्ट्रादिघटितसमुदायघटकत्वं उद्देश्यतावच्छेदकं तादृशघटकत्वावच्छेदेनैव गमनकर्तृत्वविधेयान्वयस्वीकारात् तादृशसमुदायघटकत्रिचतुरादीनां गमनकाले योद्धुं छत्रिणो गच्छन्तीति न प्रयोगः । शक्यार्थच्छत्रिणोऽपि शाब्दबोधविषयत्वात् गमनकर्तृत्वान्वितत्वाच्च छत्रिपदलक्षणायाः सर्वमतेऽप्यजहत्स्वार्थलक्षणात्वं संभवतीति बोध्यम् । जहदजहल्लक्षणां निर्वक्ति—**यत्रेति** ॥ यत्पद इत्यर्थः । **वाच्यैक-**

**गौण्यपि लक्षणैव लक्ष्यमाणगुणसंबन्धस्वरूपा यथा अग्निर्माणवक इति ।**

## नीलकण्ठप्रकाशिका.

त्वंपदवाच्यस्यान्तःकरणादिविशिष्टस्याभेदान्वयानुपपत्त्या उभयत्र विशिष्टांशपरित्यागः । तथा च तत्पदलक्ष्यस्य शुद्धस्य त्वंपदलक्ष्येण सहाभेदान्वयोपपत्तिरित्यभिप्रायः । इदमुदाहरणं तु जीवब्रह्मणोरैक्यं ब्रुवतां ब्रह्मवादिनां मताभिप्रायेण । नैयायिकमते तस्यासंमतत्वात् । नैयायिकमतरीत्या तु—'सोऽयं देवदत्तः' इत्यादौ तत्तांशस्येदानीमसंभवाद्धानम्, इदंत्वांशस्य संभवादहानमिति जहदजहल्लक्षणामाचक्षते । परे तु—'घटो नित्यः' इत्यादौ घटत्वस्येव 'सोऽयं देवदत्तः' इत्यादौ तत्तांशस्योपलक्षणतया भाने न किंचिद्बाधकमिति किं जहदजहल्लक्षणयेति वदन्ति । गौण्या वृत्त्यन्तरत्वं निराचष्टे—**गौण्यपीति** ॥ ननु 'गङ्गायां घोषः' इत्यत्र तीरे शक्यस्य प्रवाहस्येव 'अग्निर्माणवकः' इत्यादौ माणवकस्य शक्यस्याग्नेः साक्षात्संबन्धो न संभवति इति कथं लक्षणया निर्वाह इत्यत आह—**लक्ष्यमाणेति** ॥ लक्ष्यमाणो यो गुणः शुचित्वादिस्तत्सम्बन्धरूपा इत्यर्थः । अयमभि-

## रामरुद्रीयम्.

दाहरणत्वेन बोध्यम् । तत्र तस्य विशेषणांशं परित्यज्य विशेष्यरूपवेणुमात्रस्य बोधकत्वादित्यवधेयम् । गौण्या लक्षणान्तर्गतत्वमाह—**गौणीति** ॥ गौणी वृत्तिः लक्षणाविशेष एवेत्यर्थः। **लक्ष्यमाणेति** ॥ लक्ष्यभूतपदार्थवृत्तिशक्यगुणसंबन्धरूपा इत्यर्थः । गुणश्च धर्ममात्रम् ।

## नृसिंहप्रकाशिका.

**देशत्यागेनेति** ॥ शक्यैकदेशमविषयीकृत्येति, शक्यैकदेशानन्वितत्वे सतीति वार्थः । **एकदेशान्वय इति** ॥ एकदेशविषयकशाब्दबोधजनकत्वमिति एकदेशान्वितसमभिव्याहृतपदार्थविषयकशाब्दबोधजनकत्वमिति वार्थः । **तत्रेति** ॥ तादृशपद इत्यर्थः । **जहदजहादितीति** ॥ तथा च शक्यविशेषणाविषयकशक्यविशेष्यविषयकशाब्दबोधप्रयोजकलक्षणात्वं शक्यविशेषणानन्वितशक्यविशेष्यान्वितसमभिव्याहृतपदार्थविषयकशाब्दबोधप्रयोजकलक्षणात्वं वा जहदजहल्लक्षणात्वम् । तन्निरूपकं पदं जहदजहल्लाक्षणिकमिति भावः । जहदजहल्लक्षणास्थलमुदाहरति—**यथेति । तत्त्वमसीति** ॥ अत्र तच्छब्दस्य सर्वज्ञत्वविशिष्टात्मशक्ततया युष्मच्छब्दस्य किंचिज्ज्ञत्वविशिष्टात्यशक्ततया तयोः नीलघटपीतघटयोरिव ऐक्यासंभवेन तच्छब्दशक्ययुष्मच्छब्दशक्ययोः ऐक्यप्रतिपादकासीतिशब्दघटितनिरुक्तश्रुतेरप्रामाण्यापत्त्या तत्पदशक्यैकदेशसर्वज्ञत्वं युष्मत्पदशक्यैकदेशकिंचिज्ज्ञत्वं च परित्यज्य तत्पदयुष्मत्पदयोः केवलात्मत्वावच्छिन्ने लक्षणा स्वीकार्या । इयमेव लक्षणा शक्यतानवच्छेदकान्यरूपावच्छिन्ना शक्यमात्रनिष्ठतादात्म्यरूपशक्यसंबन्धरूपा चेति निरुक्तलक्षणाद्वयभिन्नत्वाज्जहदजहल्लक्षणेति गीयते । अत एव शक्यतावच्छेदकान्यरूपावच्छिन्नशक्यमात्रलक्षणात्वं जहदजहल्लक्षणात्वम् । ईदृशलक्षणायाः शक्यतावच्छेदकान्यरूपावच्छिन्नशक्यवृत्तिलक्षणात्वरूपा-

**व्यञ्जनापि शक्तिलक्षणान्तर्भूता, शब्दशक्तिमूला अर्थशक्तिमूला च । अनुमा-**

## नीलकण्ठप्रकाशिका.

प्रायः । शक्यसम्बन्धो हि लक्षणा । स च क्वचित्साक्षात्संबन्धः । क्वचित्परम्परासंबन्धः । एवं च शक्यस्याग्नेः स्वनिष्ठशुचित्ववत्त्वसंबन्ध एव लक्षणेति । आलंकारिकाः पुनरेवमाहुः 'तीरे घोषः' इति शब्दप्रयोगे स्वायत्ते 'गङ्गायां घोषः' इत्यनन्विताभिधानं शैत्यपावनत्वादिप्रतीत्यर्थम् । न च सा प्रतीतिर्लक्षणया उपपद्यते केवलतीरलक्षणयैवान्वयानुपपत्तिपरिहारे शैत्यपावनत्वादिविशिष्टलक्षणायां मानाभावात् । तस्माद्व्यञ्जनावृत्तिरङ्गीकर्तव्येति । तन्मतं निरस्यति—**व्यञ्जनापीति** ॥ **शक्तिलक्षणान्तर्भूतेति** ॥ अयं भावः ।

## रामरुद्रीयम्.

तथा च अग्निनिष्ठशुचित्वादिसंबन्ध एव गौणीति भावः । यद्यपि अग्निनिष्ठशुचित्वादिकं माणवकनिष्ठात्तस्मात् भिन्नमेव । तथापि शक्यनिष्ठगुणसजातीयगुणसंबन्धस्यैव तथात्वं बोध्यम् । व्यञ्जनावृत्तेः लक्षणान्तर्गतत्वमाह—**व्यञ्जनापीति** ॥ **शब्दशक्तिमूला**

## नृसिंहप्रकाशिका.

जहल्लक्षणात्वाश्रयान्नातिरिक्तम् । इदमेव सकलग्रन्थकाराभिमतमिति अस्मद्गुरुचरणा इति न किंचिदनुपपन्नमिति हृदयम् । नन्वतिरिक्ताया गौणीरूपपदवृत्तेस्सत्त्वात् पदवृत्तेः द्वैविध्यकथनमयुक्तमित्याशङ्कां लक्षणायामन्तर्भाव्य परिहरति—**गौण्यपीति** ॥ अपिना लक्षितलक्षणा गृह्यते। तथा च द्विरेफमानयेत्यादौ द्विरेफादिपदनिरूपितभ्रमरनिष्ठलक्षितलक्षणायाः स्ववाच्यरेफद्वयघटितपदवाच्यत्वरूपशक्यप्रतियोगिकपरंपरासंबन्धरूपत्वात् यथा लक्षणायामन्तर्भावः तथा गौणी वृत्तिरपि सादृश्यरूपशक्यसंबन्धरूपत्वात् लक्षणान्तर्भाव इति भावः । गौणीस्वरूपमाह—**लक्ष्यमाणेति** । शक्यवृत्तिरित्यर्थः । गौणीस्थलमुदाहरति—**अग्निर्माणवक इति** ॥ वह्न्यभिन्नत्वस्य माणवके बाधितत्वात् तादृशवाक्यस्याप्रामाण्यापत्त्या अग्निपदस्य अग्निभिन्नत्वशुचित्वोभयवत्त्वरूपसादृश्यविशिष्टे माणवके लक्षणां स्वीकृत्य तया अग्निपदेन अग्निसदृशोपस्थितिः संपादनीया । एवं च तादृशलक्षणायाः अग्निपदार्थाग्निसदृशाभिन्नत्वस्य माणवके सत्त्वात् तादृशवाक्यस्य प्रामाण्यमुपपद्यत इति हृदयम् । ननु व्यञ्जनापि पदवृत्तिः **सा द्विविधा शब्दशक्तिमूला अर्थशक्तिमूला चेति**॥ आद्या गङ्गायां घोष इत्यादौ गङ्गापदनिरूपितघोषनिष्ठा व्यञ्जना गङ्गापदोच्चारणसामर्थ्यात् घोषे शैत्यपावनत्वादेर्व्यज्यमानत्वात् । अत एव स्वायत्ते शब्दप्रयोगे नावाचकं पदं प्रयोक्तव्यमिति नियमेन तीरे घोष इति वक्तव्ये गङ्गायां घोष इति प्रयोगे बीजाभाव इति शङ्का निरस्ता। तीरनिरूपितशैत्यपावनत्वादिबोधजनकव्यञ्जनावृत्तेर्घोषे असत्त्वात्। द्वितीया 'गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः । ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥' इत्यादिरूपेण भर्तुर्देशान्तरगमनमसहमानाया पातिव्रत्यभङ्गभिया त्वं देशान्तरन्न प्रविशेति वक्तुमसमर्थाया नायिकाया वचनेन भर्तुः गमनप्राप्यदेशे नायिकायाः जन्मप्रतिपादनात् तज्जन्म न

## नीलकण्ठप्रकाशिका.

नानार्थकस्थले 'दूरस्थो भूधरः' इत्यादौ भूधरशब्देन पर्वतानामिव राज्ञामपि शक्त्यैव प्रतीतिः संभवति। 'गङ्गायां घोषः' इत्यादौ तु शैत्यपावनत्वादिविशिष्टतीरप्रतीतिरपि लक्षणासाम्राज्यादेव। तत्र लक्षणाकल्पिकायाः तात्पर्यानुपपत्तेरेव सद्भावात् किं व्यञ्जनयेति। ननु शब्दशक्तिमूलाया व्यञ्जनाया अन्यथासिद्धत्वेऽपि अर्थशक्तिमूलायास्तस्या नान्यथासिद्धिः। तथा हि 'गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः। ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्।' इत्यादौ 'हे प्रिय तव गमनोत्तरं मम प्राणनाशो भविष्यति। अतो न गन्तव्यम्' इत्याद्यर्थो व्यज्यते। न ह्यत्र शक्तिलक्षणाभ्यां निर्वाहः। इत्थं च व्यञ्जनाया आवश्यकतेत्यत आह—**अर्थश-**

## रामरुद्रीयम्.

शब्दसामर्थ्यमूला। "निश्शेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः। मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्॥" इत्यत्राधमपदसामर्थ्येन वापीमित्यस्य तमित्यर्थे स्नातुमित्यस्य रन्तुमित्यर्थे लक्षणा। दूतीगन्तृत्वेनैव नायकस्याधमत्वसंभवात्। दूत्यास्तामित्यर्थे निकटागमने तस्याक्षेपानर्हत्वात्। शक्यसंबन्धश्चात्र स्वनिष्ठदुःखनाशकत्वादिमत्त्वरूपो बोध्यः। न चात्र तस्याधमस्यान्तिकं न गतासीत्यस्य का गतिः, मदर्थमित्यध्याहृत्य मदर्थं तदन्तिकं न गतासि इत्यर्थबोधोपगमात्। "गच्छ गच्छसि चेत् कान्त पन्थानस्सन्तु ते शिवाः। ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्॥" इत्यत्र प्रवासाधिकरणदेशे जन्मकथनेन जन्मनश्च मरणोत्तरकालीनत्वेन प्रवासोत्तरकालीनमरणरूपार्थसामर्थ्यमूला। न गन्तव्यमित्यर्थः। जन्म स्यात् न गन्तव्यमित्यर्थतात्पर्यवती। गमनानन्तरकालीनस्वकीयमरणसूचकत्वात् इत्यनुमानेन गतार्थता। न च गच्छेत्यस्यैव विरोधिलक्षणया मा गच्छेत्यर्थकत्वम् अत्रापि कुतो नेष्यत इति वाच्यम्। तथा सति ममापीत्याद्युत्तरार्धस्य असङ्गतत्वापत्तेः। गमनानिषेधेन प्रवासकरणदेशस्यैव असंभवात्।

## नृसिंहप्रकाशिका.

मरणं विना नोपपद्यत इति जन्मरूपपदार्थनिरूपितमरणनिष्ठव्यञ्जनावृत्त्या मयि देशान्तरं गते सति मम भार्याया मरणं भविष्यतीति नायकस्य ज्ञानमुत्पद्यते। सैव व्यञ्जनार्थशक्तिमूला। तथा चैतादृशव्यञ्जनारूपवृत्त्यन्तरसत्त्वात् कथं पदवृत्तेः द्वैविध्यमित्यालङ्कारिकशङ्कां व्यञ्जनामपि लक्षणायामन्तर्भाव्य परिहरति—**व्यञ्जनापीति**॥ अपिना गौणीपरिग्रहः। तथा च यथा गौणी लक्षणान्तर्भूता तथा च व्यञ्जनापीति भावः। **शब्दशक्तिमूला चेति**॥ इत्याकारकद्वैविध्याश्रयरूपा व्यञ्जनापीति पूर्वेणान्वयः। **लक्षणान्तर्भूतेति**॥ तथा च गङ्गापदस्य शैत्यपावनत्वादिविशिष्टतीरत्वावच्छिन्ने लक्षणास्वीकारेणैव शैत्यपावनत्वादिबोधसंभवात् निरुक्तवचनघटकजन्मपदस्य मरणोत्तरकालीनत्वविशिष्टजन्मत्वावच्छिन्ने लक्षणास्वी-

नादिना अन्यथासिद्धा । तात्पर्यानुपपत्तिर्लक्षणाबीजम् । तत्प्रतीतीच्छयोच्चरि-

## नीलकण्ठप्रकाशिका.

**किंमूला चेति** ॥ चस्त्वर्थः । **अनुमानादिनेति** ॥ अनुमानप्रयोगस्तु 'इयं मदीयगमनोत्तरकालप्राणवियोगवती विलक्षणशब्दप्रयोक्तृत्वात्' इत्यादिरूपः । आदिना संभावनादिपरिग्रहः । उत्कटैकतरकोटिकसंशयस्संभावना । औत्कट्यं च विषयताविशेषः । यदि पुनरानुभविकलोकानां स्वरसवाही 'शब्दादमुमर्थं प्रत्येमि' इत्यनुभवः तदा वैयञ्जनिकी प्रतीतिर्गीर्वाणगुरुणाप्यशक्यवारणेति व्यञ्जनासिद्धिः निष्प्रत्यूहैवेति मन्तव्यम् । अन्वयानुपपत्तेर्लक्षणाबीजत्वे यष्टीः प्रवेशय इत्यादौ लक्षणानुपपत्तिः । तात्पर्यानुपपत्तेः तथात्वे तस्यास्तत्रापि सत्त्वेन यष्टिपदस्य यष्टिधरे लक्षणा संभवतीत्याशयेनाह—**तात्पर्यानुपप-**

## रामरुद्रीयम्.

यद्यपि त्वं गच्छ, यदि गच्छसि, तदा भवदीयगमनदेश एव ममापि जन्म स्यादित्यर्थकतया लक्षणोपगमः संभवत्येव । तथाप्यनुमानेनैव गमनबोधनिषेधसंभवे लक्षणाकल्पनं गौरवमित्याभिप्रायेणैवेदमुक्तम् । वस्तुतस्तु "पुरा यत्र स्रोतः पुलिनमधुना" इत्यादिपद्ये नद्यादिवर्णनेन अप्रकृतग्रामवृत्तान्तस्य वाक्यार्थेनैव सदृशार्थान्तरस्य प्रतीतिः सदृशार्थे च लक्षणा न संभवतीत्याशयेन तथोक्तिः, तत्रानुमानप्रकारस्तु अयमर्थः एतादृशधर्मवान् स्वसदृशवस्त्वन्तरकैतादृशधर्मवत्त्वात् इत्येवंरूपोऽवसेयः । ननु सर्वत्र लक्षणया शाब्दबोधवारणाय लक्षणाया मुख्यार्थान्वयानुपपत्तिप्रतिसन्धानं बीजत्वेनोपेयम्; तथा च गङ्गायां घोष इत्यत्र लक्षणया बोधसंभवेऽपि काकेभ्यो दधि रक्ष्यतां छत्रिणो यान्तीत्यादौ न तत्संभवः लक्षणाबीजाभावात् इत्यत आह—**तात्पर्येति** ॥ ननु विवक्षितार्थप्रतीती-

## नृसिंहप्रकाशिका.

कारेणैव मरणबोधसंभवाच्च व्यञ्जनाया वृत्त्यन्तरत्वे प्रमाणाभाव इति भावः । ननु तीरे निरुक्तलक्षणया शैत्यपावनत्वादिबोधसंभवेऽपि घोषे तदसंभवात् तत्र तद्बोधार्थं व्यञ्जनारूपवृत्त्यन्तरमवश्यमङ्गीकार्यमित्यत आह—**अनुमानादिनेति** ॥ तथा च घोषः शैत्यपावनत्ववान् तादृशदेशवृत्तित्वाद्यो ग्रामः यद्देशवृत्तिः स तद्देशवृत्तिशैत्योष्णत्वान्यतरवान्पावनत्वापावनत्वान्यतरवांश्च केरळदेशवृत्तिग्रामवत् उष्णदेशवृत्तिग्रामवच्च इति। सामान्यमुख्यव्याप्तया उष्णदेशवृत्तिग्रामस्य यथा उष्णत्वं प्रत्यक्षसिद्धम्, यथा वा तीर्थयात्रां प्रकुर्वीत केरळं कोङ्कणं विना इति वचनेन केरळदेशस्यापवित्रत्वप्रतिपादनात्तद्देशवृत्तिग्रामस्यापवित्रत्वं सिद्धम्, तथा गङ्गातीरस्य शैत्यवत्त्वात् 'गङ्गातीरमनुत्तमं हि सकलं तत्रापि काश्युत्तरी' इति वचनेन गङ्गातीरमात्रस्य पावनत्वप्रतिपादनाच्च तादृशतीरवृत्तिग्रामस्य शैत्यं पावनत्वं चानुमीयत इति भावः । अनुमानादिनेत्यत्रादिपदात् प्रत्यक्षशब्दयोः परिग्रहः । एवञ्च गङ्गातीरवृत्तिग्रामे शैत्यं प्रत्यक्षेण सिद्धम् । 'सा काशी त्रिपुरारिराजनगरी पायादपायाज्जगत्।' इत्यादिवचनप्रमाणेन पावनत्वं सिद्धम् । तथा च निरुक्तानुमानादिनान्यथा-

तत्र तात्पर्यम्। तात्पर्यज्ञानञ्च वाक्यार्थज्ञाने हेतुः नानार्थानुरोधात्। प्रकरणादिकं

---

## नीलकण्ठप्रकाशिका.

त्तिरिति ॥ तत्प्रतीतीति ॥ तीरादिरूपार्थप्रतीतिरित्यर्थः । नानार्थ इति ॥ 'सैन्धवमानय' इत्यादिनानार्थकस्थले सैन्धवपदस्य अश्वे लवणे च शक्तेः तुल्यतया शाब्दबोधे तात्पर्यग्रहस्य कारणत्वमन्तरा नियतकाले तत्तद्बोधोपपत्तिर्नास्तीति तत्र तत्कारणत्वस्यावश्यकत्वे तदनुरोधेन सर्वत्र तदावश्यकतेति भावः । न च मौनिश्लोकादौ शाब्दबोधानुपपत्तिः । तत्र निरुक्ततात्पर्यस्य असत्त्वादिति वाच्यम्, तात्पर्यस्य तत्प्रतीतीच्छारूपत्वपर्यवसानेन तत्र तादृशतात्पर्यस्य सत्त्वेनादोषात् । न च तथापि तत्प्रतीतीच्छारहितशुकाद्युच्चरितवाक्यादपि शाब्दबोधस्यानुभविकतया तत्रानुपपत्तेः परिहारासंभव इति शङ्क्यम् ।

## रामरुद्रीयम्.

च्छया उच्चरितत्वरूपतात्पर्यं यत्र यत्र लक्षणां विना न निर्वहति तत्र लक्षणेत्युक्तं भवति । न चैतत् सङ्गच्छते । शाब्दबोधे तात्पर्यज्ञानस्य हेतुतया लक्ष्यार्थतात्पर्यविषयकमुख्यार्थतात्पर्यविषयकशाब्दबोध एव स्वीकर्तुमुचितः । लक्षणाकल्पने प्रयासगौरवात् । यत्र तु मुख्यार्थस्य बाधादिना बोध एव न संभवति तत्रैवागत्या लक्षणया बोधः स्वीकर्तुमुचितः इत्याशङ्कां निराकुरुते—तात्पर्यज्ञानं चेति ॥ तथा च मुख्यार्थे तात्पर्यासत्त्वे तात्पर्यरूपकारणाभावात् मुख्यार्थविषयकशाब्दबोधानुपपत्त्या तात्पर्यविषयीभूतलक्ष्यार्थविषयकशाब्दबोधे तात्पर्यज्ञानरूपकारणसत्त्वेऽपि प्रत्ययपदजन्यपदार्थोपस्थितिरूपसहकार्यभावेन तत्संपत्तये लक्षणास्वीकारः आवश्यक इति भावः । नानार्थेति ॥ नानार्थबोधकसैन्धवादिपदात् कदाचित् लवणविषयकः कदाचित् अश्वविषयक इति शाब्दबोधनियमः तात्पर्यज्ञानस्य शाब्दबोधहे-

## नृसिंहप्रकाशिका.

सिद्धत्वाद्व्यञ्जनाया वृत्त्यन्तरत्वे प्रमाणाभाव इति भावः । ननु गङ्गायां घोष इत्यादौ घोषपदशक्याभीरपल्ल्यां गङ्गापदशक्यप्रवाहवृत्तित्वान्वयानुपपत्त्या लक्षणा स्वीकृता । तथा सति सर्वत्र गङ्गापदस्य तीरे लक्षणया घोषपदस्य मत्स्यादिलक्षणया वा अनुपपत्तिपरिहारसंभवात्, कदाचित् गङ्गापदस्यैव तीरे लक्षणा, कदाचित् घोषपदस्य मत्स्यादौ लक्षणेति नियमानुपपत्तिः । अत आह—तात्पर्यानुपपत्तिरिति॥ तात्पर्यानुपपत्तिरेवेत्यर्थः । लक्षणाबीजमिति ॥ लक्षणाप्रयोजकमित्यर्थः । तथा च अन्वयानुपपत्तेर्लक्षणाबीजत्वे भोजनतात्पर्येण प्रयुक्त-यष्टीःप्रवेशयेतिवाक्यघटकयष्ट्यादिपदस्य यष्टिधरादौ लक्षणानुपपत्तिः । यष्टीनां प्रवेशान्वयानुपपत्तेरभावात् । अतस्तात्पर्यानुपपत्तेर्लक्षणाबीजत्वमवश्यमङ्गीकार्यम् । एवं च यष्टिपदशक्यार्थयष्टीनां प्रवेशने भोजनतात्पर्यानुपपत्त्या यष्टिपदस्य यष्टिधरे लक्षणोपपद्यते । इत्थञ्च तीरवृत्तिघोष इति बोधतात्पर्येण प्रयुक्त-गङ्गायां घोष इत्यादौ तादृशतात्पर्यानुपपत्त्या गङ्गापदस्यैव तीरे लक्षणा स्वी-

## नीलकण्ठप्रकाशिका.

तत्रेश्वरेच्छामादायैवानुपपत्तेः परिहारसंभवादित्यलमधिकजल्पनेन । **प्रकरणादिकमिति ॥** आदिना 'सशंखचक्रो हरिः पूज्यः' इत्यादौ हरिशब्दस्य भगवति तात्पर्यनिर्णायकस्य 'सशंखचक्रः' इति विशेषणादेः परिग्रहः । कथं प्रकरणादेः तात्पर्यग्राहकत्वमिति चेत् इत्थम् । 'इदं सैन्धवपदं लवणबोधेच्छयोच्चरितम् भोजनप्रकरणे उक्तत्वात्' इति रीत्या गृहाण ।

## रामरुद्रीयम्.

तुत्वमन्तरा न संभवतीति भावः । न च नानार्थस्थले तात्पर्यज्ञानस्य हेतुत्वेऽपि सर्वत्र तद्धेतुत्वे मानाभाव इति वाच्यम् । एकत्र दृष्टार्थन्यायेन विशेषतोऽपि कार्यकारणयोः अन्वयव्यतिरेकाभ्यां कार्यत्वेन कर्तृत्वेन सामान्यत एव जन्यजनकभावावधारणात्, क्वचित् लक्ष्यार्थशाब्दबोधः, क्वचिन्मुख्यार्थशाब्दबोध इति नियमोपपत्तये सर्वत्र तद्धेतुत्वस्य आवश्यकत्वाच्च । ननु तात्पर्यज्ञानस्य शाब्दबोधहेतुत्वोपगमे परेच्छायाः परस्याप्रत्यक्षत्वेन वक्तृतात्पर्यस्य श्रोतुः ज्ञानासंभवात् क्वापि शाब्दबोधो न स्यादिति आशङ्कायामाह—**प्रकरणादिकमिति॥** प्रकरणं भोजनगमनादिप्रस्तावः। आदिना आभिमुख्यादिपरिग्रहः । तथा च तद्धेतुना तात्पर्यमनुमायैव शाब्दबोध इति भावः । अर्थाध्याहारवादिभट्ट-

## नृसिंहप्रकाशिका.

कार्या । प्रवाहवृत्तिर्मत्स्य इति बोधतात्पर्येण प्रयुक्त-गङ्गायां घोष इत्यादौ तादृशतात्पर्यानुपपत्त्या घोषपदस्यैव मत्स्यादौ लक्षणा स्वीकार्येति नोक्तनियमानुपपत्तिरिति भावः । तात्पर्यन्निर्वक्ति—**तत्प्रतीतीच्छयेति ॥** तदर्थविषयकबोधाभिप्रायेण प्रयुक्तत्वं तात्पर्यमित्यर्थः। ननु सैन्धवमानयेत्यादौ कदाचिदश्वानयनबोधः कदाचित् लवणानयनबोधः इति नियमो न स्यात् बोधद्वयजनिकायाः आकाङ्क्षादिज्ञानघटितसामग्र्याः एकैकबोधस्थलेऽप्यक्षतत्वात् इत्यत आह—**तात्पर्यज्ञानं चेति ॥** तात्पर्यज्ञानमपीत्यर्थः । **वाक्यार्थज्ञानहेतुरिति॥** शाब्दबोधसामान्यकारणमित्यर्थः । तत्र प्रमाणमाह—**नानार्थानुरोधादिति ॥** नानार्थकसैन्धवपदघटितसैन्धवमानयेत्यादौ कदाचिदश्वानयनस्यैव बोधः कदाचित् लवणानयनस्यैव बोध इत्यनुभवसिद्धैकैकबोधानुसारादित्यर्थः । तथा चानुभवसिद्धैकैकबोधान्यथानुपपत्त्या शाब्दबोधसामान्ये तात्पर्यज्ञानस्यापि हेतुत्वमावश्यकमिति भावः । ननु प्रयोक्तृसमवेततात्पर्ये परात्मवृत्तिमनस्संयोगघटितसंयुक्तसमवायरूपसन्निकर्षाभावात् कथं श्रोतुः प्रयोक्तृनिष्ठतात्पर्यविषयकज्ञानामित्यत आह—**प्रकरणादिकमिति ॥** आदिना सङ्केतादेः परिग्रहः । तथा च प्रत्यक्षरूपतात्पर्यज्ञानासंभवेऽपि एतद्वाक्यघटकसैन्धवपदं लवणतात्पर्यकं भोजनप्रकरणे प्रयुज्यमानत्वात् यन्नैवं तन्नैवं प्रयाणप्रकरणे प्रयुज्यमानसैन्धवपदवदिति व्यतिरेक्यनुमानात् श्रोतुरनुमितिरूपतात्पर्यज्ञानं संभवत्येवेति भावः । ननु एवं सति द्वारकर्मकपिधानरूपार्थबोधतात्पर्येण प्रयुक्तद्वारमित्यादिवाक्यात् द्वारकर्मकपिधानबोधानुपपत्तिः कारणीभूतपिधानरूपपदार्थोपस्थित्यभा-

## नीलकण्ठप्रकाशिका.

तत्रेश्वरेच्छामादायैवानुपपत्तेः परिहारसंभवादित्यलमधिकजल्पनेन । **प्रकरणादिकमिति ॥** आदिना 'सशंखचक्रो हरिः पूज्यः' इत्यादौ हरिशब्दस्य भगवति तात्पर्यनिर्णायकस्य 'सशंखचक्रः' इति विशेषणादेः परिग्रहः। कथं प्रकरणादेः तात्पर्यग्राहकत्वमिति चेत् इत्थम्। 'इदं सैन्धवपदं लवणबोधेच्छयोच्चरितम् भोजनप्रकरणे उक्तत्वात्' इति रीत्या गृहाण ।

## रामरुद्रीयम्.

तुल्यमन्तरा न संभवतीति भावः । न च नानार्थस्थले तात्पर्यज्ञानस्य हेतुत्वेऽपि सर्वत्र तद्धेतुत्वे मानाभाव इति वाच्यम् । एकत्र दृष्टार्थन्यायेन विशेषतोऽपि कार्यकारणयोः अन्वयव्यतिरेकाभ्यां कार्यत्वेन कर्तृत्वेन सामान्यत एव जन्यजनकभावावधारणात्, क्वचित् लक्ष्यार्थशाब्दबोधः, क्वचिन्मुख्यार्थशाब्दबोध इति नियमोपपत्तये सर्वत्र तद्धेतुत्वस्य आवश्यकत्वाच्च । ननु तात्पर्यज्ञानस्य शाब्दबोधहेतुत्वोपगमे परेच्छायाः परस्याप्रत्यक्षत्वेन वक्तृतात्पर्यस्य श्रोतुः ज्ञानासंभवात् क्वापि शाब्दबोधो न स्यादिति आशङ्कायामाह—**प्रकरणादिकमिति**॥ प्रकरणं भोजनगमनादिप्रस्तावः। आदिना आभिमुख्यादिपरिग्रहः । तथा च तद्धेतुना तात्पर्यमनुमायैव शाब्दबोध इति भावः । अर्थाध्याहारवादिभट्ट-

## नृसिंहप्रकाशिका.

कार्या । प्रवाहवृत्तिर्मत्स्य इति बोधतात्पर्येण प्रयुक्त-गङ्गायां घोष इत्यादौ तादृशतात्पर्यानुपपत्त्या घोषपदस्यैव मत्स्यादौ लक्षणा स्वीकार्येति नोक्तनियमानुपपत्तिरिति भावः । तात्पर्यं निर्वक्ति—**तत्प्रतीतीच्छयेति** ॥ तदर्थविषयकबोधाभिप्रायेण प्रयुक्तत्वं तात्पर्यमित्यर्थः। ननु सैन्धवमानयेत्यादौ कदाचिदश्वानयनबोधः कदाचित् लवणानयनबोधः इति नियमो न स्यात् बोधद्वयजनिकायाः आकाङ्क्षादिज्ञानघटितसामग्र्याः एकैकबोधस्थलेऽप्यक्षतत्वात् इत्यत आह—**तात्पर्यज्ञानं चेति** ॥ तात्पर्यज्ञानमपीत्यर्थः । **वाक्यार्थज्ञानहेतुरिति**॥ शाब्दबोधसामान्यकारणमित्यर्थः। तत्र प्रमाणमाह—**नानार्थानुरोधादिति** ॥ नानार्थकसैन्धवपदघटितसैन्धवमानयेत्यादौ कदाचिदश्वानयनस्यैव बोधः कदाचित् लवणानयनस्यैव बोध इत्यनुभवसिद्धैकैकबोधानुसारादित्यर्थः । तथा चानुभवसिद्धैकैकबोधान्यथानुपपत्त्या शाब्दबोधसामान्ये तात्पर्यज्ञानस्यापि हेतुत्वमावश्यकमिति भावः । ननु प्रयोक्तृसमवेततात्पर्ये परात्मवृत्तिमनस्संयोगघटितसंयुक्तसमवायरूपसन्निकर्षाभावात् कथं श्रोतुः प्रयोक्तृनिष्ठतात्पर्यविषयकज्ञानमित्यत आह—**प्रकरणादिकमिति** ॥ आदिना सङ्केतादेः परिग्रहः । तथा च प्रत्यक्षरूपतात्पर्यज्ञानासंभवेऽपि एतद्वाक्यघटकसैन्धवपदं लवणतात्पर्यकं भोजनप्रकरणे प्रयुज्यमानत्वात् यन्नैवं तन्नैवं प्रयाणप्रकरणे प्रयुज्यमानसैन्धवपदवदिति व्यतिरेक्यनुमानात् श्रोतुरनुमितिरूपतात्पर्यज्ञानं संभवत्येवेति भावः। ननु एवं सति द्वारकर्मकपिधानरूपार्थबोधतात्पर्येण प्रयुक्तद्वारमित्यादिवाक्यात् द्वारकर्मकपिधानबोधानुपपत्तिः कारणीभूतपिधानरूपपदार्थोपस्थित्यभा-

**तात्पर्यग्राहकम् । द्वारमित्यादौ पिधेहीति शब्दाध्याहारः । ननु अर्थज्ञानार्थत्वाच्छब्दस्यार्थमविज्ञाय शब्दाध्याहारासंभवादर्थाध्याहार एव युक्त इति चेन्न । पदविशेषजन्यपदार्थोपस्थितेः शाब्दज्ञाने हेतुत्वात् । अन्यथा 'घटः**

---

## नीलकण्ठप्रकाशिका.

प्राभाकरमतं निराकरिष्यमाणः स्वसिद्धान्तं दर्शयति—**द्वारमिति** ॥ **अर्थज्ञानार्थत्वाच्छब्दस्येति** ॥ शब्दज्ञानस्य अर्थज्ञानफलकत्वादित्यर्थः । एतावता प्रथमत एवार्थानुसंधाने लाघवमिति सूचितम् । किंच 'अर्थं बुद्ध्वा शब्दरचना' इति न्यायेनार्थज्ञानमन्तरा आकाङ्क्षादिमच्छाब्दानुसन्धानरूपशब्दाध्याहारस्यैवासंभवेन प्रथमतोऽर्थाध्याहारस्यैवावश्यकतेत्याह । **अर्थमवीति** ॥ यथाकथंचिदुपस्थितपदार्थानां शाब्दबोधानुदयेन पदजन्यत्वस्योपस्थितिविशेषणताया आवश्यकतया तादृशोपस्थितिसंपत्तये शब्दाध्याहार एव अनायत्त्या अनुसर्तव्यः इत्याह—**पदविशेषेति** ॥ विशेषपदस्यापि प्रयोजनं दर्शयितुम् 'घटः कर्मत्वम्' इत्याद्यनुधावनम् । तत्र कर्मत्वादिपदजन्यकर्मत्वाद्युपस्थितेः सत्त्वेऽपि घटपदोत्तराम्पदजन्यकर्मत्वाद्युपस्थितेरसत्त्वेन न सिद्धान्तिमते शाब्दबोधप्रसङ्ग इति भावः । **पदविशेषजन्येत्यत्र** वृत्त्या पदविशेषजन्येत्यपि बोध्यम् । तेन 'घटमानय' इत्यादौ घटादिपदा-

## रामरुद्रीयम्.

मतनिराकरणायाह—**द्वारमिति** ॥ भट्टः शङ्कते—**नन्विति** ॥ अयं भावः । पिधानरूपार्थोपस्थित्यर्थमेव हि पिधेहीति शब्दकल्पना । पिधानरूपार्थानुपस्थितितो हि न तदर्थशब्द-

## नृसिंहप्रकाशिका.

वात् । न चेष्टापत्तिः निरुक्ततात्पर्यानुपपत्तिप्रसङ्गादित्यत आह—**द्वारमित्यादाविति** ॥ इत्यादिवाक्य इत्यर्थः । आदिना पेटिकामित्यादेः परिग्रहः । **पिधेहीति शब्दाध्याहार इति** ॥ पिधेहीति शब्दः अनुसन्धेय इत्यर्थः । द्वारमित्यादिवाक्यघटकतया पिधेहीति शब्दोऽनुसन्धेय इति समुदितार्थः । तथा च अनुसन्धीयमानपिधेहीति शब्दात् पिधानरूपार्थोपस्थितिसंभवेन सकलकारणसत्त्वात् न निरुक्तशाब्दबोधानुपपत्तिरिति भावः । अर्थाध्याहारपक्षं दूषयितुमाक्षिपति—**नन्वित्यादिना** । **अर्थज्ञानार्थत्वादिति** ॥ अर्थज्ञानरूपं यच्छाब्दबोधात्मकं ज्ञानं तत्संपादकत्वादित्यर्थः । **शब्दस्येति** ॥ शब्दाध्याहारस्येत्यर्थः । **अर्थमविज्ञायेति** ॥ अर्थज्ञानशून्यकाल इत्यर्थः । **शब्दाध्याहारासंभवादिति** ॥ शब्दानुसन्धानासंभवादित्यर्थः । **युक्त इति** ॥ तथा चार्थं बुद्ध्वा वाक्यरचनेति नियमेन वाक्यप्रयोगे अर्थज्ञानस्य हेतुत्वावश्यकतया अर्थज्ञानफलकशब्दज्ञानात्पूर्वमर्थज्ञानस्यावश्यकतया प्रथमोपस्थितत्वरूपलाघववशात् अर्थानुसन्धानमेव प्रामाणिकमिति भावः । **पदविशेषजन्येति** ॥ पदविशेषनिरूपितवृत्तिज्ञानाधीनपदार्थोपस्थितेरित्यर्थः । **शाब्दज्ञानहेतुत्वादिति** ॥ तथा च केवलपदार्थोपस्थितेश्शाब्दबोधहेतुत्वे प्रत्य-

**कर्मत्वमानयनं कृतिः' इत्यत्रापि शाब्दज्ञानप्रसङ्गात्। पङ्कजादिपदेषु योग-**

## नीलकण्ठप्रकाशिका.

दाकाशादेरुपस्थितावपि न शाब्दबोध इति दिक्। यद्यपि, पदं तावच्चतुर्विधम्—यौगिकं, रूढं, योगरूढं, यौगिकरूढं चेति। योगोऽवयवशक्तिः। तन्मात्रेणार्थप्रतिपादकमाद्यम् यथा पाचकादिपदम्। रूढिः समुदायशक्तिः। तन्मात्रेणार्थप्रतिपादकं द्वितीयम्। यथा गवादिपदम्। योगरूढिभ्यां परस्परसहकारेणार्थप्रतिपादकं तृतीयम्। यथा पङ्कजादिपदम्। योगशक्त्या समुदायशक्त्या च परस्परासहायेन विभिन्नार्थप्रतिपादकं चतुर्थम्। यथा उद्भिस्पदं योगेन तरुगुल्मादेः, रूढ्या तु यागविशेषस्य च वाचकम्। तथापि योगरूढं प्रदर्श्य तत्र

## रामरुद्रीयम्.

कल्पना संभवति। पदार्थान्तरकल्पनस्यापि संभवात्। अतः पिधानरूपार्थप्रतीतेरावश्यकत्वेनैव पिधेहीति शब्दकल्पना वाच्या। तथा च पिधानरूपार्थोपस्थितेः शब्दकल्पनातः प्रागेवावश्यकतया तदर्थं शब्दकल्पना व्यर्थैवेति अर्थाध्याहार एव युक्त इति तेषामभिप्रायः॥ उत्तरमाह—**नेति**॥ यथाकथञ्चित् उपस्थितपदार्थस्य शाब्दबोधोपगमे घटः कर्मत्वमानयनमित्यादिनिराकाङ्क्षपदजन्योपस्थितितोऽपि शाब्दबोधापत्त्या परस्परसाकाङ्क्षपदजन्योपस्थितेरेव शाब्दबोधहेतुत्वेन स्वीकरणीयतया तादृशोपस्थितिनिर्वाहाय शब्दाध्याहार आवश्यक इति भावः। घटमानयेत्यत्र घटपदस्य घटत्वावच्छिन्नोऽर्थः। तदुत्तरद्वितीयाविभक्तेः कर्मत्वमर्थः। सन्निहितदेशसंयोगानुकूलव्यापाररूपानयनं धातोरर्थः। आख्यातस्य कृतिरर्थः। कर्मत्वं च धात्वर्थतावच्छेदकफलशालित्वम्। तत्र धात्वर्थतावच्छेदकफलस्य धात्वर्थत्वाभावात् तदन्वयाधारत्वमाधेयत्वं वा द्वितीयार्थः। तथा च घटपदार्थस्याधेयतया निरूपितत्वेन संबन्धेन वा द्वितीयार्थेऽन्वयः। तस्य च निरूपकत्वेन आश्रयता वा व्युत्पत्तिजन्यफलवैचित्र्यात् धात्वर्थतावच्छेदकसंयोगेऽन्वयः। तस्य चानुकूलतया धात्वर्थव्यापारेऽन्वयः। तस्य चानुकूलतया आख्यातार्थकृतौ, कृतेश्चाश्रयतया प्रथमान्तार्थेऽन्वयः। तथा च घटनिष्ठाधारतानिरूपकसन्निहितदेशसंयोगानुकूलव्यापारानुकूलकृतिमान् चैत्र इति शाब्दबोधः। प्रसङ्गात् योगरूढपङ्कजपदार्थं वक्तुं उप-

## नृसिंहप्रकाशिका.

क्षादिना पदार्थोपस्थितावपि शाब्दबोधापत्तिः। पदजन्यत्वमात्रनिवेशे घटादिपदात्समवायेनाकाशोपस्थितौ घटो द्रव्यमित्यादिवाक्यादाकाशो द्रव्यमिति शाब्दबोधापत्तिः। अतः पदविशेषनिरूपितवृत्तिज्ञानाधीनपदार्थोपस्थितेः शाब्दबोधहेतुत्वमङ्गीकृतमिति भावः। उपस्थितौ पदनिरूपितवृत्तिज्ञानाधीनत्वमपहाय पदविशेषनिरूपितवृत्तिज्ञानाधीनत्वनिवेशप्रयोजनमाह—**अन्यथेति**॥ केवलपदनिरूपितवृत्तिजन्यत्वनिवेश इत्यर्थः। **इत्यत्रापीति**॥ इत्याकारकवाक्यादपीत्यर्थः। **शाब्दज्ञानप्रसङ्गादिति**॥ घटकर्मकानयनानुकूलकृतिमानिति शाब्दबोधापत्तेरित्यर्थः। तथा च पदविशेषात्मकअंपदनिरूपितवृत्तिज्ञानाधी-

रूढिः। अवयवशक्तिर्योगः। समुदायशक्ती रूढिः। नियतपद्मत्वादिज्ञानार्थं समु-

## नीलकण्ठप्रकाशिका.

योगरूढ्योः स्वरूपप्रदर्शनेन तद्रीत्या अन्यत्रापि बोद्धुं शक्यमित्यभिप्रायेण पङ्कजादिपदे योगरूढिं प्रदर्शयति—**पङ्कजादीति** ॥ **योगरूढिरिति** ॥ योगसहिता रूढिरित्यर्थः। ननु पङ्कजादिशब्देष्वपि योग एवास्तु तावतैव निर्वाहादित्याशङ्क्य पङ्कजशब्दस्य पद्मत्वावच्छिन्ने वृत्तिमन्तरा नियमेन पद्मत्वावच्छिन्नभानमनुभवसिद्धं न निर्वहतीति पद्मत्वावच्छिन्ने रूढिरावश्यिकेत्याह—**नियतेति** ॥ नियतपद्मत्वावच्छिन्नभानानुभवे विप्रतिपन्नं प्रत्याह—

## रामरुद्रीयम्.

क्रमते—**पङ्कजेति** ॥ योगशब्दार्थमाह—**अवयवेति** ॥ रूढिशब्दार्थमाह—**समुदायेति** ॥ ननु पङ्कजनिकर्तृत्वेनैव पङ्कजपदात् बोधोऽस्तु किं पद्मत्वावच्छिन्ने समुदायशक्तेरित्यत आह—**नियतेति** । योगार्थबोधानभ्युपगमे तु स्थलपद्मेऽपि पङ्कज-

## नृसिंहप्रकाशिका.

नकर्मत्वोपस्थितेः तादृशलोट्पदनिरूपितवृत्तिज्ञानाधीनकृत्युपस्थितेः तादृशशाब्दबोधहेतुतया प्रकृते तादृशकारणाभावात् घटः कर्मत्वमित्यादिवाक्यात् न तादृशशाब्दबोधापत्तिः । एवञ्च द्वारमित्यादौ पिधानादिरूपार्थाध्याहारे निरुक्तपदार्थोपस्थितिरूपकारणाभावात् अभिमतशाब्दबोधानुपपत्त्या शब्दाध्याहारः आवश्यक इति भावः । अत्र घटः कर्मत्वमित्यादिवाक्यस्यानाकाङ्क्षोदाहरणत्वेन वक्ष्यमाणत्वात् तादृशवाक्ये वस्तुतः आकाङ्क्षाया अभावाच्चाभ्रान्तस्याकाङ्क्षाज्ञानरूपकारणाभावादेवाभिमतशाब्दबोधापत्तिवारणसंभवात् उपस्थितौ केवलपदनिरूपितवृत्तिज्ञानाधीनत्वविशेषणमपहाय पदविशेषनिरूपितवृत्तिज्ञानाधीनत्वनिवेशे बीजं मृग्यमिति प्रतिभाति । एतावता प्रबन्धेन लक्षणास्वरूपं तद्भेदं तदुदाहरणञ्च प्रदर्श्य मूले शक्तिस्वरूपमात्रस्य निरूपणात् न्यूनता। तत्परिहाराय शक्तिभेदन्तदुदाहरणञ्च प्रदर्शयति—**पङ्कजादिपदेष्विति** ॥ आदिना सरोजादिपदपरिग्रहः। अत्र शक्तिः द्विविधा योगो रूढिश्चेत्यादौ पूरणीयम् । **पङ्कजादिपदेष्विति** ॥ पङ्कजादिपदेषु शक्तिद्वयोदाहरणमिति बोध्यम् । **योगरूढिरिति** ॥ योगसहिता रूढिरित्यर्थः । योगरूढ्यात्मकद्विविधशक्तिरपि पङ्कजादिपदवृत्तिरिति समुदितार्थः । योगस्वरूपमाह—**अवयवशक्तिरिति** ॥ पदघटकपदनिरूपितशक्तिर्योग इत्यर्थः । रूढिस्वरूपमाह—**समुदायशक्तिरिति** ॥ पदनिरूपितशक्तिः समुदायात्मकरूढिशक्तिरित्यर्थः । तथा च पङ्कजादिपदघटकपङ्कपदजनिधात्वादिपदानां पङ्कजननादौ शक्तिसत्त्वात् पङ्कजादिपदस्य पद्मत्वाद्यवच्छिन्ने शक्तिसत्त्वाच्च पङ्कजादिपदे शक्तिद्वयं दुर्वारमिति भावः । इदमुपलक्षणम् । पदं चतुर्विधं—यौगिकं रूढं योगरूढं यौगिकरूढं चेति । तत्र पाचकादिपदं यौगिकम् । यौगिकत्वं च स्वघटकपदनिरूपितशक्तिकत्वे सति पदघटितत्वे सति वा शक्तिनिरूपकत्वम्। पाचकादिपदस्य स्वघटकपच्धात्वादिपदनिरूपितपाकत्वाद्यवच्छिन्नशक्तिकत्वात् पाचकादिपदस्य एकधर्मावच्छिन्न-

**दायशक्तिः । अन्यथा कुमुदेऽपि प्रयोगप्रसङ्गात् । 'इतरान्विते शक्तिः' इति**

---

## नीलकण्ठप्रकाशिका.

**अन्यथेति ॥** नियतपद्मत्वावच्छिन्नभानोपयोगिसमुदायशक्त्यनङ्गीकार इत्यर्थः । **प्रयोगेति ॥** पंकजपदप्रयोगे इत्यर्थः । यद्यपि 'कार्यान्विते शक्तिः' इति प्राभाकरमतं, तथापि सिद्धार्थपरवाक्ये व्युत्पत्तेर्व्यवस्थापितत्वेन तत्साधारण्याय तन्मतं परिष्कृत्य दर्शयति— **इतरान्वित इति ॥** अन्विते शक्तिः इति तु निष्कर्षः । अयमभिप्रायः कथंचिदुपस्थि-

## रामरुद्रीयम्

पदप्रयोगापत्तेरिति बोध्यम् । **इतरेति ॥** इतरः स्वसमभिव्याहृतपदान्तरार्थः । तदन्विते तत्संसर्गविशिष्टे स्वार्थे घटादौ घटादिपदस्य शक्तिः । घटमित्यादौ घटकर्मत्वयोः संसर्गस्यापि शाब्दबोधविषयतया घटादिपदस्य घटादिरूपार्थमात्रे शक्तिस्वीकारे घटकर्मत्वयोः

## नृसिंहप्रकाशिका.

शक्तिनिरूपकत्वाच्च लक्षणसमन्वयः । तत्रापभ्रंशगर्गर्ध्यादिशब्दे अतिव्याप्तिवारणाय सत्यन्तम् । योगरूढपङ्कजादिपदे अतिव्याप्तिवारणाय विशेष्यभागः । न च नीलघट इत्यादिसमासे अतिव्याप्तिः । तत्रापि निरुक्तयौगिकत्वसत्त्वादिति वाच्यम् । इष्टापत्तेः । समासभिन्नत्वेनापि विशेषणीयत्वान्न तत्रातिव्याप्तिरित्यस्मद्गुरुचरणाः । घटादिपदं च रूढम् । रूढत्वं च पदाघटितत्वे सति शक्तिनिरूपकत्वम् । घटादिपदस्य पदघटितत्वाभावात् घटत्वाद्यवच्छिन्नशक्तिनिरूपकत्वाच्च लक्षणसमन्वयः । अत्र योगरूढपदेऽतिव्याप्तिवारणाय सत्यन्तम् । अपभ्रंशशब्देऽतिव्याप्तिवारणाय विशेष्यभागः । पङ्कजादिपदं च योगरूढम् । तत्त्वं च स्वघटककिंचित्पदनिरूपिताश्रयत्वावच्छिन्नशक्तिसमानाधिकरणशक्तिनिरूपकत्वम् । पङ्कजादिपदस्य स्वघटकडप्रत्ययनिरूपिताश्रयत्वावच्छिन्नशक्तिसमानाधिकरणपद्मत्वावच्छिन्नशक्तिनिरूपकत्वात् लक्षणसमन्वयः । अत्र यौगिकरूढोद्भिदादिपदे अतिव्याप्तिवारणाय शक्त्योस्सामानाधिकरण्यनिवेशः पङ्कजादिपदस्यापि स्वघटकपङ्कजादिपदनिरूपितपङ्कत्वाद्यवच्छिन्नशक्तिसमानाधिकरणशक्तिनिरूपकत्वाभावात्तत्राव्याप्तिवारणाय स्वघटकपदे यत्किंचित्त्वनिवेशः । उद्भिदादिपदं च यौगिकरूढम् । तत्त्वं च स्वघटकपदनिरूपितशक्त्यसमानाधिकरणशक्तिनिरूपकत्वम् । प्रकृते उद्भित्पदनिरूपितयागत्वावच्छिन्नशक्तेः उद्भित्पदघटक-उदित्युपसर्गसमभिव्याहृतभिद्धातुनिरूपितोर्ध्वभेदनत्वावच्छिन्नशक्त्या तादृशघटकप्रत्ययनिरूपितकर्तृत्वावच्छिन्नशक्त्या च सामानाधिकरण्यालाभात् लक्षणसमन्वयः । अत्र योगरूढावतिव्याप्तिवारणाय शक्त्योरसामानाधिकरण्यनिवेश इत्यपि बोध्यम् । ननु पङ्कजादिपदे अवयवशक्तिस्वीकारमात्रेण निर्वाहे समुदायशक्तिरपि किमर्थमित्याशङ्कां परिहरति— **नियतेति ॥** पङ्कजादिपदात् पद्मत्वं विषयीकृत्यैव जायमानानुभवसिद्धबोधनिर्वाहार्थमित्यर्थः । **समुदायशक्तिरिति ॥** समुदायशक्तिरपीत्यर्थः ॥ स्वीकार्येति शेषः । तथा च

## नीलकण्ठप्रकाशिका.

तपदार्थानां शाब्दबोधवारणाय तद्विषयकशाब्दबोधं प्रति वृत्तिज्ञानजन्यतदुपस्थितित्वेन हेतुतायाः कल्पनीयतया अन्वयांशेऽपि शक्तिरपेक्षिता । अन्यथा तादृशसामान्यकार्यकारणभावभङ्गप्रसङ्गात् । न च संसर्गविषयताभिन्नतत्तद्विषयताशालिशाब्दबोधं प्रति वृत्तिज्ञानाधीनतत्तदुपस्थितित्वेन हेतुत्वमास्ताम्, तथा च अन्वयांशे शक्त्यनङ्गीकारेऽपि न क्षतिरिति वाच्यम् । तथा सति कार्यतावच्छेदकगौरवापत्तेः । एवं च 'अन्वितो घटो घटपदवाच्यः'

## रामरुद्रीयम्.

संसर्गबोधकपदाभावात् तद्भानं न स्यादिति कर्मत्वाद्यपरपदार्थानुयोगिकत्वाद्युपलक्षितसंसर्गविशिष्टघटादावेव घटादिपदस्य शक्तिः स्वीकार्या । तत्र चेतरपदार्थस्य पदान्तरेणैव लाभसंभवात् तदंशे घटपदशक्तिस्वीकारस्यानावश्यकत्वेन तस्यैवोपलक्षणत्वम् । तच्च शक्यव्यावर्तकत्वे सति शक्त्यनाश्रयत्वम् । एवमंपदस्यापि घटप्रतियोगिकत्वोपलक्षितसंसर्गविशिष्टकर्मत्वत्वविशिष्ट एव शक्तिः । विनिगमनाविरहेण एकशेषस्य कर्तुमशक्यत्वात् । तथा च घटकर्मत्वयोः संसर्गः उभयपदलभ्य एवेति न तद्भानानुपपत्तिरिति भावः ।

## नृसिंहप्रकाशिका.

पङ्कजादिपदात् पद्मत्वाद्याकारकावयवशक्तिप्रतिपाद्यतावच्छेदकपङ्कजनिकर्तृत्वप्रकारकबोधस्यानुभाविकतया अनुभवसिद्धतादृशबोधार्थं समुदायशक्तिरपि अवश्यं स्वीकार्येति भावः । **अन्यथेति** ॥ पङ्कजादिपदात् पद्मत्वाविषयकबोधस्यापि प्रामाणिकत्व इत्यर्थः । **कुमुदेऽपीति** ॥ अपिना पद्मसमुच्चयः । **प्रयोगप्रसङ्ग इति** ॥ पङ्कजपदस्य प्रयोगापत्तिरित्यर्थः । पङ्कजपदात् पङ्कजनिकर्तृत्वप्रकारकपद्मविशेष्यकबोधस्यैव तादृशधर्मप्रकारककुमुदविशेष्यकबोधस्याप्यापत्तिरिति यावत् । तथाच पद्मस्येव कुमुदस्याप्यवयवशक्तिप्रतिपाद्यतावच्छेदकपङ्कजनिकर्तृत्वाश्रयत्वेऽपि तत्प्रकारककुमुदविशेष्यकबोधस्याजायमानतया पङ्कजपदस्य पद्मत्वावच्छिन्नरूढिरवश्यं स्वीकार्या । एवं च रूढिर्योगमपहरतीति नियमेन पङ्कजपदात् रूढ्यर्थतावच्छेदकपद्मत्वाविषयकबोधस्याप्यप्रामाणिकतया कुमुदस्य तादृशपद्मत्वशून्यत्वात् तत्प्रकारककुमुदबोधासंभवेन केवलावयवशक्त्या न कुमुदबोधापत्तिरिति भावः । न च आवश्यकसमुदायशक्त्यैव पद्मबोधनिर्वाहे अवयवशक्त्यङ्गीकारो व्यर्थ इति वाच्यम् । तथा सति पङ्कजपद्मवत् स्थलपद्मस्यापि पङ्कजपदात् नियमेन बोधापत्तेः । तस्मादवयवशक्तिरावश्यकीति । अत्र घटमित्यादिवाक्यघटकघटपदात् शक्त्या घटस्य तादृशांपदात् शक्त्या कर्मत्वस्य च उपस्थितत्वेऽपि आधाराधेयभावसंबन्धस्यानुपस्थित्या तादृशवाक्यात् घटीयं कर्मत्वमिति आधेयतासंसर्गकघटप्रकारककर्मत्वविशेष्यकबोधानुपपत्तिः । अपदार्थस्य शाब्दबोधे भानानङ्गीकारात् । अन्यथा निरुक्तवाक्यात् पटादेरपि बोधापत्तेः । अतः घटादिपदानां अन्वयविशिष्टे घटादौ शक्तिरवश्यं स्वीकार्येति मीमांसकैकदेशमतं निरसितुं तन्मतमुपन्यस्यति—**इतरान्वित इति** ॥ पदानामित्यादिः । अन्वयविशिष्ट इत्यर्थः ।

**प्राभाकराः । अन्वयस्य वाक्यार्थतया भानसम्भवादन्वयांशेऽपि शक्तिर्न**

---

## नीलकण्ठप्रकाशिका.

इत्याकारकशक्तिज्ञानमेव शाब्दबोधप्रयोजकमिति । केचित्तु इतरान्विते शक्तिरित्यस्य कार्यान्विते शक्तिरित्यर्थमाहुः । सयुक्तिकं नैयायिकमतं दर्शयति—**अन्वयस्येति** ॥ पदार्थसंसर्गस्य पदसमभिव्याहारबलादेव शाब्दबोधे भानसंभवात्तादृशसंसर्गांशेऽपि शक्तिर्न कल्पनीया इति समुदितार्थनिष्कर्षः । अयमाशयः । तत्तद्विषयकशाब्दबुद्धिं प्रति वृत्तिज्ञानाधीनतत्तदुपस्थितित्वेनानुगतकार्यकारणभावो न संभवति, शक्तिलक्षणोभयसाधारणस्य वृत्तित्वस्य दुर्वचत्वात् । अपि तु तच्छक्तपदज्ञानजन्यतदुपस्थितित्वेनैका कारणता । तल्लाक्षणिकपदज्ञानजन्यतदुपस्थितित्वेन च अपरा कारणता स्वीकर्तव्या । परस्परतत्तदुपस्थितिजन्यशाब्दबोधे व्यभिचारवारणाय च तत्तत्कारणाव्यवहितोत्तरत्वं तत्तत्कार्यतावच्छेदककोटौ निवेशनीयम् । एवं च वृत्त्यनुपस्थितस्यापि पदार्थद्वयसंसर्गस्य शाब्दबोधोपगमे व्यभि-

## रामरुद्रीयम्.

**अन्वयस्येति** ॥ पदार्थद्वयसंसर्गे शक्तिकल्पनमनावश्यकमिति भावः । शक्तिकल्पनवैयर्थ्यं ज्ञापयति—**अन्वयांशेऽपीति** ॥ कस्यापि पदस्य संसर्गांशे शक्तिः न कल्पनीयेत्यर्थः । तथा च घटादिपदाभ्यां घटकर्मत्वयोः उपस्थितौ तत्सहकृतेन घटादिपदयोरव्यवहितपूर्वापरभावरूपाकाङ्क्षाज्ञानेनैव कर्मत्वविशेष्यकाधेयत्वसंसर्गकघटप्रकारकशाब्दबोधोपपत्तौ संसर्गांशे पदशक्तिकल्पने प्रयोजनाभावात् तादृशशाब्दबुद्धित्वावच्छिन्नं प्रति तादृशानुपूर्वीज्ञानहेतुतायाः संसर्गांशे पदशक्त्यङ्गीकर्तॄणामप्यावश्यकत्वात् । अन्यथा अम् घट इत्यादिविपरीतानुपूर्वीतोऽपि तादृशशाब्दबोधप्रसङ्ग इति भावः । यद्यपि पदादनुपस्थितार्थविषयकशाब्दबोधापत्तिवारणाय तत्तदर्थविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति वृत्त्या तत्तत्पदजन्यतत्तदर्थोपस्थितेः कारणत्वमवश्यं कल्पनीयम् । तथा च पदजन्यपदार्थद्वयसंसर्गोपस्थितिमन्तरेण तद्विषयकशाब्दबोधोपगमे व्यभिचारप्रसक्त्या तादृशकार्यकारणभावोऽसंभवदुक्तिक एव स्यात् । तथापि सांसर्गिकविषयताभिन्नविषयताशालिशाब्दबुद्धित्वावच्छिन्नं प्रत्येव वृत्त्या पदजन्यपदार्थोपस्थितेः कारणत्वाभ्युपगमात् नोक्तानुपपत्तिः । न चैवं विशिष्टशक्त्यभ्युपगन्तृनैयायिकमते घटघटत्वयोः समवायविषयकपदजन्योपस्थितिसत्त्वेन

## नृसिंहप्रकाशिका.

इतरस्य कर्मत्वादेः पदान्तरप्रतिपाद्यत्वेन अनन्यलभ्यस्यैव शब्दार्थत्वात् तदन्तर्भावेन शक्त्यसंभवेन यथाश्रुतासङ्गतेः । **इति प्राभाकरा इति** ॥ वदन्तीति शेषः । एवंरीत्या मीमांसकैकदेशिनः भट्टा वदन्तीत्यर्थः । प्राभाकरैः पदानामन्वितघटादौ स्मारकशक्त्यनभ्युपगमेन यथाश्रुतासङ्गतेः । तन्मतं निरस्यति—**अन्वयस्येति** ॥ संसर्गस्येत्यर्थः । **वाक्यार्थतयेति** ॥ पदार्थद्वयसंसर्गत्वेनेत्यर्थः । संसर्गत्वेनेति यावत् । आधाराधेयभावरूपसंबन्धस्य केवलसंसर्गत्वेनैव भानस्यानुभवसिद्धतया यथाश्रुतासंगतेः ॥ **अन्वयां-**

**कल्पनीया इति गौतमीयाः । आकाङ्क्षेति ॥ आकाङ्क्षादिज्ञानमित्यर्थः । अन्यथा आकाङ्क्षादिभ्रमाच्छाब्दभ्रमो न स्यात् । आकाङ्क्षां लक्षयति—पदस्येति ॥ योग्यतालक्षणमाह—अर्थेति ॥ संनिधिलक्षणमाह—पदाना-**

---

## नीलकण्ठप्रकाशिका.

चाराप्रसक्त्या दर्शितद्विविधकार्यकारणभावस्य निष्प्रत्यूहतेति किमन्वयांशे शक्तिकल्पनेन । आकाङ्क्षादिरहितपदसमुदायाच्छाब्दबोधवारणाय आकाङ्क्षादेः शाब्दबोधहेतुत्वमभिहितं मूलकृता । तच्च नवीनमते न संभवतीति तज्ज्ञानस्य हेतुतामाह—**आकाङ्क्षादिज्ञानमिति** ॥ आदिना योग्यतापरिग्रहः । **अन्यथा** आकाङ्क्षादेः शाब्दबोधहेतुत्वे । **मूले पदस्येत्यादि** ॥ यत्पदस्य यत्पदाभावप्रयुक्तमन्वयबोधाजनकत्वं तत्पदसमभिव्याहृततत्पद-

## रामरुद्रीयम्.

तन्निष्ठसंसर्गताभिन्नविषयताशालिशाब्दबोधस्यानुत्पत्त्या उक्तकार्यकारणभावे अन्वयव्यभिचारो दुर्वार एवेति वाच्यम् । वृत्त्या पदजन्यतन्निष्ठसांसर्गिकविषयताभिन्नविषयताशाल्युपस्थितित्वेनैव कारणतायाः कल्पनीयत्वात्, घटपदजन्यघटत्वविशिष्टोपस्थितौ घटघटत्वयोः समवायस्यैव संसर्गतया भानात् उक्तान्वयव्यभिचारासंभवात् इति सुधीभिर्विभावनीयम् । आकाङ्क्षादिरहितपदसमुदायात् शाब्दबोधवारणाय आकाङ्क्षादेः शाब्दबोधकारणत्वमभिहितं मूलकृता, आकाङ्क्षादेः स्वरूपतः कारणत्वे निराकाङ्क्षकशब्दात् आकाङ्क्षाभ्रमात् शाब्दबोधानुपपत्तिरित्याशङ्क्य आकाङ्क्षादिपदस्य तज्ज्ञानपरत्वेन व्याचष्टे—**मूले पदस्येति** ॥ घटादिपदनिष्ठामादिविरहप्रयुक्ता घटीयकर्मतेत्याकारकप्रकृतान्वयबोधानुपधा-

## नृसिंहप्रकाशिका.

**शेऽपीति** ॥ संबन्धमन्तर्भाव्यापीत्यर्थः । **इति गौतमीया इति** ॥ सिद्धान्तयन्तीति शेषः । तथाच पदार्थस्य प्रकारत्वविशेष्यत्वाभ्यां भाननिषेधेऽपि संसर्गज्ञानस्य शाब्दबोधे अहेतुतया अनुपस्थितस्याधाराधेयभावादेः संसर्गतया भाने बाधकाभावात् अन्वयान्तर्भावेन शक्तिकल्पने प्रमाणाभाव इत्याशयेन नैयायिकाः तन्मतन्दूषयित्वा घटादिपदानां घटादिमात्रे शक्तिमङ्गीकुर्वन्तीति भावः । एतावता वृत्तिज्ञानसहकृतात् पदज्ञानात् पदार्थस्मृतिः । तादृशपदार्थस्मृतिद्वारा वाक्यज्ञानस्य शाब्दबोधज्ञानकारणत्वमायातम् । तथा सति घटः कर्मत्वं आनयनं कृतिरित्याद्यनाकाङ्क्षवाक्यात्, वह्निना सिञ्चतीत्ययोग्यवाक्यात्, गिरिर्भुक्तमग्निमान् देवदत्तेन इत्याद्यनासन्नवाक्याच्चाभ्रान्तस्य शाब्दबोधापत्तिः, निरुक्तकारणसत्त्वादित्याशङ्कां आकाङ्क्षादिज्ञानस्यापि शाब्दबोधहेतुत्वमङ्गीकृत्य परिहरति—**मूले आकाङ्क्षेत्यादि** ॥ यथाश्रुतमूलप्रतिपाद्याकाङ्क्षादिहेतुत्वपक्षे दोषं हृदि निधाय स्वयं आकाङ्क्षादिपदार्थमाह—**दीपिकायां आकाङ्क्षादिज्ञानमित्यर्थ इति ॥ अन्यथेति** ॥ आकाङ्क्षादेरेव हेतुत्व इत्यर्थः । **आकाङ्क्षादिभ्रमादिति** ॥ घटः कर्मत्वमित्यादौ आकाङ्क्षाभ्रमात्, वह्निना सिञ्चतीत्यादौ योग्यताभ्रमात्, गिरिर्भुक्तमग्निमान् देवदत्तेन इत्यादौ आस-

## नीलकण्ठप्रकाशिका.

त्वमाकाङ्क्षेत्यर्थः । प्रयुक्तत्वं च—'कारणाभावात्कार्याभावः' इति प्रतीतिसाक्षिकः स्वरूप-

## रामरुद्रीयम्

यकत्वं तादृशबोधाव्यवहारपूर्वकत्वाभाव इति यावत् । भवति हि कारणाभावप्रयोज्यः कार्याभाव इति लक्ष्ये लक्षणसमन्वयः । गौरश्व इत्यादिनिराकाङ्क्षस्थले गवाश्वयोः परस्परमन्वयाननुभावकत्वं न किंचित्पदविरहप्रयुक्तम् । गोपदाश्वपदयोः सत्त्वेऽपि तयोरन्वयाननुभावकत्वात् इति न तत्राकाङ्क्षा । यद्यपि केवलघटपदे अंपदविरहप्रयोज्यान्वयाननुभावकत्वसत्त्वेन तज्ज्ञानात् केवलघटादिपदादपि घटीयकर्मतेत्यन्वयबोधापत्तिः । न चांपदकर्मत्वोपस्थितेः तादृशशाब्दबोधकारणस्याभावेन तत्र न तादृशशाब्दबोधापत्तिरिति वाच्यम् । घटः कर्मत्वमित्यादौ तस्या अक्षतेः । न च घटपदनिष्ठामादिपदविरहप्रयुक्तान्वयाननुभावकत्वज्ञानस्यांपदजन्यकर्मत्वोपस्थितिरेव सहकारिणीति वाच्यम् । अंघट इत्यादौ घटपदे तदुत्तरांपदविरहप्रयुक्तान्वयाननुभावकत्वस्य सत्त्वेन तज्ज्ञानदशायामपि तादृशान्वयापत्तेः, तत्रांपदजन्यकर्मत्वोपस्थितेरपि अक्षतत्वात् । तथापि घटपदाव्यवहितोत्तरांपदत्वमेव तत्राकाङ्क्षा । तादृशानुपूर्वीप्रकारकज्ञानमेव तादृशशाब्दबोधहेतुरिति नानुपपत्तिः । घटानित्यादौ घटपदोत्तरं अंपदाभावेऽपि अन्पदत्वादिप्रकारकज्ञानादपि तादृशान्वयबोधोत्पत्तावपि तत्तत्कारणाव्यवहितोत्तरत्वस्य तत्तत्कारणजन्यतावच्छेदककोटौ निवेश्यत्वात् न व्यभिचारः । न चैवं अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ राज्ञ इत्यस्य पुत्रपदेन जनितान्वयबोधस्यापि पुरुषपदेन अन्वयाननुभावकत्वापत्तिः, राज्ञः पुरुष इत्यानुपूर्वीज्ञानस्य तत्रासत्त्वादिति वाच्यम् । तात्पर्यसत्त्वे आवृत्त्या तादृशान्वयबोधस्यापि इष्टत्वात्, ग्रन्थकृदुक्ततादृशान्वयाननुभावकत्वरूपाकाङ्क्षायास्तु स्वरूपसत्या एव तादृशान्वयबोधकारणत्वमित्यवसेयम् । घटमित्यादिवाक्यात् तादृशान्वयबोधोत्पत्तावपि पुनस्तादृशान्वयबोधोत्पत्तिवारणाय स्वरूपसत्तादृशाकाङ्क्षाया अपि कारणत्वस्य आवश्यकत्वात् । शाब्दबोधे सिद्धिप्रतिबन्धकतायाः स्वातन्त्र्येणाभावात् । एतेन घटमित्याद्यानुपूर्वीज्ञानसत्त्वे एकपदस्यापरपदवत्त्वरूपप्रमाणविरहप्रयुक्तान्वयाननुभावकत्वज्ञानं विनापि घटीयकर्मतेत्यादिशाब्दबोधस्य सर्वानुभवसिद्धतया तादृशशाब्दबोधे ग्रन्थकृदुक्ताकाङ्क्षाज्ञानस्य कारणत्वे मानाभाव इति केषांचित् पूर्वपक्षोऽप्यपास्त इति सर्वमवदातम् । **मूले अर्थाबाधेति** ॥ एकपदार्थे अपरपदार्थवत्त्वमेवार्थः । तस्य बाधः एकपदार्थे अपरपदार्थाभावः । तद्विरहो अपरपदार्थ एव ॥ तथा चैकपदार्थेऽपरपदार्थवत्त्वमेव योग्यतेति पर्यवसितम् । एतादृशयोग्यताज्ञानस्य शाब्दबोधकारणत्वं च अग्निना सिञ्चतीत्यादौ सेके अग्निकरणकत्वबाधनिश्चयदशायामग्निकरण-

## नृसिंहप्रकाशिका.

त्तिभ्रमादित्यर्थः ॥ **शाब्दधीर्न स्यादिति** ॥ तथाच शाब्दबोधे आकाङ्क्षादेरेव हेतुत्वे निरुक्तवाक्येषु आकाङ्क्षादेरभावात् शाब्दबोधानुपपत्त्या आकाङ्क्षादिज्ञानस्य हेतुत्वमावश्यक

## नीलकण्ठप्रकाशिका.

संबन्धविशेषः। अजनकत्वान्तं परिचायकम्। एकपदार्थेऽपरपदार्थवत्त्वं योग्यतेति मते

## रामरुद्रीयम्.

कसेकान्वयबोधापत्तिवारणायावश्यमङ्गीकर्तव्यम्। अत एव वक्ष्यति ग्रन्थकारः—अग्निना सिञ्चतीति न प्रमाणम् योग्यताविरहात् इति। अथ विशिष्टबुद्धिसामान्यं प्रत्येव बाधनिश्चयप्रतिबन्धकतया उक्तबाधनिश्चयदशायां तादृशशाब्दबोधो दुरुपपाद एव। कि-

## नृसिंहप्रकाशिका.

मिति भावः। आकाङ्क्षादिस्वरूपमाह—**मूले पदस्येति** ॥ यत्पदस्येत्यर्थः। **पदान्तरव्यतिरेकप्रयुक्त इति** ॥ यत्पदव्यतिरेकप्रयुक्त इत्यर्थः। अत्र द्वयोरेव पदयोः आकाङ्क्षा न त्वेकपदस्येति स्फुटीकरणाय पदान्तरेत्युक्तम्॥ न तु पदान्तरत्वेनापि तत्कुक्षौ प्रवेश प्रयोजनाभावादिति ध्येयम्। **अन्वयाननुभावकत्वमिति** ॥ तात्पर्यविषयशाब्दबोधजनकत्वाभाव इत्यर्थः। **आकांक्षेति** ॥ तत्पदस्य तत्पदवत्त्वमित्यर्थः। तथा च यत्पदस्य यत्पदव्यतिरेकप्रयुक्तः तात्पर्यविषयशाब्दबोधजनकत्वाभावः तत्पदस्य तत्पदत्वमाकाङ्क्षेति पर्यवसितम्। अत्र घट इत्यादिवाक्यघटकप्रथमान्तघटपदस्य अंपदव्यतिरेकेण एकत्वाश्रयो घट इत्याकारकशाब्दबोधजनकतया घटपद-अंपदयोराकाङ्क्षानुपपत्तिः। अतः तात्पर्यविषयत्वं बोधविशेषणम्॥ एवं च घटपदस्य अंपदव्यतिरेकेण तात्पर्यविषयघटीया कर्मतेति बोधजनकत्वाभावात् नोक्तानुपपत्तिरिति बोध्यम्॥ पदस्येत्यादि यथाश्रुतमूलं तु न सम्यक्, आकाङ्क्षाया अभावरूपत्वपर्यवसानात्। न चेष्टापत्तिः। घटः कर्मत्वमिति वाक्यघटकघटपदेऽम्पदव्यतिरेकप्रयुक्ततादृशशाब्दबोधजनकत्वाभावरूपाकाङ्क्षायाः सत्त्वेन तज्ज्ञानात् कर्मत्वपदजन्यकर्मत्वोपस्थितिरूपकारणबलाच्च तादृशवाक्यात् घटीया कर्मतेति शाब्दबोधापत्तेः। तस्मात्तन्मूलस्य निरुक्ताकाङ्क्षापर्यवसानमावश्यकम्। अत एव आकाङ्क्षाया अभावरूपत्वे उत्थितोत्थाप्याकाङ्क्षयोः उत्कर्षापकर्षावपि न स्याताम् अभावे उत्कर्षापकर्षाभावादिति मणिकारोक्तिरपि सङ्गच्छते। इत्थं च तत्पदस्य तत्पदवत्त्वमेवाकाङ्क्षा। शेषांशस्य परिचायकत्वम्। तत्पदस्य तत्पदवत्त्वं च तत्पदाव्यवहितोत्तरतत्पदकत्वमेव। घटकर्मताबोधं प्रति घटपदाव्यवहितोत्तरांपदवत्त्वमानयनकृतिबोधं प्रति आङ्पूर्वकणीञ्धात्वव्यवहितोत्तरलोट्पदत्वमाकाङ्क्षेति पर्यवसितम्। नचैवं सति क्रियापदकारकपदयोः आकाङ्क्षा न स्यात् द्वितीयान्तघटादिपदरूपकारकपदाव्यवहितोत्तरत्वस्य लोडन्ताङ्पूर्वकणीञ्धातुरूपक्रियापदे अभावात् आनय घटमित्यादिव्युत्क्रमप्रयुक्तवाक्यस्यापि साधुत्वाच्चेति वाच्यम्, इष्टापत्तेः। नचैवं सति व्यवहितकारकक्रियापदाभ्यामभिमतशाब्दबोधापत्तिरिति वाच्यम्। पदाव्यवधानरूपवक्ष्यमाणासत्त्यभावादेव तादृशबोधापत्त्यभावात्। अधिकन्तु अस्मत्कृतमुक्तावलीप्रभायाम् अनुसन्धेयमिति दिक्। योग्यतास्वरूपमाह—**अर्थाबाध इति** ॥ अबाधितोऽर्थ इत्यर्थः। कृदभिहितन्यायात्

**मिति ॥ अविलम्बेन पदार्थोपस्थितिः संनिधिः । उच्चारणं तु तदुपयोगि-**

---

## नीलकण्ठप्रकाशिका.

संशयनिश्चयसाधारणतत्तज्ज्ञानत्वावच्छिन्नं शाब्दधीहेतुः । बाधनिश्चयाभावो योग्यतेति

## रामरुद्रीयम्.

मुक्तयोग्यताज्ञानस्य शाब्दबोधकारणत्वेनेति चेन्न । प्रत्यक्षस्थले बाधनिश्चयसत्त्वेऽपि इच्छया आहार्यविशिष्टप्रत्यक्षोत्पत्त्या तत्तत्प्रत्यक्षस्थले तत्तदिच्छामुत्तेजकीकृत्य बाधनिश्चयस्य प्रतिबन्धकत्वमङ्गीकर्तव्यमिति नैव सर्वत्र प्रतिबध्यप्रतिबन्धकभावस्संभवति । किन्तु पृथगेव शाब्दबोधादौ बाधनिश्चयस्य प्रतिबन्धकत्वाङ्गीकारात् । तथा च शाब्दबोधे बाधनिश्चयाभावस्य कारणत्वे गौरवात् योग्यताज्ञानस्यैव कारणत्वमुचितम् । अनुमितौ स्वातन्त्र्येणैव बाधनिश्चयाभावस्य प्रतिबन्धकाभावत्वेन कारणत्वादिति । विवदन्ते चात्र नवीनाः । तथा च परोक्षज्ञानसामान्य एव इच्छासत्त्वेऽपि बाधबुद्धेः प्रतिबन्धकतया प्रत्यक्षस्थले इच्छाया उत्तेजकत्वानुरोधेन बाधबुद्धेः पृथक् प्रतिबन्धकत्वेऽपि अनुमित्युपमितिशाब्दस्मृतिषु एकस्या एव बाधबुद्धेः प्रतिबन्धकतया कल्पयितुमुचितत्वेन शाब्दस्थले पृथग्बाधबुद्धेः प्रतिबन्धकताकल्पनस्यानावश्यकत्वात् उक्तयुक्तया शाब्दबोधे योग्यताज्ञानहेतुतायाः असिद्धेरिति संक्षेपः । मूले सन्निधिमाह—**पदानामिति** ॥ **अविलम्बेनेति** ॥ यावत्काल-

## नृसिंहप्रकाशिका.

बहुव्रीह्याश्रयणात् अबाधितार्थकत्वं स्वघटकैकपदप्रतिपाद्यार्थविशिष्टापरपदार्थकत्वं पर्यवसितं योग्यतेति फलितम् । पयसा सिञ्चतीतिवाक्यघटकसिच्धात्वर्थसेचनस्य तादृशवाक्यघटकतृतीयान्तपयश्शब्दार्थपयःकरणकत्वविशिष्टत्वात् तादृशवाक्यस्य योग्यतोपपत्तिः । प्राञ्चस्तु—अर्थाबाध इति । एकपदार्थे अपरपदार्थवत्त्वमित्यर्थः । नचैतादृशयोग्यतायाः अर्थनिष्ठत्वेन वाक्यनिष्ठत्वाभावात् वह्निना सिञ्चतीति वाक्यस्येव पयसा सिञ्चतीति वाक्यस्यापि अयोग्यवाक्यत्वापत्तिरिति वाच्यम् । तादृशवाक्ये स्वरूपसंबन्धेन योग्यताविरहेऽपि प्रतिपादकतासंबन्धेन योग्यतासत्त्वात् नोक्तापत्तिरित्याहुः । आसत्तिस्वरूपमाह—**पदानामिति** ॥ अभिमतशाब्दबोधजनकपदानामित्यर्थः । यथाश्रुते गिरिर्भुक्तमग्निमान् देवदत्तेन इत्यादौ गिरिर्भुक्तपदयोः अग्निमच्छब्ददेवदत्तपदयोश्च अविलम्बेनोच्चारणसत्त्वात् अनासन्नत्वानुपपत्तेः ॥ **अविलम्बेनोच्चरणमिति** ॥ अव्यवधानेनोच्चरितत्वमित्यर्थः । प्रकृतशाब्दबोधानुकूलैकपदनिष्ठतादृशापरपदनिरूपिताव्यवहितपूर्वत्वाव्यवहितोत्तरत्वान्यतरवत्त्व - रूपपदाव्यवधानमासत्तिरिति समुदितार्थः । उच्चारणन्तु तदुपयोगितयोक्तम् । न तु तस्याप्यासत्तिघटकता प्रयोजनाभावात् । एवञ्च घटमानयेत्यत्रेवानय घटमित्यत्रापि निरुक्ताव्यवधानसत्त्वात् आसन्नत्वम् । गिरिर्भुक्तं अग्निमान् देवदत्तेनेत्यादौ गिरिपदाग्निमत्पदयोः भुक्तपदतृतीयान्तदेवदत्तपदयोश्च निरुक्ताव्यवधानाभावात् अनासन्नत्वोपपत्तिः । अत्र पदानामविलम्बेनोच्चारणस्यार्थानामविलम्बेनोपस्थित्यर्थकतया तादृशोपस्थितिरेवासत्तिरित्याशयेन मूलस्य तत्परत्वमाह—**दीपिकायामविलम्बेन पदार्थोपस्थितिरिति** ॥ नन्वासत्ते-

तयोक्तम् । **गौरश्व इति** ॥ घटकर्मत्वमित्यप्यनाकाङ्क्षोदाहरणं

---

## नीलकण्ठप्रकाशिका.

नवीनमते तु स्वरूपसत्येव योग्यता तद्धेतुरिति दिक् । मीमांसकः शङ्कते—

## रामरुद्रीयम्.

विलम्बे शाब्दबोधो नानुभवसिद्धः तावत्कालेन व्यवहितं उच्चारणमित्यर्थः । ननु मौनिश्लोकादौ उच्चारणाभावेऽपि शाब्दबोधस्यानुभवसिद्धतया गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादावपि तात्पर्यसत्त्वे योजनया शाब्दबोधस्यानुभवसिद्धतया च शाब्दबोधं प्रति पदानामविलम्बोच्चारणमित्यस्याविलम्बेन द्रुततयोच्चरितपदानामित्यर्थस्त्वसंभवदुक्तिक एवेत्यालोच्य दीपिकायां सन्निधिमाह—**अविलम्बेनेति** ॥ अव्यवधानेनेत्यर्थः । अव्यवधानं च स्वप्रागभावाधिकरणप्रागभावानाधिकरणत्वे सति स्वध्वंसाधिकरणक्षणध्वंसानधिकरणो यः क्षणः तद्वृत्तित्वम् । तथाचाव्यवहितपूर्वक्षणे प्रत्युपस्थितस्वोत्पत्तिक्षणमारभ्य क्षणत्रयोत्पन्नोपस्थितेश्चाव्यवहितत्वमिति बोध्यम् । एवं च मौनिश्लोकादौ चानुमानिकपदज्ञानेन योजनया व्यवधानेन पदार्थोपस्थितावेव शाब्दबोधो नान्यथेति भावः । नन्वेवं मूलमसङ्गतं पदानामुच्चारण एवाविलम्बस्य शाब्दबोधनियामकतया तत्रोक्तत्वात् अत आह—**उच्चारणं त्विति** ॥

## नृसिंहप्रकाशिका.

रुपस्थितिरूपत्वे अविलम्बेन पदोच्चारणं व्यर्थमित्यत आह—**उच्चारणं त्विति** ॥ अविलम्बेन पदोच्चारणं त्वित्यर्थः । अवधारणार्थकतुशब्दः तदुपयोगितयेत्युत्तरं योज्यः ॥ **तदुपयोगितयेति** ॥ अविलम्बेन पदार्थोपस्थितिसंपादकतयैवेत्यर्थः ॥ तथा च अविलम्बेन पदार्थोपस्थितिरूपासत्तेः स्वरूपसत्तया हेतुत्वस्वीकारेणैव निर्वाहे आसत्तेः पदाव्यवधानरूपत्वमङ्गीकृत्य तज्ज्ञानस्य शाब्दबोधहेतुत्वे प्रमाणाभाव इति भावः । अस्मद्गुरुचरणास्तु—घटमानयेत्यादौ घटादिपदज्ञानाधीनघटकर्मत्वाद्युपस्थितेः लोट्पदज्ञानाधीनकृत्युपस्थितिकाले नाशेन कारणाभावादभिमतशाब्दबोधानुपपत्त्या चरमपदज्ञानस्य उद्बोधकत्वमङ्गीकृत्य तादृशोद्बोधसहकृतघटादिविषयसंस्कारैश्चरमपदार्थविषयकस्मृतेः घटादिसकलपदार्थविषयकत्वमङ्गीकृत्याभिमतशाब्दबोधस्समर्थनीयः । एवञ्च घटः कर्मत्वमित्यादिवाक्यात् उक्तरीत्या घटकर्मत्वादिसकलपदार्थस्मृतावपि निरुक्ताकाङ्क्षाज्ञानरूपकारणाभावात् यथाभिमतशाब्दबोधाभावः । यथा वह्निना सिञ्चतीत्यादौ उक्तरीत्या तावदर्थविषयकस्मृतावपि तादृशवाक्ये निरुक्तयोग्यताया अभावात् अभ्रान्तस्य तज्ज्ञानरूपकारणाभावेनाभिमतशाब्दबोधाभावः तथा गिरिर्भुक्तं अग्निमान् देवदत्तेनेत्यादौ उक्तरीत्या तावत्पदार्थविषयकस्मृतावपि तत्र पदाव्यवधानरूपासत्त्यभावात् अभ्रान्तस्य तज्ज्ञानरूपकारणाभावेनैवाभिमतशाब्दबोधाभावस्समर्थनीयः । आसत्तेरव्यवधानेन पदार्थोपस्थितिरूपत्वमते उक्तस्थलेऽपि तादृशासत्तिरूपकारणसत्त्वेन तत्रानुभवसिद्धाभिमतशाब्दबोधाभावसमर्थनं दुर्घटम् । न च गिरिभुक्तमित्यादिवाक्यघटकतृतीयान्तदेवदत्तपद-

**द्रष्टव्यम् । वाक्यं विभजते—वाक्यमिति ॥ वैदिकस्य विशेषमाह—वैदिकमीश्वरोक्तत्वादिति ॥ ननु वेदस्यानादित्वात्कथमीश्वरोक्तत्वमिति चेन्न । 'वेदः पौरुषेयः वाक्यसमूहत्वात् भारतादिवत्' इत्यनुमानेन**

---

## नीलकण्ठप्रकाशिका.

**नन्विति** ॥वेदस्य ईश्वरोक्तत्वमनुमानेन व्यवस्थापयति—**वेद इति** ॥ ननु 'अष्टादशपु-

## रामरुद्रीयम्.

पदानामव्यवधानेन उच्चारणे पदजन्यपदार्थोपस्थितेरप्यव्यवधानस्यौत्सर्गिकत्वादिति भावः । ननु गौरश्व इत्याद्यनाकाङ्क्षोदाहरणं मूलोक्तं न सङ्गच्छते अभेदसंबन्धेन तयोः शाब्दबोधस्य योग्यताविरहेणैव वारयितुं शक्यत्वात् । भेदसंबन्धेन तयोरन्वयबोधःअशक्यः। अप्रसिद्धत्वात् प्रसिद्धस्यैव कार्यस्य कॢप्तसामग्रीबलेनापादयितुं शक्यत्वादित्यस्वरसेन दीपिकायामनाकाङ्क्षोदाहरणान्तरमाह—**घटकर्मत्वमिति** ॥ **वैदिकस्य लक्षणमाहेति** ॥ **ईश्वरोक्तत्वादिति**॥ ईश्वरोक्तत्वमेव वैदिकानां लक्षणमिति भावः। मीमांसकश्शङ्कते—**नन्विति**॥ समाधत्ते—**वेद इति** ॥ **न वेति** ॥ स्मर्यमाणकर्तृकत्वमुपाधिर्नेत्यर्थः । अत्रैव हेतुमाह—

## नृसिंहप्रकाशिका.

रूपचरमपदज्ञानस्य उद्बोधकत्वानङ्गीकारेण तावत्पदार्थविषयकस्मरणानुपपत्त्या आसत्तिरूपकारणाभावादेवाभिमतशाब्दबोधाभावस्संभवतीति वाच्यम् । तथा सति तत्तदर्थविषयकशाब्दबोधं प्रति तत्तदर्थविषयकस्मृतेः हेतुतायाः सर्वमतसिद्धायाः अभावेनैव तादृशवाक्यादभिमतशाब्दबोधवारणादासत्तेश्शाब्दबोधहेतुताविलयप्रसङ्गात् । तस्मादासत्तेः पदाव्यवधानत्वमङ्गीकृत्य तज्ज्ञानस्य शाब्दबोधहेतुत्वमेव मूलकारानुमतम् । एवं सति आकाङ्क्षा योग्यता सन्निधिश्च वाक्यार्थज्ञानहेतुरिति मूलस्य आकाङ्क्षादीति प्रतीकं धृत्वा आकाङ्क्षादिज्ञानमित्यर्थ इति ग्रन्थेन मूलोक्ताकाङ्क्षादिपदानामाकाङ्क्षादिज्ञानपरत्वं अङ्गीकृत्य व्याख्याय पश्चात् पदानामविलम्बेन उच्चारणं सन्निधिरिति मूलस्य पदानामितीति प्रतीकं धृत्वा अव्यवधानेन पदार्थोपस्थितिः आसत्तिः उच्चारणन्तु तदुपयोगितयोक्तमिति ग्रन्थेनासत्तेरुपस्थितिरूपायाः दूषितायाः स्वरूपासत्त्या हेतुत्वस्य मूलकाराभिप्रायविषयत्ववर्णनं दीपिकाकारस्य स्वीयव्याख्यायां पूर्वोत्तरविरोधास्फुरणप्रयुक्तमिति व्याचक्रुः । नन्वाकाङ्क्षादिज्ञानस्य शाब्दसामान्यहेतुत्वे आकाङ्क्षादिरहितवाक्यात् अभ्रान्तस्य शाब्दबोधानुपपत्तिरित्याशङ्कामिष्टापत्त्या परिहरति—**मूले आकांक्षादिरहितवाक्यमिति** ॥ आकाङ्क्षादित्रयशून्यवाक्यसामान्यमित्यर्थः । **अप्रमाणमिति** ॥ अभ्रान्तस्य शाब्दबोधजननासमर्थमित्यर्थः । तथाचाभ्रान्तस्य तादृशवाक्यात् शाब्दबोधानुपपत्तिः इष्टैवेति भावः । आकाङ्क्षादिरहितवाक्यानि क्रमेणोदाहरति—**यथेति** ॥ **अप्रमाणमिति** ॥ इत्याकारकवाक्यं अभ्रान्तस्य शाब्दबोधजननासमर्थमित्यर्थः । तत्र हेतुमाह—**आकांक्षादिरहितत्वादिति** ॥ गोपद।

**पौरुषेयत्वसिद्धेः । न च स्मर्यमाणकर्तृकत्वमुपाधिः, गौतमादिभिः शिष्यपरम्पर-**

---

## नीलकण्ठप्रकाशिका.

राणानां कर्ता सत्यवतीसुतः' इति वैजयन्त्यादिप्रमाणबलेन भारतादौ कर्ता उपलभ्यते। नहि तथा वेदे। तथा च स्मर्यमाणकर्तृकत्वस्य भारतादौ साध्यव्यापकत्वेन पक्षे साधनाव्यापकत्वेन च कथमिदमनुमानं साधकं भवेदित्याशङ्कते—**न चेति** ॥ गौतमादिभिः शिष्यपरम्परया वेदे

## रामरुद्रीयम्.

**गौतमादिभिरिति**॥ तथा च साधनाव्यापकत्वविरहात् न सोपाधिकत्वमिति भावः। वेदस्य

## नृसिंहप्रकाशिका.

स्याश्वपदव्यतिरेकप्रयुक्तान्वयाननुभावकत्वाभावेन तत्पदस्य तत्पदवत्त्वरूपाकाङ्क्षाया अभावादिति भावः । अत्र गौरश्व इत्यादौ अभेदसंसर्गकबोधस्य तात्पर्यविषयत्वे बाधितार्थकत्वादयोग्यवाक्यत्वमेव । आधेयतासंसर्गकबोधस्य तात्पर्यविषयत्वे भूतलं घट इत्यादिवाक्यादाधेयतासंसर्गकभूतलादिप्रकारकघटादिविशेष्यकशाब्दबोधापत्तिवारणाय।धेयतासंसर्गकनामार्थनिष्ठविशेष्यताशालिशाब्दबोधं प्रति नामनिष्ठसप्तम्यन्तनामपदाव्यवधानरूपासत्तिज्ञानस्य हेतुताया आवश्यकतया अश्वपदे सप्तम्यन्तगोपदाव्यवधानाभावादनासन्नवाक्यत्वमेव। एवञ्च नामपदयोः कारकपदक्रियापदयोश्चायोग्यत्वानासन्नत्वाभ्यामेवाप्रमाणत्वं वाच्यमिति गौरश्व इत्यादिवाक्यानामनाकाङ्क्षोदाहरणत्वमयुक्तमित्याशयेन स्वयमनाकाङ्क्षोदाहरणमाह—**दीपिकायां घटकर्मत्वमिति**॥ अनासन्नवाक्यमुदाहरति—**मूले प्रहरे प्रहर इति** ॥ इदञ्च पदानामसहोच्चरितत्वसंपादकं न त्वेकस्मिन्प्रहरे एकपदोच्चारणमपरस्मिन्प्रहरे अपरपदोच्चारणमित्यत्र तात्पर्यम्। तथा सति अव्यवहितपूर्वपदार्थोपस्थितिरूपकारणविरहेणैव शाब्दबोधवारणे आसत्तिज्ञानस्य हेतुताविलयप्रसङ्गात्। तथाच प्रकृतशाब्दबोधानुकूलैकपदोच्चारणाव्यवहितोत्तरक्षणोच्चरिततादृशशाब्दबोधाननुकूलयत्किञ्चित्पदोच्चारणाव्यवहितोत्तरक्षणोच्चरितानि प्रकृतशाब्दबोधानुकूलपदानीति फलितार्थः॥ **गामानयेत्यादिपदानीति** ॥ गां पिधेहि आनय द्वारमितिवाक्यघटकगोपदानयपदादीनि द्वारपदपिधेहीतिपदानीति चेत्यर्थः । **सान्निध्याभावात्** ॥ निरुक्ताव्यवधानरूपासत्त्यभावादित्यर्थः । आप्तवाक्यं शब्द इति पूर्वग्रन्थेन आप्तोच्चरितवाक्यस्य प्रमाणशब्दत्वकथनात् अनाप्तोच्चरितशब्दस्याप्रमाणत्वं सूच्यते। एतदुभयं लौकिकवाक्यस्यैव न तु वेदस्येति स्फुटीकरणाय वाक्यसामान्यं विभजते—**वाक्यं द्विविधमिति** ॥ वाक्यसामान्यं प्रकारद्वयान्यतरविशिष्टाभिन्नमित्यर्थः । प्रकारद्वयमाह—**वैदिकं लौकिकञ्चेति** ॥ वैदिकादिशब्दस्य वैदिकत्वादिधर्मपरतया इतिशब्दस्याभेदार्थकतया च तस्य प्रकारद्वयान्वयस्वीकारात् वैदिकत्वलौकिकत्वाभिन्नप्रकारद्वयान्यतरविशिष्टं वाक्यसामान्यमिति समुदितार्थः । वेदवाक्यस्य द्वैविध्याभावमुपपादयति—**वैदिकमिति** ॥ वेदवाक्यमित्यर्थः । वैदिकं सर्वमीश्वरोक्तत्वात् प्रमाणमेवेति योजना ॥ **ईश्वरोक्तत्वादिति** ॥ ईश्वरस्य सर्वज्ञत्वेन यथार्थज्ञानवत्त्वात्

**या वेदेऽपि सकर्तृकत्वस्मरणेन साधनव्यापकत्वात् । 'तस्मात्तेपानात्त्रयो वेदा अजायन्त' इति श्रुतेश्च । ननु वर्णा नित्याः, स एवायं गकार इति प्रत्यभि-**

---

## नीलकण्ठप्रकाशिका.

कर्तुरुपपे नन्वेवदन्तं प्रत्याह—**तस्मादिति** ॥ **स एवायं गकार इति** ॥ अत्र एतत्कालि-

## रामरुद्रीयम्.

सकर्तृकत्वे आगमोऽपि प्रमाणमित्याह—**तस्मात्तेपानादिति** ॥ तथा च वेदेनेश्वरकर्तृकत्वं वेदे बोधितमिति न साधनाव्यापकत्वमुक्तोपधिः शङ्कास्पदमिति भावः । वर्णमात्रस्य नित्यत्ववादिमीमांसकश्शङ्कते—**नन्विति** ॥ समाधत्ते—**नेति** ॥ नन्वेवं सोऽयं गकार

## नृसिंहप्रकाशिका.

आप्तत्वेन तदुच्चरितवेदसामान्यस्य प्रमाणत्वमिति समुदितार्थः । तथाचेश्वरस्य यथार्थज्ञानवत्त्वात् तदुच्चरितवेदस्य प्रमाजन्यत्वेन प्रमाकरणत्वम् । ईश्वरस्य भ्रान्तिरहितत्वात् वेदस्य भ्रमजन्यत्वाभावेनाप्रमाणत्वाभाववत्त्वं चाव्याहतमिति भावः । लौकिकस्य द्वैविध्यमुपपादयति—**लौकिकन्त्विति** ॥ तुशब्दः अवधारणार्थकः । आप्तोक्तं लौकिकं प्रमाणं अनाप्तोक्तं लौकिकमप्रमाणमिति योजना । यथार्थज्ञानजन्यवेदभिन्नवाक्यं प्रमाकरणं, भ्रमजन्यवेदभिन्नवाक्यं प्रमाकरणभिन्नमेवेति समुदितार्थः । तथा च वेदभिन्नवाक्यस्य द्वैविध्यं निराबाधमिति भावः । अत्र वेदस्य नित्यत्वात् तस्य प्रामाण्यसाधकहेतुः स्वरूपासिद्ध इति मीमांसकैकदेशाशङ्कते—**दीपिकायां नन्वित्यादिना** ॥ **अनादित्वादिति** ॥ नित्यत्वादित्यर्थः । **पौरुषेय इति** ॥ पुरुषप्रणीत इत्यर्थः । जन्य इति यावत् । **वाक्यसमूहत्वादिति** ॥ वाक्यत्वात् । तत्र हेतौ समूहत्वांशस्य व्यर्थत्वमिति हृदयम् । **भारतादिवत्** ॥ आदिपदेन पुराणादेः परिग्रहः । **स्मर्यमाणकर्तृकत्वमिति** ॥ ज्ञायमानकर्तृकत्वमित्यर्थः । स्मृतित्वरूपविशेषणरूपेण निवेशे प्रयोजनाभावादिति हृदयम् ॥ **उपाधिरिति** ॥ तस्य पौरुषेयत्वरूपसाध्यव्यापकत्वाद्वेदे कर्तृविशेषजन्यत्वाज्ञानेन पक्षान्तर्भावेन वाक्यत्वरूपसाधनाव्यापकत्वादिति भावः । **गौतमादिभिरिति** ॥ गौतमादिशिष्टाद्युच्चरितवाक्यैरित्यर्थः । **वेदेऽपि सकर्तृकत्वस्मरणेनेति** ॥ अध्ययनवतामित्यादिः । वेदकर्तुरपि ज्ञानसंभवदिवेत्यर्थः । ननु सर्वेषामध्ययनवतां तद्वाक्यश्रवणाभावात् कथं वेदकर्तुर्ज्ञानमत आह—**शिष्यपरम्परयेति** ॥ शिष्यप्रशिष्यद्वारेत्यर्थः । तथाच गौतमादीनां सर्वज्ञतया तदुच्चरितवाक्यानां प्रमाणत्वेन वेदवक्ता ईश्वर इत्याकारकतदुच्चरितवाक्यश्रवणेन गौतमादिशिष्याणां वेदकर्तृज्ञानं संभवति । अनन्तरं वेदवक्ता ईश्वर इति गौतमादिभिः उक्तमिति शिष्योच्चरितवाक्यश्रवणेन तच्छिष्याणमपि वेदकर्तुः ज्ञानमिति रीत्या अध्ययनवतां सर्वेषामपि वेदकर्तृज्ञानसंभवेन साधनव्यापकतया स्मर्यमाणकर्तृकत्वस्योपाधित्वासंभवेन वाक्यत्वहेतोः अदुष्टत्वात् तेन हेतुना पौरुषेयत्वसाधनसंभवात् वेदस्यानादित्वं सुदूरपराहतमिति भावः । एतावता वेदस्य पौरुषेयत्वे अनु-

ज्ञाबलात् । तथा च कथं वेदस्यानित्यत्वमिति चेन्न, 'उत्पन्नो गकारो विनष्टो गकार' इत्यादिप्रतीत्या वर्णानामनित्यत्वात्, 'सोऽयं गकार' इति प्रत्यभिज्ञायाः 'सेयं दीपज्वाला' इतिवत्साजात्यावलम्बनत्वात्, वर्णानां नित्यत्वेऽप्यानु-

---

## नीलकण्ठप्रकाशिका.

कगकारे पूर्वकालिकगकाराभेदो भासते । स च वर्णानामनित्यत्वे न संभवतीति भावः । **अनित्यत्वादिति** ॥ तर्हि प्रत्यभिज्ञाविरोध इत्यत आह—**सोऽयमिति** ॥ उत्पत्तिविनाशप्रत्यययोरन्यार्थकत्वकल्पनापेक्षया तत्प्रत्ययस्य तथात्वकल्पने लाघवमिति हृदयम् । 'अग्निमीळे' इत्यादावानुपूर्वी—अकारोत्तरगकारोत्तरनत्वादिरूपा । तत्रोत्तरत्वमव्यवहितोत्तरक्षणवृत्तित्वं वाच्यम् । इत्थं च वर्णानां अनित्यत्वानङ्गीकारेऽप्यनित्यक्षणघटिताया आनुपूर्व्या अनित्यत्वात्तद्विशिष्टवाक्यसमुदायात्मकवेदस्य त्वदभिहितनित्यत्वं न सिध्यतीति वर्णानामनित्यत्वमेवोचितमित्याह—**वर्णानामिति** ॥ यद्यपि स्मृत्यादीनामाप्तोक्तत्वादेव

## रामरुद्रीयम्.

इति प्रत्यभिज्ञायाः का गतिरित्यत आह—**सोऽयमिति** ॥ सेयं दीपज्वालेतिवत् अग्नेः क्षणद्वयावस्थायित्वेन दीपज्वालापरम्परायां सेयमित्याकारिकायाः प्रतीतेः अभेदावगाहित्वं न संभवतीति तज्जातीयावगाहित्वमेव त्वयाप्यङ्गीकर्तव्यमिति भावः । प्रकृतेऽपि तथैवाङ्गीकरणीयमिति भावः । तुष्यतु दुर्जन इति न्यायेन वर्णानां नित्यत्वमभ्युपेत्यापि वेदस्यानित्यत्वं व्यवस्थापयन्नाह—**वर्णानामिति** ॥ अयं

## नृसिंहप्रकाशिका.

मानप्रमाणमुपन्यस्य श्रुतिमपि प्रमाणयति—**तस्मादिति** ॥ **तेपानादिति** ॥ तपोविशेषादित्यर्थः । अत्र वर्णानान्नित्यत्वात् वर्णसमुदायरूपवेदस्यापि नित्यत्वमावश्यकमिति मीमांसकमतमुपन्यस्य दूषयति—**नन्वित्यादिना** ॥ वर्णानान्नित्यत्वे प्रमाणमाह—**स एवायमिति** ॥ **इति प्रत्यभिज्ञाबलादिति** ॥ इत्याद्याकारकप्रत्यक्षप्रमाबलादित्यर्थः । **तथाचेति** ॥ निरुक्तप्रमया वर्णानां नित्यत्वासिद्धौ चेत्यर्थः । **कथं वेदस्यानित्यत्वमिति** ॥ तथाच सोऽयं देवदत्त इति प्रत्यभिज्ञाबलात् कालान्तरदेशान्तरवृत्तित्वोपलक्षितदेवदत्ताभेदः एतत्कालैतद्देशवृतित्वोपलक्षितदेवदत्ते यथा सिध्यति तथा ईदृशप्रत्यभिज्ञाबलात् पूर्वकालीनत्वोपलक्षितगकाराद्यभेदोऽपि एतत्कालीनत्वोपलक्षितगकारादौ सिध्यति । एवञ्च वर्णानां क्षणिकत्वे सिद्धतादृशाभेदस्यानुपपत्त्या नित्यत्वमवश्यमङ्गीकार्यमिति भावः । **इति प्रतीत्येति** ॥ इत्याकारकप्रतीत्यन्यथानुपपत्त्येत्यर्थः । **अनित्यत्वादिति** ॥ अनित्यत्वाङ्गीकारस्यावश्यकत्वादित्यर्थः । नन्वेवं सति निरुक्तप्रत्यभिज्ञायाः कथमुपपत्तिरत आह—**सोऽयमित्यादि** ॥ **साजात्यावलम्बनत्वादिति** ॥ तज्जातीयाभेदविषयकत्वस्वीकारादित्यर्थः ।

पूर्वीविशिष्टवाक्यस्यानित्यत्वाच्च । तस्मादीश्वरोक्ता वेदाः । मन्वादिस्मृतीना-

---

## नीलकण्ठप्रकाशिका.

प्रमाणत्वं सिध्यति, तत्कर्तृमन्वादीनामाप्तत्वात्, तथापि तेषामाप्तत्वे विप्रतिपन्नं प्रत्याह—**मन्वादीति** ॥ **आचाराणामिति** ॥ आचारप्रतिपादकविशिष्टवाक्यानामित्यर्थः । एतेन प्रमाणविभागव्याघातशङ्का निरस्ता । वेदार्थं ज्ञात्वैव मन्वादिभिः तदर्थकस्मृत्यादीनि

## रामरुद्रीयम्.

भावः । सर्ववर्णानां नित्यत्वेऽपि अयमेतत्कृतो ग्रन्थ इति व्यवहारस्यानुपूर्वीविशेषोपपादकतयैवोपपादनीयतया वेदगतानुपूर्वीविशेषस्यापि ईश्वरपरिकल्पिततया तस्येश्वरकर्तृकत्वोपपत्तिः । माला अनेन कृतेत्यादाविव विशेष्यस्य पुष्पादेस्सिद्धत्वेऽपि सन्दर्भरूपतद्गतविशेषणस्य पुरुषकर्तृकत्वमादायैव विशिष्टे पुरुषकर्तृकत्वस्य व्यवहारवद्विशेष्यीभूतवर्णानां नित्यत्वेऽपि तद्गतानुपूर्वीविशेषेणेश्वरकर्तृकत्वमादायैवानुपूर्वीविशेषविशिष्टवर्णात्मकवेदस्यापीश्वरकर्तृकत्वोपपत्तेरिति । उपसंहरति—**तस्मादिति** ॥ **ईश्वरोक्तः** ॥ ईश्वरकर्तृक

## नृसिंहप्रकाशिका.

तथा च पूर्वसंवत्सरीयकृत्तिकादीपज्वालायाः एतत्संवत्सरीयकृत्तिकादीपज्वालायाश्च भिन्नतया तयोरभेदावगाहिनिरुक्तप्रत्यभिज्ञायाः प्रामाण्यानुपपत्त्या तज्जातीयाभेदविषयकत्वमङ्गीकृत्य यथा प्रामाण्योपपत्तिः कृता तथा उत्पन्नो गकार इत्यादिप्रतीत्या वर्णानामनित्यत्वसिद्धेः पूर्वकालवृत्तिगकारस्य एतत्कालवृत्तिगकारस्य च भिन्नतया तयोरभेदावगाहिसोऽयंगकारइत्यादिप्रत्यभिज्ञायाः अप्रामाण्यानुपपत्त्या तज्जातीयाभेदविषयकत्वमङ्गीकृत्यैव प्रामाण्योपपादनं आवश्यकमिति भावः । ननु स एवायं गकार इत्यादिप्रतीतेः वर्णानां नित्यत्वाङ्गीकार आवश्यकः । नच तत्प्रतीतेः सेयन्दीपज्वालेतिप्रतीतिवत् साजात्यावलम्बनत्वमुक्तमेवेति वाच्यम् । पूर्वकार्तिकदीपज्वालायाः वर्तमानकार्तिकदीपज्वालायाश्च प्रत्यक्षसिद्धभेदान्यथानुपपत्त्या सेयन्दीपज्वालेतिप्रत्यभिज्ञायाः सजातीयत्वावलम्बनावश्यकत्वेऽपि स एवायं गकार इति प्रत्यभिज्ञायाः सजातीयावलम्बनत्वे प्रमाणाभावः । अन्यथा सोऽयं देवदत्त इति प्रत्यभिज्ञाया अपि सजातीयावलम्बनत्वापत्तेः । नचोत्पन्नो गकार इत्यादिप्रतीतिरेव वर्णानान्नित्यत्वबाधिकेति वाच्यम् । वर्णस्य तद्व्यञ्जकध्वनेश्च भेदाग्रहात् तत्प्रतीतेः ध्वनिनिष्ठोत्पत्त्यादिविषयकत्वेन भ्रमत्वात् ॥ अन्यथा शरीरशरीरिणोः भेदाग्रहात् स्थूलोऽहं कृशोऽहमिति प्रतीत्या जीवस्य स्थौल्यादिसिद्ध्यापत्तेः । तस्माद्वर्णानामनित्यत्वमावश्यकमिति शङ्कायां तत्पक्षेऽपि प्रकारान्तरेण वेदस्य अनित्यत्वं साधयति—**वर्णानामिति** । **नित्यत्वेऽपीति** ॥ नित्यत्वपक्षेऽपीत्यर्थः ॥ **अनित्यत्वाच्चेति** ॥ रचनाविशेषरूपानुपूर्व्या अनित्यत्वेन तद्विशिष्टवाक्यस्याप्यनित्यत्वावश्यकत्वाच्चेत्यर्थः । **तस्मादिति** ॥ उक्तरीत्या वाक्यसामान्यस्यानित्यत्वेन वाक्यविशेषरूपपदस्याप्यनित्यत्वादित्यर्थः । **ईश्वरोक्ता वेदा इति** ॥ तथा च चैत्रान्यानेककर्तृकाण

**माचाराणां च वेदमूलकतया प्रामाण्यम् । स्मृतिमूलवाक्यानामिदानीमनध्ययनात्तन्मूलभूता काचिच्छाखोत्सन्नेति कल्प्यते । ननु पठ्यमानवेदवाक्यो-**

---

## नीलकण्ठप्रकाशिका.

विरचितानि । अतस्तेषां प्रामाण्यमिति मनसि कृत्वाह—**वेदमूलकतयेति** ॥ ननु तर्हि स वेदः कुतो नोपलभ्यत इत्यत आह—**स्मृतिमूलेति** ॥ **तन्मूलेत्यादि** ॥ स्मृत्यादि-

## रामरुद्रीयम्

इत्यर्थः । ननु लौकिकेऽर्थे यथार्थवक्तृत्वस्य प्रमाणान्तरेण निश्चयसंभवेऽपि अलौकिकेऽर्थे तत्त्वस्य दुर्निश्चयतया प्रमाणान्तरेण ईश्वरस्य नित्यसर्वविषयकज्ञानवत्त्वसिद्धावेव ईश्वरस्य तत्तदलौकिकार्थे यथार्थवक्तृत्वमुपपादनीयम् । एवं मन्वादिस्मृतीनां अलौकिकार्थे आप्तोक्तत्वस्य दुर्निश्चयतया स्मृतीनां कथं प्रामाण्यनिश्चय इत्याशङ्क्याह—**मन्वादीति** ॥ **तन्मूलकतया** वेदमूलकतया । वेदप्रतिपादितार्थप्रतिपादकतयेति यावत् । **प्रामाण्यम्** ॥ प्रामाण्यनिश्चय इत्यर्थः । ननु स्मृतिसमानार्थकवेदभागस्य इदानीमनुपलभ्यमानत्वेऽपि स्मृतेः तन्मूलकत्वेन प्रामाण्यं कथं संभवदुक्तिकमित्यत आह—**स्मृतिमूलेति** ॥ ननु

## नृसिंहप्रकाशिका.

पुष्पाणां चैत्रकर्तृकत्वाभावेऽपि तादृशपुष्परचनायाः चैत्रकर्तृकत्वेन तद्विशिष्टमालाया अपि यथा चैत्रकर्तृकत्वं तथा वर्णानां नित्यत्वेन ईश्वरकर्तृकत्वाभावेऽपि रचनाविशेषरूपवर्णानुपूर्व्याः ईश्वरकर्तृकत्वेन तद्विशिष्टवाक्यरूपवेदस्यापि ईश्वरोक्तत्वमावश्यकमिति भावः । ननु मन्वादिस्मृतीनां होलकाद्याचाराणां च ईश्वरोक्तत्वाभावेनाप्रमाणतया तेषां प्रवर्तकत्वानुपपत्तिः । न च मन्वादीनां सर्वज्ञानां यथार्थज्ञानवत्त्वरूपाप्तत्वसत्त्वात् स्मृतीनां तदुच्चारितत्वेनाचाराणां च तदनुष्ठितत्वेन प्रामाण्यसंभवात् नोक्तानुपपत्तिरिति वाच्यम् । तेषां सर्वज्ञत्वेऽपि तदीयज्ञानानां क्षणिकत्वेन कदाचिद्भ्रमस्यापि संभवेन स्मृत्यर्थविषये आचारविषये च यथार्थज्ञानवत्त्वरूपाप्तत्वसन्देहाहितस्य तत्कर्तृकस्मृतिप्रामाण्यसन्देहस्य तदनुष्ठिताचारप्रामाण्यसन्देहस्य च संभवात्तेषां प्रवर्तकत्वानुपपत्तिः दुर्वारैवेत्यत आह—**मन्वादिस्मृतीनामिति** ॥ मन्वादिकर्तृकस्मृतीनामित्यर्थः । **आचाराणां चेति** ॥ तदनुष्ठितहोलकाद्याचाराणां चेत्यर्थः । **वेदमूलकतयेति** ॥ वेदार्थप्रतिपादकतया वेदबोधिततया चेत्यर्थः । **प्रामाण्यमिति** ॥ प्रमापकत्वमित्यर्थः । तथाच प्रवर्तकत्वमव्याहतमिति भावः । नन्विदानीमध्ययनाभावात् तन्मूलवेदे प्रमाणाभाव इत्यत आह—**स्मृतिमूलवाक्यानामिति**॥ स्मृत्यर्थप्रतिपादकवेदानामित्यर्थः। इदमुपलक्षणम् । आचारबोधकवेदानां चेत्यपि बोध्यम् । **इदानीमध्ययनाभावादिति** ॥ वर्तमानकालावच्छेदेन पठ्यमानत्वाभावादित्यर्थः । इदानीमसत्त्वेऽपीति शेषः । **तस्मात्तन्मूलभूतेति** ॥ स्मृतिमूलभूता आचारमूलभूता चेत्यर्थः ।**काचिच्छाखोत्सन्नेति** ॥ उत्सन्ना काचित् शाखेति योजना । इदानीमपठ्यमाना काचिच्छाखा पूर्वमस्तीत्यर्थः । **इति कल्प्यत इति** ॥ इति

त्सादनस्य कल्पयितुमशक्यतया विप्रकीर्णवादस्यायुक्तत्वान्नित्यानुमेयो वेदो मूलमिति चेन्न, तथा सति कदापि वर्णानामानुपूर्वीज्ञानासंभवेन बोधकत्वासंभवात् ।

---

## नीलकण्ठप्रकाशिका.

मूलभूता काचिच्छाखा पाठतः परिभ्रष्टेत्यनुमीयत इत्यर्थः । **वाक्योत्सादस्य** वाक्योच्छेदस्य । ननु समानानुपूर्वीकवेदपाठस्य संप्रदायसिद्धत्वात्तादृशवेदे कतिपयवाक्योच्छेदस्य कल्पयितुमशक्यत्वेऽपि पठ्यमानवेद एव विशकलिततया विद्यमानवाक्यानां स्मृतिमूलत्वमस्तीत्यत आह—**विप्रकीर्णेति** ॥ **अयुक्तत्वादिति** ॥ स्मृत्यादिसमानार्थकवाक्यानां पठ्यमानवेदेऽनुपलम्भादिति भावः । **नित्यानुमेय इति** ॥ नित्योऽनुमेयरूप इत्यर्थः । **वर्णानुपूर्वीज्ञानाभावेनेति** ॥ तादृशज्ञानस्यापि शाब्दबोधहेतुत्वात् । अन्यथा

## रामरुद्रीयम्.

यदाकदाचित् पठ्यमानवेदस्य शिष्यपरम्परया प्रसिद्धेरावश्यकतया पठ्यमानशाखायाः उच्छेदः कल्पयितुमशक्यः । नच प्रागध्ययनसत्त्वेऽपि परम्पराविच्छेदात् कस्यचित् भागस्य इदानीं विच्छेदस्संभवत्येवेति वाच्यम् । तथा सति पठ्यमानसर्ववेदानामप्युक्तरीत्या भेदसंभवेन केषांचित् परम्परोच्छेदः केषांचित् नेति वैषम्यकल्पनायाः नियामकाभावेनानुचितत्वात् । तस्मात् स्मृतिमूलभूतवेदभागो नित्यानुमेय एवाङ्गीकरणीयः । न कदापि पठ्यमानस्य उच्छेद इत्याशङ्कते—**नन्वित्यादिना** ॥ समाधत्ते—**नेति** ॥ **तथा सति** ॥ नित्यानुमेयत्वे सति इत्यर्थः । **बोधकत्वासंभवादिति** ॥ आनुपूर्वीप्रकारक-

## नृसिंहप्रकाशिका.

स्वीक्रियत इत्यर्थः । तथाच तन्मूलभूतवेदानङ्गीकारे स्मृतीनामाचाराणाञ्च सर्वानुभवसिद्धप्रमापकत्वप्रयुक्तप्रवर्तकत्वान्यथानुपपत्त्या इदानीमविद्यमानत्वेन इदानीमपठ्यमानाया अपि मन्वादिभिः पठ्यमानतन्मूलभूतशाखायाः पूर्वमस्तित्वमवश्यं स्वीकार्यमिति भावः । अत्र केषाञ्चिद्वेदानां अनित्यत्वेऽपि कस्यचिद्वेदस्य नित्यत्वावश्यकतया तस्येश्वरोच्चरितत्वं न संभवतीत्येकदेशिमतं उपन्यस्य दूषयति—**नन्वित्यादिना** ॥ **पठ्यमानवेदवाक्योत्सादनस्येति** ॥ अध्ययनकर्मत्वेन प्रसिद्धवेदघटकयत्किञ्चिद्वेदवाक्यनाशस्येत्यर्थः । **कल्पयितुमशक्यतयेति** ॥ कल्पनायाः अप्रामाणिकतयेति तात्पर्यार्थः । **विप्रकीर्णवादस्येति** ॥ स्मत्याचारमूलभूतवेदः शिथिलः इति व्यवहारस्यापीत्यर्थः । **अयुक्तत्वादिति** ॥ अप्रामाणिकत्वादित्यर्थः । **नित्यानुमेय इति** ॥ नित्योऽनुमितिविषयश्चेत्यर्थः । **वेद इति** ॥ वेद एवेत्यर्थः ॥ **मूलमिति** ॥ स्मृत्याचाराणामित्यादिः । प्रामाण्यव्यवस्थापकमित्यर्थः । तथा च पठ्यमानवेदानां रावणभट्टादिप्रमाणेन कतिपयसहस्रसंख्याकत्वेन प्रमितत्वात् तादृशवेदघटकयत्किञ्चिद्वाक्यशैथिल्यकल्पनाया एवाप्रामाणिकतया नितरां स्मृत्याचारप्रवर्तकपठ्यमानवेदघटकवेदः शिथिल इति व्यवहारस्याप्रामाणिकत्वम् । तस्मात्पठ्यमानवेदबहिर्भूतः शिष्टाचाराद्यनुमितिविषयः नित्यो वेद एव स्मृत्याचा-

## नीलकण्ठप्रकाशिका.

नदीदीनादिशब्दैरर्थविशेषबोधानापत्तेरिति भावः । शब्दस्य प्रमाणत्वमनङ्गीकुर्वतां वैशेषि-

## रामरुद्रीयम्.

शब्दज्ञानस्यैव शाब्दबोधहेतुत्वमावश्यकम् । अन्यथा वेदत्वेन वेदज्ञानात् सकलवेदार्थ-विषयकशाब्दबोधप्रसंग इति भावः । तथा च वेदानां अबोधकत्वे तद्बोध्यार्थबोधकत्व-

## नृसिंहप्रकाशिका.

रमूलभूत इत्यवश्यमङ्गीकार्यः । एवं च अनुमितवेदस्य लाघवात् नित्यत्वस्यापि सिद्ध्या तस्येश्वरोच्चरितत्वं बाधितमिति भावः । **वर्णानुपूर्वीज्ञानाभावेनेति** ॥ अत्र वर्णपदं पदवाक्योपलक्षकम् । तथाच अनुमितवेदस्याकारोत्तरगकारोत्तरत्वादिरूपवर्णानुपूर्वीवि-शिष्टाग्निमीलइत्याकारकत्वं वकारोत्तरहकारोत्तरत्वादिरूपानुपूर्वीविशिष्टवह्निमित्याकारक-त्वं वेति सन्देहसंभवात् वर्णानुपूर्वीनिश्चयाभावेन द्वितीयान्ताग्निपदोत्तरत्वादिरूपपदा-नुपूर्वीविशिष्टाग्निमीलेइत्याकारकत्वं तिङन्तईळेइतिपदोत्तरत्वादिरूपपदानुपूर्वीविशिष्ट-ईळे-अग्निमित्याकारकत्वं वेति सन्देहसंभवात् पदानुपूर्वीनिर्णयाभवेनाग्निमीलेइत्याकारकवा-क्योत्तरत्वादिरूपवाक्यानुपूर्वीविशिष्टाग्निमीलेपुरोहितमित्याकारकत्वं पुरोहितमित्याकारक-त्वादिवाक्योत्तरत्वादिरूपवाक्यानुपूर्वीविशिष्टपुरोहितमग्निमीलइत्याकारकत्वं वेति सन्दे-हसम्भवात् वाक्यानुपूर्वीनिश्चयाभावेन चेत्यर्थः फलितः ॥ **तस्येति** ॥ अनुमितवे-दस्येत्यर्थः ॥ **अबोधकत्वादिति** ॥ बोधजननासमर्थत्वादित्यर्थः। अप्रमाणत्वादिति यावत् ॥ शाब्दबोधे आनुपूर्वीविशेषाकाङ्क्षानिर्णयस्य हेतुतया तदभावेनानुमितवेदस्य स्मृत्यादिप्रामाण्य-व्यवस्थापकत्वासंभवात् तादृशवेदो नाङ्गीकर्तव्य इति भावः । अस्मद्गुरुचरणास्तु—किञ्चिज्ज्ञा-नां अस्मदादीनां अनुमितवेदस्य आनुपूर्वीज्ञानाभावेनाबोधकत्वेऽपि सकलपरमाण्वादि-सूक्ष्मदर्शिनां मनुयाज्ञवल्क्यादीनां आनुपूर्वीज्ञानसंभवात् बोधकत्वमव्याहतमेव । नहि केषा-ञ्चिदानुपूर्वीज्ञानाभावप्रयुक्ताबोधकत्वं प्रामाण्यविघटकम् । तथा सति अनधीतवेदानां पठ्य-मानवेदेऽप्यानुपूर्वीज्ञानाभावप्रयुक्ताबोधकत्वसत्त्वेनाप्रमाणत्वापत्तेः । एवं च स्मृतिः वेदमू-लिका सर्वज्ञकर्तृकत्वात्, होळकाद्याचारः वेदमूलकस्सर्वज्ञैरनुष्ठीयमानत्वात् ज्योतिष्टोमव-दित्यनुमानात् स्मृत्याचारयोः वेदमूलकत्वाद्यनुमितौ तादृशानुमितवेदे आनुपूर्वीज्ञानरूपका-रणाभावप्रयुक्ताबोधकत्वं केषाञ्चिन्न क्षतिकरमित्यनुमितवेदे दीपिकाकारकृतनिरुक्ताबोधकत्व-रूपदोषोद्भावनं अप्रामाणिकमेव । परन्तु वेदः पौरुषेयः वाक्यसमूहत्वात् भारतादिवत् इति निरुक्तानुमानेन वेदमात्रस्यानित्यत्वपौरुषेयत्वयोस्सिद्धत्वात् अनुमितवेदस्यापि अनित्यत्वा-दिसिद्धौ अनुमितवेदस्य नित्यत्वमप्रामाणिकमित्येवं तन्मतदूषणं सारमिति व्याचक्रुः । अस्तूक्तरीत्याप्तोक्तशब्दानां प्रमाणत्वं, अस्तु च स्मृत्याचाराणामपि वेदमूलकतया प्रामाण्यं तथाप्यनुमानादेव शाब्दबोधसमानाकारकज्ञानसंभवेन शब्दस्य विलक्षणप्रमात्वे मानाभावा-च्छब्दस्यानुमानविधयैव प्रामाण्यमिति वैशेषिकमतं निराकृत्य शब्दस्य पृथक्प्रामाण्यं व्यव-

**ननु एतानि पदानि स्मारितार्थसंसर्गवन्ति आकाङ्क्षादिमत्पदकदम्बकत्वात् मद्वा-**

## नीलकण्ठप्रकाशिका.

काणां मतं दूषयितुमुपन्यस्यति—**नन्वेतानीत्यादिना** ॥ **एतानि पदानि** घटमानयेत्यादिपदानि । **स्मारितार्थसंसर्गवन्तीति** ॥ स्मारितार्थसंसर्गज्ञानपूर्वकाणीत्यर्थः । संसर्गे तात्पर्यविषयत्वं निवेशनीयम् । तेन संसर्गान्तरमादाय नार्थान्तरता । आकाङ्क्षादीत्यादिना योग्यतासत्त्योः परिग्रहः । आकाङ्क्षादिरहिते पदकदम्बके व्यभिचारवारणाय—**आ-**

## रामरुद्रीयम्.

रूपतन्मूलकत्वस्यापि स्मृतावसंभव इति भावः । नन्वेतानि पदानि तत्तत्पदस्मारितार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षादिमत्पदकदम्बकत्वात् इत्यनुमानेनैव तत्तत्पदार्थस्मृत्यनन्तरं तत्तत्पदार्थसंसर्गसिद्धिसम्भवेन शब्दस्यानुमानविधयैव प्रामाण्यमस्तु । किं शब्दस्य प्रमाणान्तरत्वकल्पनयेति वैशेषिकश्शङ्कते—**नन्विति** ॥ **स्मारितार्थसंसर्गवन्तीति** ॥ तत्त-

## नृसिंहप्रकाशिका.

स्थापयितुं आदौ तन्मतमुपन्यस्यति—**नन्वित्यादिना** ॥ **एतानि पदानीति** ॥ चैत्रोच्चरितघटमानयेतिवाक्यघटकघटपदांपदाङ्पूर्वकणीञ्धातुपदलोट्पदानीत्यर्थः । **स्मारितेत्यादि** ॥ तत्तत्पदैस्स्मारिता ये तत्तदर्थाः तेषां तात्पर्यविषयो यस्संसर्गः तज्ज्ञानप्रयोजकानीत्यर्थः । **आकांक्षादीत्यादि** ॥ आकाङ्क्षादित्रयविशिष्टपदसमुदायघटकत्वादित्यर्थः । **मद्वाक्यवदिति** ॥ मया श्रुतघटमानयेत्यादिवाक्यघटकघटपदादिवदित्यर्थः । अत्र घटमानयेत्यादिवाक्यबहिर्भूतघटादिपदेषु पक्षतावच्छेदकाश्रयेषु निरुक्तहेत्वभावात् भागासिद्धिः, अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे अंशतो बाधश्चेति पक्षतावच्छेदककोटौ तादृशवाक्यघटकत्वनिवेशः । मदुच्चरितघटमानयेत्यादिवाक्यघटकघटादिपदेषु पक्षतावच्छेदकाक्रान्तेषु निरुक्तसाध्यस्य सिद्धत्वात्सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे अंशतस्सिद्धसाधनवारणाय पक्षतावच्छेदकघटकवाक्ये चैत्रोच्चरितत्वनिवेशः। अर्थान्तरवारणाय साध्यघटकसंसर्गे तात्पर्यविषयत्वनिवेशः । घटः कर्मत्वमित्याद्यनाकाङ्क्षवाक्ये वह्निना सिञ्चतीत्ययोग्यवाक्ये गिरिर्भुक्तमग्निमान् देवदत्तेन इत्याद्यनासन्नवाक्ये च निरुक्तसाध्याभाववति व्यभिचारवारणाय हेतुघटकपदेष्वाकाङ्क्षादित्रितयवत्त्वनिवेशः । पक्षतावच्छेदकाक्रान्तनिरुक्तपदेषु पदसमुदायत्वरूपपदकदम्बकत्वस्यावर्तमानतया स्वरूपासिद्धिवारणाय यथाश्रुतार्थस्य हेतुत्वं परित्यज्य पदसमुदायघटकत्वरूपाविवक्षितार्थस्य हेतुत्वमभिहितम् । अस्मद्गुरुचरणास्तु—निरुक्तपदसमुदायत्वस्य पर्याप्तिसंबन्धेन पक्षवृत्तित्वाभावेऽपि स्वरूपसंबन्धेन पक्षवृत्तित्वात् तस्य स्वरूपसंबन्धेन हेतुतायां बाधकाभावेन यथाश्रुतमेव साध्विति व्याचक्रुः । मच्छ्रुतघटमानयेत्यादिवाक्यघटकघटादिपदानां निरुक्तहेतुमत्त्वेन मदीयनिरुक्तसंसर्गज्ञानप्रयोजकत्वरूप-

कयवत इत्यनुमानादेव संसर्गज्ञानसंभवाच्छब्दो न प्रमाणान्तरमिति चेन्न । अनुमित्यपेक्षया विलक्षणस्य शाब्दज्ञानस्य 'शब्दात्प्रत्येमि' इत्यनुव्यवसायसाक्षिकस्य सर्वसंमतत्वात् । नन्वर्थापत्तिरपि प्रमाणान्तरमस्ति 'पीनो

## नीलकण्ठप्रकाशिका.

**कांक्षादीति ॥ सर्वसंमतत्वादिति** ॥ तथा च कार्यवैलक्षण्यानुरोधेन शब्दः प्रमाणा-

## रामरुद्रीयम्.

त्पदस्मारिता ये अर्थाः तेषां परस्परसंसर्गवत्तीत्यर्थः । संसर्गवत्त्वं च पदानां स्वविषयक-ज्ञानपूर्वकत्वसंबन्धेन बोध्यम् । स्वोच्चरितपदानां स्वीयवाक्यार्थज्ञानपूर्वकत्वनिश्चयेन स्वी-यवाक्य एव व्याप्तिनिश्चयसंभवादिति भावः ॥ हेतावाकाङ्क्षादीत्यादिपदेन योग्यतातात्पर्य-योः परिग्रहः । निस्तात्पर्यकशुकोच्चरितवाक्यादौ व्यभिचारवारणाय तात्पर्यनिवेशः । स्मारि-तार्थसंसर्गपूर्वकत्वस्य साधनीयतया वह्निना सिञ्चतीत्ययोग्यवाक्ये व्यभिचारवारणाय योग्यतानिवेशः । यद्यपि हेतावाकाङ्क्षानिवेशः निरर्थकः । निराकाङ्क्षनिस्तात्पर्यघटःकर्मत्वमि-त्यादिवाक्येऽपि संसर्गप्रमापूर्वकत्वसत्त्वेन व्यभिचाराप्रसक्तेः । तथापि शब्दस्य प्रमाणान्तर-त्ववादिना निराकाङ्क्षस्थले शाब्दबोधानभ्युगमेन अनुमानविधया शब्दस्य प्रमाणत्ववादि-नापि तत्रानुमानिकसंसर्गज्ञानानभ्युपगमेनानुभवविवादासंभवात् शब्दात् प्रत्येमीत्यस्य शब्दलिंगकानुमितिविषयकत्वस्यैव तैरभ्युपगन्तव्यत्वादिति अनुभवसाम्यार्थमेव हेतावा-काङ्क्षोपादानं । एवमपि व्यभिचारावारकत्वेन तद्वैयर्थ्यं दुर्वारमेव ॥ हेतौ व्यभिचारावार-कविशेषणस्य व्यर्थत्वात् ॥ अन्यथा नीलधूमादिति हेतुप्रयोगप्रसङ्गादित्याशयेन दूषयति—**नेति ॥ शब्दात् प्रत्येमीति** ॥ न च तादृशप्रत्ययस्य शब्दलिंगकानुमितिविषयकत्वमे-वास्तु । किं विजातीयशाब्दविषयकत्वेनेति वाच्यम् । शब्दलिंगकानुमित्युत्तरमपि नाहमर्थं शाब्दयामि किन्तु शब्देनानुमिनोमि इति प्रत्ययात् शाब्दयामीत्यनुभवस्य विजातीयानु-भवविषयकत्वावश्यकत्वादिति भावः । अर्थापत्तेः प्रमाणान्तरतां निराकर्तुमाशङ्कते—**नन्विति ॥ प्रमाणान्तरम्** प्रत्यक्षादिभिन्नप्रमाणम् । **अस्ति** अनुभवसिद्धमित्यर्थः । तथा च चत्वार्येव प्रमाणानि इति व्याहतमिति भावः । अनुभवमेव दर्शयति—**पीन**

## नृसिंहप्रकाशिका.

साध्यवत्त्वेन च क्लृप्तत्वात् दृष्टान्तोपपत्तिरिति बोध्यम् । **इत्यनुमानादेवेति** ॥ इत्याकार-कानुमानप्रमाणादेवेत्यर्थः । **संसर्गज्ञानसंभवादिति** ॥ अनुमित्यात्मकशाब्दबोधसमाना-कारकनिरुक्तसंसर्गज्ञानोत्पत्तेरित्यर्थः । **शब्द इति** ॥ ज्ञायमानशब्दः शब्दज्ञानं वेत्यर्थः । **न प्रमाणान्तरमिति** ॥ न विलक्षणप्रमितिकरणमित्यर्थः । तथाच शब्दश्रवणानन्तरं जायमानसंसर्गज्ञानस्य उक्तरीत्यानुमितिरूपत्वावश्यकत्वेन तस्य विलक्षणप्रमितित्वे प्रमा-णाभावात् तत्करणशब्दस्यापि अनुमानप्रमाणत्वमावश्यकमिति शब्दस्य प्रमाणान्तरत्वं निर्युक्तिकमिति भावः । **अनुमित्यपेक्षयेत्यादि** ॥ शब्दात्प्रत्येमीत्यनुव्यवसायसाक्षि-

**देवदत्तो दिवा न भुङ्क्ते' इति दृष्टे श्रुते वा पीनत्वान्यथानुपपत्त्या रात्रि-**

---

### नीलकण्ठप्रकाशिका.

न्तरमिति भावः। मीमांसकः शङ्कते—**नन्विति** ॥ 'दिवा न भुङ्क्ते' इत्यर्थे **दृष्टे** प्रत्यक्षतो ज्ञाते **श्रुते** शब्दादवगते। एतेन दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेत्यर्थापत्तिद्वैविध्यं सूचितम्। **पीनत्वान्यथानुपपत्त्येति** ॥ पीनत्वस्य रात्रिभोजनं विनाऽनुपपत्त्येत्यर्थः। अत्रेदमवधे-

### रामरुद्रीयम्.

**इति** ॥ **दृष्टे** इत्याकारकप्रत्यक्षे। **श्रुते** इत्याकारकशाब्दबोधे वा। सतीति शेषः। **पीनत्वान्यथानुपपत्त्येति** ॥ दिवा ज्ञातस्य देवदत्तस्य रात्रिभोजनं विना पीनत्वमनुप-

### नृसिंहप्रकाशिका.

कस्यानुमित्यपेक्षया विलक्षणस्य शाब्दज्ञानस्येति योजना। **सर्वसम्मतत्वादिति** ॥ तथाच घटमानयेति शब्दश्रवणानन्तरं जायमानघटकर्मत्वादिसंसर्गबोधानन्तरं घटकर्मत्वादिकं न साक्षात्करोमि नानुमिनोमि नोपमिनोमि किन्तु शाब्दयामि शब्दात्प्रत्येमीत्यनुव्यवसायान्यथानुपपत्त्या शब्दश्रवणानन्तरं जातसंसर्गज्ञानस्य प्रत्यक्षप्रमित्यादिविलक्षणशाब्दप्रमितित्वाङ्गीकारस्यावश्यकतया तत्करणतया शब्दस्यापि प्रमाणान्तरत्वमावश्यकमिति भावः। इदमुपलक्षणम्। निरुक्तपदकदम्बकत्वलिङ्गकानुमानात् तादृशसंसर्गज्ञानपूर्वकत्वानुमितावपि तादृशसंसर्गस्यानुमितेः, निरुक्तहेतौ निरुक्तव्याप्तिज्ञानाभावेऽपि शब्दश्रवणानन्तरं निरुक्तसंसर्गज्ञानस्यानुभवसिद्धत्वाच्च निरुक्तसंसर्गज्ञानस्यानुमित्यादिविलक्षणत्वं अनन्यगत्या स्वीकार्यमिति तदनुरोधेन शब्दस्यापि पृथक् प्रमाणत्वं आवश्यकमिति बोध्यम्। एतावता तत्करणं चतुर्विधमित्यादिमूलोपात्तानां चतुर्णां प्रमाणत्वमुपपाद्यार्थापत्त्यादीनामतिरिक्तप्रमाणत्ववादिमतनिराकरणद्वारा चतुर्णामेव प्रमाणत्वं व्यवस्थाप्य उपसंहर्तुमादौ तन्मतमुपन्यस्यति—**नन्वित्यादिना** ॥ **अर्थापत्तिरपीति** ॥ अपिना प्रत्यक्षादिपरिग्रहः। **पृथक्प्रमाणमस्तीति** ॥ विलक्षणप्रमितिकरणं भवतीत्यर्थः। तथाच प्रत्यक्षादि यथा विलक्षणप्रमितिकरणं तथा अर्थापत्तिरपि विलक्षणप्रमितिकरणं भवतीति भावः। एतदेवोपपादयति—**पीनो देवदत्त इति** ॥ **दृष्टे श्रुते वेति** ॥ तादृशरूपेण दर्शनविषये, एतद्वाक्यजन्यबोधविषये वा देवदत्त इत्यर्थः। पीनत्वेन दिवाऽभुञ्जानत्वेन च प्रत्यक्षविषये पीनो देवदत्तः दिवा न भुङ्क्ते इति वाक्यजन्यबोधविषये वा देवदत्त इति फलितार्थः। **पीनत्वान्यथानुपपत्त्येति** ॥ दिवाऽभुञ्जानत्वेन अनुभूयमानदेवदत्ते अनुभूयमानपीनत्वान्यथानुपपत्त्येत्यर्थः। रात्रिभोजनं विना दिवाऽभुञ्जानस्य पीनत्वमनुपपन्नमिति अन्यथानुपपत्तिज्ञानरूपेणेति यावत्। **अर्थापत्त्येति** ॥ अर्थापत्तिप्रमाणेनेत्यर्थः। रात्रिभोजनं कल्प्यत इति योजना। **कल्प्यत इति** ॥ आक्षिप्यत इत्यर्थः। निरुक्तान्यथानुपपत्तिज्ञानरूपार्थापत्तिप्रमाणेन रात्रिभोजनविषयकार्थापत्त्यात्मकप्रमा भवतीति समुदितग्रन्थार्थः। तथाच अर्थापत्तिरूपप्रमा-

**भोजनमर्थापत्त्या कल्प्यत इति चेन्न । 'देवदत्तो रात्रौ भुङ्क्ते दिवाऽभुञ्जा-नत्वे सति पीनत्वात्' इत्यनुमानेनैव रात्रिभोजनस्य सिद्धत्वात् । शते पञ्चा-**

---

## नीलकण्ठप्रकाशिका.

यम् । यद्विना यदनुपपन्नं तत्तदुपपादकमिति रात्रिभोजनमुपपादकम्, पीनत्वमुपपाद्यम्, उपपादकज्ञानं फलम्, उपपाद्यज्ञानं करणम् । फलकरणयोरर्थापत्तिशब्दो वर्तते । फले 'अर्थस्य आपत्तिः कल्पना' इति व्युत्पत्त्या । करणे तु—'अर्थस्यापत्तिः कल्पना यस्याः' इति व्युत्पत्त्येति । व्यतिरेक्यनुमानेनैव गतार्थत्वादर्थापत्तेः प्रमाणान्तरत्वमनुचितमिति समाधत्ते—**देवदत्त इति** ॥ दिवामात्रभोजिनि पीने व्यभिचारवारणाय सत्यन्तम् । अहोरात्राभोजिन्यपीने व्यभिचारवारणाय विशेष्यम् । तच्च योगाद्यजन्यपीनत्वपरम् । तेन भोजनशून्ये योगिनि पीने न व्यभिचारः । संभवैतिह्ययोरनिरिक्तप्रमाणत्वं वदतां पौराणि-

## रामरुद्रीयम्.

पन्नमिति प्रतिसन्धानेनैवेत्यर्थः । अत्र विशेषणम् । **अर्थापत्त्येति** ॥ अर्थापत्तिरूपप्रमाणेनेत्यर्थः । **रात्रिभोजनम् कल्प्यत इति** ॥ देवदत्तो रात्रौ भुङ्क्ते इत्यर्थापत्तौ प्रमाणमित्यर्थः । उभयोरप्यर्थापत्तिरित्येवाभिधानम् । प्रत्यक्षवदनुमित्यैव रात्रिभोजनसिद्ध्या

## नृसिंहप्रकाशिका.

णान्तरत्वस्वाचत्वार्येव प्रमाणानीत्यनुपपन्नमिति भावः । **रात्रौ भुङ्क्त इति** ॥ रात्रौ यावज्जीवं भुङ्क्त इत्यर्थः । कदाचित् रात्रिभोजनस्य दिवाऽभुञ्जाननिष्ठावयवपौष्कल्यरूपपीनत्वाजनकत्वात् यथाश्रुतासंगतेः । **दिवाऽभुञ्जानत्वे सतीति** ॥ यावज्जीवं दिवाऽभुञ्जानत्वे सतीत्यर्थः । कदाचिद्दिवाऽभुञ्जानस्यान्यदिवसेषु दिवाभोजनेनापि पीनत्वसंभवेन प्रकृतहेतोः प्रकृतसाध्यानुमापकत्वासंभवेन यथाश्रुतासंगतेः । **इत्यनुमानेनैवेति** ॥ यन्नैवं तन्नैवं यथा मासोपवासी तापस इत्याकारकव्यतिरेकिन्यायप्रयोज्यमानसपरामर्शेनैवेत्यर्थः । अस्मद्गुरुचरणास्तु—इत्यनुमानेनैवेति । यो हेतुमान् स साध्यवान् यथा प्रतिनक्तभोजियज्ञदत्त इत्याकारकान्वयन्यायप्रयोज्यमानसपरामर्शेनेत्यर्थ इति व्याचक्रुः । **सिद्धत्वादिति** ॥ अनुमितत्वादित्यर्थः । तथात्र उक्तानुमानेनैव पक्षे रात्रिभोजनसिद्धेः तदर्थमर्थापत्तिः प्रमाणान्तरतया न स्वीकार्येति भावः । शतत्वसंख्यापर्याप्त्यधिकरणब्राह्मणाद्यधिकरणे पञ्चाशत्संख्याकब्राह्मणादिसन्देहोत्तरं शतत्वसंख्यापर्याप्त्यधिकरणस्य पञ्चाशद्घटितत्वेन शताधिकरणे पञ्चाशद्वर्तुसंभव इत्याकारकसंभवप्रमाणात् तादृशाधिकरणविशेष्यकपञ्चाशद्ब्राह्मणादिप्रकारकनिर्णयरूपसंभवप्रमोत्पत्त्यैव संशयनिरासात् तदर्थं संभवस्यापि प्रमाणत्वमावश्यकमिति आलङ्कारिकैकदेशिमतं निराकरोति---**शत इति** ॥ शतत्वसंख्योपर्याप्त्यधिकरणब्राह्मणाद्यधिकरण इत्यर्थः । पर्याप्तिनिवेशात् ब्राह्मणद्वयादेरपि समवायेन शतत्ववत्तया द्वित्रिब्राह्मणाद्यधिकरणे पञ्चाशत्त्वसंख्यापर्याप्त्यधिकरणत्वस्यासंभवेऽपि न क्षतिः । शतशब्दस्य

शदिति सम्भवोऽप्यनुमानमेव । 'इह वटे यक्षस्तिष्ठति' इत्यैतिह्यमपि अज्ञातमूलवक्तृकशब्द एव । चेष्टापि शब्दानुमानद्वारा व्यवहारहेतुरिति न प्रमाणा-

---

## नीलकण्ठप्रकाशिका.

कानां मतं दूषयति— **शते पञ्चाशदित्यादिना** ॥ **अनुमानमेवेति** ॥ अनुमानमेव न तु प्रमाणान्तरमित्यर्थः । शतवानित्युक्ते पञ्चाशद्वानिति ज्ञानं संभवति तस्यानुमानेनैव निर्वाहात्, शतस्य पञ्चाशद्व्याप्यत्वादिति भावः । **अज्ञातमूलेति** ॥ विशिष्यानिश्चितप्रथमवक्तृकः शब्दः, न तु प्रमाणान्तरमित्यर्थः । तादृशशब्दस्य यथार्थत्वे शब्दप्रमाणमध्येऽन्तर्भावः । अन्यथा तु अप्रमाणमेवेति हृदयम् । नन्वनया चेष्टया अयमर्थो बोद्धव्य इति सङ्केतितचेष्टया विजातीयप्रमाजननाच्चेष्टाया अपि प्रमाणान्तरत्वं इति वदन्तं निरस्यति— **चेष्टापीति** ॥ **शब्दानुमानद्वारेति** ॥ शब्दद्वारा अनुमानद्वारा वा, न तु स्वातन्त्र्ये-

## रामरुद्रीयम्

अर्थापत्तिर्न प्रमाणान्तरमिति समाश्रत्ते— **देवदत्त इति** ॥ ज्ञात इति शेषः ॥ **पञ्चाशदिति** ॥ पञ्चाशदित्याकारकज्ञानमित्यर्थः । **संभवः** संभावनाप्रमितिः । **अनुमानमेव** ॥ अनुमितिरेवेत्यर्थः । शतं ब्राह्मणास्तिष्ठन्तीति ज्ञाने जाते पञ्चाशत् ब्राह्मणास्तिष्ठन्तीति ज्ञानं संभवप्रमाणेन जायत इति पौराणिका वदन्ति । तदपि न । अयं देशः पञ्चाशद्ब्राह्मणवदेव शतब्राह्मणवत्त्वात् इत्यनुमानेनैव तत्सिद्धेरिति भावः । कस्मिंश्चिद्वृक्षविशेषे यक्षस्तिष्ठति इति लोकप्रसिद्धया अत्र यक्षोऽस्ति इति ज्ञानमुत्पद्यते इति पौराणिकाः । तदपि न । शब्दप्रामाण्याभ्युपगमे तादृशवाक्यस्य शब्द एवान्तर्भावमाह— **ऐतिह्यमपीति** ॥ ऐतिह्यत्वेन पराभ्युपगतं प्रमाणमपि शब्द एव शब्दप्रमाणमेव । नन्वेवं शब्दमात्रस्यैतिह्यत्वापत्तिरित्यत आह— **अज्ञातमूलवक्तृक इति** ॥ अज्ञातो मूलं वक्ता प्रथमवक्ता यस्य स तथा इत्यर्थः । अङ्गुल्यादिचेष्टया अत्र द्वौ वर्तेते इति ज्ञानमुत्पद्यते तस्माच्चेष्टापि प्रमाणान्तरमित्याह कश्चित् । तन्मतं दूषयति— **चेष्टापीति** ॥ **शब्दानुमानद्वारेति** ॥ अयं चार्पित्याकारकशब्दविषयकतात्पर्यवान् विलक्षणचेष्टावत्त्वात् अहमिवेत्यनुमानेन शब्दज्ञाने जाते शाब्दबोधात्मकं ज्ञानमुत्पद्यते एवं वर्तेते इति शाब्दबोध उत्पद्यते । अतश्चेष्टा शब्दानुमाने एव, न तु प्रमाणान्तरामिति भावः । **व्यवहारहेतुः** पुरुषप्रवृत्तिहेतुः । हेतु-

## नृसिंहप्रकाशिका.

शतत्वाधिकरणलाक्षणिकत्वाच्च । शतत्वाधिकरणे पञ्चाशत्त्वस्येव सहस्रत्वादेः संभवेऽपि न क्षतिः । **पञ्चाशदिति** ॥ पञ्चाशद्ब्राह्मणादेः संभव इत्यर्थः । **इति संभवोऽपीति** ॥ इत्याकारकसंभवप्रमाणमर्थात्यर्थः । अपिनार्थापत्तिपरिग्रहः । **अनुमानमेवेति** ॥ अनुमानसिद्धार्थग्राहकमेवेत्यर्थः । इदं पञ्चाशद्ब्राह्मणवत् शतब्राह्मणवत्त्वात् यद्यद्घटितसमुदायाधिकरणं तत्तदधिकरणमिति सामान्यमुखीव्याप्त्या शतघटाधिकरणदृष्टान्तेनानुमितशतब्राह्मणाधिकरणे पञ्चाशद्ब्राह्मणग्राहकमेवेति यावत् । तथाच गृहीतार्थग्राहकत्वात् संभवो न प्रमाणमिति भावः । अत्र इह वटे यक्ष इति लोकप्रसिद्धया तत्र यक्षसत्त्वप्रयु-

न्तरम् । तस्मात्प्रत्यक्षानुमानोपमानशब्दाश्चत्वार्येव प्रमाणानि ॥

इति तर्कसंग्रहदीपिकायां शब्दपरिच्छेदः समाप्तः ॥

---

## नीलकण्ठप्रकाशिका.

णेत्यर्थः। चेष्टया कल्पितस्य शब्दस्य प्रमापकत्वे गौरवादनुमानानुसरणम् । **व्यवहारेति** ॥ प्रमात्मकज्ञानेत्यर्थः । उपसंहरति—**तस्मादिति** ॥

इति तर्कसंग्रहदीपिकाप्रकाशे भगवदर्पिते शब्दपरिच्छेदः समाप्तः ॥

---

## रामरुद्रीयम्.

पदमत्र प्रयोजकार्थकम् । न तु साक्षात्कारणार्थकमिति ध्येयम् । उपसंहरति—**तस्मादिति**॥

इति रामरुद्रकृतायां दीपिकाव्याख्यायां शब्दपरिच्छेदः समाप्तः ॥

---

## नृसिंहप्रकाशिका.

त्कर्मीत्या अनुपलब्धेश्च तादृशवटे यक्षसन्देहानन्तरं यक्षः एतद्वटवृत्तितया सर्वानुमत इति यक्षविशेष्यकसर्वानुमतत्वज्ञानरूपैतिह्यप्रमाणादिह वटे यक्षस्तिष्ठतीति ऐतिह्यप्रमोत्पत्त्यनन्तरं तादृशसंशयनिवृत्तेः तदर्थमैतिह्यस्यापि प्रमाणत्वमावश्यकमिति पौराणिकमतं निरस्यति—**इह वट इति** ॥ **इत्यैतिह्यमपीति** ॥ इत्याकारकैतिह्यप्रमाजनकनिरुक्तैतिह्यमपीत्यर्थः । **अज्ञातवक्तृमूलकशब्द एवेति** ॥ प्रयोक्तृपुरुषान्येन अज्ञातपुरुषप्रणीतशब्दप्रतिपाद्यार्थग्राहकमेवेत्यर्थः । अथवा । **इत्यैतिह्यमपीति** ॥ इत्याकारकैतिह्यप्रमापीत्यर्थः । **अज्ञातवक्तृमूलकशब्द एवेति** ॥ तादृशशब्दप्रतिपाद्यार्थविषयिण्येवेत्यर्थः । तथाच गृहीतार्थग्राहकत्वादैतिह्यं न प्रमाणमिति भावः । हस्तचेष्टाविशेषदर्शनेन द्वित्वादिबोधस्यानुभवसिद्धत्वात् समवायेन तादृशबोधं प्रति समवायेन तादृशचेष्टाविशेषदर्शनस्य हेतुताया वक्तव्यतया चेष्टादर्शनस्यापि प्रमाणत्वमावश्यकमिति मतं निरस्यति—**चेष्टापीति** ॥ चेष्टादर्शनमपीत्यर्थः । **शब्दानुमानद्वारेति** ॥ शब्दस्मृतिद्वारेत्यर्थः । **व्यवहारहेतुरिति** ॥ द्वित्वादिबोधप्रयोजकमित्यर्थः । तथा च लिपिदर्शनस्य यथा संबन्धिज्ञानविधया शब्दस्मारकस्य शाब्दबोधप्रयोजकत्वेऽपि कारणत्वाभावात् न प्रमाणत्वं तथा चेष्टादर्शनस्यापीति भावः । उपसंहरति—**तस्मादिति** ॥ अर्थापत्त्यादीनामप्रमाणत्वादित्यर्थः । **प्रत्यक्षेत्यादि** ॥ प्रत्यक्षानुमानोपमानशब्दाश्चत्वार्येवेत्यर्थः । **प्रमाणानीति** ॥ वेदितव्यानीत्यर्थः ॥

इति नृसिंहप्रकाशिकायां शब्दपरिच्छेदः समाप्तः ॥

---

# अथ प्रामाण्यवादः ॥

ज्ञानानां तद्वति तत्प्रकारकत्वं स्वतोग्राह्यं परतो वेति विचार्यते । तत्र

---

## नीलकण्ठप्रकाशिका.

प्रमाणप्रसङ्गात्प्रमात्वस्य परतो ग्राह्यत्वं व्यवस्थापयिष्यन्नाह—**ज्ञानानामिति** ॥ षष्ठ्यर्थ आधेयत्वम् । तस्य चान्वयस्तद्वति तत्प्रकारकत्वे । तच्च तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वम् । तच्छब्दार्थौ घटत्वादिरूपः । **स्वतोग्राह्यमिति** ॥ ज्ञानग्राहकसामग्रीजन्यग्रहविषय इत्यर्थः । **परत इति** ॥ ग्राह्यमित्यनुषज्यते । अनुमानादिजन्यग्रहविषय इत्यर्थः । **तत्र** विचारे । प्रयोजकत्वं सप्तम्यर्थः विप्रतिपत्तावन्वेति । कथं तस्य विचारप्रयोजकत्वमिति

## रामरुद्रीयम्.

**ज्ञानानामिति** ॥ आधेयत्वं षष्ठ्यर्थः । अन्वयश्चास्य तद्वति तत्प्रकारकत्वे । इच्छादिनिष्ठतद्वतितत्प्रकारकत्वस्य परैरपि परतस्त्वाभ्युपगमात् न विवादोऽस्तीति सूचनार्थं ज्ञानानामित्युक्तम् । तत्र विचारे घटकत्वं सप्तम्यर्थः । 'विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् । निर्णयश्चापि पञ्चांगं शास्त्रेऽधिकरणं स्मृतं ॥' इति स्मरणात् । विचारस्य पञ्चांगत्वात् विषयो विचारांशभूता विप्रतिपत्तिः । विशयः तज्जन्यो मध्यस्थस्य संशयः । निर्णयः उप-

## नृसिंहप्रकाशिका.

इदानीं प्रमाणत्वघटकत्वात् उपस्थितप्रमाणत्वं स्वतो ग्राह्यमिति केचन परतो ग्राह्यमिति अपरे वदन्ति । तत्र शिष्यबुद्धिवैशद्याय स्वतोग्राह्यत्वनिराकरणपूर्वकं परतोग्राह्यत्वव्यवस्थापनं कर्तुं " विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः । निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम् ॥' इति वचनसिद्धाङ्गपञ्चकविशिष्टात्मकमधिकरणमारचयति—**ज्ञानानामिति** ॥ संस्कारनिष्ठप्रमात्वस्यातीन्द्रियत्वं इच्छादिनिष्ठप्रमात्वस्य परतोग्राह्यत्वं सर्वानुमतमिति ज्ञानपदमुपात्तम् । सकलज्ञानसाधारणैकप्रमात्वमप्रसिद्धम् । किन्तु ज्ञानव्यक्तिभेदेन भिन्नमिति स्फुटीकरणाय बहुवचनमुपात्तम् । अनुगतभ्रमत्वाभावेन सामान्यतो भ्रमभिन्नज्ञानत्वस्य प्रमात्वरूपत्वासंभवात् । तत्तद्भ्रमव्यक्तिभेदकूटघटितप्रमात्वस्य तु समुदायघटितत्वेन दुर्ज्ञेयत्वादांशिकप्रमायाः प्रमात्वानुपपत्तेश्चाह—**तद्वतीति** ॥ तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वरूपमित्यर्थः । तेन वह्निगुञ्जापुञ्जयोः इमौ गुञ्जापुञ्जवह्नी इति विपरीतभ्रमे नातिव्याप्तिः । **प्रामाण्यमिति** ॥ प्रमात्वमित्यर्थः । स्वत इत्यादिवक्ष्यमाणस्वतोग्राह्यत्वानुमानरूपपरतोग्राह्यत्वान्यतररूपवत्तयेतीत्यन्तस्य फलितार्थः । **विचार्यत इति** ॥ साधकबाधकप्रमाणोपन्यासरूपयुक्तिभिः निर्णीयत इत्यर्थः । अनेन विषयरूपप्राथमिकाङ्गं प्रदर्शितम् । **तत्रेति** ॥ स्वतस्त्वपरतस्त्वयोरित्यर्थः । विप्रतिपत्त्यन्वितविषयत्वं

विप्रतिपत्तिः—ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यं न वा इति । अत्र विधिकोटिः स्वतस्त्वम् । निषेधकोटिः परतस्त्वम् । अनु-

---

## नीलकण्ठप्रकाशिका.

त्तेदत्र वदन्ति—विरुद्धार्थप्रतिपादकवाक्यद्वयं हि विप्रतिपत्तिः । तया अप्रामाण्यशङ्काकवलिततत्तद्वाक्यार्थबोधद्वारा मध्यस्थस्य संशयो जन्यत इत्येकतरकोटिनिश्चयाय न्यायप्रयोगादिरूपो विचारः । एवं च विचारोपयोगिसंशयजनन्या विप्रतिपत्तेर्विचारोपयोगित्वमक्षतमिति । ज्ञानप्रामाण्यमिति पक्षनिर्देशः । अत्र तद्वति तत्प्रकारकज्ञानत्वरूपमेव प्रामाण्यं पक्षः, न तु प्रमितिकरणत्वरूपं इति तात्पर्यग्राहकं ज्ञानपदम् । वस्तुतस्तु तद्वति तत्प्रकारकत्वस्य घटत्वपटत्वादिरूपार्थभेदेन भिन्नतया कस्यापि प्रामाण्यस्य यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वं न संभवतीत्यतो यद्धर्मघटितप्रामाण्यं यदा पक्षस्तदा तद्धर्मप्रकारकज्ञानग्राहकयावद्ग्राह्यत्वमेव साधनीयम् । न तु सामान्यतो ज्ञानग्राहकयावद्ग्राह्यत्वमिति तात्पर्यग्राहकं ज्ञानपदम् । **तदप्रामाण्येत्यादि** ॥ तदप्रामाण्याग्राहिका यावती ज्ञानग्राहिका सामग्री तज्जन्यग्रहविषयो न वेत्यर्थः । तादृशग्रहः गुरुमते व्यवसायः । मुरारिमिश्रमते अनुव्यवसायः । भाट्टमते च ज्ञाततालिङ्गकानुमितिः । अत्र गुरुमते सर्वस्मिन्नेव ज्ञाने मितिमातृमेयेति त्रयं भासते । तन्मते घटमहं जानामि इत्याकारकस्यैव व्यवसायस्योत्पत्तेः । एवं च व्यवसायस्य स्वप्रकाशात्मकतया स्वेनैव स्वगतप्रामाण्यस्य ग्रहणाद्भवति प्रामाण्यस्य स्वतो

## रामरुद्रीयम्.

सहारः । **ज्ञानप्रामाण्यमिति** ॥ ज्ञाननिष्ठं प्रामाण्यं पक्ष इत्यर्थः । **तदप्रामाण्याग्राहकेति** ॥ तस्मिन् पक्षीभूतप्रामाण्याश्रयज्ञाने अप्रामाण्याग्राहिका । अपि च **ज्ञानग्राहिका** ॥ ज्ञानपदं प्रकृतप्रामाण्याश्रयज्ञानपरम् । तद्ग्रहजनकेत्यर्थः । एतादृश्यो यावत्यः सामग्र्यः तज्जन्यग्रहविषयत्वं विधिकोटिः । तदभावो निषेधकोटिः । **स्वतस्त्वमिति** ॥ स्वतस्त्वं मीमांसकैरुच्यते, परतस्त्वं नैयायिकैरिति मन्तव्यम् । अत्र गुरुमिश्रभट्टाः मीमांसकास्त्रयः । तत्र गुरुनये ज्ञानं स्वप्रकाशमिति व्यवसायजनकसामग्र्या एव व्यवसायो गृह्यते । तथा चायं घट इति जानामीत्येव व्यवसायः । न तु केवलमयं घट इति । तथा च व्यवसायरूपा सामग्र्येव तन्मते ज्ञानग्राहिका । तन्निष्ठं घटविशेष्यकघटत्वप्रकारकत्वमपि तद्ग्राह्य-

## नृसिंहप्रकाशिका.

सप्तम्यर्थः । **विप्रतिपत्तिरिति** ॥ मणिकारोक्तप्राथमिकसंशय इत्यर्थः । विप्रतिपत्तिस्वरूपमाह—**ज्ञानप्रामाण्यमिति** ॥ ज्ञाननिष्ठप्रमात्वमित्यर्थः । **तदप्रामाण्येत्यादि** ॥ तद्विशेष्यकाप्रमात्वप्रकारकज्ञानाजनिका यावती स्वाश्रयविषयकग्रहजनिका सामग्री तज्जन्यग्रहविषयतावन्न वेत्यर्थः । **अत्रेति** ॥ कोटिद्वय इत्यर्थः । घटकत्वं सप्तम्यर्थः । तस्य विधिकोटौ निषेधकोटौ च प्रत्येकमन्वयः । **विधिकोटिस्स्वतस्त्वमिति** ॥ मीमांसकस्येति शेषः । स्वतोग्राह्यत्वरूपभावकोटिरित्यर्थः । **निषेधकोटिः परत-**

मानादिग्राह्यत्वेन सिद्धसाधनवारणाय यावदिति । 'इदं ज्ञानमप्रमा' इति

## नीलकण्ठप्रकाशिका.

ग्राह्यत्वम् । विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणतायास्तैरनङ्गीकारादनुपस्थितस्यापि प्रामाण्यस्य भानसंभवात् । मिश्रमते 'अयं घटः' इत्याकारकज्ञानानन्तरं 'घटत्वेन घटमहं जानामि' इति ज्ञानविषयकलौकिकमानसमुत्पद्यते, तेन प्रामाण्यस्य ग्रहणम् । भाट्टमते च ज्ञानस्यातीन्द्रियतया ज्ञाततालिङ्गकानुमितेरेव प्राथमिकज्ञानग्रहरूपतया प्रामाण्यं गृह्यते । अनुमानप्रयोगस्तु—घटो घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानविषयः घटत्वप्रकारकज्ञातता-वत्त्वात् यन्नैवं तन्नैवम् इति । ज्ञातता च सविषयको ज्ञानजन्यः अतिरिक्तः पदार्थ इति मतविवेकः । यावत्त्वविशेषणे सत्येव अग्राह्यक्रान्तं सार्थकमित्यभिप्रेत्य प्रथमतस्तस्यैव प्रयोजनं दर्शयति—**अनुमानेति** ॥ प्रामाण्यस्येत्यादिः । **सिद्धसाधनेति** ॥ नैयायिकमतेऽपि 'इदं ज्ञानं प्रमा समर्थप्रवृत्तिजनकत्वात्' इत्यनुमानेन, 'इदं ज्ञानं प्रमा' इत्याप्तवाक्येन च ग्राह्यत्वादिति भावः । नैयायिकमतेऽपि निषेधे साध्ये बाधवारणायेत्यपि बोध्यम् । **यावदितीति** ॥ ननु सामग्र्यां यावत्त्वविशेषणमयुक्तं, यावत्सामग्रीजन्यग्रहा-

## रामरुद्रीयम्.

मेवेति गुरवः । मिश्रमते तु—अनुव्यवसायग्राह्यो व्यवसायः । अनुव्यवसायश्च व्यवसाय-प्रत्यक्षम् । तज्जनिका सामग्री मनस्संयुक्तसमवायादिघटिता । तद्ग्राह्यमेव व्यवसायनिष्ठं प्रामा-ण्यमिति मिश्राः । भट्टमते तु—ज्ञानमतीन्द्रियं, तज्ज्ञानजन्यज्ञातता विषयसमवेता प्रत्यक्षेण गृह्यते । तया च ज्ञानमनुमीयते । तेन ज्ञाततालिङ्गकानुमितिरूप एव एतन्मते ग्रहः । तज्जनिका च सामग्री परामर्शादिघटिता । तद्ग्राह्यमेव व्यवसायनिष्ठप्रामाण्यमिति भट्टाः । मतत्रयसाधारणीयं विप्रतिपत्तिः । व्यवसायधर्मिकप्रामाण्यग्रहजनकत्वेन व्यवसायरूपप्रकृत-प्रामाण्याश्रयविषयग्रहजनकत्वेन च त्रिविधसामग्रीणामपि संग्रहात् मतत्रये व्यवसायानुव्य-वसायज्ञाततालिङ्गकानुमितीनामेव ग्रहरूपत्वादिति निपुणतरमूहनीयम् । सामग्र्यां यावत्त्व-विशेषणस्य प्रयोजनमाह—**अनुमानेनेति** ॥ ममोत्पन्नं ज्ञानं प्रमा सफलप्रवृत्तिजनकत्वा-

## नृसिंहप्रकाशिका.

**त्वमिति** ॥ नैयायिकस्येति शेषः । परतोग्राह्यत्वरूपनञ्कोटिरित्यर्थः । **अनुमान-ग्राह्यत्वेनेति** ॥ तज्ज्ञाननिष्ठप्रमात्वस्येत्यादिः । इदं ज्ञानं प्रमा सफलप्रवृत्तिजनकत्वात् यन्नैवं तन्नैवं यथा अप्रमेति व्यतिरेकन्यायप्रयोज्यप्रमात्वव्याप्यसफलप्रवृत्तिजनकत्ववत् ज्ञानमिति मानसपरामर्शघटितसामग्रीजन्यानुमितिरूपग्रहविषयत्वस्योभयवादिसिद्धत्वेनेत्यर्थः । **सिद्ध-साधनवारणायेति** ॥ अग्रे नन्वित्यादिना प्रामाण्यस्य स्वतस्त्वसाधने मीमांसकम-ते सिद्धसाधनापत्तिवारणायेत्यर्थः । **यावदिति** ॥ स्वतस्त्वशरीरे यावत्त्वप्रवेश इत्यर्थः । तथाच यावत्त्वस्य व्यापकत्वरूपतया तादृशसामग्रीत्वव्यापकजनकतानिरूपितजन्यताश्रयज्ञा-

ज्ञानेन प्रामाण्याग्रहाद्बाधवारणाय—अप्रामाण्याग्राहकेति ॥ इदं ज्ञानमप्रमा

## नीलकण्ठप्रकाशिका.

प्रसिद्धेः । न हि सर्वाभिज्ञानसामग्रीभिरेकं ज्ञानं जन्यते । न च यावतीः सामग्रीः विशिष्योपादाय तत्तज्जन्यग्रहविषयत्वं साध्यत इति वाच्यम्, अनुव्यवसायादिसामग्रीणां ताद्रूप्येण निवेशे मतत्रयसाधारण्यानिर्वाहादिति चेन्न । यतो यावदिति फलतो ग्रहविशेषणम् । तथा च ज्ञानग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वमिति फलितम् । तत्तद्धर्मप्रकारकज्ञानग्राहकसामग्रीजन्यग्रहत्वव्यापकविषयिताप्रतियोगित्वमिति निष्कर्ष इति सङ्क्षेपः । **प्रामाण्याग्रहादिति** ॥ व्यवसायनिष्ठेत्यादिः । प्रामाण्याविषयीकरणादित्यर्थः । **अप्रामाण्याग्राहकेतीति** ॥ तथा च तादृशज्ञानसामग्र्याः साध्यकोट्यप्रविष्टत्वात्तया प्रामाण्यस्याग्रहणेऽपि न बा-

## रामरुद्रीयम्.

दिति अनुमितिजनकसामग्र्या अपि निरुक्तज्ञानग्राहकसामग्रीतया तद्ग्राह्यत्वस्य प्रामाण्ये नैयायिकैरपि अभ्युपगमेन सिद्धसाधनापत्तेरिति भावः । यावत्त्वविशेषणे च प्राथमिकानुव्यवसायसामग्र्या अपि यावदन्तर्गततया तद्ग्राह्यत्वस्य प्रामाण्ये नैयायिकैरनभ्युपगमान्न सिद्धसाधनमिति मन्तव्यम् । **इदं ज्ञानं अप्रमेति ज्ञानेनेति** ॥ ज्ञानपदं भ्रमपरम् । तेन ज्ञानग्राहकेत्यनेन स्वाश्रयज्ञानग्राहकत्वस्य विवक्षिततया अप्रमात्वाश्रयज्ञानस्य स्वानाश्रयतया एतज्ज्ञानसामग्र्याश्च स्वाश्रयज्ञानग्राहकत्वाभावेन यावदनन्तर्गतत्वात् न बाधप्रसक्तिरिति निरस्तम् । **प्रामाण्याग्रहादिति** ॥ यद्यपि लौकिकप्रत्यक्षसामग्र्याः अप्रामाण्योपनीतज्ञानसामग्र्यपेक्षया बलवत्त्वेन न प्रामाण्यभानमिति भावः । **इदं ज्ञानमिति** ॥ अप्रमात्मकज्ञाने अप्रमात्वावगाहीदं ज्ञानमात्रमिति ज्ञानं । तन्निष्ठस्या-

## नृसिंहप्रकाशिका.

नविषयत्वरूपं तादृशसामग्रीत्वव्यापकत्वग्राहकसामग्रीकत्वरूपं वा स्वतस्त्वं पर्यवसितम् । एवं च निरुक्तपरामर्शघटितसामग्र्यां निरुक्तसामग्रीत्वद्वयसमावेशेऽपि त्रिपुटिप्रत्यक्षवादिप्रभाकरमते चक्षुस्सन्निकर्षादिघटितसामग्र्यामपि स्वाश्रयग्राहकसामग्रीत्वसत्त्वात् तत्र नैयायिकमते स्वग्राहकसामग्रीत्वाभावेन व्यापकत्वाभावात् व्यापकत्वघटितस्वतस्त्वस्योभयवादिसिद्धमिति न सिद्धसाधनावकाश इति भावः । **इदं ज्ञानमिति** ॥ रजतविशेष्यकरजतत्वप्रकारकज्ञानमित्यर्थः । **अप्रमेति ज्ञानेनेति** ॥ तादृशभ्रमेणेत्यर्थः । **प्रामाण्याग्रहादिति** ॥ प्रमात्वस्याविषयीकरणादित्यर्थः । अस्मद्गुरुचरणास्तु—इति ज्ञानेनेति । इत्याकारकभ्रमजनकसामग्र्येत्यर्थः । प्रामाण्याग्रहादिति । प्रमात्वग्रहानुत्पत्तेरित्यर्थः इति व्याचक्रुः । तथा चेदं ज्ञानं अप्रमेत्याकारकरजतविशेष्यकरजतत्वप्रकारकज्ञानविशेष्यकाप्रमात्वप्रकारकज्ञानजनकसामग्र्या अपि स्वाश्रयग्राहकसामग्रीत्वरूपव्याप्यसत्त्वात् तत्र स्वग्राहकसामग्रीत्वरूपव्यापकाभावात् तद्घटितस्वतस्त्वं प्रमात्वे बाधितमिति भावः । **बाधवारणायेति** ॥ प्रमात्वे स्वतस्त्वस्य बाधवारणायेत्यर्थः । **अप्रामाण्याग्राहकेतीति** ॥ अप्रामाण्या-

इत्यनुव्यवसायनिष्ठप्रामाण्यग्राहकस्यापि अप्रामाण्याग्राहकत्वाभावात्स्वतस्त्वं न स्यादतस्तदिति। तस्मिन्ग्राह्यप्रामाण्याश्रयेऽप्रामाण्याग्राहिकेत्यर्थः। उदाहृतस्थले

---

## नीलकण्ठप्रकाशिका.

ध इति भावः। **अनुव्यवसायनिष्ठेत्यादि॥** तादृशानुव्यवसायनिष्ठं यदप्रामाण्यवद्विशेष्यकत्वविशिष्टाप्रामाण्यप्रकारकत्वरूपप्रामाण्यं तद्ग्राहकस्येत्यर्थः।'सामान्ये नपुंसकं' इति नपुंसकनिर्देशः। **स्वतस्त्वं न स्यादिति॥** यदा निरुक्तप्रामाण्यस्य पक्षता, तदा अप्रामाण्याग्राहकप्रामाण्यग्राहकसामग्र्या एव साध्यकोटौ निवेशनीयतया तादृशसामग्र्या अप्रसिद्धत्वात्तस्य स्वतोग्राह्यत्वं न सिध्येदित्यर्थः। सप्तमीतत्पुरुषमभिप्रेत्याह—**तस्मिन्निति॥** एतस्यैव विवरणं—**ग्राह्यप्रामाण्याश्रय इति॥** यादृशप्रामाण्यं प्रकृतानुमितावुद्देश्यं तादृशप्रामाण्याश्रयविशेष्यकाप्रामाण्यप्रकारकज्ञानाजनकेति अग्राहकान्तार्थः। इदं ज्ञानमप्रमा, इत्यनुव्यवसायनिष्ठप्रामाण्यग्राहकसामग्र्या व्यवसायविशेष्यकाप्रामाण्यग्रहजनकत्वेऽपि अनुव्यवसायविशेष्यकाप्रामाण्यग्रहाजनकत्वाज्ज्ञानग्राहकत्वाच्च अप्रामाण्यवद्विशेष्यकत्वादिघटितप्रामाण्यस्य स्वतोग्राह्यत्वसिद्धिरित्याह—**उदाहृतस्थल इति॥** इदं

## रामरुद्रीयम्.

प्रमात्ववति अप्रमात्वप्रकारकत्वरूपज्ञानप्रामाण्यस्य विवक्षिततया तन्नांशतो बाधः। तादृशप्रामाण्यग्राहकसामग्र्या नियमेनाप्रामाण्यग्राहकतया तादृशप्रामाण्ये अप्रामाण्याग्राहकस्वाश्रयग्राहकसामग्रीग्राह्यत्वरूपसाध्यस्य दुर्घटत्वादिति भावः। **तदितीति॥** अस्मिन् प्रकृतप्रामाण्याश्रयीभूतज्ञाने अप्रामाण्यस्याग्राहिकेति तत्पदोपादानेन अर्थः पर्यवसितः। उक्तप्रामाण्यग्राहिका या सामग्री इदं ज्ञानं अप्रमेत्याकारकज्ञानेनाप्रामाण्यं गृह्णाति अपि तु

## नृसिंहप्रकाशिका.

ग्राहकेत्यन्तस्य स्वतस्त्वशरीरप्रवेश इत्यर्थः। तथाचेदं ज्ञानं अप्रमेति ज्ञानजनकसामग्र्या अप्रामाण्याग्राहकत्वाभावात् तत्र तद्घटितव्याप्याभावेन प्रमात्वे तद्घटितस्वतस्त्वमबाधितमिति भावः। **इदं ज्ञानमिति॥** शुक्तिविशेष्यकरजतत्वप्रकारकज्ञानमित्यर्थः। **अप्रमेतीति॥** इत्याकारकज्ञानविशेष्यकरजतत्वाभाववद्विशेष्यकत्वावच्छिन्नरजतत्वप्रकारकत्ववद्विशेष्यकत्वावच्छिन्नरजतत्वाभाववद्विशेष्यकत्वावच्छिन्नरजतत्वप्रकारकत्वप्रकारकमित्यर्थः। **इत्यनुव्यवसायनिष्ठप्रामाण्यग्राहकस्येति॥** इत्याकारको य इदं ज्ञानं अप्रमेत्यनुव्यवसायस्तन्निष्ठनिरुक्तप्रामाण्यप्रकारको यो ग्रहः तज्जनकचक्षुस्सन्निकर्षादिघटितकारणकलापस्येत्यर्थः। **अप्रामाण्याग्राहकत्वाभावादिति॥** व्यवसायनिष्ठाप्रामाण्यग्राहकत्वेनेत्यादिः॥ **स्वतस्त्वं न स्यादिति॥** अनुव्यवसायनिष्ठनिरुक्तप्रमात्वस्य स्वतोग्राह्यत्वानुपपत्तिरित्यर्थः। तथा चाप्रामाण्याग्राहकस्वाश्रयग्राहकसामग्र्या एवोदाहृतस्थलेऽप्रसिद्धत्वात् तादृशसामग्रीत्वव्यापकस्वग्राहकसामग्रीत्वरूपस्वतस्त्वस्य सुतरामप्रसिद्धत्वादिति भावः। **इत्यर्थ इति॥** तदप्रा-

व्यवसायाप्रामाण्यग्राहकस्याप्यनुव्यवसाये तद्ग्राहकत्वात्स्वतस्त्वसिद्धिः । ननु

## नीलकण्ठप्रकाशिका.

ज्ञानं अप्रमेत्यत्रेत्यर्थः । अधिकमस्मदीयमणिदीधितिव्याख्यायामनुसन्धेयम् । इत्थं वि-

## रामरुद्रीयम्

तज्ज्ञानविषयीभूतज्ञान एवेति नांशतो बाध इति भावः । यद्यपि एवमपि घटज्ञानं गुण इति शाब्दानुमितिसामग्र्यामि*.......................................................

## नृसिंहप्रकाशिका.

माण्याग्राहकेति वाक्यप्रतिपाद्यार्थ इत्यर्थः । **स्वतस्त्वसिद्धिरिति** ॥ तथाच तत्पदस्य स्वाश्रयपरतया स्वाश्रयविशेष्यकाप्रमात्वप्रकारकग्रहाजनकस्वाश्रयग्राहकसामग्रीत्वव्यापक-स्वग्राहकसामग्रीत्वकत्वमेव स्वनिष्ठस्वतस्त्वमिति फलितम् । एवं च निरुक्तस्थले व्यवसा-यस्य प्रमात्वरूपस्वाश्रयत्वाभावात् अनुव्यवसायस्यैव स्वाश्रयतया तद्ग्राहकसामग्र्याः स्वाश्रयविशेष्यकाप्रामाण्यप्रकारकज्ञानाजनकतयोदाहृतस्थले तादृशसामग्र्याः प्रसिद्धत्वात् तादृशसामग्रीत्वव्यापकस्वग्राहकसामग्रीत्वकत्वरूपस्वतस्त्वस्यानुव्यवसायनिष्ठप्रामाण्ये स-त्त्वात् नोक्तानुपपत्तिरिति भावः । अत्र प्रत्यक्षमात्रस्य ज्ञानज्ञातृज्ञेयरूपत्रितयविशिष्टविषय-कत्ववादिनां प्राभाकराणां मते प्रत्यक्षमात्रस्यानुव्यवसायरूपत्वेन प्रामाण्यानुमितिजनक-सामग्र्यामिव विषयचक्षुस्संयोगात्ममनस्संयोगघटितसामग्र्यामपि स्वाश्रयग्राहकसामग्रीत्व-सत्त्वात्तत्र स्वग्राहकसामग्रीत्वरूपव्यापकस्यापि सत्त्वेन प्रामाण्ये तन्मतरीत्या विधिकोटि-प्रसिद्धिः । मुरारिमिश्रमते अनुव्यवसायस्य व्यवसायविषयकत्ववत् तन्निष्ठप्रामाण्यविषय-कत्वस्यापि सत्त्वेन चक्षुस्संयोगालोकसंयोगाद्यघटितात्ममनस्संयोगघटितसामग्र्यामपि स्वा-श्रयग्राहकसामग्रीत्वसत्त्वेन तत्र स्वग्राहकसामग्रीत्वरूपव्यापकस्यापि सत्त्वात् तन्मतरीत्या विधिकोटिप्रसिद्धिः । भट्टमते ज्ञानमतीन्द्रियं तज्जन्यज्ञाततयानुमेयम् । ज्ञातता तु ज्ञानवत् सविषया घटो ज्ञात इत्याकारकप्रत्यक्षसिद्धा समवायेन स्वरूपसंबन्धेन वा विषयवृत्तिः । एवं च घटवृत्तिज्ञातता घटत्वप्रकारकघटविशेष्यकज्ञानजन्या जन्यतासंबन्धेन तादृशज्ञानवती वा घटवृत्तिघटत्वप्रकारकज्ञाततात्वात् यन्नैवम् तन्नैवं यथा पटनिष्ठज्ञाततेत्यादिव्यतिरेक्यनुमानेन इदानींतनघटवृत्तिज्ञाततापक्षकनिरुक्तसाध्यक-निरुक्तहेतुकपूर्वकालीनघटवृत्तिज्ञाततादृष्टान्तघटितान्वय्यनुमानेन वा ज्ञानवत् तन्निष्ठप्रामाण्य-स्याप्यनुमितिसंभवात् । तथाच ज्ञाततापक्षकानुमितिजनकसामग्र्यामपि तन्मते स्वाश्रयग्राह-कसामग्रीत्वसत्त्वेन तत्र स्वग्राहकसामग्रीत्वरूपव्यापकस्यापि सत्त्वात् तत्र भट्टमतरीत्या विधिकोटिप्रसिद्धिः बोध्या । अस्मद्गुरुचरणास्तु—स्वाश्रयग्राहकसामग्रीग्राह्यत्वं स्वाश्रयग्राह-कसामग्रीजन्यज्ञानविषयत्वमेव । तादृशसामग्रीजन्यग्रहश्च स्वाश्रयग्रह एवेति लाघवात्

---

*एतत्पर्यन्तमेव अयं ग्रन्थः मातृकासु उपलभ्यते ।

स्वत एव प्रामाण्यं गृह्यते, 'घटमहं जानामि' इत्यनुव्यवसायेन घट-घटत्वयोरिव तत्सम्बन्धस्यापि विषयीकरणान् व्यवसायरूपप्रत्यासत्तेस्तुल्य-

---

## नीलकण्ठप्रकाशिका.

प्रतिपत्तिं उपन्यस्य मीमांसकमतमुपन्यस्यति—**नन्विति** ॥ **स्वत एवेत्यादि** ॥ घटत्वादिघटितप्रामाण्यं निरुक्तसामग्रीत एव गृह्यत इत्यर्थः । अप्यर्थकैनवकारेण अनुमानादिपरिग्रहः । **अनुव्यवसायेनेति** ॥ इदं च मिश्रमताभिप्रायेण । मतत्रयसाधारण्येन तु प्राथमिकज्ञानग्रहेणेति ध्येयम् । **तत्संबन्धस्यापीति** ॥ घटघटत्वयोर्यः संबन्धः तस्या-

## नृसिंहप्रकाशिका.

स्वाश्रयविषयकग्राहकत्वव्यापकस्वनिरूपितविषयताकत्वं पर्यवसितम् । तदप्रामाण्याग्राहकत्वं स्वाश्रयविशेष्यकाप्रामाण्यप्रकारकज्ञानासमवहितत्वम् । तथा च स्वाश्रयविशेष्यकाप्रामाण्यप्रकारकग्रहासमवहितस्वाश्रयविषयकग्राहकत्वव्यापकस्वनिरूपितविषयताकत्वमेव लघुभूतं निर्दुष्टं ग्रन्थकृदनुमतं स्वतस्त्वम् । मतत्रये विधिकोटिप्रसिद्धिः । तद्घटकीभूतविशेषणप्रयोजनं च उक्तरीत्या ज्ञेयमिति व्याचक्रुः । ननु कर्तृत्वादिलिङ्गकात्मविशेष्यकज्ञानत्वाद्यवच्छिन्नसाध्यकानुमितिजनकसामग्र्यामपि जानातीत्यादिवाक्यार्थाधीनशाब्दजनकसामग्र्यामपि च व्याप्यदलसत्त्वात् तत्र विषयविशेषघटितप्रमात्वरूपस्वग्राहकसामग्रीत्वरूपव्यापकाभावेन मतत्रयेऽपि निरुक्तप्रमात्वे स्वतस्त्वरूपविधिकोट्यप्रसिद्धिरिति चेन्न । किञ्चिद्धर्मावच्छिन्नविषयकत्वेन स्वाश्रयग्राहकत्वघटकस्वाश्रयविषयताया निवेशनीयत्वात् प्रकृते आत्मविशेष्यकज्ञानत्वाद्यवच्छिन्नसाध्यकानुमितौ ज्ञानस्य किञ्चिद्धर्मावच्छिन्नविषयकत्वेनाविषयत्वात्तन्निरूपितज्ञानत्वावच्छिन्नविषयतायाः किञ्चिद्धर्मावच्छिन्नविषयकत्वावच्छिन्नत्वाभावेन निरुक्तानुमितिसामग्र्यां किञ्चिद्धर्मावच्छिन्नविषयकत्वावच्छिन्नस्वाश्रयनिष्ठविषयताशालिग्राहजनकसामग्रीत्वरूपव्याप्याभावेन तत्र व्यापकाभावेऽपि क्षतिविरहात् मतत्रयेऽपि विधिकोटिप्रसिद्धिरव्याहतैवेति भावः । नन्वात्मविशेष्यकघटादिविषयकत्वविशिष्टज्ञानत्वाद्यवच्छिन्नसाध्यकानुमितिजनकसामग्र्यां घटं जानामीतिवाक्याधीनशाब्दजनकसामग्र्यां च निरुक्तव्याप्यदलसत्त्वेन तत्र निरुक्तव्यापकदलाभावात् तन्मते विधिकोट्यप्रसिद्धिः दुर्वारेति चेन्न । तैः घटं जानामीति अनुव्यवसायात्मकप्रत्यक्षजनकसामग्र्यामिव निरुक्तानुमितिशाब्दबोधजनकसामग्र्यामपि प्रामाण्यग्राहकत्वस्वीकारेण तत्र व्यापकदलस्यापि सिद्ध्या विधिकोटिप्रसिद्धेः निष्प्रत्यूहत्वादिति दिक् । एतावता संशयरूपद्वितीयाङ्गं प्रदर्श्य इदानीं पूर्वपक्षरूपतृतीयाङ्गमारचयति—**नन्वित्यादिना** ॥ **स्वत एव प्रामाण्यं गृह्यत इति** ॥ प्रामाण्यं स्वतो गृह्यत एवेति योजना ॥ प्रामाण्यं स्वतोग्राह्यमेवेत्यर्थः । स्वाश्रयविशेष्यकाप्रामाण्यप्रकारकज्ञानाजनकस्वाश्रयग्राहकसामग्रीत्वव्यापकस्वग्राहकसामग्रीत्वकमेवेति यावत् । स्वतोग्राह्यत्वमुपपादयति—**घटमहं जानामीत्यनुव्यवसायेनेति** ॥ केवलं जानामीत्याकारकज्ञानप्रत्यक्षे मानाभावेन घटत्वविशिष्टविषयकत्वेनैव ज्ञानप्रत्यक्षोत्पत्तेरिति भावः । **तत्संबन्धस्यापीति** ॥ घट-

स्वात् । पुरोवर्तिनि प्रकारसम्बन्धस्यैव प्रमात्वपदार्थत्वादिति चेन्न । स्वतः-प्रामाण्यग्रहे 'जलज्ञानं प्रमा न वा' इत्यनभ्यासदशायां प्रमात्वसंशयो न

## नीलकण्ठप्रकाशिका.

पीत्यर्थः । नन्वनुव्यवसाये कथं संबन्धस्य भानमित्याशङ्क्य यथा घटघटत्वयोर्व्यवसाय-रूपप्रत्यासत्त्या भानं, तथा तत्संबन्धस्यापि व्यवसायरूपप्रत्यासत्तेरविशेषादित्याह — **व्यवसायेति** ॥ तावता कथं प्रामाण्यस्य भानमत आह— **पुरोवर्तिनि प्रकारसम्बन्धस्यैवेति** ॥ पुरोवर्तिनि यः प्रकारसंबन्धः तद्घटितस्यैवेत्यर्थः । अयमाशयः । नैया-यिका अपि अनुव्यवसायं विशेष्यत्वप्रकारत्वयोर्भानमङ्गीकुर्वन्ति, पुरोवर्तिनं घटत्वेन जानामीत्याकारकस्यैव अनुव्यवसायस्य तैरङ्गीकारात् । परन्तु पुरोवर्तिनि घटादौ घटत्वा-दिरूपप्रकारसंबन्धभानं नाङ्गीकुर्वन्ति । अतस्तत्र प्रकारसंबन्धभानस्य व्यवस्थापने किमपि नावशिष्टमिति प्रामाण्यस्य भानं सिध्यति, अनुपस्थितयोरपि विशेष्यत्वप्रकारत्वयोर्भानस्य सर्वसंमतत्वादिति । **जलज्ञानमित्यादि** ॥ जलज्ञानं प्रमा, न वा' इत्याकारकः ॥

## नृसिंहप्रकाशिका.

घटत्वयोः समवायरूपसंबन्धस्यापीत्यर्थः । **विषयीकरणादिति** ॥ तथा च स्वनिरूपित-विषयताश्रययावद्विषयकत्वस्य स्वनिष्ठविषयताकप्रत्यक्षत्वव्यापकत्वादिति भावः । ननु बाह्यपदार्थेन समं मनसः लौकिकसन्निकर्षाभावात् निरुक्तानुव्यवसायस्य कथं घटघट-त्वसंबन्धाविषयकत्वं अत आह— **व्यवसायेति** ॥ **तुल्यत्वादिति** ॥ तथा च घटघट-त्वाभ्यां मनसो लौकिकसन्निकर्षाभावेऽपि ज्ञानप्रत्यासत्त्या निरुक्तानुव्यवसायस्य यथा घट-घटत्वविषयकत्वं तथा तयैव प्रत्यासत्त्या तत्संबन्धविषयकत्वमपि सुघटमिति भावः । ननु निरुक्तानुव्यवसायस्य घटघटत्वादिविषयकत्वेऽपि घटत्ववति घटत्वप्रकारकत्वरूपप्रमात्व-विषयकत्वे मानाभाव इत्यत आह— **पुरोवृत्तिनीति** ॥ विशेष्यनिष्ठप्रकारतावच्छेदकसं-बन्धस्यैवेत्यर्थः । एतेन नष्टो घट इत्याकारकज्ञानस्य नष्टत्वरूपप्रकारतासंबन्धस्य पुरोवृत्ति-निष्ठत्वाभावात् प्रमात्वानुपपत्तिः, शुक्तिविशेष्यकरजतत्वप्रकारक-इदंरजतमितिज्ञानस्य शु-क्तिरूपविशेष्ये रजतत्वरूपप्रकारस्य कालिकसंबन्धसत्त्वेन प्रमात्वापत्तिश्चेति दूषणमपा-स्तम् ; **प्रमात्वपदार्थत्वादिति** ॥ तत्संबन्धावच्छिन्नप्रकारताशालिज्ञाननिष्ठतत्संबन्धघटित-प्रमात्वसत्त्वप्रयोजकत्वादित्यर्थः । एतेन तद्वति तत्प्रकारकत्वरूपप्रमात्वस्यैव स्वतोग्राह्य-त्वादिना पूर्वं विचारविषयत्वात् पुरोवृत्तिनिष्ठप्रकारसंबन्धस्य प्रमात्वेन केनाप्यनङ्गीकृतत्वाच्च तदनुपपन्नमिति दूषणं प्रत्युक्तम् । तथा च समवायेन घटत्वविशिष्टघटविषयकत्वेन ज्ञानमहं-जानामीत्यनुव्यवसायस्य ज्ञानरूपविशेष्यविषयकत्ववत् समवायेन घटत्वविशिष्टविषय-कत्वरूपप्रकारविषयकत्वमप्यावश्यकम् । एतच्च विशेष्यभूतज्ञाननिष्ठस्य घटविशेष्यकत्वविशि-ष्टसमवायसंबन्धावच्छिन्नघटत्वप्रकारकत्वस्य प्रामात्वरूपतया निरुक्तप्रमात्वविषयकत्वं अ-व्याहतमेवेति निरुक्तसामग्रीत्वव्यापकस्वग्राहकसामग्रीत्वकत्वरूपस्वतोग्राह्यत्वं प्रमात्वे निरा-

स्यात् । अनुव्यवसायेन प्रामाण्यस्य निश्चितत्वात् । तस्मात्स्वतोग्राह्यत्वाभावात्परतो ग्राह्यत्वमेव । तथाहि । प्रथमं जलज्ञानानन्तरं प्रवृत्तौ सत्यां जल-

---

## नीलकण्ठप्रकाशिका.

**अनभ्यासदशायां** ॥ प्राथमिकजलज्ञानग्रहोत्तरदशायाम् । अनुभवसिद्धः प्रमात्वसंशयो न स्यादित्यर्थः । **निश्चितत्वादिति** ॥ तद्वत्तानिश्चयस्य तदभाववत्ताज्ञानं प्रति प्रतिबन्धकत्वादिति भावः । अत्र 'ज्ञातो घटः' इति प्रतीतेर्ज्ञानविषयताविषयकत्वकल्पनेनैव निर्वाहे अतिरिक्तज्ञातता न कल्पनीया गौरवान्मानाभावाच्चेति तन्निरसनप्रकारो बोध्यः । **तस्मादिति** ॥ अनभ्यासदशायां संशयानुभवादित्यर्थः । एतस्य स्वतोग्राह्यत्वाभावेऽन्वयः । **परतोग्राह्यत्वमिति** ॥ प्रामाण्यस्यानुमानादित एव ग्राह्यत्वमित्यर्थः । एतेन

## नृसिंहप्रकाशिका.

बाधमिति भावः । उत्तररूपचतुर्थाङ्गमाह—**स्वतः प्रामाण्यग्रह इति** ॥ प्रामाण्यस्य निरुक्तस्वतोग्राह्यत्वस्वीकार इत्यर्थः । **जलज्ञानमित्यादि** ॥ अनभ्यासदशायां जलज्ञानं प्रमा न वेति संशयो न स्यादिति योजना । **अनभ्यासदशायां** जलज्ञानं प्रमेत्याकारकजलज्ञानविशेष्यकप्रमात्वनिश्चयाभावदशायाम् । **जलज्ञानं प्रमा न वेति** ॥ जलज्ञानानन्तरजातजलज्ञानवानहमितिज्ञानानन्तरमित्यादिः । **इति संशयो न स्यादिति** ॥ इत्याकारकसंशयो नोत्पद्येतेत्यर्थः । न चेष्टापत्तिः । अनुभवविरोधादिति भावः । तत्र हेतुमाह—**अनुव्यवसायेनेति** ॥ निश्चितत्वादित्यनेनान्वयः । तृतीयायाः अभेदार्थकतया निरुक्तप्रामाण्यस्य उक्तरीत्या अनुव्यवसायरूपपूर्वोत्पन्ननिश्चयविषयत्वादित्यर्थः । तथाच भवन्मते पूर्वं जलज्ञानविशेष्यकप्रमात्वप्रकारकानुव्यवसायात्मकनिश्चयरूपप्रतिबन्धकसत्त्वात् प्रमात्वसंशयानुपपत्तिरिति भावः । उपसंहारात्मकनिर्णयरूपपञ्चमाङ्गमाह—**तस्मादिति** ॥ सर्वानुभवसिद्धनिरुक्तसंशयानुपपत्तिरूपबाधकसत्त्वादित्यर्थः । इदं च स्वतोग्राह्यत्वाभावे हेतुः । **स्वतोग्राह्यत्वाभावादिति** ॥ निरुक्तस्वतोग्राह्यत्वस्य वक्तुमशक्यत्वादित्यर्थः । इदं च परतोग्राह्यत्वे हेतुः । **परतोग्राह्यत्वमिति** ॥ अनुमानग्राह्यत्वमित्यर्थः । अत्र तद्वद्विशेष्यकत्वविशिष्टतत्प्रकारकत्वं न प्रमात्वं जलविशेष्यकद्रव्यत्वप्रकारकस्य मरुमरीचिकाविशेष्यकजलत्वप्रकारकस्य च इदं द्रव्यमिदं जलं इति समूहालम्बनस्यापि जलत्वप्रमात्वापत्तेः । किन्तु तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वमेव । एवं च निरुक्तसमूहालम्बनीयजलनिष्ठविशेष्यताया जलत्वप्रकारतानिरूपितत्वाभावेन जलविशेष्यकजलत्वप्रकारकत्वयोरवच्छेद्यावच्छेदकभावासंभवात् नोक्तसमूहालम्बनस्य तादृशप्रमात्वापत्तिः । इत्थञ्च घटं जानामीत्यनुव्यवसायस्य ज्ञानांशे घटत्वविशिष्टविषयकत्वप्रकारकत्वात् विशिष्टविषयकत्वस्य विशेषणविषयकत्वविशेष्यविषयकत्वोभयानतिरिक्ततया घटविशेष्यकत्वविशिष्टघटत्वप्रकारकत्वप्रकारकत्वेऽपि घटत्वप्रकारतानिरूपितत्वेन घटविशेष्यतायाः अविषयत्वात् उक्तानुव्यवसायस्य घटविशेष्यकत्वावच्छिन्नत्वविशिष्टघटत्वप्रकारकत्वरूपप्रमात्व-

**लाभे सति पूर्वोत्पन्नं जलज्ञानं प्रमा सफलप्रवृत्तिजनकत्वात् यन्नैवं तन्नैवं यथा अप्रमा इति व्यतिरेकिणा प्रमात्वं निश्चीयते । द्वितीयादिज्ञानेषु पूर्व-**

---

## नीलकण्ठप्रकाशिका.

मीमांसकैरभ्युपगतायां प्रामाण्यनिश्चयस्य प्रवृत्तिहेतुतायां व्यभिचारो दर्शितः । न च निष्कम्पप्रवृत्तावेव प्रामाण्यनिश्चयस्य हेतुता, सकम्पप्रवृत्तौ तु प्रामाण्यसंशयस्य, निष्कम्पत्वं सकम्पत्वं च विषयिताविशेषः, एवं च तत्र सकम्पप्रवृत्त्यङ्गीकारेऽपि प्रामाण्यनिश्चयस्य हेतुतायां कथं व्यभिचार इति वाच्यम्, तथापि यत्र प्रामाण्यस्याप्रामाण्यस्य वा ज्ञानं नासीत् आसीच्च केवलजलादिज्ञानं तत्र प्रवृत्तिप्रदर्शनेन प्रामाण्यसंशयहेतुतायां व्यभिचारस्य दुर्वारत्वात् । न चैवं जलादिज्ञाने अप्रामाण्यनिश्चयकाले प्रवृत्तिः स्यादिति शङ्कनीयम्, अगृहीताप्रामाण्यकजलादिज्ञानत्वेन तद्धेतुतास्वीकारेणादोषादिति सङ्क्षेपः । **जललाभे सतीति** ॥ एतावता वक्ष्यमाणस्य प्रामाण्यव्यवस्थापकहेतोः स्वरूपासिद्धिशङ्का निराकृता । तदानीं पक्षस्यासत्त्वादाह—**पूर्वोत्पन्नमिति** ॥ **समर्थेति** ॥ तद्वद्विशेष्यकतत्प्रकारकेत्यर्थः । अन्वय्युदाहरणासम्भवात् व्यतिरेक्युदाहरणं सदृष्टान्तमाह—**यन्नैवं तन्नैवमिति** ॥ यदप्रमा तत्समर्थप्रवृत्त्यजनकमित्यर्थः । **व्यतिरेकिणा** व्यतिरेकव्याप्तिमता । **निश्चीयते** अनुमीयते । **द्वितीयादिज्ञानेषु** द्वितीयादिजलज्ञानेषु ।

## नृसिंहप्रकाशिका.

विषयकत्वं न संभवतीति प्रमात्वस्य प्राभाकरमते मिश्रमते च निरुक्तस्वतोग्राह्यत्वाभावात् मतद्वयमप्रामाणिकमेव । ज्ञानस्यातीन्द्रियत्वं, ज्ञाततायाः ज्ञानजन्यत्वम्, ज्ञानविषयत्वातिरिक्तत्वं सविषयकत्वं चाप्रामाणिकमिति ज्ञाततापक्षकानुमानग्राह्यत्वं प्रमात्वे सुतरामप्रामाणिकमिति भट्टमतमपि हेयमिति दीपिकाकारस्य निगूढाभिप्राय इति हृदयम् । नैयायिकमतसिद्धानुमानग्राह्यत्वमुपपादयति—**तथाहीत्यादिना** ॥ **प्रथमं जलज्ञानानन्तरमिति** ॥ प्राथमिकजलज्ञानानन्तरमित्यर्थः । प्रथमं जलज्ञानमनन्तरं जलज्ञानवानहमित्यनुव्यवसायः । अनन्तरमिदं ज्ञानं प्रमा न वेति संशयः । अनन्तरं जले इष्टसाधनताज्ञानाधीनेच्छा तदनन्तरमिति यावत् । तेन पक्षज्ञानाभावात् इष्टसाधनताज्ञानाभावेन प्रवृत्त्यनुत्पत्त्या तद्घटितहेतुज्ञानासंभवाच्च कथमनुमितिरिति शङ्का निरस्ता । द्वितीयादिजलज्ञानेषु अन्वयव्यतिरेकिणापि प्रमात्वग्रहस्य वक्ष्यमाणत्वात् प्राथमिकजलज्ञानस्य पक्षत्वलाभाय जलज्ञाने प्राथमिकत्वमभिहितम् । पक्षतावच्छेदकन्तु तज्जलज्ञानत्वमेवेति हृदयम् । **प्रवृत्तौ सत्यां जललाभे सतीति** ॥ प्रवृत्तिसमकालं जलप्राप्तौ सत्यामित्यर्थः । इदं च वक्ष्यमाणहेतोः प्रमात्वव्याप्यत्वसंपादकस्य प्रवृत्तिनिष्ठसफलत्वस्य लाभाय । **पूर्वोत्पन्नजलज्ञानमिति** ॥ तदनन्तरमित्यादिः । प्रवृत्तिसमकालं परामर्शासंभवेन यथाश्रुतासङ्गतेः । प्राथमिकजलज्ञा मित्यर्थ । **प्रमेति** ॥ जलत्ववद्विशेष्यकत्वावच्छिन्नजलत्वप्रकारकत्वरूपप्रामाण्यवदित्यर्थः । **सफलेति** ॥ फलविषयकेत्यर्थः । **प्रवृत्तिजनकत्वादिति** ॥

ज्ञानदृष्टान्तेन तत्सजातीयत्वलिङ्गेनान्वयव्यतिरेकिणापि गृह्यते । प्रमाया गुणजन्यत्वमुत्पत्तौ परतस्त्वम् । प्रमासाधारणकारणं गुणः, अप्रमासाधारण-

---

## नीलकण्ठप्रकाशिका.

**तत्सजातीयत्वलिङ्गेन** ॥ पूर्वज्ञानसजातीयत्वरूपलिङ्गेन । समर्थप्रवृत्तिजनकत्वेनेति यावत् । **गृह्यत इति** ॥ प्रामाण्यमनुमीयत इत्यर्थः । एवं ज्ञप्तौ परतस्त्वं व्यवस्थाप्य उत्पत्तौ

## नृसिंहप्रकाशिका.

इच्छाद्वारा प्रवृत्तिप्रयोजकत्वादित्यर्थः । **इति व्यतिरेकिणेति** ॥ इत्यादिव्यतिरेकन्यायप्रयोज्यमानसपरामर्शेनेत्यर्थः । यद्वा इति व्यतिरेकिणेति । इत्याकारकव्यतिरेकसहचारज्ञानाधीनपरामर्शेनेत्यर्थः । **निश्चीयत इति** ॥ अनुमीयत इत्यर्थः । **द्वितीयादिज्ञानेष्विति** ॥ इदं जलमित्याकारकद्वितीयतृतीयादिज्ञानेष्वित्यर्थः । एतस्य गृह्यत इत्युत्तरेणान्वयः । **पूर्वज्ञानदृष्टान्तेनेति** ॥ जललाभे सतीत्यन्तमादौ पूरणीयम् । यथा प्राथमिकजलज्ञानमित्याकारकप्राथमिकजलज्ञानरूपान्वयदृष्टान्तप्रतिपादकवाक्यघटितेनेत्यर्थः । अत्र यथा अप्रमेत्याकारकाप्रमारूपव्यतिरेकदृष्टान्तप्रतिपादकवाक्यघटितेनेत्यपि पूरणीयम् । **तत्सजातीयलिङ्गेनेति** ॥ अन्वयदृष्टान्तवृत्तिलिङ्गसजातीयपक्षवृत्तिलिङ्गेनेत्यर्थः । दृष्टान्तपक्षोभयवृत्तितावच्छेदकसफलप्रवृत्तिजनकतात्वरूपलिङ्गतावच्छेदकावच्छिन्नप्रतिपादकहेतुवाक्यघटितेनेति यावत् । साजात्यनिवेशात् दृष्टान्तपक्षसाधारणानुगतसफलप्रवृत्तिजनकत्वस्याभावेऽपि नासिद्धिः । **अन्वयव्यतिरेकिणापीति** ॥ अन्वयेन व्यतिरेकेण च जायमानज्ञानेनेत्यर्थः । अन्वयव्यतिरेकात्मकनिरुक्तन्यायद्वयप्रयोज्यपरामर्शेनेति यावत् । यद्वा पूर्वज्ञानदृष्टान्तेनेति । प्राथमिकजलज्ञानरूपदृष्टान्तघटितान्वयसाहचर्यप्रकारेणेत्यर्थः । तत्सजातीयलिङ्गेनेति । निरुक्तलिङ्गतावच्छेदकावच्छिन्नविशेष्यकेनेत्यर्थः । अत्र अप्रमारूपव्यतिरेकदृष्टान्तघटितव्यतिरेकसाहचर्यविषयकेनेत्यपि पूरणीयम् । अन्वयव्यतिरेकिणापीति । अन्वयसहचारज्ञानेन व्यतिरेकसहचारज्ञानेन च जायमानज्ञानेनेत्यर्थः । निरुक्तान्वयसहचारज्ञाननिरुक्तव्यतिरेकसहचारज्ञानोभयप्रयोज्यपरामर्शेनेति यावत् । **गृह्यत इति** ॥ प्रमात्वमित्यादिः । अनुमीयत इत्यर्थः । एतावता ज्ञाननिष्ठप्रमात्वस्य परमतसिद्धस्वतस्त्वनिराकरणपूर्वकं परतस्त्वं व्यवस्थाप्य इदानीं प्रमानिष्ठोत्पत्तौ ज्ञानसामान्योत्पादकसामग्रीत्वव्यापकस्वोत्पादकसामग्रीत्वकत्वरूपं स्वतस्त्वं प्राभाकरा वदन्ति । तन्मते सर्वेषां ज्ञानानां यथार्थत्वात् । तन्मतनिराकरणायादौ प्रमोत्पत्तेः परतस्त्वमुपपादयति—**प्रमाया इति** ॥ प्रमायामुत्पत्तौ गुणजन्यत्वं परतस्त्वमिति योजना । **गुणजन्यत्वमिति** ॥ वक्ष्यमाणपारिभाषिको यो गुणः तज्जन्यत्वनियतत्वतादृशगुणप्रयोज्यत्वान्यतररूपमित्यर्थः । **परतस्त्वमिति** ॥ परतस्त्वमेवेत्यर्थः । स्वीकार्यमिति शेषः । तथाच वक्ष्यमाणयुक्त्या भ्रमाङ्गीकारस्यावश्यकतया भ्रमोत्पत्तौ निरुक्तस्वतस्त्वासंभवात् पारिभाषिकगुणजन्यत्वनियतत्वतादृशगुणप्रयोज्यत्वान्यतररूपपरतस्त्वमेवागत्या स्वीकार्यमिति भावः । ननु दण्डप्रत्य-

कारणं दोषः । तत्र प्रत्यक्षे विशेषणवद्विशेष्यसंनिकर्षो गुणः । अनुमितौ व्यापकवति व्याप्यज्ञानम् । उपमितौ यथार्थसादृश्यज्ञानम् । शाब्दज्ञाने यथार्थयोग्यताज्ञानम् । इत्याद्यूहनीयम् । पुरोवर्तिनि प्रकाराभावस्यानुव्यव-

## नीलकण्ठप्रकाशिका.

परतस्त्वं निरूपयति—**प्रमाया इति** ॥ **प्रमासाधारणकारणमिति** ॥ प्रमात्वाधिकदेशवृत्तिधर्मानवच्छिन्नप्रमानिष्ठकार्यतानिरूपितकारणताशालीत्यर्थः । तेन ज्ञानमात्रहेतुभूतात्ममनःसंयोगादेर्भ्रमजनकपित्तादिदोषाणां च व्युदासः । अप्रमासाधारणकारणत्वमप्येवं परिष्कर्तव्यम् । चतुर्विधप्रमायां हेतुभूतं गुणं क्रमेणोपपादयति—**तत्रेति** ॥ चतुर्विधप्रमा-

## नृसिंहप्रकाशिका.

क्षस्येन्द्रियसंयोगरूपगुणजन्यत्वेऽपि द्रव्यसमवेतादिप्रत्यक्षस्य इन्द्रियसंयुक्तसमवायादिजन्यत्वेन संयोगजन्यत्वाभावात् तदुत्पत्तेः निरुक्तपरतस्त्वं बाधितम् । न च तत्प्रत्यक्षस्य संयुक्तसमवायादिजन्यत्वे तद्घटकसंयोगादिजन्यत्वस्यापि अनपायात् नोक्तदोष इति वाच्यम् । तथापि शब्दस्य तत्समवेतस्य तद्व्यक्तिकत्वाद्यभावानाञ्च प्रत्यक्षे समवायसमवेतसमवायविशेषणतादीनामेव सन्निकर्षविधया हेतुत्वेन संयोगरूपगुणजन्यत्वाभावाच्छब्दादिविषयकप्रत्यक्षोत्पत्तेः निरुक्तपरतस्त्वं बाधितमेवेत्यत आह—**प्रमाऽसाधारणकारणमिति** ॥ प्रमायां सन्निकर्षविधया कारणमेवेत्यर्थः । **गुण इति** । गुणशब्देन स्वीकार्यमित्यर्थः । तथाच श्रोत्रावच्छिन्नसमवायादीनां निरुक्तपारिभाषिकगुणरूपत्वाच्छब्दादिप्रत्यक्षोत्पत्तौ न निरुक्तपरतस्त्वभङ्ग इति भावः । अत्र तुल्ययुक्त्या अप्रमोत्पत्तेरपि परतस्त्वं दोषविशेषजन्यत्वनियतत्वादिरूपमग्रे वाच्यम् । तत्र दोषाणां नानाविधत्वात् अत्रैव प्रसङ्गसङ्गत्या प्रकृतोपयुक्तं दोषपदार्थमाह—**अप्रमाऽसाधारणकारणमिति** ॥ अस्मद्गुरुचरणास्तु—प्रमाऽसाधारणकारणं गुण इत्युत्तरमप्रमाऽसाधारणकारणं दोष इति पाठः प्रामादिकः, किन्तु पित्तादिदोषजन्यत्वं उत्पत्तौ परतस्त्वमित्युत्तरमेव तादृशपाठोऽस्तीति न सन्दर्भाशुद्धिरिति व्याचक्रुः । अन्वयव्यतिरेकसहकृतप्रत्यक्षप्रमाणगम्याप्रमानिरूपितकारणतावदित्यर्थः ॥ **दोष इति** ॥ प्रकृतदोषशब्दार्थ इत्यर्थः । प्रत्यक्षादिप्रमासु क्रमेण गुणमुदाहरति—**प्रत्यक्ष इति** ॥ प्रत्यक्षप्रमायामित्यर्थः । सप्तम्यर्थो निरूपितत्वम् । तस्य च गुणपदार्थैकदेशकारणतायामन्वयः । **विशेषणवद्विशेष्यसन्निकर्ष इति** ॥ प्रकारविशिष्टधर्मिनिष्ठेन्द्रियसन्निकर्ष इत्यर्थः । **गुण इति** ॥ व्यापारविधया कारणताश्रय इत्यर्थः । एवमुत्तरत्रापि । **अनुमिताविति** ॥ अनुमितिप्रमायामित्यर्थः । **व्यापकवति व्याप्यज्ञानमिति** ॥ गुण इत्यस्यानुवृत्तिः । अनुमितिविधेयाश्रयविशेष्यकव्याप्यप्रकारकनिश्चय इत्यर्थः । **उपमिताविति** ॥ उपमितिप्रमायामित्यर्थः । **सादृश्यज्ञानमिति** ॥ सादृश्यप्रकारकज्ञानमित्यर्थः । अत्रापि गुण इत्यस्यानुवृत्तिः । **शाब्दबोध इति** ॥ शाब्दप्रमायामित्यर्थः । **यथार्थयोग्यताज्ञानमिति** ॥ प्रकारतावच्छेदकसंबन्धेन एक-

## नीलकण्ठप्रकाशिका.

मध्य इत्यर्थः । **इत्याद्यूहनीयमिति** ॥ 'पीतः शङ्खः' इत्यादिभ्रमे पित्तादिर्दोषः इदं

## नृसिंहप्रकाशिका.

पदार्थसंबन्ध्यपरपदार्थज्ञानादिकमित्यर्थः ननु योग्यताप्रमायाश्शाब्दप्रमाहेतुत्वे शाब्द प्रमासमानाकारकयोग्यताप्रमायाः शाब्दबोधात् प्राक् निष्पन्नत्वेन गृहीतार्थग्राहकत्वात् शब्दस्याप्रमाणत्वापत्तिः, अत आह—**आदीति** ॥ आदिना तात्पर्यप्रमापरिग्रहः । तत्तदर्थविशिष्टतत्तदर्थविषयकबोधेच्छयोच्चरितत्वरूपतात्पर्यप्रकारकप्रमेत्यर्थः । न च योग्यतादिप्रमायाः शाब्दबोधव्यापारत्वाभावात् न तस्याः पारिभाषिकगुणत्वसंभव इति वाच्यम् ॥ तस्या अपि पदज्ञानजन्यपदार्थज्ञानरूपतया शाब्दज्ञानजनकतया च व्यापारत्वसंभवेन उक्तानुपपत्त्यभावात् । नन्वेवमपि संस्कारे स्मृतौ इच्छादौ च तद्वति तत्प्रकारकत्वरूपप्रमात्वसत्त्वात् तत्र निरुक्तासाधारणकारणजन्यत्वाभावेन तदुत्पत्तेः परतस्त्वानुपपत्तिरत आह—**इत्यादीति** ॥ तथाच प्रमात्मकसंस्कारस्य तज्जन्यस्मृतेश्च यथार्थानुभवजन्यत्वात् निरुक्तप्रमात्वविशिष्टेच्छायाश्च यथार्थज्ञानरूपासाधारणकारणजन्यत्वाच्च तत्प्रयोज्यत्वरूपं परतस्त्वं तदुत्पत्तावपि संभवतीति नोक्तानुपपत्तिरिति भावः । **ऊह्यमिति** ॥ ज्ञेयमित्यर्थः । अस्मद्गुरुचरणास्तु—प्रमासाधारणकारणमिति ॥ प्रमोत्पत्तिप्रयोजकमेवेत्यर्थः । प्रमोत्पत्तिसत्ताव्याप्यसत्ताकमेवेति यावत् । गुण इति ॥ प्रकृते गुणशब्देन ग्राह्यमित्यर्थः । प्रत्यक्षादिप्रमासु क्रमेण तादृशगुणानाह—**प्रत्यक्ष इति** ॥ विशेषणवद्विशेष्यसन्निकर्षः प्रत्यक्षे गुण इति योजना । **विशेषणवद्विशेष्यसन्निकर्ष इति** ॥ प्रकारवन्निष्ठेन्द्रियसन्निकर्ष इत्यर्थः । **प्रत्यक्षे गुण इति** ॥ प्रत्यक्षप्रमोत्पत्तिसत्ताव्याप्यसत्ताक इत्यर्थः । एवमुत्तरत्रापि ॥ **अप्रमासाधारणकारणं दोष इत्यादि** ॥ अर्थस्तु पूर्ववदेव । एतेन द्रव्यतत्समवेतादिवृत्तिलौकिकविषयतासंबन्धेन प्रत्यक्षत्वावच्छिन्नं प्रति तेन संबन्धेन चाक्षुषत्वावच्छिन्नं प्रति वा इन्द्रियसंयोगत्वादिना चक्षुरादिसंयोगत्वादिना वा व्यापारविधया हेतुत्वं क्लृप्तं, न तु घटत्वादिमन्निष्ठविशेष्यताकत्वावच्छिन्नघटत्वादिप्रकारकत्वविशिष्टचाक्षुषत्वाद्यवच्छिन्नं प्रति घटत्वादिमन्निष्ठचक्षुस्संयोगत्वादिनापि हेतुत्वं मानाभावात् एकस्यैव घटत्वादिमन्निष्ठचक्षुस्संयोगस्य रूपघटत्वाद्यात्मकप्रकारविशेषघटितरूपेण कारणत्वापत्त्या गौरवाच्च । एवं पर्वतादिविशेष्यकवह्न्यादिप्रकारकानुमितित्वावच्छिन्नं प्रति पर्वतादिविशेष्यकवह्न्यादिव्याप्यप्रकारकनिश्चयत्वेन हेतुत्वं क्लृप्तम्, न तु वह्न्यादिमद्विशेष्यकत्वावच्छिन्नवह्न्यादिप्रकारकत्वविशिष्टानुमितित्वावच्छिन्नं प्रति वह्न्यादिमद्विशेष्यकत्वावच्छिन्नवह्न्यादिव्याप्यप्रकारकत्वविशिष्टनिश्चयत्वेनापि हेतुत्वमुक्तयुक्तेः । एवमुपमित्यादावपि उक्तयुक्त्या प्रमात्वघटितविशेषरूपेण कार्यकारणभावो न स्वीकार्यः । एवं च विशेषणवद्विशेष्यसन्निकर्षादीनां प्रमासाधारणकारणत्वरूपं गुणत्वं निर्युक्तिकमित्यपास्तमिति व्याचक्रुः । केचित्तु प्रमासाधारणकारणमिति ॥ अनुभवत्वव्याप्यजात्यवच्छिन्नप्रमानिष्ठकार्यतानिरूपितकारणताश्रय इत्यर्थः । एवं च घटत्वादिमद्विशेष्यकत्वावच्छिन्नघटत्वादिप्रकारकत्वविशिष्टचाक्षुषादिप्रमानिष्ठघटत्वादिप्रकारकचाक्षुषत्वादिरूपवि-

सायेनानुपस्थितत्वादप्रमात्वं परत एव गृह्यते । पित्तादिदोषजन्यत्वमुत्पत्तौ

## नीलकण्ठप्रकाशिका.

रजतमित्यादिभ्रमे च चाकचक्यादिरित्यूहनीयमित्यर्थः । अप्रमात्वस्य परतस्त्वं सयुक्तिकं दर्शयति—**पुरोवर्तिनीति** ॥ **अनुपस्थितत्वादिति** ॥ अविषयीकरणादित्यर्थः । तथा च प्रत्यासत्तेरभावात् अप्रमात्वस्यानुव्यवसायेन ग्रहणं न संभवतीति भावः । **अप्रमात्वं** तदभाववद्विशेष्यकत्वविशिष्टतत्प्रकारकत्वम् । **परत एव गृह्यत इति** ॥ अनुमानादित एव गृह्यत इत्यर्थः । अनुमानप्रयोगस्तु 'इदं ज्ञानमप्रमा, विसंवादि-

## नृसिंहप्रकाशिका.

शेषधर्मावच्छिन्नकार्यतानिरूपितचक्षुस्संयोगत्वाद्यवच्छिन्नकारणतायाः घटत्वादिरूपविशेषणवन्निष्ठचक्षुस्संयोगादावेव सत्त्वात् तादृशसंयोगादेः गुणत्वमव्याहतम् । एवमनुमित्यादावपि व्यापकवद्विशेष्यकव्याप्यज्ञानादेः गुणत्वमनयैव दिशा ऊह्यमित्याहुः—तन्न, लाघवात् कार्यतावच्छेदकरूपायाः कार्यतायाः कार्यव्यक्तिभेदेऽप्यभिन्नतया निरुक्तप्रमानिष्ठतद्धर्मावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकनिरुक्तधर्मावच्छिन्नकारणतायाः मृत्पिण्डादिनिष्ठचक्षुस्संयोगादावपि सत्त्वेन तस्यापि निरुक्तगुणत्वापत्तेः दुर्वारत्वात् । इदानीं ज्ञाननिष्ठतदभाववद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वरूपाप्रमात्वस्य सर्वमतेऽपि परतो ग्राह्यत्वव्यवस्थापनायादौ युक्तिमाह—**पुरोवर्तिनीति** ॥ विशेष्यनिष्ठप्रकारतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकप्रकाराभावस्येत्यर्थः । **अनुव्यवसायेनानुपस्थितत्वादिति** ॥ अनुव्यवसायात्मकोपस्थितिविषयत्वाभावादित्यर्थः । **अप्रमात्वमिति** ॥ तदभाववद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वरूपमप्रमात्वमित्यर्थः ॥ **परत एव गृह्यत इति** ॥ तथाचेदंत्वेन शुक्तिविशेष्यकरजतत्वप्रकारक-इदंरजतमिति-भ्रमानन्तरजातरजतज्ञानामीत्यनुव्यवसायस्य शुक्तिनिष्ठरजतत्वाभाववद्विषयकत्वाभावेन तद्घटितरजतत्वाभाववद्विशेष्यकत्वावच्छिन्नरजतत्वप्रकारकत्वरूपाप्रमात्वविषयकत्वस्य सुतरामसंभवात् अप्रमात्वस्य स्वाश्रयविशेष्यकप्रमात्वप्रकारकज्ञानजनकस्वाश्रयग्राहकसामग्रीव्यापकस्वग्राहकसामग्रीवत्त्वरूपस्वतोग्राह्यत्वं बाधितमेव । किन्तु शुक्तिविशेष्यकरजतत्वभ्रमानन्तरं इष्टसाधनतादिज्ञानादिक्रमेण प्रवृत्तौ सत्यां रजतालाभे पूर्वोत्पन्नं रजतज्ञानमप्रमा विफलप्रवृत्तिजनकत्वात् यन्नैवं तन्नैवं यथा प्रमेति व्यतिरेकसहचारज्ञानाधीनव्याप्तिज्ञानात्मकानुमानेन अप्रमात्वं प्राथमिकरजतज्ञाने गृह्यते । द्वितीयादिभ्रमेषु प्राथमिकरजतभ्रमरूपान्वयदृष्टान्तेन प्रमारूपव्यतिरेकदृष्टान्तेन चान्वयव्यतिरेकोभयसहचारज्ञानाधीनव्याप्तिज्ञानात्मकानुमानात् अप्रमात्वं गृह्यत इति न किञ्चिदनुपपन्नमिति भावः । अप्रमात्वस्य परतोग्राह्यत्वं सर्वमतसिद्धमुपपाद्याप्रमोत्पत्तेरपि परतस्त्वमुपपादयति—**पित्तादीति** ॥ पित्तमण्डूकवसाञ्जनादिरूपो यः अप्रमानिरूपितासाधारणकारणताश्रयरूपो दोषः तज्जन्यत्वनियतत्वमेवाप्रमोत्पत्तिनिष्ठपरतस्त्वमित्यर्थः । नन्वप्रमात्वस्याप्रमोत्पत्तेश्च परतस्त्वोपपादनं तदा संगच्छते यद्यप्रमायां प्रमाणं स्यात् । तत्रैव

**परतस्त्वम्** । **ननु सर्वेषां ज्ञानानां यथार्थत्वादयथार्थज्ञानमेव नास्तीति** । **न च ' शुक्ताविदं रजतम् ' इति ज्ञानात्प्रवृत्तिदर्शनादन्यथाख्यातिसिद्धिरिति**

---

## नीलकण्ठप्रकाशिका.

प्रवृत्तिजनकत्वात् यन्नैवं तन्नैवं यथा प्रमा' इति । गुरुमतं निरस्यान्यथाख्यातिं व्यवस्थापयति—**नन्वित्यादिना** ॥ **यथार्थत्वात्** प्रमात्वात् । **अयथार्थज्ञानमेव नास्तीति** ॥ तदभाववद्विशेष्यकतत्प्रकारकत्वरूपायथार्थत्वं ज्ञानवृत्ति नेत्यर्थः । तेन न सिद्ध्यसिद्धिभ्यां व्याघातः । अयथार्थत्वस्य प्रसिद्धिरिच्छादौ बोध्या । **अन्यथाख्या-**

## नृसिंहप्रकाशिका.

मानं न पश्याम इति प्राभाकराक्षेपमप्रमासाधकप्रमाणप्रदर्शनेन परिहर्तुमादौ तन्मतमुपन्यस्यति—**नन्विति** ॥ **सर्वज्ञानानां यथार्थत्वादिति** ॥ सर्वशब्दस्य व्यापकत्वार्थकतया ज्ञानत्वव्यापकयथार्थत्वादित्यर्थः । प्रमात्वस्य ज्ञानत्वनिरूपितप्रतियोगिव्यधिकरण्याघटितव्यापकताश्रयत्वादिति यावत् । एतेन नैयायिकमते भ्रमस्यापि धर्मितावच्छेदकांशे प्रमात्ववत्त्वेन प्रमात्वस्याव्याप्यवृत्तितया ज्ञानत्वनिरूपितप्रतियोगिवैयधिकरण्यघटितव्यापकताश्रयत्वेऽपि भ्रमस्य तादृशप्रमात्ववत्त्वेऽपि च प्रकारांशे प्रमात्वशून्यत्वस्यापि सत्त्वात् प्रमात्वशून्यज्ञानत्वाश्रयस्य प्रसिद्धत्वेन तस्यालीकत्वकथनमयुक्तमिति शङ्का निरस्ता । तैः ज्ञानमात्रस्य सर्वांशे प्रमात्वस्वीकारेण तन्मते प्रमात्वस्य व्याप्यवृत्तित्वात् निरुक्ताप्रसिद्धिसंभवेन तस्यालीकत्वकथनस्य युक्तत्वादिति **अयथार्थज्ञानमेवेति** ॥ यथार्थत्वशून्यज्ञानत्वाश्रयमेवेत्यर्थः । **नास्तीति** ॥ अस्तित्वशून्यमित्यर्थः । अलीकमिति यावत् । तथाच प्रमात्वस्य ज्ञानत्वव्यापकतया प्रमात्वशून्यज्ञानत्वाश्रयमेवालीकमिति ज्ञानस्य भ्रमत्वं बाधितमिति भावः । प्रमात्वस्य ज्ञानव्यापकत्वमेव नास्तीति शङ्कते—**नचेति** ॥ वस्तुतस्तु सर्वज्ञानानां यथार्थत्वादिति । तत्तद्धर्मप्रकारकसर्वज्ञानानां तद्धर्मप्रकारकत्वरूपप्रमात्ववत्त्वादित्यर्थः । तत्तद्धर्मवति तत्तद्धर्मप्रकारकत्वरूपप्रमात्वस्य तत्तद्धर्मप्रकारज्ञानत्वव्यापकत्वादिति यावत् । सर्वशब्दस्य समभिव्याहृतपदार्थतावच्छेदकधर्मव्यापकत्वार्थकत्वात् । अयथार्थज्ञानमेवेति ॥ तत्तद्धर्मवति तत्तद्धर्मप्रकारकत्वरूपतत्तत्प्रमात्वशून्यतत्तद्धर्मप्रकारकज्ञानत्वाधिकरणमेवेत्यर्थः । नास्तीति ॥ अस्तित्वशून्यमित्यर्थः । अलीकमिति यावत् । तथाच तत्तद्धर्मवति तत्तद्धर्मप्रकारकत्वरूपतत्तत्प्रमात्वस्य तत्तद्धर्मप्रकारकज्ञानत्वव्यापकतया तत्तद्धर्मवति तत्तद्धर्मप्रकारकत्वरूपतत्तत्प्रमात्वात्मकव्यापकशून्यतत्तद्धर्मप्रकारकज्ञानत्वरूपव्याप्यविशिष्टमेवालीकमिति न कस्यापि ज्ञानस्य भ्रमत्वमिति भावः । तत्तद्धर्मप्रकारकज्ञानत्वस्य तत्तद्धर्मवति तत्तद्धर्मप्रकारकत्वरूपतत्तत्प्रमात्वव्यभिचारित्वात् निरुक्तप्रमात्वे निरुक्तज्ञानत्वव्यापकत्वं असिद्धमिति शङ्कते—न चेत्यादि इति प्रतिभाति ॥ **शुक्ताविदं रजतमिति ज्ञानादिति** ॥ अत्रेदं रजतमिति ज्ञानमिदन्त्वेन शुक्तिविशेष्यकमेव, न तु रजतविशेष्यकमिति स्फुटीकरणाय शुक्तावित्युक्तमिति ज्ञेयम् । **प्रवृत्तिदर्शना-**

वाच्यम् । रजतस्मृतिपुरोवर्तिज्ञानाभ्यामेव प्रवृत्तिसंभवात् । स्वतन्त्रोपस्थिते-ष्टभेदाग्रहस्यैव सर्वत्र प्रवर्तकत्वेन 'नेदं रजतम्' इत्यादौ अतिप्रसङ्गाभावा-

---

## नीलकण्ठप्रकाशिका.

**तीति** ॥ तदनङ्गीकारे पुरोवर्तिविशेष्यकरजतत्वादिरूपेष्टतावच्छेदकप्रकारकज्ञानस्य संवादि-विसंवादिसाधारणप्रवृत्तिजनकतया तत्र प्रवृत्तिरेव न स्यादिति भावः । **रजतस्मृतीति** ॥ क्लृप्तनियतपूर्ववर्तिभ्याभित्यादिः । **संभवादिति** ॥ तथा च प्रवृत्तिं प्रति विशिष्टज्ञानत्वेन कारणतैव नास्तीति तदनुरोधेन अन्यथाख्यातिकल्पनं न संभवतीति भावः । नन्वेवं यत्र 'नेदं रजतम्' इत्यादिबाधग्रहः तत्रापि प्रवृत्तिः स्यादित्यत आह—**उपस्थितेति** ॥ एतावता स्मृतिरूपकारणापेक्षा स्फुटीकृता । **इष्टभेदाग्रहस्यैव** रजतादिरूपेष्टभेदग्रहा-भावस्यैव । एवकारेण विशिष्टज्ञानस्य प्रवर्तकत्वव्यवच्छेदः । **सर्वत्रेति** ॥ रजते शुक्तौ

## नृसिंहप्रकाशिका.

**दिति** ॥ प्रवृत्तेरनुभवसिद्धत्वादित्यर्थः । **अन्यथाख्यातिरिति** ॥ अयथार्थज्ञानमित्यर्थः । स्वीकार्येति शेषः ॥ तथा च तत्तद्विशेष्यकतत्तत्प्रकारकप्रवृत्तिं प्रति तत्प्रकारकतद्विशेष्यकज्ञान-हेतुतायाः सिद्धान्तसिद्धतया प्रकृते अनुभवसिद्धशुक्तिविशेष्यकरजतत्वप्रकारकप्रवृत्त्यनुरो-धेन तत्कारणतया शुक्तिविशेष्यकरजतत्वप्रकारकज्ञानमवश्यं स्वीकार्यमिति अयथार्थज्ञान-सिद्धिः निष्प्रत्यूहैवेति भावः । विशिष्टज्ञानस्य प्रवर्तकत्वमतेऽपि इदं रजतमिति ज्ञानस्य इदन्त्वावच्छिन्नरजतत्वविशिष्टवैशिष्ट्यावगाहितया तद्धेतुतया रजतत्वप्रकारकनिर्णयधर्मिता-वच्छेदकेदन्त्वप्रकारकनिर्णययोः प्रवृत्तिपूर्वं सत्त्वमावश्यकम् । एवं च क्लृप्तनियतपूर्ववृत्तिता-केन तादृशज्ञानद्वयेनैव प्रवृत्त्युपपत्तेः क्षणविलम्बनकल्पनं मध्ये विशिष्टज्ञानकल्पनं चा-युक्तमिति आशयेन परिहरति—**रजतस्मृतीति** ॥ अत्र स्मृतित्वमविवक्षितं रजतत्व-प्रकारकानुभवादपि प्रवृत्तिसम्भवात् । एवञ्च रजतत्वप्रकारतानिरूपित – निरवच्छिन्नवि-शेष्यताशालिज्ञानधर्मितावच्छेदकेदंत्वप्रकारतानिरूपितधर्मिनिष्ठनिरवच्छिन्नविशेष्यताशाल्य-नुभवाभ्यामित्यर्थः फलितः। एवकारस्याप्यर्थकत्वात्। **प्रवृत्तिसंभवादिति**॥ पुरोवृत्तिविशे-ष्यकरजतत्वप्रकारकप्रवृत्तेरनुभवसिद्धत्वादित्यर्थः । तथा च निरुक्तज्ञानद्वयस्यापि हेतुता-वश्यकतया एककालावच्छिन्नैकात्मवृत्तित्वसंबन्धेन धर्मिज्ञानविशिष्टधर्मज्ञानत्वरूपोभयसा-धारणरूपेणैव हेतुत्वं स्वीकार्यमिति प्रकृते तादृशकारणतावच्छेदकावच्छिन्नज्ञानद्वयात् प्रवृत्त्युपपत्तेः अन्यथाख्यातिः न स्वीकार्येति भावः । नन्वेवं सति नेदं रजतमिति ज्ञा-नात् प्रवृत्त्यापत्तिः, निरुक्तकारणसत्त्वादत आह--- **उपस्थितेष्टभेदाग्रहस्यैवेति** ॥ धर्मधर्म्यसंसर्गाग्रहविशिष्टधर्मज्ञानविशिष्टधर्मिज्ञानस्यैवेत्यर्थः । एवकारेण केवलधर्मज्ञान-विशिष्टधर्मिज्ञानस्य कारणत्वव्यवच्छेदः । **सर्वत्रेति** ॥ विशिष्टज्ञानस्य प्रसिद्धिस्थले अप्रसि-द्धिस्थले चेत्यर्थः । **प्रवर्तकत्वेनेति** ॥ प्रवृत्तिजनकत्वेनेत्यर्थः । उपस्थितेष्टभेदाग्रहत्वस्य प्रवृत्तिसामान्यजनकतावच्छेदकत्वस्वीकारादिति समुदितार्थः । **नेदं रजतमित्यादा-**

दिति चेन्न । सत्यरजतस्थले पुरोवर्तिविशेष्यकरजतत्वप्रकारकज्ञानस्य लाघवेन प्रवृत्तिजनकतया शुक्तावपि रजतार्थिप्रवृत्तिजनकत्वेन विशिष्टज्ञानस्यैव

## नीलकण्ठप्रकाशिका.

चेत्यर्थः । सत्यरजतस्थले विशिष्टज्ञानत्वेनैव प्रवृत्तिं प्रति कारणत्वमेष्टव्यम् । अन्यथा धर्मधर्मिज्ञानयोः इष्टभेदाग्रहत्वरूपगुरुधर्मावच्छिन्नस्य च कारणतापत्तेः । एवं च तत्र प्रवृत्तिं प्रत्यन्वयव्यतिरेकाभ्यां विशिष्टज्ञानस्य कारणतायां लाघवात्सामान्यतः प्रवृत्तित्वावच्छिन्नं प्रति विशिष्टज्ञानत्वेन अनुगतकार्यकारणभावस्यैव कल्पनीयतया विसंवादिप्रवृत्तेरपि तत्कार्यतावच्छेदकावलीढतया तत्पूर्वं विशिष्टज्ञानस्य कल्पनीयत्वादन्यथाख्यातिर्निराबाधैवेति समाधत्ते—**सत्यरजतेति** ॥ **रजतत्वप्रकारकज्ञानस्येति** ॥ तादृशज्ञानत्वावच्छिन्नस्येत्यर्थः । **प्रवृत्तिजनकतया** प्रवृत्तित्वावच्छिन्नजनकतया । **विशिष्टज्ञानस्यैव** पुरोवर्तिविशेष्यकेष्टतावच्छेदकप्रकारकज्ञानस्यैव । एतेन इष्टभेदाग्रहस्य व्यव-

## नृसिंहप्रकाशिका.

**विति** ॥ इत्यादिज्ञानोत्तरमित्यर्थः । आदिपदात् इदं रजतत्वाभाववत्, इदं रजतसम्बन्धाभाववत् इत्यादेः परिग्रहः । **अतिप्रसंगाभावादिति** ॥ प्रवृत्तिसामान्यापादनासंभवादित्यर्थः । तथाच नेदं रजतमित्यादिज्ञानस्य निरुक्तसंबन्धेन धर्मज्ञानविशिष्टधर्मिज्ञानत्वरूपधर्मवत्त्वेऽपि प्रवर्तकतावच्छेदककोटौ धर्मधर्म्यसंसर्गाग्रहवैशिष्ट्यस्यापि निवेशनीयत्वात् निरुक्तज्ञानस्य तादृशासंसर्गग्रहरूपतया एककालीनत्वविशिष्टं यत् एकविशेषणतासमवायोभयघटितसामानाधिकरण्यरूपैकात्मवृत्तित्वं तेन संबन्धेन निरुक्तासंसर्गाग्रहविशिष्टत्वाभावात् तद्घटितकारणतावच्छेदकावच्छिन्नत्वाभावेन विशिष्टकारणाभावात् तादृशज्ञानोत्तरं प्रवृत्त्यापत्तिरिति भावः । अत्र सत्यरजतस्थले इदं रजतमिति स्मरणोत्तरं प्रवृत्तेरानुभाविकतया तदनुरोधेन रजतात्मकधर्मीन्द्रियसन्निकर्षस्थलेऽपि धर्मितावच्छेदकादिनिर्विकल्पकद्वारा तृतीयक्षणोत्पन्नेदंरजतमितिविशिष्टज्ञानोत्तरमेव प्रवृत्तिरुपेयते । क्षणविलम्बस्य शपथनिर्णयत्वाभावात्, प्राभाकरानुमतनिरुक्तप्रवर्तकतावच्छेदकधर्मापेक्षया पुरोवर्तिविशेष्यकेष्टतावच्छेदकप्रकारकज्ञानत्वस्य लघुत्वेन प्रवर्तकतावच्छेदकत्वौचित्याच्च । एवंच लाघवात् प्रवृत्तिसामान्ये विशिष्टज्ञाने हेतुतासिद्धौ शुक्तौ रजतार्थिप्रवृत्त्यनुरोधेन तद्धेतुतया पूर्वं विशिष्टज्ञानकल्पनागौरवं न दोषाय फलमुखत्वात् । इत्थञ्चान्यथाख्यातिसिद्धिः निराबाधेत्याशयेन तन्मतन्दूषयति—**सत्यरजतस्थल इति** ॥ पुरोवर्तिनि रजते रजतार्थिप्रवृत्तावित्यर्थः । **पुरोवृत्तिविशेष्यकरजतत्वप्रकारकज्ञानस्येति** ॥ धर्मितावच्छेदकइदंत्वावच्छिन्नविशेष्यकरजतत्वप्रकारकइदंरजतमिति ज्ञानस्येत्यर्थः । धर्मितावच्छेदकज्ञानस्याप्रवर्तकत्वेन यथाश्रुतासंगतेः । **लाघवेनेति** ॥ लाघवप्रमाणेनेत्यर्थः । **प्रवृत्तिजनकतयेति** ॥ निरुक्तविशिष्टज्ञानत्वरूपलघुधर्मेण प्रवृत्तिजनकत्वावश्यकतयेत्यर्थः । **शुक्तावपीत्यादि** ॥ रजतकामनाजन्यशुक्तिविशेष्यकरजतत्वप्रकारकप्रवृत्तिहेतुतयेत्यर्थः । **विशिष्टज्ञान-**

कल्पनात् । अयथार्थानुभवं विभजते—**अयथार्थ इति** ॥ स्वप्नस्य मानस-विपर्ययरूपत्वान्न त्रैविध्यविरोधः । संशयलक्षणमाह—**एकेति** ॥ घटपटाविति

---

## नीलकण्ठप्रकाशिका.

च्छेदः । **कल्पनात्** अनुमानात् । तत्प्रयोगस्तु 'इयं पुरोवर्तिविशेष्यकेष्टतावच्छेदक-प्रकारकज्ञानजन्या, प्रवृत्तित्वात्, रजतस्थलीयप्रवृत्तिवत्' इति । स्यादेतत्, प्रत्यक्षे सं-निकर्षस्य कारणतया रजतत्वांशे तदभावेन कथं शुक्तौ 'इदं रजतम्' इति प्रत्यक्षमिति चेत्, मैवम्। अलौकिकसंनिकर्षस्यापि प्रत्यक्षजनकताया व्यवस्थापितत्वेन ज्ञानलक्षणा-प्रत्यासत्तेरेव प्रकृते संभवात् । ननु अयथार्थानुभवस्य त्रैविध्यकथनं मूलेऽसङ्गतम्, स्वप्न-ज्ञानस्य अनुभूतपदार्थस्मरणकफपित्तादिरूपदोषशुभाशुभादृष्टैर्जायमानस्य बाधितार्थविषय-कस्य अनुभवसिद्धत्वादत आह—**स्वप्नस्येति** ॥ यद्यपि प्रदेशविशेषावस्थितमनःसं-योगः स्वप्नः । तथापि तदसमवायिकारणकज्ञाने स्वप्नशब्दो भाक्त इत्यवधेयम् । चाक्षुषा-दिरूपत्वासंभवादाह—**मानसेति** ॥ यत्तु स्मृतिरूपं स्वप्नज्ञानमिति तद्भाष्यादिविरुद्धमि-

## नृसिंहप्रकाशिका.

**स्यैव कल्पनादिति** ॥ विशिष्टज्ञानकल्पनाया एव युक्तत्वादित्यर्थः । तथाच प्रवृत्तिसामा-न्ये प्राभाकरानुमतज्ञानद्वयसाधारणगुरुरूपेण हेतुत्वापेक्षया लाघवान्निरुक्तविशिष्टज्ञानत्वरूप-लघुधर्मेण हेतुतासिद्धौ क्वचित् विशिष्टज्ञानकल्पनागौरवं न दोषाय फलमुखत्वात्। एवञ्चान्य-थाख्यातिसिद्धिः निराबाधेति भावः । ननु मूले अयथार्थानुभवस्य त्रैविध्यकथनं अयुक्तम-तिरिक्तस्वप्नानध्यवसाययोः सत्त्वादित्याशङ्कां कूप्तेषु तावन्तर्भाव्य त्रैविध्यं द्रढयति—**स्वप्नस्येति** ॥ इदमुपलक्षणम् । किंस्विदित्याकारकानध्यवसायस्य इदंत्वावच्छिन्नविशेष्यक-घटत्वपटत्वाद्यनेकभावप्रकारकज्ञानरूपतया विपर्ययसामान्य एव तस्यान्तर्भाव इत्यपि बो-ध्यम् । संशयादित्रयाणां क्रमेण लक्षणमाह—**मूले एकस्मिन् धर्मिणीति** ॥ एकधर्मा-वच्छिन्नमुख्यविशेष्यताकेत्यर्थः । अत्र धर्मिपदं मुख्यविशेष्यत्वलाभाय। तेन विशे-षणतावच्छेदकांशे संशयाकारकविशिष्टबोधस्याप्रामाणिकत्वलाभः । **विरुद्धनानाधर्म-प्रकारकज्ञानमिति** ॥ अविरुद्धत्वेनाज्ञायमानभावाभावोभयप्रकारताशालिप्रत्यक्षमित्य-र्थः । तेन परोक्षज्ञानस्य न संशयात्मकत्वमिति सूच्यते । तथा च एकधर्मावच्छिन्न-विशेष्यतानिरूपिताविरुद्धत्वेनाज्ञायमानभावाभावोभयप्रकारताशालिज्ञानत्वं संशयलक्षणमिति भावः । अत्र पर्वतो वह्निमान् ह्रदो वह्न्यभाववान् इत्याकारकसमूहालम्बननिश्चयस्य निरुक्तभावाभावोभयप्रकारताकत्वस्य एकनिष्ठविशेष्यताकत्वविशेषणेन वारणसंभवेऽपि प-र्वतत्वद्रव्यत्वाभ्यां पर्वतविशेष्यकपर्वतो वह्निमान् द्रव्यं वह्न्यभाववत् इत्याकारकसमू-हालम्बनस्य निरुक्तभावाभावोभयप्रकारकस्यावारणात् । संशयत्ववारणाय एकधर्माव-च्छिन्नविशेष्यतानिरूपितत्वनिवेशः । निरुक्तज्ञानीयप्रकारतयोरेकधर्मावच्छिन्नविशेष्यतानिरू-पितत्वाभावात् नातिव्याप्तिः । वह्निवह्न्यभावयोः अविरुद्धत्वज्ञानदशायां जायमानपर्वतो

## नीलकण्ठप्रकाशिका.

त्युपेक्षितम्। कोट्योरव्याप्यवृत्तित्वज्ञानोत्तरं जायमाने एकस्मिन्धर्मिणि घटतदभावोभय-

## नृसिंहप्रकाशिका.

वह्निमान् वह्न्यभाववान् चेति समुच्चये एकधर्मावच्छिन्नविशेष्यताघटितलक्षणसत्त्वादति-व्याप्तिवारणाय भावाभावयोः अविरुद्धत्वेनाज्ञायमानत्वनिवेशः। समुच्चयीयभावाभावयोः विषयतासंबन्धेनाविरुद्धत्वप्रकारकवर्तमानग्रहविशिष्टत्वात् तेन संबन्धेन तद्विशिष्टत्वरूपा-ज्ञायमानत्वाभावात् नातिव्याप्तिः। छत्रकुण्डले अविरुद्धे इति ज्ञानशून्यकालीनच्छ-त्रिकुण्डलीदेवदत्तइत्याकारकएकत्रद्वयमितिरीत्या जायमानज्ञानीयच्छत्रकुण्डलनिष्ठप्रकारतयो-रपि चैत्रावच्छिन्नविशेष्यतानिरूपितत्वादविरुद्धत्वेनाज्ञायमानच्छत्रकुण्डलरूपनानाधर्मनिष्ठ-त्वाच्च तत्रातिव्याप्तिवारणाय नानाधर्मशब्देन भावाभावयोरेव ग्रहणं कृतम्। एवञ्च एकत्रद्वयमितिरीत्या जायमाननिरुक्तनिश्चयस्य भावाभावोभयप्रकारकत्वाभावात् नाति-व्याप्तिरिति भावः। अत्र संस्कारं प्रति संशयनिश्चयसाधारणसमानप्रकारकज्ञानत्वेन हेतुत्वं संशयादपि तत्समानाकारकसंस्कारोत्पत्तौ बाधकाभावात्। तादृशसंस्कारात् समानाकारक-स्मृत्यापत्तेस्तु तत्स्मृतिं प्रति तदभावप्रकारकान्यतत्प्रकारकसंस्कारत्वेन हेतुत्वस्वीकारेणैव वारणसंभवादिति कस्यचिन्मतम्। तन्मते संशयजन्यसंस्कारेऽतिव्याप्तिवारणाय ज्ञानत्वस्यापि लक्षणे निवेशनीयतया तल्लाभाय ज्ञानपदमुपात्तमिति केचित्। तादृशसंस्कारस्य मणिकाराद्य-ननुमततया तुल्ययुक्त्या तत्समानाकारकस्मृतेरपि स्वीकारापत्त्या च तन्मतस्य हेयत्वेन तन्मतमाश्रित्य ज्ञानत्वविशेषणस्य सार्थक्यवर्णनमपि केषाञ्चिदनुपादेयमेव। अत एव परो-क्षज्ञानं निश्चयात्मकमेवेति सिद्धान्तोऽपि सङ्गच्छते। परन्तु अत्र ज्ञानपदं स्वरूपकीर्तन-मात्रमिति ध्येयम्। नन्वेवमपि वह्निमान् पर्वतो वह्न्यभाववानित्यादिज्ञाने स्वविरुद्ध-धर्मधर्मितावच्छेदकस्वप्रकारकज्ञानत्वरूपाहार्यत्वविशिष्टेऽतिव्याप्तिः। तस्यापि निरुक्तसं-शयलक्षणाक्रान्तत्वादिति चेन्न। संशयत्वघटकप्रकारताद्वये तत्तद्धर्मितावच्छेदकताभिन्नत्वस्य निवेशनीयत्वात् आहार्यज्ञानीयभावाभावप्रकारतान्यतरस्य धर्मितावच्छेदकत्वनियमेनाति-प्रसङ्गविरहात्। अस्मद्गुरुचरणास्तु—निरुक्ताहार्यज्ञानवारणाय ज्ञानपदमनाहार्यपरमिति व्याचक्रुः। यथाश्रुतसंशयलक्षणघटकविशेषणानामापाततो व्यावृत्तिमाह—**घटपटावि-त्यादिना** ॥ अत्र घटपटाविति समूहालम्बनादौ अतिव्याप्तिवारणरूपमेकेत्यादिवि-शेषणप्रयोजनं यदुक्तं तन्मन्दम्। तथा हि। विरुद्धनानाधर्मप्रकारकत्वस्य वस्तुतः विरुद्धा ये नानाधर्माः तत्प्रकारकत्वमिति नार्थः घटत्वपटत्वयोरविरुद्धत्वज्ञानकालीने अयं घटः पटश्चेति ज्ञाने विशिष्टलक्षणस्यातिव्याप्त्यापत्तेः। नापि विरुद्धत्वेन ज्ञायमाननानाधर्मप्रकारकज्ञानत्वं तदर्थः। वह्निवह्न्यभावयोः विरुद्धत्वज्ञानशून्यकालीने पर्वतो वह्निमान् न वेति संशयेऽव्याप्त्यापत्तेः। नाप्यविरुद्धत्वेन अज्ञायमाननानाधर्म-प्रकारकत्वं तदर्थः। छत्रकुण्डलयोः अविरुद्धज्ञानशून्यकालीनच्छत्रकुण्डलोभयप्रकारकचैत्र-

समूहालम्बनेऽतिव्याप्तिवारणाय एकेति । 'घटो द्रव्यम्' इत्यादावति-व्याप्तिवारणाय विरुद्धेति । घटत्वविरुद्धपटत्ववान इत्यत्र अतिव्याप्तिवारणाय नानेति । विपर्ययलक्षणमाह—मिथ्येति ॥ तदभाववति तत्प्रकारकानिर्णय

---

## नीलकण्ठप्रकाशिका.

प्रकारकसमुच्चयेऽतिव्याप्तिवारणाय विरोधविषयकत्वस्य निवेशेऽपि नानेत्यस्याऽवश्यकतेति दर्शयितुमाह—**घटत्वविरुद्धेति** ॥ **नानेतीति** ॥ एकधर्मिनिष्ठविशेष्यतानिरूपितवि-रुद्धनानाधर्मनिष्ठप्रकारताकत्वाभावान्नातिव्याप्तिरिति भावः । न च विभिन्नरूपेणैकधर्मिवि-शेष्यकविरुद्धानेकधर्मप्रकारकज्ञानेऽतिव्याप्तिरिति शङ्क्यम् एकधर्मावच्छिन्नविशेष्यताघटित-परिष्कारकरणेनादोषादिति दिक् । तन्त्रान्तरे ब्रह्मभिन्ने सर्वस्मिन्नेव मिथ्याशब्दस्य प्रयोग-दर्शनादाह—**तदभाववतीति** ॥ प्रमावारणायेदम् । तदभाववद्विशेष्यकत्वावच्छिन्नतत्प्र-कारकत्वेत्याद्यर्थविवक्षणान्न समूहालम्बनेऽतिप्रसङ्गः । संशयस्य इच्छायाश्च वारणाय सं-शयान्यज्ञानार्थकं निश्चयपदमिति संक्षेपः । **मूले व्याप्यारोपेणेति** ॥ आहार्यव्याप्य-वत्ताभ्रमजन्य आहार्यव्यापकवत्ताभ्रमस्तर्क इत्यर्थः । आहार्यज्ञानमात्रेऽतिप्रसङ्गवारणाय तज्जन्य इति । यत्र नायं पुरुष इति निश्चयसत्त्वे शाखादौ करादिभ्रमात् 'अयं पुरुषः' इत्याद्याहार्यारोपः तत्रातिव्याप्तिवारणाय प्रथममाहार्यपदम् । रजतत्वव्याप्याभाववत्ताग्रह-

## नृसिंहप्रकाशिका.

विशेष्यकच्छत्रिकुण्डली चैत्र इति ज्ञाने विशिष्टलक्षणस्यातिव्याप्त्यापत्तेः । ततः नानाधर्म-पदस्य भावाभावोभयात्मकत्वं विरुद्धपदस्य अव्यवहितपूर्वोक्तार्थकत्वं स्वीकृत्यैव उक्ताति-व्याप्तिर्वारणीया । एवंच घटपटाविति समूहालम्बनस्य घटो द्रव्यमिति ज्ञानस्य घटत्वविरु-द्धपटत्ववानित्यादिज्ञानस्य च भावाभावोभयप्रकारकत्वाभावादेवातिव्याप्त्यप्रसक्तेः तद्वारण-प्रयोजनकतया एकेत्यादिविशेषणत्रयसार्थक्यप्रतिपादनं निर्युक्तिकमिति प्रतिभाति । संशयस्य लक्षणमुक्त्वा स्वरूपमाह—**मूले स्थाणुर्वा पुरुषो वेति** ॥ इत्याकारक इत्यर्थः । स्था-णुत्वस्थाणुत्वाभावकोटिकः स्थाणुर्वेत्याकारक एकस्संशयः पुरुषत्वपुरुषत्वाभावकोटिकः पुरुषो वेत्याकारकः अपरस्संशयः इति फलितार्थः । यदि स्थाणुर्वा पुरुषो वेति संशयः एकत्वेनानु-भवसिद्धः तदा नैयायिकैः भावद्वयकोटिकसंशयानभ्युपगमात् तादृशानुभवानुरोधेन एकस्यैव संशयस्य स्थाणुत्वतदभावादिरूपकोटिचतुष्टयविषयकत्वं स्वीकार्यमिति । विपर्ययलक्षण-माह—**मिथ्याज्ञानेति** ॥ भगवज्ज्ञानावृत्तिविषयताशालिनिश्चय इत्यर्थः । तादृशनिश्चयत्वं विपर्ययसामान्यलक्षणमिति फलितार्थः । तथा च समानाकारकज्ञानीयविषयितानामैक्येन प्रमीयविषयतामात्रस्य भगवज्ज्ञानवृत्तित्वात् न प्रमायामतिव्याप्तिः । भगवतो भ्रान्तत्वापत्त्या भगवज्ज्ञानस्य भ्रमत्वानङ्गीकारेण भ्रमीयविषयतायाः भगवज्ज्ञानावृत्तित्वात् भ्रमसामान्ये लक्षणसमन्वयोऽपीति भावः । इदमुपलक्षणम् । तत्संबन्धेन तत्संबन्धितानवच्छेदकावच्छिन्न-

इत्यर्थः। तर्कं लक्षयति—**व्याप्येति** ॥ यद्यपि तर्को विपर्ययेऽन्तर्भवति, तथापि प्रमाणानुग्राहकत्वाद्भेदेन संकीर्तनम्। स्मृतिं विभजते—**स्मृतिरिति** ॥ सुखं

---

## नीलकण्ठप्रकाशिका.

काले आहार्यं यद्रजतत्वव्याप्यवत्ताज्ञानम्, तज्जन्ये 'इदं रजतम्' इत्यनाहार्यज्ञानेऽतिव्याप्तिवारणाय द्वितीयमाहार्यपदम्। तर्के आपाद्यव्यतिरेकनिश्चय आपाद्यापादकयोर्व्याप्तिनिश्चयश्च कारणमिति ध्येयम्। तर्कस्तु मानसविपर्ययरूप एवेति कथमयथार्थस्य त्रैविध्यकथनमित्याह—**यद्यपीति** ॥ **प्रमाणानुग्राहकत्वम्** प्रमाणेन प्रमायां जननीयायां प्रतिबन्धकविघटनद्वारोपयोगित्वम्। **भेदेनेति** ॥ तर्कत्वरूपवैलक्षण्येनेत्यर्थः। तर्कस्य

## नृसिंहप्रकाशिका.

विशेष्यतानिरूपिततत्संबन्धेनतन्निष्ठप्रकारताशालिनिश्चयत्वं तेन संबन्धेन तद्विपर्ययलक्षणम्। इदंत्वेन शुक्तिविशेष्यकस्य समवायेन रजतत्वप्रकारकइदंरजतमित्याकारकरजतत्वभ्रमस्य समवायेन रजतत्वसंबन्धितानवच्छेदकशुक्तिनिष्ठेदंत्वावच्छिन्नविशेष्यतानिरूपितसमवायसंबन्धावच्छिन्नरजतत्वप्रकारताशालित्वात् लक्षणसमन्वयः। तादृशसंशयवारणाय निश्चयत्वनिवेशः। यदि धूलीपटले समवायेन धूमत्वावगाहिधूमवान्पर्वतइत्याकारकनिर्धर्मितावच्छेदकविशेषणतावच्छेदकधूमत्वभ्रमोऽपि प्रामाणिकः तदा निरुक्तलक्षणस्य तत्राव्याप्तिवारणाय तत्संबन्धितानवच्छेदकावच्छिन्नत्वस्थाने तत्संबन्धितावच्छेदकानवच्छिन्नत्वमेव निवेश्यम्। अतो न कश्चिद्दोषः। एतेन मूले विपर्ययविशेषस्य लक्षणाप्रतिपादनात् न्यूनतेति दूषणं प्रत्युक्तमित्यपि बोध्यम्। विपर्ययस्वरूपमाह—**शुक्ताविदं रजतमिति** ॥ इत्याकारकनिश्चय इत्यर्थः। तर्कलक्षणमाह—**व्याप्यारोपेणेति** ॥ आपाद्यव्याप्यत्वेन गृह्यमाणापादकतावच्छेदकावच्छिन्नप्रकारकाहार्यारोपेणेत्यर्थः। जन्यत्वं तृतीयार्थः। तस्य व्यापकारोपे अन्वयः। **व्यापकारोप इति** ॥ व्यापकतावच्छेदकत्वाभिमतापाद्यतावच्छेदकावच्छिन्नप्रकारकाहार्यारोप इत्यर्थः। तथाच तादृशारोपत्वं तल्लक्षणमिति भावः। एतेन व्याप्यारोपस्य केवलव्याप्यतावच्छेदकावच्छिन्नप्रकारताशाल्याहार्यारोपत्वेन हेतुत्वे आपादके आपाद्यव्याप्यत्वाग्रहदशायां तज्ज्ञानात् तर्कापत्तिः। व्याप्यत्वविशिष्टप्रकारकतादृशारोपस्य हेतुत्वे धूमाभावे वह्न्यभावव्याप्यत्वभ्रमदशायां पर्वतो धूमाभाववान् स्यादित्याकारकतादृशारोपोत्तरं पर्वतो निर्वह्निः स्यात् इत्याकारकतर्कानुदयप्रसङ्गः निरुक्तकारणाभावादित्यादिदूषणस्यानवकाशः। अधिकं त्वस्मत्कृतमुक्तावलीप्रभायामनुसन्धेयम्। यद्यपि तर्कोऽपि विपर्यय एवेति त्रैविध्यकथनमयुक्तं तथापि स्वतन्त्रेच्छगौतमादिना शिष्यबुद्धिवैशद्यार्थं तर्कस्य पृथगभिधानात् तदनुसारेण मूलकृता तर्कः पृथगेव निरूपित इति ध्येयम्। तर्कस्वरूपमाह—**यथेति** ॥ **यदि वह्निर्न स्यात् तर्हि धूमोऽपि न स्यात् इति** ॥ यदि वह्निर्न स्यादित्याकारकनिरुक्तारोपजन्यः यस्तर्हि धूमोऽपि न स्यादित्याकारकनिरुक्तारोपः स एव तत्स्वरूपमित्यर्थः। यथाश्रुते विशिष्टस्य तर्कत्वाभावात् असाङ्गत्यापत्तेः। तर्कस्य

लक्षयति—**सर्वेषामिति** ॥ 'सुख्यहम्' इत्याद्यनुव्यवसायगम्यं सुखत्वादि-

## नीलकण्ठप्रकाशिका.

प्रमाणानुग्राहकत्वज्ञापनाय तथा कथनमिति भावः । ननु 'सर्वेषामनुकूलतया वेदनीयम्' इत्यादि मूलं सुखादिलक्षणपरं न संभवति, परद्रव्योपभोगादिजन्य-सुखे साधूनां द्वेषदर्शनादव्याप्तेरित्याशङ्कायां 'सुख्यहम्' इत्यादिप्रत्यक्षसिद्धं सुख-त्वादिकमेव लक्षणमित्याह—**सुख्यहमित्याद्यनुव्यवसायेति** ॥ सुखत्वादीत्यादिना

## नृसिंहप्रकाशिका.

विपर्ययान्तर्भूतत्वात् अयथार्थानुभवस्य त्रैविध्यकथनं अयुक्तमित्याशङ्कां अपनेतुमादावाक्षिप-ति—**दीपिकायां यद्यपीत्यादिना**॥ **प्रमाणानुग्राहकत्वादिति** ॥ क्वचिदनुमानप्रमा-णात्मकप्रात्यक्षिकव्याप्तिज्ञानप्रतिबन्धकव्यभिचारशङ्कानिवर्तकत्वादित्यर्थः । अत्र कस्यचित् विपर्ययस्य प्रमाणानुग्राहकत्वाभावात् तर्कात्मकविपर्ययस्य प्रमाणानुग्राहकत्वाच्च भेदेनो-त्कीर्तनम् । यादृशतर्कस्य न व्यभिचारशङ्कानिवर्तकत्वं यस्य तर्कस्य तन्निवर्तकत्वं तयोरपि भेदेनोत्कीर्तनापत्त्या प्रमाणानुग्राहकत्वं न भेदेनोत्कीर्तननियामकमित्यस्मद्गुरुचरणाः ॥ एतावता स्मृतिरनुभवश्चेत्यादिना ज्ञानविभागे स्मृतेः प्राङ्निर्दिष्टत्वेऽपि कष्टमनुभुज्य सुखं भोक्तव्यमिति न्यायेनानुभवनिरूपणस्य कष्टत्वात् प्रथमतः तत्रैव जिज्ञासोदयात् तन्नि-वृत्त्यर्थमादौ अनुभवनिरूपणमेव कृतम् । तन्निरूपणेन तन्निवृत्ताववश्यवक्तव्यत्वरूपावसर-सङ्गत्या स्मृतिमिदानीं विभजते—**मूले स्मृतिरपि द्विविधेति** ॥ विभज्यत इति शेषः । अनुभवो यथा विभक्तः तथानुभवजन्यस्मृतिरपि द्विधा विभज्यत इत्यर्थः । स्मृतिलक्षणस्य प्रागेवोक्तत्वात् न न्यूनतेति ध्येयम् । द्वैविध्यमुपपादयति—**यथार्थाऽ-यथार्था चेति** ॥ यथार्थादिशब्दस्य भावप्रधाननिर्देशतया इतिशब्दस्याभेदार्थकतया च यथार्थत्वायथार्थत्वरूपप्रकारद्वयान्यतरवती स्मृतिरिति पर्यवसितोऽर्थः । यथार्थस्मृतिलक्षण-माह—**प्रमाजन्येति** ॥ यथार्थानुभवकरणिकेत्यर्थः । अत्र तद्वतितत्प्रकारकस्मृतित्वमेव यथार्थस्मृतिलक्षणम् । प्रमाजन्यत्वकथनं तु स्मृतेः तद्वतितत्प्रकारकत्वोपपादनायेति ध्येयम् । नच यथार्थानुभवस्य यथार्थस्मृतिकरणत्वेन प्रमाणान्तरत्वापत्तिरिति वाच्यम् । ज्ञानसामान्यस्य करणत्वं न प्रमाणत्वं, घटादिकरणदण्डादेः ज्ञानसामान्ये करण-मनसश्च घटादिप्रमाणत्वस्य ज्ञानसामान्ये प्रमाणत्वस्य चापत्तेः । किन्त्वनुभवविभाजको-पाध्यवच्छिन्ननिरूपितकरणत्वमेव तथा । एवञ्च यथार्थानुभवस्य तादृशकारणत्वाभावात् न प्रमाणान्तरत्वप्रसक्तिरिति भावः । अयथार्थस्मृतिलक्षणमाह—**अप्रमाजन्येति** ॥ अयथा-र्थानुभवकरणिकेत्यर्थः । अत्रापि तदभाववति तत्प्रकारकस्मृतित्वं अयथार्थस्मृतिलक्षणम् । अयथार्थानुभवजन्यत्वकथनन्तु स्मृतेः तदभाववतितत्प्रकारकत्वोपपादनाय नतु तादृशजन्य-त्वघटितलक्षणे तात्पर्यं गौरवादिति ध्येयम् । क्रमप्राप्तं सुखं निरूपयति—**सर्वेषामिति** ॥ सकलप्राणिनामित्यर्थः । **अनुकूलतयेति** ॥ अभिलषिततयेत्यर्थः । **वेदनीयमिति** ॥

कमेव लक्षणम् । यथाश्रुतं तु स्वरूपकथनमिति द्रष्टव्यम् । संस्कारं विभजते—**संस्कार इति** ॥ संस्कारत्वजातिमान्संस्कारः । वेगस्याश्रयमाह—**वेग इति** ॥

---

## नीलकण्ठप्रकाशिका.

दुःखत्वपरिग्रहः । **यथाश्रुतं त्विति** ॥ सर्वेषामनुकूलतया इत्यादिकमित्यर्थः ।

## नृसिंहप्रकाशिका.

ज्ञायमानमित्यर्थः । **सुखमिति** ॥ सुखस्वरूपमित्यर्थः । यद्यपि सकलप्राणिनां अभिलषितमेव सुखस्वरूपमिति शक्यते वक्तुं तथापि सुखस्याभिलषितत्वे प्रमाणोपन्यासाय वेदनीयमित्युक्तमिति ध्येयम् । अत्र सुख्यहमिति प्रत्यक्षेण सुखपदशक्यतावच्छेदकतया वा सिद्धसुखत्वजातिमत्त्वं सुखलक्षणं बोध्यम । एतेन सुखसद्भावे प्रत्यक्षरूपप्रमाणमपि दर्शितम् ॥ दुःखं निरूपयति—**प्रतिकूलतयेति** ॥ सर्वेषामित्यादिः । द्विष्टतयेत्यर्थः । **वेदनीयमिति** ॥ एतस्य प्रयोजनं पूर्ववत् बोध्यम् ॥ **दुःखमिति** ॥ दुःखस्वरूपमित्यर्थः । अत्रापि दुःख्यहमिति प्रत्यक्षेण दुःखपदशक्यतावच्छेदकतया वा सिद्धदुःखत्वजातिमत्त्वं दुःखलक्षणमिति बोध्यम् । एतेन दुःखसद्भावे प्रत्यक्षप्रमाणमपि दर्शितम् । एवमग्रेऽपि । इच्छां निरूपयति—**इच्छा काम इति** ॥ अत्रेच्छापदकामपदयोः पर्यायत्वसूचनाय इच्छा काम इत्युक्तम् । लक्षणं अहमिच्छामीति प्रत्यक्षेण इच्छापदशक्यतावच्छेदकतया वा सिद्धेच्छात्वजातिमत्त्वमेवेति बोध्यम् । द्वेषं निरूपयति—**क्रोधो द्वेष इति** ॥ एतस्य प्रयोजनं पूर्ववत् । द्वेषत्वजातिमत्त्वं तल्लक्षणम् । तत्सिद्धिप्रकारः पूर्ववद्बोध्यः । प्रयत्नं निरूपयति—**कृतिः प्रयत्न इति** ॥ एतस्य प्रयोजनं पूर्ववत् । कृतित्वजातिमत्त्वं लक्षणम् । तत्सिद्धिप्रकारश्च पूर्ववद्बोध्यः । धर्मं निरूपयति—**विहितेति** ॥ **कर्मजन्येति** । कर्तव्यत्वेन श्रुतिचोदितकर्मजन्येत्यर्थः । इदं च धर्मकारणप्रदर्शनपरं धर्मस्वरूपप्रदर्शनपरं वेति बोध्यम् । एवमुत्तरत्रापि । लक्षणं सुखत्वावच्छिन्ननिरूपितकारणतावच्छेदकत्वादिना सिद्धधर्मत्वजातिमत्त्वमिति बोध्यम् । अधर्मं निरूपयति—**अधर्मो निषिद्धकर्मजन्यस्त्विति** ॥ अकर्तव्यत्वेन श्रुतिचोदितकर्मजन्य एवेत्यर्थः । अधर्मत्वजातिमत्त्वं अधर्मलक्षणम् । तत्सिद्धिप्रकारः पूर्ववद्बोध्यः । बुद्ध्याद्यधर्मान्तानां एकैकनिरूपणावसरे एकैकस्यात्मरूपैकाश्रयकथने विशेषगुणत्वकथने च गौरवात् लाघवाय तेषां युगपदाश्रयं विशेषगुणत्वं चाह—**बुद्ध्यादयोऽष्टाविति** ॥ बुद्ध्याद्यधर्मान्ता इत्यर्थः । **आत्मविशेषगुणा इति** ॥ आत्मसमवेता विशेषगुणा इत्यर्थः । बुद्धीच्छाप्रयत्नानां तत्तन्निरूपणावसरे प्रत्येकं विभजने गौरवात् लाघवाय युगपदेव तेषां विभागमाह—**बुद्धीत्यादि** ॥ **नित्या ईश्वरस्येति** ॥ नित्या ईश्वरसमवेता इत्यर्थः । एवमुत्तरत्र । अत्र प्रयत्ननिरूपणानन्तरमेव त्रयाणां विभागस्य कर्तव्यतया तद्विहाय अधर्मनिरूपणानन्तरं तेषां विभागकरणे बीजं मृग्यमिति प्रयत्ननिरूपणानन्तरमेव निरुक्तत्रयाणां विभागग्रन्थः स्वीकार्यः, आत्मविशेषगुणाः इत्युत्तरं निरुक्तविभागग्रन्थः प्रामादिक इति प्रतिभाति । संस्कारं विभजते—**संस्कार इति** ॥

वेगत्वजातिमान्वेगः । भावनां लक्षयति—**अनुभवेति** ॥ अनुभवध्वंसेऽति-व्याप्तिवारणाय स्मृतीति । आत्मादावतिव्याप्तिवारणाय अनुभवेति । स्मृतेरपि

## नीलकण्ठप्रकाशिका.

**अनुभवेतीति** ॥ स्मृतिं संस्कारं प्रति च अनुभवत्वेनैव कारणत्वं वदतां प्राचामयमभिप्रायः । तत्तद्विषयकस्मृतिं प्रति तत्तद्विषयकसंस्कारं प्रति च तत्तद्विषयकानुभवत्वेनैव हेतुता न तु तत्तद्विषयकज्ञानत्वेनानुभवत्वस्यापि जातित्वेन ज्ञानत्वापेक्षया गौरवासंभवात् । न च विनिगमनाविरह इति शङ्क्यम्, व्याप्यधर्मपुरस्कारेण कारणत्वसंभवे व्यापकधर्मस्यान्यथासिद्धिनिरूपकत्वादिति । नवीनाः पुनरनुभवानां तत्तद्विषयकस्मृतिं तादृशसंस्कारं प्रति च तत्तद्विषयकज्ञानत्वेनैव हेतुता, न त्वनुभवत्वेन, संस्कारस्य फलनाश्यतया प्रथमस्मरणेनैवानुभवजन्यसंस्कारस्य नाशेन सकृदनुभूतस्य स्मरणोत्तरमस्मरणप्रसङ्गात् । न च स्वजन्यस्मरणस्य संस्कारनाशकत्वे स्मृतिसाधारणेन ज्ञानत्वेन हेतुत्वेऽपि घटपटादिरूपनानाविषयावगाहिना अनुभवेन जनितस्य तावद्विषयकसंस्कारस्य घटाद्येकैकगोचरस्मरणेनापि विनाशात्तदुत्तरं पटादिस्मरणानुपपत्तिः, तत्तद्विषयकसंस्काराभावात् । स्मृतिजन्य-

## नृसिंहप्रकाशिका.

स्वजनकजातीयजनकत्वं संस्कारपदशक्यतावच्छेदकतया सिद्धसंस्कारत्वजातिमत्त्वं वा संस्कारसामान्यलक्षणम् । वेगस्याश्रयमाह—**वेग इति** ॥ लक्षणं तु क्रियाविशेषजनकतावच्छेदकतया वेगपदशक्यतावच्छेदकतया वा सिद्धवेगत्वजातिमत्त्वमिति बोध्यम् । भावनां निरूपयति—**अनुभवजन्येति** ॥ अनुभवत्वजात्यवच्छिन्नव्यापारानवच्छिन्नकारणतानिरूपितकार्यमित्यर्थः । अत्र विशेषणज्ञानादिजन्यविशिष्टबुद्ध्यादावतिव्याप्तिवारणाय कारणतायां अनुभवत्वावच्छिन्नत्वनिवेशः । स्मृतावतिव्याप्तिवारणाय व्यापारानवच्छिन्नत्वनिवेशः। ध्वंसं प्रत्यनुभवस्य तत्तद्व्यक्तित्वेन कारणतया अनुभवत्वावच्छिन्नत्वघटितलक्षणस्य न ध्वंससाधारण्यमिति हृदयम् । लक्षणान्तरमाह—**स्मृतिहेतुरिति** ॥ स्मृतित्वावच्छिन्नकार्यतानिरूपितव्यापारसंबन्धानवच्छिन्नकारणत्वमित्यर्थः । आत्ममनस्संयोगेऽतिव्याप्तिवारणाय कार्यतायां स्मृतित्वावच्छिन्नत्वनिवेशः । केवलस्मृतिनिष्ठकार्यतानिरूपितकारणत्वस्यात्मकालादिसाधारणत्वेऽपि कारणतायां समवायसंबन्धावच्छिन्नत्वनिवेशनेनापि तद्वारणसंभवात् अनुभवेऽतिव्याप्तिवारणाय कारणतायां व्यापारानवच्छिन्नत्वनिवेशः । इदं तु प्राचीनमते । स्मृतिसाधारणज्ञानत्वेन संस्कारहेतुत्ववादिनवीनमते तु ज्ञानत्वावच्छिन्नकारणताघटितप्राथमिकलक्षणस्य विशेषणज्ञानादिजन्यविशिष्टज्ञानादावतिव्याप्तिवारणाय कार्यतायां ज्ञानत्वानवच्छिन्नत्वं निवेश्यमिति बोध्यम् । वस्तुतस्तु भावनात्वजातिमत्त्वमेव मूलकाराभिमतं भावनासामान्यलक्षणं नतु निरुक्तानुभवजन्यत्वादिघटितं गौरवात् । अनुभवजन्यत्वादिकथनं तु भावनात्वस्य जातित्वे अनुमानप्रमाणोपन्यासार्थेति तत्त्वम् । मूलोक्तभावनालक्षणं प्राचीनमत एवेति स्फुटीकरोति—**दीपिकायां स्मृतेरपीति** ॥ अपिना

**संस्कारजनकत्वं नवीनैरुक्तम् । स्थितस्थापकं लक्षयति—अन्यथेति ॥ संख्यादयोऽष्टौ नैमित्तिकद्रवत्ववेगस्थितस्थापकाः सामान्यगुणाः । अन्ये रूपादयो**

---

## नीलकण्ठप्रकाशिका.

पटादिगोचरसंस्कारस्य भिन्नविषयकतया पटादिस्मारकत्वायोगात् । अतः स्वजन्यचरमस्मृतेरेवानायत्या तत्तद्व्यक्तित्वेन तत्तत्संस्कारनाशकताया अङ्गीकर्तव्यतया अनुभवत्वेन जनकतायामपि न दोष इति वाच्यम्, अन्यूनविषयकस्यैव फलस्य नाशकत्वाङ्गीकारेण अदोषात् । जायते च पुनः पुनः स्मरणाद्दृढतरः संस्कारः । दार्ढ्यञ्च संस्कारगतो जातिविशेषो झटिति स्मृत्युत्पादप्रयोजकः । न च दैववशसंपन्नात् झटित्युद्बोधकसमवधानादेव झटिति स्मृतिनियमोपपत्तौ न तत्प्रयोजकतया संस्कारगतो जातिविशेषः सिद्ध्यतीति वाच्यम् । झटिति स्मृतेर्दैवाधीनझटित्युद्बोधकसमवधानाधीनत्वमभ्युपगम्य संस्कारातिशयखण्डने शास्त्रादावभ्यासस्यैवानापत्तेः । किञ्च, परित्यज्य च निश्चिताव्यभिचारकं रूपं गृह्यमाणव्यभिचारकेण कारणत्वकल्पनं न संभवतीति नानुभवत्वेन स्मृतिसंस्कारहेतुतासंभव इति प्राहुस्तन्मतं दर्शयति—**स्मृतेरपीति** ॥ अपिना अनुभवपरिग्रहः। एतन्मते लक्षणे च अनुभव-

## नृसिंहप्रकाशिका:

अनुभवपरिग्रहः । एवंच ज्ञानसामान्यस्येति फलितार्थः । **संस्कारजनकत्वमिति** ॥ संस्कारत्वावच्छिन्नकारणत्वमित्यर्थः। **नवीनैरुक्तमिति** ॥ तथाच जायते पुनःपुनः स्मरणात् दृढतरसंस्कार इत्यनुभवानुरोधात् स्मृतेरपि संस्कारहेतुत्वं आवश्यकमिति नवीनानामाशयः। मूलोक्तभावनालक्षणस्य एकलक्षणत्वाभिप्रायेण तद्घटकदलप्रयोजनमाह—**आत्मादाविति** ॥ आत्मन्यतिव्याप्तिः जन्यत्वविशेषणेनैव वारणादिति आदिना आत्ममनस्संयोगादेः परिग्रहः। **अनुभवेतीति** ॥ अनुभवजन्यत्वविशेषणमित्यर्थः । **स्मृतीति** ॥ स्मृतिहेतुत्वदलमित्यर्थः । अत्र घटादिपदत्वविशिष्टविषयकश्रावणज्ञानस्य घटादिपदत्वनिर्विकल्पकात्मकानुभवजन्यतया घटादिपदार्थस्मारकतया च तत्रातिव्याप्तिवारणायानुभवत्वावच्छिन्ननिरूपितजन्यताया लक्षणे निवेशनीयतया तावतैव ध्वंसेऽतिव्याप्तिवारणे स्मृतिजनकत्वनिवेशनं व्यर्थम् । एवं तादृशजन्यताश्रयस्मृतेरपि कालविधया स्मृतिजनकत्वात् तत्रातिव्याप्तिवारणाय स्मृतित्वावच्छिन्ननिरूपितजनकत्वरूपस्मृतिजनकत्वस्यैव लक्षणे निवेशनीयतया तावतैवात्मादावतिव्याप्त्यप्रसक्तेः तादृशातिव्याप्तिवारणाय अनुभवजन्यत्वनिवेशनमपि अकिञ्चित्करम् परंतु अनुभवेऽतिव्याप्तिवारणायानुभवजन्यत्वनिवेशः । स्मृतावतिव्याप्तिवारणाय स्मृतिजनकत्वनिवेशनमित्येव वाच्यमिति प्रतिभाति । एकलक्षणस्यापि दोषत्रयरहितत्वेऽपि एकलक्षणस्य कारणताद्वयघटितत्वेन गौरवमित्यवेत्य लक्षणद्वयपरतया व्याख्यातमिति हृदयम् । भावनाया आश्रयमाह—**मूले आत्ममात्रवृत्तिरिति** ॥ जीवमात्रवृत्तिरित्यर्थः । स्थितस्थापकं निरूपयति—**अन्यथाकृतस्येति** ॥ अवस्थान्तरं प्रापितस्येत्यर्थः । **तादवस्थ्यापादक इति** ॥ पूर्वावस्थाजनकक्रियाहेतुरित्यर्थः । इदं च स्व-

विशेषगुणाः । द्रव्यविभाजकोपाधिद्वयसमानाधिकरणावृत्तिजातिमद्गुणत्वं विशे-

## नीलकण्ठप्रकाशिका।

जन्या इति स्थाने ज्ञानजन्येति निवेशनीयम् । **द्रव्यविभाजकोपाधीति** ॥ पृथिवीत्व-जलत्वादिरूपं यद्द्रव्यविभाजकोपाधिद्वयं प्रत्येकं तत्तत्समानाधिकरणाः द्वित्वपृथक्त्वसंयोगादयस्तदवृत्तिजातिमद्गुणत्वमित्यर्थः । रूपादिषु चतुर्षु नीलत्वादिकं, सांसिद्धिकद्रवत्वे च द्रवत्वत्वावान्तरजातिं, स्नेहादिषु दशसु स्नेहत्वादिकं, भावनायां संस्कारत्वावान्तरजातिं चादाय लक्षणसमन्वयः । नन्विदं लक्षणमेकत्वादिष्वतिव्याप्तम् एकत्वत्वादिजातेरपि तादृशत्वात् । न च तादृशोपाधिद्वयसमानाधिकरणवृत्तिगुणत्वन्यूनवृत्तिजातिशून्यगुणत्वमिति तदर्थः । एवं चैकत्वादिषु संख्यात्वादेः सत्त्वात्तादृशजातिशून्यत्वस्यासत्त्वेन नातिव्या-

## नृसिंहप्रकाशिका।

रूपकीर्तनम् । लक्षणं तु वेगभावनान्यसंस्कारत्वम् । क्रियाविशेषजनकतावच्छेदकतया स्थितस्थापकपदशक्यतावच्छेदकतया वा सिद्धस्थितस्थापकत्वजातिमत्त्वमित्यपरे । तन्न, क्रियायां तादृशवैजात्ये मानाभावेन तदवच्छिन्नजनकतावच्छेदकतया तादृशजातिसिद्धेरसंभवात् । स्थितस्थापकेति शब्दस्य पदद्वयादिघटितत्वेन वाक्यत्वात्तच्छक्त्याप्रसिद्ध्या शक्यतावच्छेदकतयापि तत्सिद्धेरभावाच्च । अत्रेदं बोध्यम् । गुणा द्विविधाः सामान्यगुणाः विशेषगुणाश्चेति । संख्यादिगुरुत्वान्तनैमित्तिकद्रवत्ववेगस्थितस्थापकाः सामान्यगुणाः । तत्त्वं च आकाशात्मान्यसमवेतवृत्तिपाकजावृत्तिसांसिद्धिकद्रवत्वावृत्तिगुणवृत्तिजातिमत्त्वे सति भावनान्यत्वम् । आकाशात्मविशेषगुणेष्वतिव्याप्तिवारणाय प्राथमिकवृत्त्यन्तं जातिविशेषणम् । रूपादिचतुष्टयवारणाय तत्रैव प्राथमिकावृत्त्यन्तं विशेषणम् । सांसिद्धिकद्रवत्ववारणाय तत्रैव द्वितीयावृत्त्यन्तविशेषणम् । कर्मण्यतिव्याप्तिवारणाय जातौ गुणवृत्तित्वविशेषणम् । भावनायामतिव्याप्तिवारणाय विशेष्यभाग इति । रूपादिचतुष्टयस्नेहसांसिद्धिकद्रवत्वशब्दबुद्ध्याद्यष्टकभावनाः विशेषगुणाः । तत्त्वं च मनोवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकतावच्छेदकगुरुत्वद्रवत्वावृत्तिगुणविभाजकजातिसांसिद्धिकद्रवत्वत्वभावनात्वान्यतमवत्त्वम् । अत्र संख्याद्यपरत्वान्तवेगस्थितस्थापकेष्वतिव्याप्तिवारणाय प्रतियोगितावच्छेदकतान्ताविशेषणम् । गुरुत्वनैमित्तिकद्रवत्वयोः अतिव्याप्तिवारणाय तत्रैवावृत्तित्वान्तविशेषणम् । पाकात्मकविजातीयतेजस्संयोगनिष्ठवैजात्यमादाय पाकेऽतिव्याप्तिवारणाय जातौ गुणविभाजकत्वविशेषणम् । सांसिद्धिकद्रवत्वभावनयोः संग्रहायानुगमाय चान्यतमत्वेन जातिनिवेश इति । मूलकारस्य न्यूनतापरिहाराय सङ्ख्यादयोऽष्टावित्यादिग्रन्थेन सामान्यगुणत्वविशेषगुणत्वाभ्यां गुणानां द्वैविध्यं सूचयित्वा सामान्यगुणानां निरुक्तगुणान्यतमत्वमेव लक्षणमित्युक्ताभिप्रायमित्याशयेन विशेषगुणलक्षणमाह—**दीपिकायां द्रव्यविभाजकोपाधिद्वयसमानाधिकरणावृत्तीति** ॥ द्रव्यत्वव्यापकतानवच्छेदकपरत्वापरत्वगुरुत्वद्रवत्ववेगावृत्तिगुणविभाजकेत्यर्थः । **जातिमत्त्वमिति** ॥ तादृशजातिसांसिद्धिकद्रवत्वत्वभावनात्वान्यतमवत्त्वमित्यर्थः । अत्र

षगुणत्वम् । कर्मणो लक्षणमाह—**चलनेति** ॥ उत्क्षेपणादीनां कार्यभेदमाह—**ऊर्ध्वेति** ॥ **शरीरेति** ॥ वक्रतासंपादकं आकुञ्चनम् । ऋजुतासंपादकं प्रसारणमित्यर्थः । सामान्यं लक्षयति—**नित्यमिति** ॥ संयोगेऽतिव्याप्तिवारणाय नित्यमिति । जलपरमाणुगतरूपेऽतिव्याप्तिवारणाय एकेति । परमाणु-

---

## नीलकण्ठप्रकाशिका.

प्तिरिति वाच्यम् । एवमपि परिमाणादिष्वतिव्याप्तिः । परिमाणत्वादेस्तादृशजातित्वासंभवादिति चेत् । अत्र प्रवदन्त्यभिज्ञाः—यद्यद्रूपावच्छिन्नसमानाधिकरणं यत्किंचिद्द्रव्यविभाजकोपाधिद्वयं तत्तद्भिन्ना स्थितस्थापकवृत्तिभिन्ना च या जातिस्तद्वत्वे सति गुणत्वमिति तदर्थः । यद्रूपावच्छिन्नसामानाधिकरण्यस्य समवायसंबन्धघटितस्यैव निवेशनीयतया यद्रूपपदेन घटत्वादेर्धर्तुमशक्यत्वात् घटादावतिव्याप्तिरतो विशेष्यम् । स्थितस्थापकेऽतिव्याप्तिवारणाय—स्थितस्थापकवृत्तिभिन्नेति । स्थितस्थापकस्य पृथिव्यादिचतुष्टयवृत्तित्वमते तु न देयम् । रूपत्वादेर्यद्रूपपदेन धर्तुं अशक्यत्वेऽप्यवान्तरजातिमादाय रूपादिषु लक्षणसमन्वयः । पार्थिवानुष्णाशीतस्पर्शस्य वायवीयापेक्षया विजातीयस्यैव अनुभवसिद्धत्वात् । संख्यादयस्तु सामान्यगुणा इति न तत्र वैजात्यं जलपृथिव्यादिभेदेन सिद्धान्तसिद्धमतस्तत्र नातिव्याप्तिः । तादृशजातिमद्भिन्नगुणत्वमेव सामान्यगुणानां लक्षणमत्रसेयम् । मूलोक्तं सर्वसंग्राहकं न भवतीत्याह—**वक्रेति** ॥ **नित्यमितीति** ॥ अत्र नित्यत्वं

## नृसिंहप्रकाशिका.

संख्यात्वादिजातिमादाय संख्यादिपञ्चकेष्वतिव्याप्तिवारणाय जातावनवच्छेदकत्वान्तनिवेशः । परत्वादिचतुष्टयेषु वेगस्थितस्थापकयोश्चातिव्याप्तिवारणाय तत्रैवावृत्तित्वान्तविशेषणम् । पाकनिष्ठवैजात्यमादायातिव्याप्तिवारणाय तत्रैव गुणविभाजकत्वविशेषणम् । सांसिद्धिकद्रवत्वभावनयोः संग्रहायानुगमाय चान्यतमत्वेन जातिनिवेशः इति । कर्मणो लक्षणमाह—**मूले चलनात्मकमिति** ॥ चलतीति प्रत्यक्षसिद्धकर्मत्वजातिमत्त्वं कर्मणो लक्षणमित्यर्थः । उत्क्षेपणं निरूपयति—**ऊर्ध्वदेशसंयोगहेतुरिति** ॥ इदं च स्वरूपकीर्तनम् । एवमुत्तरत्रापि । लक्षणन्तूर्ध्वं गच्छतीति प्रत्यक्षसिद्धोत्क्षेपणत्वजातिमत्त्वमिति बोध्यम् । अपक्षेपणं निरूपयति—**अधोदेशेति** ॥ लक्षणं तु अधोगच्छतीतिप्रत्यक्षसिद्धापक्षेपणत्वजातिमत्त्वमिति बोध्यम् । आकुञ्चनं निरूपयति—**शरीरसन्निकृष्टेति** ॥ लक्षणं तु आकुञ्चमिति प्रतीतिसाक्षिकाकुञ्चनत्वजातिमत्त्वमिति बोध्यम् । प्रसारणं निरूपयति—**शरीरविप्रकृष्टेति** ॥ लक्षणं तु प्रसारितमिति प्रतीतिसाक्षिकप्रसारणत्वजातिमत्त्वमिति बोध्यम् । गमनं निरूपयति—**अन्यत्सर्वमिति** ॥ भ्रमणरेचनस्पन्दनोर्ध्वज्वलनातिर्यग्गमनात्मकं सर्वं गमनस्वरूपमित्यर्थः । **गमनमिति** ॥ गच्छतीति प्रत्यक्षसिद्धगमनत्वजातिमत्त्वं लक्षणमित्यर्थः । अत्र भ्रमणादीनामिव उत्क्षेपणादीनामपि गमनात्म-

परिमाणादावतिव्याप्तिवारणाय अनेकेति। अनुगतत्वं समवेतत्वम् । तेन नाभावादावतिव्याप्तिः। विशेषं लक्षयति—**नित्येति** ॥ समवायं लक्षयति—**नित्येति**॥ संयोगेऽतिव्याप्तिवारणाय नित्येति। आकाशादावतिव्याप्तिवारणाय संबन्धेति।

---

## नीलकण्ठप्रकाशिका.

प्रागभावाप्रतियोगित्वं ध्वंसाप्रतियोगित्वं वा एकतरनिवेशेनापि संयोगादेर्वारणात् । एकपदं स्वरूपकीर्तनमात्रपरमिति द्रष्टव्यम् । **मूले व्यावर्तका इति** ॥ नित्यद्रव्याणां परस्परभेदसाधका इत्यर्थः । अथ विशेषपदार्थे किं प्रमाणम् । 'न चात्यन्तसंकीर्णानां परमाणूनां भेदकधर्मं विना भेदासिद्धितो विशेषा अङ्गीकर्तव्या इति वाच्यम् एकत्वादि-

## नृसिंहप्रकाशिका.

कत्वेऽपि शिष्यबुद्धिवैशद्याय स्वतन्त्रेच्छेन गौतमेन पृथङ्निरूपणात् तदनुसारेण मूलकृतापि पञ्चधा विभक्तमिति हृदयम् । कर्मण आश्रयमाह—**पृथिव्यादिचतुष्टयवृत्तीति** ॥ सामान्यलक्षणमाह—**नित्यमेकमनेकानुगतमिति** ॥ अनेकमिति प्रामादिकम् । नित्यत्वे सति अनेकसमवेतत्वं लक्षणम् । संयोगेऽतिव्याप्तिवारणाय सत्यन्तदलम् । जलपरमाणुरूपादावतिव्याप्तिवारणायानेकानुगतमिति । पदार्थत्रयनिरूपितसमवायसम्बन्धावच्छिन्नाधेयमित्यर्थः । तेन नित्यसंयोगाङ्गीकर्तृप्राचीनमते न तत्रातिव्याप्तिः । गगनाभावादावतिव्याप्तिवारणायाधेयतायां समवायसम्बन्धावच्छिन्नत्वनिवेशः । सामान्याश्रयमाह—**द्रव्येति** ॥ परत्वापरत्वाभ्यां सामान्यस्य द्विविधत्वात् परसामान्यादेः स्वरूपमाह—**परं सत्तेत्यादि** ॥ विशेषलक्षणमाह—**नित्यद्रव्यवृत्तयो विशेषा इति** ॥ नित्येन सम्बन्धेन द्रव्यवृत्तय इति विग्रहः । समवायसम्बन्धघटितद्रव्यवृत्तित्ववन्त इत्यर्थः । **द्रव्यवृत्तय इति** ॥ यत्किञ्चिद्द्रव्यवृत्तय एवेत्यर्थः । समवायसम्बन्धघटितयत्किञ्चिद्द्रव्यवृत्तित्वातिरिक्तद्रव्यवृत्तित्वशून्या इति यावत् । समवायसम्बन्धघटितद्रव्यवृत्तित्वं द्रव्यसमवेतत्वमेव । तथा च यत्किञ्चिद्द्रव्यसमवेतत्वातिरिक्तद्रव्यसमवेतत्वशून्यत्वं स्वसमवेतत्वस्वान्यासमवेतत्वोभयसम्बन्धेन किञ्चिद्वस्तुविशिष्टत्वं वा नित्यद्रव्यवृत्तय इत्यन्तसमुदितार्थः । **अन्त्या इति** ॥ अन्तेषु निरवयवद्रव्येषु भवाः। आश्रयाणां परस्परभेदसिद्ध्यन्यथानुपपत्त्या स्वीकृता इत्यर्थः। एतेन विशेषे प्रमाणमिव तेषां निस्सामान्यत्वमपि दर्शितम् । तेषामपि सामान्यवत्त्वे सामान्याश्रयस्य सामान्यरूपेणैव भेदबोधकत्वमिति नियमेन विशेषस्य विशेषत्वरूपसामान्यपुरस्कारेण तत्तत्परमाणुभेदव्यभिचरित्वात् परस्परभेदानुमापकतानुपपत्तेः । तादृशनियमानङ्गीकारे तत्तत्परमाणुनिष्ठैकत्वादीनामेव तादृशभेदानुमापकत्वसंभवेन विशेषासिद्धिप्रसङ्गात् । तस्मात् परमाण्वादिषु परस्परभेदसिद्ध्यन्यथानुपपत्त्या सिद्धो विशेषः सामान्यशून्यतयैव सिध्यतीत्यन्त्यशब्देन विशेषस्य प्रमाणसिद्धत्ववत् निस्सामान्यत्वमपि दर्शितमेवेति प्रकृते अन्त्यशब्देन निस्सा-

अयुतसिद्धलक्षणमाह—**ययोरिति** ॥ 'नीलो घटः' इति विशिष्टप्रतीतिर्वि-

---

### नीलकण्ठप्रकाशिका.

व्यक्तेरेव भेदकत्वसंभवात्' इति चेन्न । यतः एतत्परमाणौ तत्परमाणुभेदसाधने एकत्वादेर्व्यभिचारितया एतदेकत्वादेरेव हेतुता वाच्या । न च तयोः परमाण्वोर्भेदासिद्धावेकत्वादावेतत्त्वं सुग्रहम् । एतत्परमाणुसमवेतत्वं हि तस्यैतत्त्वम् । तस्मात्प्रतिनित्यद्रव्यमेकैको विशेषपदार्थः । स एव स्वसजातीयानां परस्परं भेदसाधक इति तत्रापि विशेषान्तरापेक्षा नास्ति । अतो नानवस्था इति संप्रदायः । वैशेषिकमतसाधारण्येन समवायेऽनुमानं प्रमाणयति—**नील इति** ॥ समवायिकारणत्वस्य अव-

### नृसिंहप्रकाशिका.

मान्यत्वलाभात् निस्सामान्यत्वे सति स्वसमवेतत्वस्वान्यासमवेतत्वोभयसंबन्धेन यत्किञ्चिद्वस्तुविशिष्टत्वं विशेषलक्षणमिति फलितम् । अत्र रूपादावतिव्याप्तिवारणाय सत्यन्तम् । सामान्ये अभावे चातिव्याप्तिवारणाय संबन्धद्वयनिवेश इति ध्येयम् । समवायलक्षणमाह—**नित्यसंबन्ध इति** ॥ नित्यत्वे सति संबन्धत्वं समवायलक्षणमित्यर्थः । अत्र संयोगेऽतिव्याप्तिवारणाय सत्यन्तम् । परमाण्वादावतिव्याप्तिवारणाय विशेष्यभागः । नचैतल्लक्षणस्य नित्यसंयोगाङ्गीकर्तृमते तत्रातिव्याप्तिरिति वाच्यमनित्यावृत्तिसंसर्गतावच्छेदकधर्मवत्त्वस्य विवक्षितत्वात् । संयोगत्वस्यानित्यावृत्तित्वाभावेन नोक्तदोषावकाशः । एतेन प्रकारत्वान्यत्वविशेष्यत्वान्यत्वविशिष्टप्रतीतिविषयत्वरूपविशिष्टप्रतीतिनियामकत्वात्मकसंबन्धत्वस्य यादृशघटभूतलसंयोगं विषयीकृत्य विशिष्टबुद्धिर्न जाता तत्रासत्त्वेन तस्य संसर्गत्वानुपपत्तिरिति दूषणं प्रत्युक्तम् । तत्रापि तादृशसंयोगत्वस्याक्षतत्वात् । समवायस्याश्रयमाह—**अयुतसिद्धवृत्तिरिति** ॥ अयुतसिद्धलक्षणमाह—**ययोर्मध्य एकमिति** ॥ विद्यमानकालीनयादृशोभयघटकमित्यर्थः । **अपराश्रितमेवावतिष्ठत इति** ॥ आश्रयाश्रयिभावरूपपरस्परसंबद्धं सदेव तिष्ठतीत्यर्थः । परस्परासंबद्धं सन्न-तिष्ठतीति यावत् । **तावयुतसिद्धाविति** ॥ तथाच विद्यमानकालत्वविशिष्टयादृशोभयत्वव्यापकं तादृशसंबन्धवत्त्वं तादृशोभयत्वमयुतसिद्धलक्षणमिति भावः । श्यामादिनाशानन्तरकालीने निरुक्तपरस्परसंबन्धशून्ये तादृशश्यामरूपघटोभयस्मिन् विद्यमानतादृशश्यामरूपघटोभयत्वस्याश्रयाश्रयिभावरूपपरस्परसंबन्धवत्त्वव्याप्यत्वाभावात् तादृशोभयस्यायुतसिद्धत्वानुपपत्तिः । अतो व्याप्यदले विद्यमानकालीनत्वनिवेशः । एवञ्च नष्टश्यामरूपघटितोभयत्वस्याविद्यमानत्वेन तत्र विद्यमानकालीनत्वविशिष्टोभयत्वरूपव्याप्याभावात् तत्र व्यापकाभावेऽपि क्षत्यभावेन तादृशोभयस्य नायुतसिद्धत्वानुपपत्तिः । विद्यमानकालीनविभिन्नघटपटोभयनिष्ठोभयत्वस्य तादृशस्याश्रयाश्रयिभावरूपपरस्परसंबन्धवत्त्वाव्याप्यत्वात् तादृशोभयस्य नायुतसिद्धत्वापत्तिः । कावयुतसिद्धावित्याशङ्कां तत्प्रदर्शनेन परिहरति—**अवयवावयवीत्यादिना** ॥ ननु समवाये प्रमाणाभावात्

शेषणविशेष्यसंबन्धविषया, विशिष्टबुद्धित्वात्, दण्डीतिविशिष्टबुद्धिवत् इति समवायसिद्धिः । **अवयवावयविनाविति** ॥ द्रव्यसमवायिकारणमवयवः, जन्यद्रव्यमवयवि । प्रागभावं लक्षयति—**अनादिरिति** ॥ आकाशादावतिव्याप्तिवारणाय सान्त इति । घटादावतिव्याप्तिवारणाय अनादिरिति । प्रतियोगिसमवायिकारणवृत्तिः प्रतियोगिजनको भविष्यतीति व्यवहारहेतुः प्रागभावः । ध्वंसं लक्षयति—**सादिरिति** ॥ घटादावतिव्याप्तिवारणाय अनन्तेति । आकाशादावतिव्याप्तिवारणाय सादिरिति ।

---

## नीलकण्ठप्रकाशिका.

यविनि सत्त्वात् । **द्रव्येति** ॥ परमाणुवारणाय **जन्येति** ॥ अविनश्यदवस्थमपराश्रित-

## नृसिंहप्रकाशिका.

तल्लक्षणाभिधानमसङ्गतमिति मीमांसकाशङ्कां प्रमाणप्रदर्शनेन परिहरति—**दीपिकायां नीलो घट इति विशिष्टप्रत्यय इति** ॥ नील इति प्रत्ययः, घट इति प्रत्ययो वेत्यर्थः । नीलघटत्वावच्छिन्नविषयकत्वेन पक्षत्वे प्रयोजनाभावात् । तादृशप्रत्ययस्य विशिष्टविषयत्वात् विशिष्टविषयत्वेनापि न पक्षत्वं प्रयोजनाभावात् । किंतु स्वरूपकीर्तनमिति हृदयम् । **विशेषणविशेष्यसंबन्धविषयेति** ॥ सांसर्गिकविषयताशालीत्यर्थः । यथाश्रुते निर्विकल्पकासाधारणज्ञानमात्रे तादृशविशेषणविशेष्यसंबन्धविषयकत्वस्य सिद्धत्वेन विशिष्टप्रत्ययत्वहेतुना तत्साधनानौचित्यात् । यदि च निर्विकल्पकसाधारणतादृशसंबन्धविषकत्वमेव साध्यं तदा विशिष्टपदं अनर्थकम् । प्रत्ययत्वादित्येव हेतुः सम्यगित्यपि बोध्यम् । **विशिष्टप्रत्ययत्वादिति** ॥ प्रकारताशालित्वादित्यर्थः । पक्षे तादृशहेतोः अस्तित्वसूचनाय प्रत्ययत्वादित्युक्तम् । न तु तस्यापि हेतुकोटिप्रवेशः प्रयोजनाभावात् दण्डीतिप्रत्ययवत् इत्यनुमानादित्यर्थः । **समवायसिद्धिरिति** ॥ तादृशसांसर्गिकविषयताश्रयस्य संयोगरूपत्वे घटइत्यादिप्रत्ययस्य भ्रमत्वापत्तिः । द्रव्ययोरेव संयोगसत्त्वेन घटत्वघटयोः संयोगाभावात् तादृशसांसर्गिकविषयताश्रयस्य स्वरूपात्मकत्वं न संभवति अनन्तस्वरूपाणां सम्बन्धत्वकल्पने गौरवात् । अतो लाघवात् एकातिरिक्तस्समवायस्सिध्यतीति भावः । अवयवावयविनोः स्वरूपमाह—**द्रव्यसमवायिकारणमिति** ॥ **सान्त इति** ॥ अत्र सान्तत्वं ध्वंसप्रतियोगित्वरूपं बोध्यम् । **अनादिरिति** ॥ अत्रानादित्वं प्रागभावाप्रतियोगित्वरूपं बोध्यम् । **प्रतियोगिसमवायिकारणवृत्तीति**॥ इदं चाश्रयकथनम् । **प्रतियोगिजनक इति**॥ इदञ्च प्रयोजनकथनम् । **भविष्यतीति व्यवहारहेतुरिति** ॥ इदं च प्रमाणकथनम् । **अनन्त इति** ॥ अत्रानन्तत्वं ध्वंसाप्रतियोगित्वरूपं बोध्यम् । **सादिरिति** ॥ अत्र

**प्रतियोगिजन्यः प्रतियोगिसमवायिकारणवृत्तिर्ध्वस्त इति व्यवहारहेतुः ध्वंसः। अत्यन्ताभावं लक्षयति—त्रैकालिकेति ॥ अन्योन्याभावेऽतिव्याप्तिवारणाय संसर्गेति । ध्वंसप्रागभावयोरतिव्याप्तिवारणाय त्रैकालिकेति । अन्योन्याभावं**

---

## नीलकण्ठप्रकाशिका.

मेवावतिष्ठते विनश्यदवस्थं त्वनाश्रितं क्षणमवतिष्ठते यथा तन्त्वादिनाशे पटादिरिति मनसिकृत्य मूलेऽविनश्यदित्युक्तम् । प्रागभावे प्रमाणमाह—**भविष्यतीति ॥ संसर्गेति ॥** तादात्म्यातिरिक्तसंसर्गेत्यर्थः । ध्वंसप्रागभावयोरपि प्रतियोगितावच्छेदकसम्बन्धो वर्तत इति मताभिप्रायेण त्रैकालिकेति विशेषणम् । अन्यथा अन्योन्याभाववारकेणैव तयोर्वारणात्तद्वैयर्थ्यतापत्तेः । यदि संसर्गावच्छिन्नेत्यादेरन्योन्याभावभिन्नाभाव इत्यर्थस्तदा त्रैकालि-

## नृसिंहप्रकाशिका.

सादित्वं प्रागभावप्रतियोगित्वरूपं बोध्यम् । **प्रतियोगिजन्य इति ॥** इदं च कारणप्रदर्शनपरम् । **प्रतियोगिसमवायिकारणवृत्तिरिति ॥** इदं चाश्रयकथनम् । **ध्वस्त इति व्यवहारहेतुरिति ॥** इदं च प्रमाणकथनम् । अत्यन्ताभावलक्षणमाह—**मूले त्रैकालिकेति ॥** त्रैकालिकत्वमभावविशेषणं बोध्यम् । **संसर्गावच्छिन्नेति ॥** संसर्गमात्रावच्छिन्नेत्यर्थः । संसर्गेतरानवच्छिन्नेति यावत् । अत्र सम्बन्धो हि सम्बन्धिभ्यां भिन्नः तदाश्रितश्चैकश्चेति प्राचीनवाक्येन सम्बन्धिद्वयभिन्नसम्बन्धिद्वयवृत्त्येकवस्तुन एव संसर्गत्वलाभात् प्रकृते संसर्गशब्देन निरुक्तसंसर्गघटकसम्बन्धिभिन्नं गृह्यते । एवं च संसर्गेतरशब्देन संबन्धिभिन्नेतरस्य सम्बन्ध्यभिन्नरूपतादात्म्यस्य लाभो निराबाधः । तथाच संसर्गावच्छिन्नशब्देन तादात्म्यानवच्छिन्नत्वलाभात् तादात्म्यानवच्छिन्नप्रतियोगिताकाभावलाभः । त्रैकालिकशब्देन ध्वंसाप्रतियोगित्वविशिष्टप्रागभावाप्रतियोगित्वविशिष्टलाभश्चेति ध्वंसाप्रतियोगित्वे सति प्रागभावाप्रतियोगित्वे सति तादात्म्यानवच्छिन्नप्रतियोगिताकाभावत्वमत्यन्ताभावलक्षणमिति त्रैकालिकेत्यादिमूलफलितमिति न किञ्चिदनुपपन्नम् । लक्षणमुक्त्वा स्वरूपं प्रमाणं चाह—**यथेति ॥ भूतले घटो नास्तीति ॥** अनुयोगिवाचकसप्तम्यन्तपदसमभिव्याहृतप्रतियोगिवाचकपदसमभिव्याहृतनञ्शब्दोल्लिखितप्रत्ययविषयाभावः अत्यन्ताभावस्वरूपम् । तादृशशब्द एव प्रमाणं चेत्यर्थः । त्रैकालिकेत्यादिलक्षणवाक्यस्य निरुक्तार्थाभिप्रायेणैव लक्षणघटकदलप्रयोजनमाह—**दीपिकायां अन्योन्याभावेऽतिव्याप्तिवारणायेति ॥** अत्र निरुक्तनित्यत्वाभावत्वयोः सत्त्वात् प्रसक्तातिव्याप्तिवारणायेत्यर्थः । **संसर्गावच्छिन्नेतीति ॥** तादात्म्यानवच्छिन्नप्रतियोगिताकत्वपर्यवसितसंसर्गावच्छिन्नप्रतियोगिताकत्वनिवेश इत्यर्थः । **ध्वंसप्रागभावयोरतिव्याप्तिवारणायेति ॥** तयोरपि तादात्म्यानवच्छिन्नप्रतियोगिताकाभावत्वसत्त्वेन प्रसक्तातिव्याप्तिवारणायेत्यर्थः । **त्रैकालिकेतीति ॥** अभावे निरुक्तनित्यत्वरूपत्रैकालिकत्व-

लक्षयति—तादात्म्येति ॥ प्रतियोगितावच्छेदकारोप्यसंसर्गभेदादेकप्रतियो-

---

## नीलकण्ठप्रकाशिका.

केति सिद्धान्तेऽपि सार्थकं त्रैकालिकत्वमिह नित्यत्वरूपम् । **मूले भूतले घटो नास्तीति** ॥ तत्र घटाभावांशे भूतलस्य विशेष्यत्वं संबन्धः, घटाभाववद्भूतलं इत्यत्र तु भूतलांशेऽभावस्य विशेषणत्वं संसर्ग इति वदतां प्राचामयमभिप्रायः । विशेष्यत्वविशेषणत्वे स्वरूपसंबन्धविशेषौ न ज्ञानीयविषयताविशेषौ । न च विशेषणताख्यः स्वरूपसम्बन्ध एक एवास्तु, 'भूतले घटो नास्ति' इति प्रतीतौ 'भूतलं घटाभाववत्' इति प्रतीतितो वैलक्षण्यस्य विशेषणत्वावच्छिन्नाधेयताविषयकत्वकल्पनेनैव निर्वाहादिति वाच्यम् । तादृशप्रतीत्योर्वैलक्षण्याय 'प्रथमायां विशेषणत्वावच्छिन्नाधेयतासंनिकर्षः, द्वितीयायां विशेषणतासंसर्गः, इत्युपेयते किं वा । प्रथमायां विशेषणतासंसर्गः, द्वितीयायां विशेषणत्वाव-

## नृसिंहप्रकाशिका.

निवेश इत्यर्थः । अन्योन्याभावलक्षणमाह—**मूले तादात्म्येति** ॥ तादात्म्यसंबन्धेत्यर्थः । तेन भूतले संयोगसंबन्धेन घटतादात्म्यवान् नास्तीति शब्दोल्लिखितप्रत्ययसिद्धात्यन्ताभावस्य तादात्म्यधर्मावच्छिन्नप्रतियोगिताकत्वेऽपि नातिव्याप्तिः । अन्योन्याभावस्वरूपं अन्योन्याभावतन्निष्ठतादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकत्वयोः प्रमाणं चाह—**यथेति ॥ घटः पटो न भवतीति** ॥ इत्याकारकसमानविभक्तिकपदद्वयसमभिव्याहृतनञ्शब्दोल्लिखितप्रत्ययविषयाभावः अन्योन्याभावस्वरूपम् । तादृशप्रत्यय एवान्योन्याभावे तस्य तादात्म्यावच्छिन्नप्रतियोगिताकत्वे च मानमित्यर्थः । नच तादृशशब्दोल्लेखितप्रत्ययस्य तादात्म्यावच्छिन्नप्रतियोगिताकत्वेन कथमन्योन्याभावविषयकत्वमिति वाच्यम् । नञ्पदासमभिव्याहृतयादृशवाक्यात् यस्मिन् धर्मिणि येन संबन्धेन यत्प्रकारकबोधः अनुभवसिद्धः नञ्पदसमभिव्याहृततादृशवाक्यात् असति बाधके तद्धर्मिणि तत्संबन्धावच्छिन्नतन्निष्ठप्रतियोगिताकाभावप्रकारकबोध इति नियमः सार्वजनीनः। समवायेन पाककृतिप्रकारकचैत्रविशेष्यकशाब्दबोधजनकचैत्रःपचतीति वाक्यात् नञ्पदसमभिव्याहृतात् चैत्रविशेष्यकसमवायसंबन्धावच्छिन्नपाककृतिनिष्ठप्रतियोगिताकाभावप्रकारकबोधस्यैवानुभवसिद्धत्वात् । एवं च प्रकृतेऽपि तादात्म्यसंबन्धेन घटविशेष्यकपटप्रकारकबोधजनकघटःपट इति वाक्यात् नञ्पदसमभिव्याहृतात् घटत्वावच्छिन्नविशेष्यकतादात्म्यसंबन्धावच्छिन्नपटनिष्ठप्रतियोगिताकाभावप्रकारकबोधस्यैवानुभवसिद्धत्वात् नञ्पदघटितैः तादृशवाक्यजन्यबोधसमानाकारकत्वरूपतादृशशब्दोल्लिखित्वविशिष्टघटःपटोनेतिप्रात्यक्षिकप्रमितेरपि तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकत्वेनान्योन्याभावविषयकत्वं निराबाधमेवेति न किञ्चिदनुपपन्नमिति । शिष्यबुद्धिवैशद्यायात्यन्ताभावान्योन्याभावयोः बहुत्वं प्रदर्शनीयं, मूलकृता तदप्रदर्शनात् न्यूनतापरिहाराय तयोः बहुत्वं प्रदर्शयति—**दीपिकायां प्रतियोगितावच्छेदकेत्यादि** ॥ प्रतियोगितावच्छेदकधर्मभेदात् आरोप्यसं-

गिकयोरत्यन्तान्योन्याभावयोर्भिन्नत्वम् । केवलदेवदत्ताभावाद्दण्ड्यभावप्रतीत्या विशिष्टाभावः, 'एकसत्त्वेऽपि द्वौ न स्तः' इति प्रतीत्या द्वित्वावच्छिन्नाभावः,

---

## नीलकण्ठप्रकाशिका.

च्छिन्नाधारता, इत्यत्र विनिगमकस्य दुर्लभत्वात् । न च तादृशप्रतीत्योः संसर्गांशेऽविलक्षणत्वेऽपि विशेषणविशेष्यभावभेदाद्वैलक्षण्योपपत्तिरित्युभयत्र विशेषणताया एव संबन्धतास्त्विति वाच्यम् । तावतापि 'भूतले घटो नास्ति' 'भूतलवान् घटाभावः' इत्यनयोः 'भूतलं घटाभाववत्' 'घटाभावे भूतलम्' इत्यनयोश्च प्रतीत्योर्वैलक्षण्यानिर्वाहात् । तस्माद्विशेष्यत्वविशेषणत्वनामकयोरुभयोः स्वरूपसंबन्धविशेषयोः संसर्गता । तथा च 'भूतलवान्घटाभाव इत्यत्र घटाभावांशे भूतलस्य विशेष्यत्वं संसर्गो 'घटाभावे भूतलम्' इत्यत्र च भूतलांशेऽभावस्य विशेषणतासंसर्गो बाधित इति भ्रमत्वनिर्वाह इति संक्षेपः । ध्वंसप्रागभावयोरिवैकप्रतियोगिकयोरत्यन्ताभावान्योन्याभावयोः एकविधत्वं नेत्याह— **प्रतियोगितेति ॥ आरोप्येति ॥** प्राचीनमताभिप्रायेण । अत्र यथायोगं प्रतियोगितावच्छेदकधर्मभेद इव संसर्गभेदोऽप्यत्यन्ताभावबहुत्वप्रयोजकः । प्रतियोगितावच्छेदकधर्मभेदः अन्योन्याभावबहुत्वप्रयोजक इति द्रष्टव्यम् । तदेव दर्शयति—**केवलेति ॥** केवलदेवदत्ताभावाद्विशिष्टाभावोऽतिरिक्त इत्यन्वयः । अन्यथा केवलदेवदत्तवति 'दण्डी नास्ति' इति प्रत्ययानापत्तेः । उभयाभावस्यातिरिक्तत्वे प्रतीतिं प्रमाणयति— **एकसत्त्वेऽपीति ॥** घटपटौ द्वौ न स्त इत्यादौ घटत्वं पटत्वमुभयत्वं चेत-त्रितयं प्रतियोगितावच्छेदकम्, केवलघटवति केवलपटवति यत्किंचिदुभयवति च तथा

## नृसिंहप्रकाशिका.

सर्गभेदाच्चेत्यर्थः । अत्रारोप्यसंसर्गशब्देन प्रतियोगितावच्छेदकसंबन्धो ग्राह्यः । **एकप्रतियोगिकयोरपीति ॥** अपिना भिन्नप्रतियोगिकयोः समुच्चयः । **बहुत्वमिति ॥** तथा च प्रतियोगितावच्छेदकधर्मप्रतियोगितावच्छेदकसंबन्धयोः भेदात् एकप्रतियोगिकानामत्यन्ताभावानां बहुत्वम् । अन्योन्याभावप्रतियोगितावच्छेदकसंबन्धस्य तादात्म्यरूपतया एकजातीयत्वेन तद्भेदेनान्योन्याभावभेदो नास्तीति प्रतियोगितावच्छेदकधर्मभेदादेवैकप्रतियोगिकान्योन्याभावानां बहुत्वं वाच्यमिति दीपिकाकारस्य निगूढाभिप्रायः । तादृशाभावानुदाहरति—**केवलदेवदत्ताभावादिति ॥** दण्डाविशेषितदेवदत्तत्वावच्छिन्नप्रतियोगिताकाभावादित्यर्थः । **दण्ड्यभाव इति ॥** दण्डावच्छिन्नदेवदत्तनिष्ठप्रतियोगिताकाभाव इत्यर्थः । देवदत्ते सत्यपि देवदत्ते दण्डरूपविशेषणाभावप्रयुक्ततादृशाभावस्यानुभवसिद्धत्वादिति भावः । एतस्यातिरिक्त इत्यनेनान्वयः । **एकसत्त्वेऽपीति ॥** एकघटवत्यपीत्यर्थः । **द्वौ न स्त इत्यादिप्रतीत्येति ॥** घटौ न स्तः इत्यादिप्रतीत्येत्यर्थः । सिद्ध इति शेषः । **द्वित्वाद्यवच्छिन्नाभाव इति ॥** घटनिष्ठद्वित्वत्रित्वाद्यवच्छिन्नैकघटनिष्ठप्रतियोगिताकाभाव इत्यर्थः । तद्घटत्वावच्छिन्नप्रतियोगिताकाभावात् इति

संयोगेन घटवति समवायेन घटाभावः, तत्तद्धटाभावाद्धटत्वावच्छिन्नप्रतियोगिताकसामान्याभावश्चातिरिक्तः । एवमन्योन्याभावोऽपि । घटत्वेन

---

## नीलकण्ठप्रकाशिका.

प्रत्ययात् । संबन्धभेदेनाभावस्यातिरिक्तत्वं दर्शयति—**संयोगेनेति** ॥ सामान्यविशेषाभावयोर्भेदं दर्शयति—**तत्तदिति** ॥ **अतिरिक्त इति** ॥ अन्यथा यत्किंचिद्धटवति घटो नास्तीति प्रत्ययापत्तेः । **एवमन्योन्याभावोऽपीति** ॥ अवच्छेदकभेदात्तत्तद्धटभेदः, तत

## नृसिंहप्रकाशिका.

शेषः । अतिरिक्त इत्यग्रतनेनान्वयः । **समवायेन देवदत्ताभाव इति** ॥ संयोगेन देवदत्ताभावात् इति शेषः । एतस्यातिरिक्त इत्यनेनान्वयः । प्रतियोगितावच्छेदकधर्मसंबन्धभेदेनात्यन्ताभावबाहुल्यमुक्त्वा प्रतियोगितावच्छेदकतापर्याप्त्यवच्छेदकधर्मभेदेनाप्यत्यन्ताभावबाहुल्यमाह—**तद्धटाभावादिति** ॥ नीलघटत्वाद्यवच्छिन्नप्रतियोगिताकाभावादित्यर्थः । एतेन तद्धटाभावशब्दस्य तत्तादिविशिष्टघटत्वाद्यवच्छिन्नप्रतियोगिताकाभावार्थकत्वे तत्तादिविशिष्टघटत्वस्य प्रमेयत्वविशिष्टघटत्वस्येव लघुधर्मसमनियतत्वेन लघुधर्मघटितत्वेन गुरुतया च प्रतियोगितावच्छेदकत्वासंभवः । तादृशशब्दस्य केवलतत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावार्थकत्वे केवलप्रतियोगितावच्छेदकभेदादेवाभावबाहुल्यसंभवेन केवलदेवदत्ताभावात् दण्डाद्यभाव इत्युक्तोदाहरणसमशीलतया घटाभावादित्यादिना पृथगुदाहरणकथनवैयर्थ्यमिति दूषणस्य नावकाशः । श्वेतघटवति नीलवस्त्वन्तराधिकरणे जायमाननीलो घटो नास्तीतिप्रतीतिसिद्धाभावस्य प्रतियोगितावच्छेदकं न केवलं नीलत्वं घटत्वं वा, प्रतियोगितावच्छेदकावच्छिन्नाधिकरणे तादृशाभावप्रत्ययानुपपत्तेः । किन्तु नीलत्वविशिष्टघटत्वं तद्वाच्यम् ॥ एवं च नीलत्वविशिष्टघटत्वशुद्धघटत्वयोर्भेदाभावात् तादृशाभावभेदानुपपत्तिः । अतः प्रतियोगितावच्छेदकतापर्याप्त्यवच्छेदकधर्मभेदेनापि अभावबाहुल्यमङ्गीकृतम् । इत्थं च नीलघटेतरासमवेतत्वे सति निखिलनीलघटसमवेतत्वरूपनीलघटत्वत्वस्य घटेतरासमवेतत्वघटितघटत्वत्वस्य च प्रतियोगितावच्छेदकतापर्याप्त्यवच्छेदकधर्मस्य भेदादभावबाहुल्यं निराबाधमिति भावः । **एवमन्योन्याभावोऽपीति** ॥ अत्यन्ताभाववदन्योन्याभावोऽपि प्रतियोगितावच्छेदकधर्मभेदेनानेकत्वेन स्वीकार्य इत्यर्थः । तथा च नायं तद्व्यक्तिः नायं घट इत्याकारकविलक्षणप्रतीतिसिद्धतद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदघटत्वावच्छिन्नप्रतियोगिताकभेदयोः प्रतियोगितावच्छेदकभेदप्रयुक्तबहुत्वमवश्यं स्वीकार्यमिति भावः । ननु प्रतियोगितावच्छेदकधर्मसंबन्धभेदादेवात्यन्ताभावभेदे संयोगेन घटत्वविशिष्टपटो नास्तीति प्रतीतिसिद्धसंयोगसंबन्धावच्छिन्नघटत्वावच्छिन्नपटनिष्ठप्रतियोगिताकात्यन्ताभावस्य केवलान्वयिनः संयोगेन घटसामान्याभावाभेदापत्तिः । प्रतियोगितावच्छेदकधर्मसंबन्धभेदाभावात् । अतः प्रतियोगितावच्छेदकधर्मनिष्ठप्रतियोगित्वसामानाधिकरण्यतदसामा-

**पटो नास्तीति प्रतीत्या व्यधिकरणधर्मावच्छिन्नाभावो नाङ्गीक्रियते । पटे घटत्वं नास्तीति तदर्थः । अतिरिक्तत्वे स केवलान्वयी । सामयिकाभावोऽप्यत्यन्ताभाव**

---

## नीलकण्ठप्रकाशिका.

उभयभेदो घटभेदश्च अतिरिक्त इत्यर्थः। प्रसङ्गादाह—**घटत्वेनेति॥ नाङ्गीक्रियत इति॥**

## नृसिंहप्रकाशिका.

नाधिकरण्ययोरपि अभावभेदकत्वं वाच्यमिति सौन्दलोपाध्यायानां मतं निरस्यति—**घटत्वावच्छिन्नपटो नास्तीति** ॥ इत्याकारकस्वरसवाहिप्रतीत्येत्यर्थः । **व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभाव इति** ॥ तदवृत्तिधर्मावच्छिन्नतन्निष्ठप्रतियोगिताकाभावश्चेत्यर्थः । **नाङ्गीक्रियत इति** ॥ अप्रामाणिकत्वादिति हेतुः पूरणीयः । तथाचाभावप्रत्ययो हि विशिष्टवैशिष्ट्यमर्यादां नातिशेत इति नियमेनाभावत्वप्रकारकप्रत्यक्षमात्रस्य प्रतियोगितावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वावश्यकतया प्रकृते घटत्वविशिष्टपटाप्रसिद्ध्याभावांशे तद्वैशिष्ट्यावगाहित्वासंभवेन घटत्वविशिष्टपटोनास्तीतिप्रत्यक्षस्यैवालीकत्वावश्यकत्वात् प्रमाणान्तरस्याभावाच्च व्यधिकरणधर्मावच्छिन्नाभावोऽप्यलीक एवेति भावः । ननु निरुक्तप्रत्ययस्य तादृशाभावस्य चालीकत्वे घटत्वविशिष्टपटो नास्तीतिशब्दप्रयोगः कथमित्यत आह—**पटे घटत्वं नास्तीति** ॥ पटनिष्ठघटत्वाभाव एवेत्यर्थः । **तस्यार्थ इति** ॥ तादृशव्यवहारप्रतिपाद्यार्थ इत्यर्थः । तथाच विशिष्टबोधकशब्दसमभिव्याहृतनञः असति बाधक एव विशिष्टप्रतियोगिकत्वेनाभावबोधकत्वनियमात् क्वापि नीलस्फटिको नास्तीति व्यवहारस्य नीलत्वविशिष्टस्फटिकाप्रसिद्धिरूपबाधकसत्त्वाद्यथा स्फटिकनिष्ठनीलत्वाभावबोधकत्वं तथा घटत्वविशिष्टपटो नास्तीति व्यवहारस्यापि विशिष्टाप्रसिद्धिरूपबाधकबलात् पटनिष्ठघटत्वाभावबोधकत्वेनोपपत्तिः कार्येति भावः । व्यधिकरणधर्मावच्छिन्नाभावस्यैवालीकतया तस्य केवलान्वयित्वं सुदूरपराहतमित्याह—**अतिरिक्तत्वेनेति** ॥ घटत्वविशिष्टपटो नास्तीति व्यवहारप्रतिपाद्याभावस्य पटनिष्ठघटत्वाभावातिरिक्तत्वेनेत्यर्थः । प्रमितत्व इति शेषः । **केवलान्वयीति** ॥ भवेदिति शेषः । तथाच तादृशाभावस्यैवालीकत्वात् न तस्य केवलान्वयित्वमिति भावः । ननु संयोगेन घटाद्यभावानां नात्यन्ताभावरूपत्वम् । तथा सति घटादिशून्यकालीनभूतले प्रत्यक्षसिद्धघटाद्यभावस्य घटसत्ताकालेऽपि तस्मिन् वर्तमानतया तत्कालेऽपि घटाद्यभावप्रत्यक्षापत्तिः । अतः सामयिकाभावः अत्यन्ताभावातिरिक्ततया स्वीकार्यः। एवं च घटादिशून्यकाले वर्तमानस्य घटाद्यभावस्य घटाद्यानयनेन नाशात् न घटादिसत्ताकाले तत्प्रत्यक्षापत्तिः । पुनः घटाद्यपसरणे सति तस्मिन् अधिकरणे घटाद्यभावानां घटाद्यपसरणेन उत्पत्तिस्वीकारात् घटाद्यपसरणोत्तरं न तादृशाभावप्रत्यक्षानुपपत्तिः । तस्मादुत्पादविनाशशाली अत्यन्ताभावातिरिक्तसामयिकनामकोऽभाव इति प्राचीनैकदेशिमतं दूषयति—**सामयिकाभावोऽपीति** ॥ सामयिकनामकाभावः समयविशेषे प्रतीयमानोऽप्यत्यन्ताभाव एवेति योजना । तथाच समयविशेषे प्रतीयमानत्वमात्रं नातिरिक्तत्वनियामकं साम-

एव समयविशेषे प्रतीयमानः । घटाभाववति घटानयने अत्यन्ताभावस्य अन्यत्र गमनाभावेऽपि अप्रतीतेः, घटापसरणे सति प्रतीतेः, भूतलघटसंयोगप्रागभावध्वंसयोर्घटात्यन्ताभावप्रतीतिनियामकत्वं कल्प्यते । घटवति तत्संयोग-

---

## नीलकण्ठप्रकाशिका.

अभावधियो विशिष्टवैशिष्ट्यावगाहिमर्यादोपबृंहिततया 'घटत्वेन पटो नास्ति' इत्यादिप्रत्ययस्य विशिष्टवैशिष्ट्यानवगाहिनो घटत्वादेः प्रतियोगितावच्छेदकत्वव्यवस्थापकत्वाभावेन व्यधिकरणधर्मावच्छिन्नाभावे मानाभावादिति भावः । ननु तर्हि तादृशप्रत्ययस्य का गतिरित्यत आह—**पट इति** ॥ ननु 'घटत्वेन पटो नास्ति' इति प्रतीतेः घटत्वावच्छिन्नपटनिष्ठप्रतियोगितावगाहित्वं न संभवति । असति बाधके तच्छब्दोल्लेखिप्रतीतेस्तच्छब्दप्रतिपाद्यार्थविषयकत्वपरित्यागायोगात् । पटाधिकरणकघटत्वाभावस्य 'घटत्वेन पटो नास्ति' इति शब्दात्कथमप्यप्रतीतेः । किन्तु अवच्छिन्नप्रतियोगिताकत्वसम्बन्धेन अभावांशे स्वातन्त्र्येण घटत्वावगाहित्वमेव । 'अभावबुद्धिर्विशिष्टवैशिष्ट्यावगाहिमर्यादां नातिशेते' इति नियमस्तु न। एवं च—व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावः सप्रमाण इति चेत्। अस्तु तर्हि अतिरिक्तत्वं तस्येत्याह—**अतिरिक्तत्व इति** ॥ **सः** व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकः । **केवलान्वयीति** ॥ प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिरूपविरोधिविरहादिति भावः । ननु भूतलादौ घटसत्त्वदशायां न तदभावबुद्धिरन्यदा तु जायते । अतः सामयिकाभावोऽतिरिक्त एवाङ्गीकर्तव्य इति वदन्तं निराकर्तुमाह—**सामयिकेति** ॥ प्रतियोगिविरहसमये प्रतीयमानोऽत्यन्ताभाव एव **सामयिकाभावः** । न तूत्पादविनाशशाल्यतिरिक्त इति समुदितोऽर्थः । नन्वेवं भूतले घटस्यानयनदशायामपि तदभावस्य नित्यत्वेन तत्प्रत्ययापत्तिरत आह—**घटाभाववतीति** ॥ नियामकत्वमेव समुपपादयति—**घटवतीति** ॥ नतत्कालावच्छिन्नभूतलादेरेव घटाद्यभावसंसर्गतया घटकाले च तच्छून्य-

## नृसिंहप्रकाशिका.

त्रीसमवधानासमवधानाभ्यामेव प्रत्यक्षाप्रत्यक्षसंभवात् । अन्यथा घटादेरपि तथात्वापत्तेरिति भावः । अत्यन्ताभावरूपत्वेऽपि तस्य समयविशेषे प्रतीयमानत्वनियामकमाह—**घटाभाववतीति** ॥ तादृशभूतलादावित्यर्थः । प्रथममित्यादिः । **घटानयन इति** ॥ घटानयनेन घटवति चेत्यर्थः। एतस्याप्रतीतेरित्यनेनान्वयः । **अन्यत्र गमनाभावेऽपीति**॥ भूतलादौ घटानयनात् प्राक् वर्तमानाभावस्य घटानयनानन्तरं देशान्तरगमनासंभवेऽपीत्यर्थः । अभावे क्रियाविरहादिति भावः । घटानयनेन घटवति भूतलादौ घटाभावरूपविषयसत्त्वेऽपीति फलितार्थः । **अप्रतीतेरिति** ॥ प्रत्यक्षानुदयादित्यर्थः । **घटापसरणे सतीति** ॥ तदुत्तरमित्यर्थः । **प्रतीतेरिति** ॥ तस्मिन्नेवाधिकरण इत्यादिः । घटाभावप्रत्यक्षोत्पत्तेरित्यर्थः। **भूतलघटेत्यादि** ॥ भूतलघटसंयोगप्रागभावस्य तादृशसंयोगध्वंसस्ये-

प्रागभावध्वंसयोरसत्त्वादेवात्यन्ताभावस्याप्रतीतिः । घटापसरणे तु संयोगध्वंसस्य सत्त्वात्प्रतीतिरिति । केवलाधिकरणेनैव नास्तीति व्यवहारोपपत्तौ

---

## नीलकण्ठप्रकाशिका.

कालविशिष्टभूतलादिरूपसंसर्गाभावेन तदा न तदत्यन्ताभावबुद्धिरित्यपि द्रष्टव्यम् । नन्वभावो नास्त्यतिरिक्तः पदार्थः यस्मिन्नधिकरणे घटो नास्तीत्यादिप्रत्ययस्तस्मिन्नधिकरणे पटाद्यभावत्वकल्पनेनैव तथा प्रतीतिनिर्वाहात्, क्लृप्तधर्मिणि धर्मकल्पनाया अक्लृप्तधर्मिकल्पनातो लघीयस्त्वादिति गुरुमतमाशङ्क्य निराचष्टे—**केवलेति**॥ यद्यप्यनन्तेष्वधिकरणेषु धर्मकल्पनातोऽतिरिक्तैकधर्मिकल्पनस्यैव लघीयस्त्वादत्रोक्तन्यायस्यानवतारः । किंच अभा-

## नृसिंहप्रकाशिका.

त्यर्थः । **अत्यन्ताभावेति** ॥ घटात्यन्ताभावप्रत्यक्षप्रयोजकत्वमित्यर्थः । **कल्प्यत इति** ॥ अन्वयव्यतिरेकाभ्यामित्यादिः । स्वीक्रियत इत्यर्थः । एतयोः प्रयोजकत्वे नोक्तदोष इत्याह—**घटवतीत्यादि** ॥ **प्रतीतिरित्यन्तेन** ॥ ननु घटानयनेन घटवति भूतलेऽपि पूर्वकालीनघटसंयोगध्वंससत्त्वात् भविष्यद्घटसंयोगप्रागभावसत्त्वाच्च उक्तप्रयोजकसत्त्वेन घटाभावप्रत्यक्षापत्तिर्दुर्वारेति चेन्न । स्वसमानाधिकरणसंयोगासमानकालीनत्वविशिष्टतादृशध्वंसप्रागभावयोरेव प्रयोजकत्वस्वीकारेणोक्तापत्तिविरहात् । न चैवं सति लाघवात् तादृशकालीनत्वविशिष्टत्वेनैव प्रयोजकतावच्छेदकत्वमस्तु ध्वंसत्वादेरपि तत्कोटिप्रवेशे प्रयोजनाभावात् ध्वंसत्वादिघटिततादृशरूपावच्छिन्नस्य परस्परव्यभिचारित्वाच्चेति वाच्यमिष्टापत्तेः । न च तथापि भूतलवृत्तिघटे मृत्पिण्डभ्रान्तिमूलकघटाभाववद्भूतलमिति प्रत्यक्षस्य प्रामात्वापत्तिः विषयसत्त्वादिति वाच्यम् । स्वसमवेतघटसंयोगासमानकालीनत्वविशिष्टभूतलादावेव घटाभावसम्बन्धत्वस्वीकारेण घटसंयोगकाले भूतलादेस्तादृशविशिष्टसम्बन्धरूपाभावेन तेन सम्बन्धेन भूतलादौ घटाभावरूपविषयासत्त्वेन उक्तापत्तिविरहात् । न चैवं सति घटानयनेन घटवति भूतलेऽपि तेन संबन्धेन घटाभावरूपविषयाभावादेव तत्प्रत्यक्षापत्तिवारणे घटसंयोगप्रागभावादेः तत्प्रयोजकत्वाङ्गीकारो व्यर्थ इति वाच्यम् । अभावस्य तादृशविशिष्टसम्बन्धविशिष्टत्वलाभायैव तदभिधानात् । नन्वभावसंबन्धतया नैयायिकाभिमताधिकरणविशेषस्यैवाभावत्वमस्तु अतिरिक्ताभावाकल्पनालाघवात् । नच तस्यैवाभावत्वे अभावाधिकरणयोरभेदात् घटाभाववत् भूतलमिति आधाराधेयभावप्रत्ययानुपपत्तिः । अभेदे तादृशप्रत्ययासंभवात् । अन्यथा भूतलं भूतलवदित्यपि प्रत्ययापत्तिरिति वाच्यम् । आधाराधेयाभेदेऽपि आधारतावच्छेदकाधेयतावच्छेदकभेदेनैव तादृशप्रत्ययोपगमात् । अन्यथा अभावाधिकरणकाभावप्रतियोगिकाभावस्यानवस्थाभयेनाधिकरणस्वरूपत्वस्य सकलनैयायिकाभिमततया घटाभावः पटाभावभिन्न इत्याकारकसर्वानुभवसिद्धाधाराधेयभावप्रत्ययानुपपत्तिः । घटाभावपटाभावभेदयोरैक्यात् । तस्माल्लाघवेनाभावस्याधिकरणविशेषात्मकत्वमेव स्वीकार्यमिति प्राभाकरमतं दूषयितुमादौ तन्मतमुपन्यस्यति—**केवला-**

**अभावो न पदार्थान्तरमिति गुरुः। तन्न। अभावानङ्गीकारे कैवल्यस्य निर्वक्तुमशक्यत्वात्। अभावाभावो भाव एव। नातिरिक्तः, अनवस्थाप्रसङ्गात्।**

---

## नीलकण्ठप्रकाशिका.

वस्याधिकरणस्वरूपत्वे जलादौ विद्यमानस्य गन्धाद्यभावस्य जलादिरूपत्वादितरेन्द्रियग्राह्यतापत्तिरित्यादिदूषणानि प्रस्फुरन्ति, तथापि केवलाधिकरणादेवेति तद्वचननिरासादेव तन्निवृत्तिसम्भवे किमेतान्यपेक्षितानीत्यालोच्य तदेव निराकरोति—**अभावानङ्गीकार इति** ॥ अतिरिक्ताभावानङ्गीकार इत्यर्थः। अथ किमिदं कैवल्यम्। भूतलस्वरूपमिति चेत् घटवद्भूतलस्यापि तदभावस्वरूपतापत्त्या तदानीमपि घटाभाववत्ताबुद्धिप्रसङ्गः। घटाभाववत्त्वमिति चेत् सिद्धमतिरिक्ताभावे नातः कैवल्यनिर्वचनमशक्यमित्याह—**कैवल्यस्येति** ॥ नन्वभावस्यातिरिक्तत्वे तदभावोऽप्यतिरिक्तः, तस्याप्यभावस्तथेत्यनवस्था स्या-

## नृसिंहप्रकाशिका.

**धिकरणादेवेति** ॥ अधिकरणविशेषं विषयीकृत्यैवेत्यर्थः। एवकारेणातिरिक्ताभावविषयकत्वव्यवच्छेदः। **नास्तीति व्यवहारोपपत्ताविति** ॥ घटो नास्तीति वाक्यजन्यशाब्दबोधस्य प्रमात्वसंभव इत्यर्थः। **अभावो न पदार्थान्तरमिति** ॥ अभावो नाधिकरणातिरिक्त इत्यर्थः। **इति गुरव इति** ॥ वदन्तीति शेषः। एवंरीत्या प्राभाकरा वदन्तीत्यर्थः। **अभावानङ्गीकार इति** ॥ अधिकरणातिरिक्तत्वेनाभावानङ्गीकार इत्यर्थः। **कैवल्यस्येति** ॥ अधिकरणातिरिक्तत्वेनाधिकरणविशेषनिष्ठविशेषत्वस्येत्यर्थः। **निर्वक्तुमशक्यत्वादिति** ॥ निर्वक्तुमसमर्थत्वादित्यर्थः। तथा चाधिकरणातिरिक्ताभावानङ्गीकारे अधिकरणनिष्ठविशेषत्वं स्वसमवेतसंयोगासमानकालीनत्वरूपमेव वाच्यम्। अधिकरणनिष्ठतादृशकालीनत्वाभावस्यापि अधिकरणरूपत्वे घटकालेऽपि तादृशप्रत्यक्षापत्तिः। जायमानप्रत्यक्षस्य प्रमात्वापत्तिश्च। तादृशाभावस्याधिकरणातिरिक्तत्वे त्वदभिमतार्थासिद्धिरिति। इदमुपलक्षणम्। जलादिनिष्ठगन्धाद्यभावस्य जलाद्यात्मकतया जलादेः घ्राणाद्ययोग्यतया घ्राणेन्द्रियेण जलादौ गन्धाद्यभावसाक्षात्कारानुपपत्तिरित्यपि बोध्यम्। एतेनाभ्रान्तानां भूतलादौ यस्मिन् काले घटाद्यभावप्रत्यक्षं तत्कालविशेषविशिष्टतत्तदधिकरणमेव तत्तदभाव इत्युच्यते। तावतैवाधिकरणस्य तत्तत्कालविशिष्टत्वरूपकैवल्यलाभात्। एवञ्च नाभावस्यातिरिक्तत्वमिति दूषणमपास्तम्। एतावता अभावस्यातिरिक्तत्वम् प्रसाध्याभावस्यैवाभावाभावादेरप्यतिरिक्तत्वे अप्रामाणिकानन्ताभावकल्पनागौरवशङ्कां प्राचीनमते नवीनमते च क्रमेण परिहरति—**अभावाभाव इति** ॥ घटादिरूपभावप्रतियोगिकाभावाभाव इत्यर्थः। यथाश्रुते अभावत्वावच्छिन्नस्य केवलान्वयितया तदभावाप्रसिद्ध्या तस्य भावस्वरूपत्वकथनासङ्गतेः। **नातिरिक्त इति** ॥ घटाभावस्यैव घटाभावाभावस्य न क्लृप्तातिरिक्तत्वमित्यर्थः। तत्र हेतुमाह—**अनवस्थाप्रसङ्गादिति** ॥

ध्वंसप्रागभावः प्रागभावध्वंसश्च प्रतियोग्येवेति प्राञ्चः। अभावाभावोऽतिरिक्त एव तृतीयाभावस्य प्रथमाभावरूपत्वान्नानवस्थेति नवीनाः। ननु "प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" इति न्यायसूत्रे षोडशपदार्थानामुक्तत्वात्कथं सप्तैवेत्यत आह—**सर्वेषामिति** ॥

---

## नीलकण्ठप्रकाशिका.

दत आह—**अभावाभाव इति** ॥ **ध्वंसेत्यादि** ॥ ध्वंसप्रागभावः प्रतियोगिस्वरूपः, तत्प्रागभावरूपश्च। प्रागभावध्वंसस्तु, प्रतियोगिस्वरूपस्तद्ध्वंसरूपश्चेत्यस्यार्थोऽवसेयः। तेन प्रतियोगिप्रागभावदशायामपि 'ध्वंसो भविष्यति' इति प्रत्ययस्य, प्रतियोगिध्वंसदशायामपि 'प्रागभावो नष्टः' इति प्रत्ययस्य चोपपत्तिः। ननु काले द्रव्यत्वं नास्ति इति प्रत्ययो न जायते, द्रव्यत्वाभाव इति तु जायते इति वैषम्यनिर्वाहाय नास्तीति प्रत्यये दैशिकसंबन्धावच्छिन्नाधेयत्वभानं कल्पनीयम्। इत्थं च घटाभावाभावादेर्घटादिरूपत्वे त्विह घटाभावो नास्तीति प्रत्ययस्य भ्रमत्वमेव स्यात्। भावस्य विशेषणताविशेषेण वृत्त्यनङ्गीकारात्। अतोऽभावाभावोऽतिरिक्तो न तु भावरूप इति नवीनमतं दर्शयति—**अभावेति** ॥ तर्हि अनवस्थेत्यत आह—**तृतीयेति** ॥ परमकारुणिकेन मुनिना दुःखपङ्कनिमग्नं जनमुद्दिधीर्षुणा प्रणीतं "प्रमाणप्रमेय—" इत्यादिसूत्रं, तद्विरोधं परिहर्तुमाक्षिपति—**नन्विति** ॥ प्रत्यक्षप्रमाणस्य द्रव्ये, अनुमानादीनां

## नृसिंहप्रकाशिका.

अप्रामाणिकानन्ताभावकल्पनागौरवापत्तेरित्यर्थः। **प्रतियोग्येवेति** ॥ प्रतियोगिस्वरूप एव नातिरिक्त इत्यर्थः। अनवस्थापत्तेरिति शेषः। **अभावाभाव इति** ॥ घटादिरूपभावप्रतियोगिकाभावाभाव इत्यर्थः। **अतिरिक्त एवेति** ॥ सप्तमपदार्थ एव न घटादिस्वरूप इत्यर्थः। भावत्वाभावत्वयोः विरोधादिति भावः। ननु तस्यातिरिक्तत्वे अनवस्थापत्तिर्दुर्वारेत्यत आह—**तृतीयाभावस्येति** ॥ घटाद्यभावाभावाभावस्येत्यर्थः। **प्रथमत्वादिति** ॥ प्रथमाभावस्वरूपत्वादित्यर्थः। तथा च विरोधाभावेन तृतीयाभावस्य प्रथमाभावस्वरूपत्वसंभवात् नानवस्थापत्तिरिति भावः। अत्र भावप्रतियोगिकाभावाभावस्य प्रतियोगिस्वरूपत्वे भावत्वाभावत्वयोर्विरोधानङ्गीकारः अभावशब्दस्य न भावोऽभाव इति व्युत्पत्त्यनङ्गीकारपूर्वककेवलरूढत्वाङ्गीकारश्च प्राचीनमते दोषः नवीनमते द्वितीयाभावरूपातिरिक्तधर्मिकल्पनागौरवं दोष इति बोध्यम्। सर्वेषामपि पदार्थानामिति ग्रन्थमवतारयति—**नन्वित्यादिना** ॥ **सर्वेषामिति** ॥ प्रमाणादिषोडशपदार्थानामित्यर्थः।

**सर्वेषां सप्तस्वेवान्तर्भाव इत्यर्थः । 'आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्' इति द्वादशविधं प्रमेयम् । प्रवृत्तिर्धर्माधर्मौ । रागद्वेषमोहा दोषाः । राग इच्छा । द्वेषो मन्युः । मोहः शरीरादौ आत्मभ्रमः । प्रेत्यभावो मरणम् । फलं भोगः । अपवर्गो मोक्षः । स च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनदुःखध्वंसः । प्रयोजनं**

## नीलकण्ठप्रकाशिका.

च गुणेऽन्तर्भावस्य स्फुटत्वात्प्रमेयादीनां द्रव्यादिष्वन्तर्भावमाह—**आत्मेत्यादिना** ॥ आत्मशरीरेन्द्रियाणां द्रव्ये, अर्थस्य पृथिव्यादिरूपस्य द्रव्यादिषु, बुद्धेर्गुणे, अन्तरिन्द्रियस्य मनसो द्रव्येऽन्तर्भावः । एवमग्रेऽपि यथायथमन्तर्भावो द्रष्टव्यः । **धर्माधर्माविति** ॥ तज्जनिकेत्यर्थः । एतच्च स्फुटमाकरे । **रागः** इच्छाविशेषः । **मरणमिति** ॥ मरणानन्तरभावि जननमित्यर्थः । तथा च पदव्युत्पत्तिः प्रेत्य मृत्वा भावो जननमित्यर्थः । चरमप्राणशरीरसंयोगध्वंसो **मरणम्** । आद्यशरीरप्राणसंयोगो **जननम्** । मुक्तात्मसंयोगध्वंसवतः घटस्य मुक्तत्वापत्तिवारणाय—**दुःखध्वंस इति** ॥ दुःखध्वंसवतामस्मदादीनामपि मुक्तत्वापत्तिवारणाय कालीनान्तम् । अस्मदीयदुःखप्रागभावसमानकालिकदुःखध्वंसवतां शुकाद्यात्मनामप्यमुक्तत्वप्रसंगात्—स्वसमानाधिकरणेति दुःखप्रागभावविशेषणम् । न च स्वसमानाधिकरणदुःखासमानकालीनेत्यनेनैव सुषुप्तिकालिकदुःखध्वंसस्याप्यप्रिमदुःखक्ष-

## नृसिंहप्रकाशिका.

**सप्तस्वेवान्तर्भावादिति** ॥ कणादाद्यभिमतद्रव्यत्वाद्यभावत्वान्तपदार्थविभाजकसमान्यतमवत्त्वादेवेत्यर्थः । क्रमेणान्तर्भावं कर्तुं प्रमेयं विभजते—**आत्मेत्यादि** ॥ अत्र प्रमाणं प्रत्यक्षानुमानोपमानशब्दभेदाच्चतुर्विधम् । तत्र प्रत्यक्षप्रमाणरूपेन्द्रियस्य द्रव्ये, व्याप्तिज्ञानसादृश्यज्ञानपदज्ञानरूपाणामनुमानोपमानशब्दप्रमाणानां गुणे अन्तर्भाव इत्यपि बोध्यम् । आत्मशरीरेन्द्रियाणां द्रव्ये अर्थानां द्रव्यगुणकर्मसामान्यविशेषसमवायाभावरूपाणां द्रव्यादिषु, बुद्धेर्गुणे, मनसो द्रव्ये अन्तर्भावस्य सुगमत्वात् प्रवृत्तेरन्तर्भावमाह—**प्रवृत्तिरिति** ॥ **धर्माधर्मरूपेति** ॥ तथाच गुणे अन्तर्भाव इति भावः । दोषमन्तर्भावयति—**रागेत्यादि** ॥ **शरीरादावात्मभ्रम इति** ॥ तथाच त्रितयरूपदोषस्य गुणेऽन्तर्भाव इति भावः । **मरणमिति** ॥ चरमप्राणसंयोगध्वंसरूपतया मरणस्याभावेऽन्तर्भाव इति भावः । **भोग इति** ॥ फलस्य ज्ञानरूपतया गुणेऽन्तर्भाव इति भावः । अत्र दुःखस्य गुणेऽन्तर्भाव इत्यपि बोध्यम् । अपवर्गस्य अभावेऽन्तर्भावकरणार्थमपवर्गपदार्थमाह—**मोक्ष इति** ॥ **स्वसमानाधिकरणेति** ॥ स्वं दुःखध्वंसः । **दुःखप्रागभावासमानकालीन इति** ॥ समानकालीनभिन्नेत्यर्थः । ननु तादृशसमानकालीनत्वाभावविशिष्टेति व्यर्थं । तथा सति सकलदुःखध्वंसानामपि चरमदुः-

**सुखप्राप्तिः दुःखहानिश्च । दृष्टान्तो महानसादिः । प्रामाणिकत्वेन अभ्युपगतोऽर्थः सिद्धान्तः । निर्णयो निश्चयः । स च प्रमाणफलम् । तत्त्वबुभुत्सोः कथा वादः । उभयसाधनवती विजिगीषुकथा जल्पः ।**

---

## नीलकण्ठप्रकाशिका.

णवृत्तेर्वारणात् प्रागभावेति व्यर्थमिति वाच्यम् । यथासन्निवेशे वैयर्थ्याभावादिति दिक् । संशयस्य निरूपितत्वात्प्रयोजनस्वरूपं दर्शयति—**प्रयोजनमिति** ॥ **उभयसाधनव-**

## नृसिंहप्रकाशिका.

खोत्पत्त्युत्तरकालावच्छेदेन तादृशसमानकालीनत्वाभाववत्त्वात् तादृशदुःखध्वंसं आदाय इदानीं मुक्तत्वव्यवहारापत्तेः । न च तादृशासमानकालीनत्वविशिष्टध्वंसस्यैव मुक्तिपदार्थत्वादिदानीं विशिष्टाभावान्नोक्तापत्तिरिति वाच्यम् । तथा सति कालविशेषावच्छेद्यतादृशासमानकालीनत्वविशिष्टवस्तुमात्रस्यैव मुक्तिस्वरूपत्वसंभवेन चरमदुःखध्वंसस्य मोक्षत्वप्रतिपादनस्यासाङ्गत्यापत्तेः । निरुक्तासमानकालीनत्वविशिष्टवस्तुमात्रस्य मुक्तिरूपत्वे वस्तुमात्रस्य तत्त्वज्ञानाजन्यत्वेन मुक्तेस्तत्त्वज्ञानसाध्यत्वानुपपत्तेश्च । अत्र स्वसमानाधिकरणदुःखप्रागभावसमानकालीनभिन्नस्वात्मकदुःखध्वंसो मोक्ष इत्यनुयोगिनि स्वत्वमन्तर्भाव्य लक्षणकरणे स्वत्वस्याननुगततया तद्घटितमुक्तेरप्यनेकत्वेन मुक्तिपदस्य नानार्थकत्वापत्तेः । अतः स्वसमानाधिकरणदुःखप्रागभावसमानकालीनं यद्यत् स्वं तत्तद्व्यक्तिभेदकूटविशिष्टदुःखध्वंसो मोक्ष इति प्रतियोगिनि स्वत्वमन्तर्भाव्यैव लक्षणं कर्तव्यम् । एवं च तादृशभेदकूटविशिष्टत्वोपलक्षितदुःखध्वंसत्वस्य सकलमुक्तिष्वनुगततया न मुक्तिपदस्य नानार्थकत्वापत्तिः । न चोपान्त्यदुःखध्वंसाव्यवहितपूर्वोत्पन्नदुःखस्यैव चरमदुःखतया तन्नाशस्यैव उपान्त्यदुःखध्वंसाव्यवहितोत्तरक्षणोत्पन्नस्य चरमदुःखध्वंसात्मकमुक्तिरूपत्वेनोपान्त्यदुःखध्वंसोत्पत्तिकाले तद्द्वितीयक्षणे दुःखोपपत्तौ प्रमाणाभावात् उपान्त्यदुःखध्वंसस्यापि मुक्तिलक्षणाक्रान्तत्वेन तत्रातिव्याप्तिरिति वाच्यम्। प्रागभावमनिवेश्य स्वसमानाधिकरणदुःखसमानकालीनं यद्यत् स्वं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटविशिष्टदुःखध्वंसत्वस्यैव लाघवात् मुक्तिलक्षणत्वस्वीकारात् । उपान्त्यदुःखध्वंसस्य चरमदुःखसमानकालीनत्वेन तत्रातिव्याप्तिविरहादिति । संशयस्य गुणेऽन्तर्भाव इति बोध्यम् । सुखरूपप्रयोजनस्य गुणे, दुःखाभावरूपस्य तस्याभावे । **दृष्टान्तो महानसादिरिति** ॥ तथाच यथायथं द्रव्यादिष्वन्तर्भाव इति भावः। **प्रामाणिकत्वेनेत्यादि** ॥ तथाच सिद्धान्तस्य यथायथं द्रव्यादिष्वन्तर्भाव इति भावः । अवयवानां उचितानुपूर्वीकप्रतिज्ञादिपञ्चकवाक्यरूपाणां गुणे, तर्कस्यारोपविशेषरूपस्य गुणेऽन्तर्भाव इत्यपि बोध्यम् । **निर्णय इति** ॥ प्रमाणफलरूपनिर्णयस्य गुणेऽन्तर्भाव इति भावः । **तत्त्वबुभुत्सोरिति** ॥ तथाच तत्त्वबुभुत्सुकथारूपवादस्य गुणेऽन्तर्भाव इति भावः । **उभयसाधनवतीति** ॥ तथाच विजिगीषुकथा-

स्वपक्षस्थापनाहीना अपरपक्षविदलनमात्रावसाना वितण्डा । कथा नाम नानावक्तृकपूर्वोत्तरपक्षप्रतिपादकवाक्यसंदर्भः । अभिप्रायान्तरेण प्रयुक्तस्यार्थान्तरं परिकल्प्य दूषणं छलम् । असदुत्तरं जातिः । साधर्म्यवैधर्म्योत्क-

---

## नीलकण्ठप्रकाशिका.

**तीति** ॥ परपक्षनिराकरणस्वपक्षसाधनवती । इदं च वितण्डायामतिव्याप्तिवारणायेति ध्येयम् । **स्वपक्षेति** ॥ अत्र विजिगीषुकथेत्यनुवर्तते । **नानेति** ॥ एकेन पूर्वपक्षः क्रियते अन्येन च समाधानम्, एवं क्रमेण नानाकर्तृकत्वं वाक्यसमूहस्यावसेयम् । **छलमिति** ॥ यथा 'नवकम्बलोऽयं देवदत्तः' इति नूतनतात्पर्येण प्रयुक्तस्य नवत्वसंख्याविशिष्टमर्थान्तरं परिकल्प्य कश्चिद्दूषयति 'नास्य नव कम्बलाः सन्ति अतिदरिद्रत्वात्' इत्यादि । **असदुत्तरमिति** ॥ उत्तरस्यासत्त्वं तु स्वासाधकतासाधारण्येन परासाधकतासाधकतया स्वव्याघातकत्वम् । तथा च स्वव्याघातकमुत्तरं जातिरिति लक्षणं पर्यवस्यति । तदवान्तरभेदान् दर्शयति—**साधर्म्येत्यादिना** ॥ द्वन्द्वान्ते श्रूयमाणस्य समाशब्दस्य प्रत्येकं योगः। साधर्म्यसमा वैधर्म्यसमेत्यादयश्चतुर्विंशतिर्जातयः । साधर्म्येण स्थापनाहेतुदूषकमुत्तरम् **साधर्म्यसमा** ॥ यथा आत्मा सक्रियः क्रियाहेतुगुणवत्त्वाल्लोष्टवत, क्रियाहेतुगुणश्चात्र

## नृसिंहप्रकाशिका.

रूपजल्पस्य गुणेऽन्तर्भाव इति भावः ॥ **स्वपक्षस्थापनेत्यादि** ॥ कथाविशेषरूपवितण्डाया गुणेऽन्तर्भाव इति भावः । प्रसङ्गात् कथास्वरूपमाह—**कथा नामेति** ॥ नानावक्तृप्रणीतपूर्ववाक्यनिरूपिताकाङ्क्षादिविशिष्टोत्तरवाक्यमित्यर्थः । अत्र श्रीभागवतादिकथानां एकव्यासप्रणीतत्वेऽपि पृच्छकवाक्यभेदात् नानावक्तृप्रणीतत्वं निराबाधमेवेति बोध्यम् ॥ अत्र दुष्टहेतुरूपाणां हेतुनिष्ठदोषरूपाणां वा हेत्वाभासानां यथायथं द्रव्यादिष्वन्तर्भाव इति बोध्यम् । छलं शब्देष्वन्तर्भावयितुं तस्य स्वरूपमाह—**अभिप्रायान्तरेणेति**॥ एकशब्दार्थबोधतात्पर्येणेत्यर्थः । **अर्थान्तरं परिकल्प्येति** ॥ प्रयोक्तृतात्पर्याविषयशक्यार्थकत्वं स्वीकृत्येर्थः । **दूषणाभिधानमिति** ॥ प्रयोक्तुः पराजयसंपादकदोषप्रतिपादनकथनमित्यर्थः। यथा दरिद्रोऽयं नवकम्बल इति नूतनकम्बलाभिप्रायेण केनचित् प्रयुक्ते कश्चित् दूषयति, कुतोऽयं नवकम्बलः दरिद्रत्वात् नास्य कम्बलद्वयमेवास्तीति दूषणरूपस्य छलस्य गुणेऽन्तर्भाव इति भावः। कृत्स्नेषु जातिमन्तर्भावयितुं जातिस्वरूपमाह—**असदुत्तरमिति** ॥ स्वाभिमतार्थव्याघातकस्वोत्तरवाक्यमित्यर्थः। शिष्यबुद्धिवैशद्याय जातेः सूत्रकारोक्तचतुर्विंशतिभेदानाह—**साधर्म्यवैधर्म्येति** ॥ साधर्म्यसमा वैधर्म्यसमेत्यर्थः । एवमुत्तरत्रापि । अत्र साधर्म्येण वाद्यभिमतसाधकहेतुदूषकमुत्तरं साधर्म्यसमेत्युच्यते । यथा आत्मा सक्रियः क्रियाहेतुगुणवत्त्वात् लोष्टवत् क्रियाहेतुगुणश्चात्र शास्त्रादिक्रियाजनकवायुसंयोगादिरेवेति वाद्युक्ते तत्रोत्तरं—यदि सक्रियलोष्टसाधर्म्यात् आत्मा सक्रिय इत्युच्यते, तदा परममहत्परिमा-

र्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसंगप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकर-

---

## नीलकण्ठप्रकाशिका.

क्रियाजनकवायुसंयोगादिरेवेति स्थापनायामुत्तरम्—'यदि सक्रियसाधर्म्यात्सक्रियस्तदा विभुत्वरूपनिष्क्रियसाधर्म्यान्निष्क्रिय एव किं न स्यात्। न चात्र किञ्चिद्विनिगमकमस्ति' इति। वैधर्म्येण दूषकमुत्तरम् **वैधर्म्यसमा** ॥ यथा तत्रैव 'क्रियावतो लोष्टस्य साधर्म्याद्यदि क्रियावानात्मा, तदा विभुत्वरूपतद्वैधर्म्यान्निष्क्रिय एव किं न स्यात्। न हि तत्साधर्म्यात् क्रियावता भवितव्यम्, तद्वैधर्म्यान्निष्क्रियेण न भवितव्यम्, इत्यत्र किञ्चिन्नियामकमस्ति' इति। परोक्तसाधनादेव तदव्यापकस्य धर्मस्य पक्षे आपादनम् **उत्कर्षसमा** ॥ यथा शब्दोऽनित्यः कृतकत्वाद्घटवदित्यादौ कश्चिदेवमाह "यदि कृतकत्वेन हेतुना शब्दो घटवदनित्यः स्यात्तर्हि तेनैव हेतुना शब्दो घटवत्सावयवः स्यात्" इति। परोक्तदृष्टान्तसाधर्म्येण पक्षे पराभिमतधर्मान्तरस्याभावसाधनम् **अपकर्षसमा** ॥ यथा तस्मिन्नेवानुमाने 'यदि कृतकत्वेन शब्दो घटवदनित्यः स्यात्, तर्हि तेनैव शब्दो घटवदश्रावणोऽपि स्यात्' इति। वर्ण्यस्य स्थापनीयस्य दृष्टान्तधर्मस्य पक्षे साधनम् **वर्ण्यसमा** ॥ यथा पूर्वोक्तानुमाने 'क्रियाजनकनोदनाख्यसंयोगवत्त्वाल्लोष्टादेर्भवतु क्रिया-

## नृसिंहप्रकाशिका.

णवत्त्वादिरूपाकाशादिविभुसाधर्म्यात् निष्क्रिय एव किन्न स्यात् इत्यत्र न किञ्चिद्विनिगमकमस्तीति। इयमेव साधर्म्यसमाजातिः। **वैधर्म्यसमेति** ॥ वैधर्म्येण वाद्यभिमतसाधकवाद्युक्तहेतुदूषकं उत्तरं वैधर्म्यसमा। यथा वाद्युक्तपूर्वानुमाने यदि लोष्टनिरूपितक्रियाहेतुगुणवत्त्वरूपसाधर्म्यात् क्रियावानात्मा तदा विभुत्वरूपलोष्टनिरूपितवैधर्म्यात् निष्क्रिय एव किन्न स्यात् न हि तत्साधर्म्यात् क्रियावता भवितव्यं न तद्वैधर्म्यात् निष्क्रियेण भवितव्यं इत्यत्र किञ्चिन्नियामकमस्तीति। इयमेव वैधर्म्यसमा। **उत्कर्षसमेति** ॥ स्वाभिमतसाधकवाद्युक्तदृष्टान्तसाधर्म्यात् वाद्यनभिमतसाधकमुत्तरं उत्कर्षसमा जातिः। यथा शब्दोऽनित्यः कृतकत्वात् घटवदित्युक्ते कश्चिदेवमाह—यदि कृतकत्वेन घटवत् शब्दोऽनित्यः स्यात् तदा तेनैव हेतुना घटवदेव शब्दस्सावयवोऽपि स्यात्। न हि घटदृष्टान्तेन कृतकत्वलिङ्गेन शब्देऽनित्यत्वेनैव भवितव्यं न सावयवत्वेनेत्यत्र किञ्चिन्नियामकमस्ति। इयमेवोत्कर्षसमाजातिः इति। **अपकर्षसमेति** ॥ वाद्यभिमतसाधकदृष्टान्तहेतुभ्यां वाद्यभिमतार्थान्तरस्याभावसाधनमुत्तरमपकर्षसमा। पूर्वोक्तानुमाने कश्चिदाह—यदि कृतकत्वेन हेतुना घटवत् शब्दः अनित्यस्स्यात् तदा तेनैव हेतुना घटवत् श्रावणप्रत्यक्षाभाववान् स्यात्। न हि पूर्वोक्तहेतुदृष्टान्ताभ्यां शब्देन नित्येनैव भवितव्यं श्रावणप्रत्यक्षविषयत्वाभाववता न भवितव्यमित्यत्र किञ्चिन्नियामकमस्ति। इयमेवापकर्षसमाजातिः इति। **वर्ण्येति** ॥ वर्ण्यस्य स्थापनीयस्य दृष्टान्तधर्मस्य पक्षे

## नीलकण्ठप्रकाशिका.

वत्त्वम् । आत्मनस्तु क्रियावत्त्वे तज्जनकनोदनाख्यसंयोगवत्त्वमपि स्यात्' इति । साध्य-हेत्वोर्धर्मयोरपि पक्षे तुल्यतासाधनम् **अवर्ण्यसमा** ॥ यथा तत्रैवानुमाने लोष्टादिगत-नोदनादिरूपक्रियाहेतुगुणवत्त्वमात्मन्यसिद्धम् । तथा च तुल्यतया यथा असिद्धेन क्रिया-हेतुगुणेन आत्मनि क्रियावत्त्वं साध्यते, तथा तादृशेन क्रियावत्त्वेन तज्जनकगुणवत्त्वमपि किमितिं न साध्यते नियामकाभावात् इति । दृष्टान्तविकल्पं प्रदर्श्य दार्ष्टान्तिकविकल्पकथनम् **विकल्पसमा** ॥ यथा तत्रैवानुमाने 'क्रियाहेतुगुणयुक्तं किञ्चिद्गुरु यथा लोष्टादिकं, किञ्चिल्लघु, यथा वायुरेवं क्रियाहेतुगुणयुक्तं किञ्चित्क्रियावत्स्याद्यथा लोष्टादि किञ्चिदक्रियं यथात्मा । पूर्वविकल्पो भवत्ययं तु न भवतीत्यत्र किं नियामकं स्यात्' इति । दृष्टान्तस्य पक्षतुल्यताकथनम् **साध्यसमा** ॥ साध्यशब्दोऽत्र पक्षवाची । यथा तत्रैव यदि 'यथा लोष्टः तथा आत्मा' इति त्वयोच्यते, तदा 'यथा आत्मा तथा लोष्टः' इत्यप्यायातम् । तथा च—यद्यात्मनि क्रियावत्त्वं साध्यते, तर्हि लोष्टेऽपि तत्साधनीयं, नेति चेत्तर्हि यथा लोष्टस्तथात्मेति न वाच्यम् । 'लोष्टसदृश आत्मा, नात्मसदृशो लोष्टः' इत्यत्र नियामकाभा-

## नृसिंहप्रकाशिका.

साधकमुत्तरं वर्ण्यसमा । यथा आत्मा सक्रियः क्रियाहेतुगुणवत्त्वादित्यनुमाने कश्चिदाह—लोष्टस्य क्रियाजनकनोदनादिसंयोगरूपगुणवत्त्वात्तस्य क्रियावत्त्वं आत्मनोऽपि लोष्टवत् क्रि-यावत्त्वे लोष्टवत् नोदनादिसंयोगवत्त्वमपि स्यात् आत्मनः यदि न तद्वत्त्वं तर्हि क्रियावत्त्व-मपि नेष्यते । लोष्टवत् क्रियावत्त्वमात्रं स्वीक्रियते नोदनादिमत्त्वन्तु न स्वीक्रियते इत्यत्र न किञ्चिन्नियामकमस्तीति । इयमेव वर्ण्यसमाजातिरिति । अवर्ण्येति पक्षे असिद्धधर्मयोः तुल्यतया नियामकाभावप्रयुक्तासाधकमुत्तरमवर्ण्यसमा । यथा पूर्वोक्तानुमाने कश्चिदेव-माह—लोष्टे नोदनरूपक्रियाहेतुगुणवत्त्वं सिद्धमात्मनि न सिद्धम् । तथा चासिद्धेन क्रियाहेतु-गुणवत्त्वेन क्रियावत्त्वमात्मनि यथा साध्यते, तथा तुल्यतया सिद्धेन क्रियावत्त्वेन क्रियाहेतुगु-णवत्त्वं किन्न साध्यते विनिगमनाविरहादिति । इयमेव वर्ण्यसमाजातिः इति । **विकल्पेति** ॥ दृष्टान्तविकल्पप्रदर्शनपूर्वकदार्ष्टान्तिकविकल्पकथनं विकल्पसमा यथा पूर्वोक्तानुमाने कश्चिदेव-माह—यथा क्रियाहेतुगुणयुक्तं किञ्चित् गुरु किञ्चिल्लघु च भवति लोष्टादि वाय्वादि च तथा क्रियाहेतुगुणयुक्तं किञ्चित् लोष्टादि क्रियावत् स्यात् किञ्चिदात्मादि क्रियाशून्यमपि स्या-दित्यत्र न किञ्चिन्नियामकमस्तीति । इयमेव विकल्पसमाजातिरिति । **साध्येति** ॥ दृष्टान्तस्य पक्षतुल्यताकथनं—साध्यसमा । एतद्घटकसाध्यशब्दोऽपि साध्यते अस्मिन्निति व्युत्पत्त्या पक्षवाच्येव । यथा लोष्टः तथात्मेति यद्युच्यते तदा यथात्मा तथा लोष्टः इत्य-प्यायातम् । तथा च यदि लोष्टसाधर्म्यात् आत्मनि क्रियावत्त्वं साध्यते तदा आत्मसाध-र्म्यात् लोष्टेऽपि क्रियावत्त्वं साधनीयम् । नोचेत् यथा लोष्टः तथा आत्मेत्यपि न वाच्यम् । न हि लोष्टसदृशः आत्मा आत्मसदृशो न लोष्टः इत्यत्र किञ्चिन्नियामकमस्ति । इयमेव

## नीलकण्ठप्रकाशिका.

वात् इति । प्राप्त्या प्रत्यवस्थानम् **प्राप्तिसमा** ॥ प्राप्तिश्च साध्यहेत्वोः सामानाधिकरण्यम् । यथा तत्रैव 'क्रियाहेतुगुणवत्त्वेनैव किमिति क्रियावत्त्वं साध्यते किमिति क्रियावत्त्वेन तादृशगुणवत्त्वं न उभयोरविशेषात्' इति । अप्राप्त्या प्रत्यवस्थानम् **अप्राप्तिसमा** ॥ यथा तत्रैव 'पूर्वोक्तदोषादप्राप्तस्य हेतोः साध्यसाधकत्वं वाच्यम्, तथा चाप्राप्तत्वाविशेषात् सर्वः सर्वं साधयेदिति। अयमेव हेतुः साध्याभावं किमिति न साधयेत्। साध्यमेव तु साधयेदित्यत्र विनिगमकाभावात्' इति । साधनपरम्पराप्रश्नः **प्रसङ्गसमा** ॥ यथा क्रियावत्त्वे क्रियाहेतुगुणवत्त्वं साधनम् । तत्र किं साधनम् न हि साधनं विना कस्याचित्सिद्धिरस्ति । एवं तत्रापि किं साधनम् इत्यादि । दृष्टान्तान्तरेण साध्याभावसाधनम् **प्रतिदृष्टान्तसमा** ॥ यथा 'तत्रैव लोष्टदृष्टान्तेन क्रियावत्त्वे साधिते निष्क्रियाकाशदृष्टान्तेन आत्मनो निष्क्रियत्वमेव किं न स्यात् । लोष्टदृष्टान्तेन क्रियावत्त्वम् आकाशदृष्टान्तेन निष्क्रियत्वं न इत्यत्र नियामकाभावात्' इति । अनुत्पत्त्या प्रत्यवस्थानम् **अनुत्पत्तिसमा** ॥ यथा 'घटो न नित्यः जन्यैकत्वात्' इत्यादौ कश्चिदाह—यदि जन्यैकत्वमनित्यत्वे प्रमाणं, तदा घटे एकत्वोत्पत्तेः पूर्वं तदभावान्नित्यत्वम् । नित्यश्चेत्तर्हि अनुत्प-

## नृसिंहप्रकाशिका.

साध्यसमाजातिरिति । **प्राप्तीति** ॥ प्राप्त्या हेतुनिष्ठसाध्यसामानाधिकरण्यरूपया साध्येन हेतुसाधनरूपप्रत्यवस्थानं प्राप्तिसमा । यथा तत्रैव क्रियाहेतुगुणवत्त्वं पक्षे साध्यसमानाधिकरणं सदेव क्रियासाधकं वाच्यम् । तथाच उभयोरप्यविशेषात् क्रियाहेतुगुणवत्त्वेन क्रियावत्त्वमेव किमिति साधनीयं क्रियावत्त्वेन क्रियाहेतुगुणवत्त्वं किं न साध्यते तुल्यन्यायादिति । इयमेव प्राप्तिसमाजातिरिति । **अप्राप्तीति** ॥ अप्राप्त्या पक्षे असिद्धरूपया दोषोद्भावनं अप्राप्तिसमा । यथा तत्रैव नियामकाभावात् आत्मन्यप्रमितस्य पूर्वोक्तहेतोः क्रियावत्त्वसाधकत्वे कश्चिदाह—अप्राप्तत्वाविशेषात् तेनैव हेतुना सर्वसाधनसंभवात् स एव हेतुः साध्याभावमपि किमिति न साधयेत् । न हि साध्यमेव साधयति न साध्याभावमित्यत्र किंचिन्नियामकमस्ति । इयमेवाप्राप्तिसमाजातिरिति । **प्रसङ्गेति** ॥ साधनपरंपराविषयकप्रश्नः प्रसङ्गसमा यथा तत्रैव क्रियावत्त्वसाधकं क्रियाहेतुगुणवत्त्वम् । तत्र किं साधकं साधकं विना तस्य सिद्धेरभावात् तत्रापि किञ्चित्साधकप्रदर्शने तत्रापि किञ्चित्साधकमिति प्रश्नपरम्परासंभव इति । इयमेव प्रसङ्गसमाजातिरिति । **प्रतिदृष्टान्तेति** ॥ दृष्टान्तान्तरेण साध्याभावसाधनं प्रतिदृष्टान्तसमा । यथा तत्रैव लोष्टदृष्टान्तेन पूर्वोक्तलिङ्गेन क्रियावत्त्वं यदि साध्यते तदा क्रियाहेतुगुणयुक्ताकाशं निष्क्रियं निर्णीतमिति तद्दृष्टान्तेन तेनैव हेतुना क्रियाशून्यत्वं किमिति न साध्यते । न हि लोष्टदृष्टान्तेन क्रियावत्त्वं साधनीयं आकाशदृष्टान्तेन क्रियाशून्यत्वं न साधनीयमित्यत्र किञ्चिन्नियामकमिति । इयमेव प्रतिदृष्टान्तसमाजातिरिति । **अनुत्पत्तीति** ॥ उत्पत्त्यभावरूपया अनुत्पत्त्या दोषोद्भावन-

णाहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्याकार्यसमा जातयः॥

---

## नीलकण्ठप्रकाशिका.

न्न एवेति । साधारणधर्मं प्रदर्श्य संशयोद्भावनं **संशयसमा** ॥ यथा 'शब्दोऽनित्यः कार्यत्वात्' इत्यादौ 'शब्दस्यानित्यघटेन सह कार्यत्वरूपं साधर्म्यं यथास्ति, तथा नित्येन शब्दत्वेन सह श्रावणप्रत्यक्षविषयत्वं साधर्म्यमस्तीति उभयसाधर्म्यदर्शनात्संशयः स्यात् । एकपरिशेषे नियामकाभावात्' इति । वाद्युक्तहेतोः साध्यविपरीतसाधकं हेत्वन्तरोद्भावनं **प्रकरणसमा** ॥ सत्प्रतिपक्षोदाहरणमेवोत्रोदाहरणं बोध्यम् । कालत्रयेऽपि हेतुत्वासंभवेन अहेतुत्वकथनम् **अहेतुसमा** ॥ यथा 'कार्यत्वादिरूपसाधनं साध्यादनित्यत्वात्तत्पूर्वकालवृत्ति चेत्तदाऽनित्यत्वरूपसाध्यस्य तदानीमभावात्तस्य न साधकम्, अथ पश्चात्कालवृत्ति चेत्तदा पूर्वकाले साधनाभावात्तस्य न साध्यमनित्यत्वम् । यदि चोभयमेककालवृत्ति तदा किं कस्य साधनं किं कस्य साध्यम् । विनिगमकाभावादिति । हेतुसमेति पाठे तु कालत्रयेऽपि हेतुत्वस्यासंभवकथनं हेतुसमेत्यर्थः । अर्थापत्तिपुरस्कारेण साध्याभावोद्भावनम् **अर्थापत्तिसमा** ॥ यथा 'पूर्वोक्तानुमाने शब्दस्यानित्यसाधर्म्यादनित्यत्वं यदि, तदार्थापत्त्या सिद्धं नित्यसाधर्म्यान्नित्यत्वमपि एकतरावधारणे नियामकाभावात्' इति । सर्वा-

## नृसिंहप्रकाशिका.

मनुत्पत्तिसमा । यथा शब्दोऽनित्यः प्रयत्नानुविधायित्वात् घटवदित्युक्ते कश्चिदाह— पूर्वोक्तहेतुः यद्यनित्यत्वसाधकः तदा शब्दस्योत्पत्तेः पूर्वं तादृशहेत्वभावात् नित्यत्वम् । नित्यश्चेत् अनुत्पन्न एवेति । इयमेवानुत्पत्तिसमाजातिरिति ॥ **संशयेति** ॥ उभयसाधारणधर्मप्रदर्शनपूर्वकसाध्यसंशयोद्भावनं संशयसमा । यथा पूर्वोक्तानुमाने शब्दस्यानित्यघटनिरूपितप्रयत्नानुविधायित्वरूपसाधर्म्यं यथा वर्तते तथा नित्यशब्दत्वजातिनिरूपितश्रावणप्रत्यक्षविषयत्वरूपसाधर्म्यमप्यस्तीति उभयसाधर्म्यदर्शनात् उभयकोटिकसंशयः । नह्येकसाधर्म्यदर्शनात् एकस्य ज्ञानमपरसाधर्म्यदर्शनान्नापरस्य ज्ञानं इत्यत्र किञ्चिन्नियामकं अस्ति इयमेव संशयसमाजातिरिति । **प्रकरणेति** ॥ वाद्युक्तहेतोः साध्याभावसाधकहेत्वन्तरोद्भावनं प्रकरणसमा । सत्प्रतिपक्षोदाहरणमेवात्रोदाहरणमिति बोध्यम् । इयमेव प्रकरणसमाजातिरिति । **अहेत्विति** ॥ हेतुत्वासम्भवपूर्वकाहेतुत्वकथनमहेतुसमा यथा तत्रैव शब्दनिष्ठप्रयत्नानुविधायित्वं यदि साध्यपूर्वकालवृत्ति तदा तत्कालावच्छेदेन नाशप्रतियोगित्वात्मकानित्यत्वरूपसाध्याभावात् अविद्यमानं कथं साधयेत् यद्ययं हेतुः साध्योत्तरभावी तदा पूर्वं साधनाभावात् अविद्यमानं कथं शब्देऽनित्यत्वं साधयेत् । यदि च स्वयमेककालवृत्ति तदा एककालीनत्वाविशेषात् किं साध्यं किं साधनं भवेत् नहि तत्र किञ्चिन्नियामकमस्तीति तत्र हेतुरहेतुना सम इति इयमेवाहेतुसमाजातिरिति । **अर्थापत्तिरिति** ॥ अर्थापत्तिसिद्धहेतुना साध्याभावोद्भावनमर्थापत्तिसमा । यथा तत्रैव पूर्वोक्तहेतुरूपानित्यसाधर्म्यात् अनित्यत्वं यदि साध्यते तदा शब्दस्य द्रव्यत्वं विना

## नीलकण्ठप्रकाशिका.

विशेषप्रसंगोद्भावनम् **अविशेषसमा** ॥ यथा तत्रैव 'यदि कृतकत्वादिनाऽनित्यघटादि-साधर्म्येण शब्दस्यानित्यत्वं तदा प्रमेयत्वादिरूपेण तत्साधर्म्येण सर्वस्यैवानित्यत्वं स्यात्। मदुक्तसाधर्म्येण तत्सिध्यति न तु त्वदुक्तेनेत्यत्र नियामकाभावात्' इति। उभयपक्षसाधर्म्येण साधनोपपत्तिकथनं **उपपत्तिसमा** ॥ यथा 'यदि अनित्यत्वसाधनं कार्यत्वमुपपद्यत इति शब्दस्यानित्यत्वं तदा नित्यत्वसाधनमपि किंचिदुपपद्यत इति नित्यत्वं किं न स्यात्' इति। वाद्युपदर्शितसाधनाभावेऽपि साध्यस्योपलब्धिकथनम् **उपलब्धिसमा**॥ यथा शब्दोऽनित्यः प्रयत्नानुविधायित्वाद्धटवत् इत्यत्र प्रयत्नं विनापि वायुनोदनवशाद्वृक्षशाखाभङ्गजन्यस्य शब्दस्योपलब्धेर्न प्रयत्नानुविधायित्वं शब्देऽस्ति इति। वादिनोऽनुपलब्धिवशात्कस्यचित्पदार्थस्यानङ्गीकारेऽनुपलब्धिवशादेव वाद्यभिमतस्यापि यत्किंचित्पदार्थस्याभावसाधनम् **अनुपलब्धिसमा** ॥ यथा—'जलादेर्विद्यमानस्याप्यावरणवशाद्यथानुपलब्धिस्तथोच्चारणात्पूर्वं शब्दस्य विद्यमानस्याप्यावरणवशादनुपलब्धिरित्येतन्मतं वादिना दूष्यते

## नृसिंहप्रकाशिका.

स्पर्शवत्त्वं अनुपपन्नमित्यन्यथानुपपत्त्या सिद्धस्पर्शवद्भिन्नत्वरूपनित्यसाधर्म्यात् नित्यत्वमपि सिध्येत्। न ह्येकेन एकमेव सिध्यतीत्यत्र नियामकमस्ति। इयमेवार्थापत्तिसमाजातिः इति। **अविशेषेति** ॥ सर्वाविशेषप्रसंगोद्भावनं अविशेषसमा यथा तत्रैव शब्दस्यानित्यघटसाधर्म्येण पूर्वोक्तहेतुना यदि शब्दस्यानित्यत्वं तदा प्रमेयत्वरूपानित्यघटसाधर्म्येण सर्वस्याप्यनित्यत्वप्रसङ्गः। नहि त्वदुक्तसाधर्म्येणानित्यत्वं सिध्यति न मदुक्तेनेत्यत्र किञ्चिन्नियामकमस्ति। इयमेवाविशेषसमाजातिरिति। **उपपत्तीति** ॥ उभयपक्षसाधर्म्येण साधनोपपत्तिकथनमुपपत्तिसमा। यथा तत्रैव यद्यनित्यत्वसाधकप्रयत्नानुविधायित्वं उपपद्यत इति शब्दस्यानित्यत्वं तदा नित्यत्वसाधकस्पर्शवद्भिन्नत्वं उपपद्यत इति नित्यत्वमपि किं न स्यादिति। इयमेवोपपत्तिसमाजातिरिति। **उपलब्धीति** ॥ वायुक्तसाधनाभावेऽपि पक्षोपलब्धिकथनमुपलब्धिसमा। यथा तत्रैव प्रयत्नं विनापि वायुप्रतियोगिकनोदनसंयोगवशात् वृक्षशाखाभङ्गजन्यपटपटेतिशब्दस्य उपलब्धेः प्रयत्नानुविधायित्वं शब्दे नास्तीति। इयमेवोपलब्धिसमाजातिरिति। **अनुपलब्धीति** ॥ वादिना कस्यचित् पदार्थस्यानुपलब्धिवशात् अनङ्गीकारेऽनुपलब्धिवशादेव वाद्यभिमतयत्किञ्चित्पदार्थाभावसाधनमनुपलब्धिसमा। यथा तत्रैवोच्चारणात् पूर्वं विद्यमानस्यावरणवशात् अनुपलब्धिमात्रेण यद्यस्वीकारः तदावरणप्रयोज्यानुपलब्धिमात्रेण विद्यमानजलस्याप्यस्वीकारप्रसंग इत्युक्ते कश्चिदाह—जलाद्यावारकस्य उपलब्ध्या तस्यावारकसिद्धौ तत्प्रयुक्तानुपलब्धिमात्रेण जलास्वीकारोऽयुक्त एव। प्रकृते शब्दावारकस्योपलब्ध्यभावात् तस्यावारकासिद्धौ आवरकाभावेऽपि शब्दस्यानुपलब्ध्या शब्दानङ्गीकारोऽपि युक्त एवेति। तत्रोत्तरमाह—यद्यावारकस्योपलब्ध्यभावरूपानुपलब्ध्या आवारकाभा-

## नीलकण्ठप्रकाशिका.

—यद्यावरणवशाच्छब्दो नोपलभ्यते, तदा जलाद्यावरणमिव शब्दाद्यावरणमप्युपलभ्येतेति । अत्रोत्तरं यदि भवद्भिरनुपलब्धित आवरणं नाभ्युपेयते तदानुपलब्धेरप्यनुपलब्ध्यभावे सिद्धे तदभावादावरणाभावासिद्धावावरणासिद्धिः' इति । धर्मस्य नित्यत्वानित्यत्वविकल्पाद्धर्मिणो नित्यत्वसाधनं **नित्यसमा** ॥ यथा 'शब्दस्य यदनित्यत्वं भवद्भिरुच्यते, तन्नित्यमनित्यं वा । यदि नित्यं तदा शब्दवृत्तेरेव तस्य सदातनत्वाच्छब्दस्यापि तथात्वमागतम् । अथानित्यं तदा शब्दे कदाचिदनित्यत्वाभावोऽस्तीति नित्य एव शब्द इत्युभयथापि शब्दस्य नित्यत्वम्' इति । अनित्यदृष्टान्तसाधर्म्यात्सर्वानित्यत्वप्रसङ्गोद्भावनम् **अनित्यसमा** ॥ यथा 'यद्यनित्येन घटेन सादृश्याच्छब्दोऽनित्य इत्युच्यते, तदा येनकेनचिद्धर्मेण सर्वस्यैव तत्सदृशत्वात्सर्वस्यानित्यत्वप्रसङ्गः' इति । वायुक्तहेतोरन्यकार्येणापि संभवाभिधानं **कार्यसमा** ॥ यथा तत्रैव प्रयत्नानुविधायित्वमुभयथापि संभवति घटादिवत् शब्दस्वरूपोत्पत्तौ जलादिवदावरकनिवृत्तौ च उभयत्रापि प्रयत्नानुविधायित्वदर्शनात्। तथा च तस्यावरकनिवृत्तिरूपकार्यान्तरस्य संभवान्नानित्यत्वनियतत्वं इति । क्वचित्—कारणसमेति पाठः । तस्यापि 'कारणस्य प्रयत्नानुविधायित्वस्योभयत्र शब्दस्योत्पत्तौ तदावरकनिवृत्तौ च समत्वाभिधानम्' इति रीत्या उक्त एवार्थे पर्यवसानमवसेयम् । अत्र ग्रन्थगौरवभयात्सूक्ष्मप्रकारा न दर्शिताः । इत्यभियुक्तैरन्यत्र तेऽनुसंधेयाः । निग्रहस्थानं

## नृसिंहप्रकाशिका.

वासिद्धिः, तदा शब्दावारकवस्तुनः अनुपलब्धेरप्युपलब्ध्यभावरूपानुपलब्धिप्रमाणेन शब्दावारकवस्तुविषयकानुपलब्धेरप्यभावसिद्धया शब्दावारकवस्तुनो अभावासिद्धौ शब्दावारकवस्तुसिद्धिरिति । इयमेवानुपलब्धिसमाजातिरिति । **अनित्येति** ॥ अनित्यदृष्टान्तसाधर्म्यात् सर्वानित्यत्वप्रसङ्गोद्भावनं अनित्यसमा । यथा तत्रैव यद्यनित्येन घटेन सादृश्यात् शब्दः अनित्यः इत्युच्यते तदा केनचित् धर्मेण सर्वस्यैव तत्सदृशत्वात् सर्वस्याप्यनित्यत्वप्रसङ्ग इति । इयमेवानित्यसमाजातिरिति । **नित्येति** ॥ धर्मस्य नित्यानित्यत्वविकल्पात् धर्मिणो नित्यत्वसाधनं नित्यसमा । यथा शब्दस्य यादृशमनित्यत्वं भवदभिमतं तदनित्यत्वं नित्यमनित्यं वा । यदि नित्यं शब्दावृत्त्येव नित्यत्वस्य तत् सदातनत्वस्वरूपत्वात् । तथाच शब्दस्य नित्यत्वाश्रयानित्यत्ववत्त्वासंभवेन नित्यत्वमेव प्राप्तम् । यदि शब्दनिष्ठानित्यत्वं अनित्यं, तदा शब्दे कदाचिदनित्यत्वाभावोऽप्यस्तीति शब्दो नित्य एवेति उभयथापि शब्दस्य नित्यत्वमापतितमिति । इयमेव नित्यसमाजातिरिति । **कार्येणेति** ॥ अन्यकार्येणापि वायुक्तहेतोः संभवाभिधानं कार्यसमा । यथा तत्रैव प्रयत्नानुविधायित्वं उभयत्रापि संभवति । घटादिवत् शब्दस्वरूपोत्पत्तौ जलादिवदावारकनिवृत्तौ च उभयत्रापि प्रयत्नानुविधायित्वदर्शनात् प्रकृते शब्दस्यावारकनिवृत्तिप्रयत्नकार्यसंभवात् शब्दे नित्यत्वमापतितं इति । इयमेव कार्यसमाजातिरिति । पूर्वोक्तानां असदुत्तररूपजाती-

**वादिनोऽपजयहेतुर्निग्रहस्थानम्। तच्च प्रतिज्ञाहानिः, प्रतिज्ञान्तरं, प्रतिज्ञाविरोधः,**

---

## नीलकण्ठप्रकाशिका.

लक्षयति—**वादिन इति** ॥ इदं च यद्यपि छलादावप्यस्ति तथाप्यर्थान्तरादिरूपनिग्रहस्थानमध्येऽन्तर्भावाददोषः । छलत्वादिनापि ज्ञानस्योपयोगित्वात्पृथगुपादानं हेत्वाभासवत् । तस्यावान्तरभेदान्दर्शयति—**प्रतिज्ञेत्यादिना** ॥ यत्र प्रतिज्ञातार्थविरुद्धाभ्युपगमः प्रतिज्ञातार्थपरित्यागो वा तत्र **प्रतिज्ञाहानिः** ॥ यथा 'शब्दोऽनित्यः प्रत्यक्षगुणत्वात्' इत्यत्र 'सोऽयं गकारः' इत्यादिप्रत्यभिज्ञाबलात्परेण बाधे उद्भाविते 'अस्तु तर्हि नित्यः शब्दः' इति नित्यत्वमङ्गीकुर्वन्वादी शब्दस्यानित्यत्वप्रतिज्ञां जहाति । परोक्तदोषोद्दिधीर्षया पूर्वानुक्तविशेषणविशिष्टतया प्रतिज्ञातार्थकथनं **प्रतिज्ञान्तरम्** । यथा 'क्षित्यादिकं गुणजन्यं कार्यत्वात्' इत्यत्र अदृष्टजन्यत्वेनि सिद्धसाधनोद्भावने 'सविषयकः' इति गुणविशेषणदानम् । स्वोक्तसाध्यविरुद्धहेतुकथनं **प्रतिज्ञाविरोधः** ॥ यथा 'द्रव्यं गुणभिन्नं

## नृसिंहप्रकाशिका.

नां असदुत्तरेऽन्तर्भावनप्रकारश्च ग्रन्थगौरवभयात् न प्रदर्शितः । अन्यत्रानुसंधेय इति बोध्यम् । इदानीं निग्रहस्थानपदार्थं कॢप्तेष्वन्तर्भावयितुमादौ निग्रहस्थानसामान्यलक्षणं तद्विभागश्चाह—**वादिन इति** ॥ वादिनिष्ठपराजयसंपादकत्वं निग्रहस्थानसामान्यलक्षणमित्यर्थः । निग्रहस्थानं सूत्रानुसारेण द्वाविंशतिधा विभजते—**प्रतिज्ञाहानिरित्यादि** ॥ तत्र स्वप्रतिज्ञातस्य विरुद्धार्थाभ्युपगमत्वं प्रतिज्ञाहानिलक्षणमित्यर्थः । यथा अनित्यः शब्दः ऐन्द्रियिकत्वात् घटवदित्युक्ते तत्र कश्चिदिन्द्रियवेद्यं घटत्वादि नित्यं दृष्टमिति तद्वच्छब्दो नित्य एव स्यात् इत्याह। तत्रोत्तरम्—तर्हि इन्द्रियवेद्यत्वाविशेषात् घटत्वादिवत् घटो नित्य एव स्यात् इत्युक्त्या अनित्यत्वसाधने दृष्टान्तस्य नित्यत्वमङ्गीकुर्वन् शब्दस्यानित्यत्वप्रतिज्ञां जहाति । इयञ्च पक्षत्यागस्साध्यत्यागो हेतुत्यागो दृष्टान्तत्यागः तद्विशेषणत्यागश्चेति पञ्चधा भवति। आद्यस्तु शब्दोऽनित्यः प्रयत्नजन्यगुणत्वात् इत्युक्ते केनाचित् सोऽयं गकार इति प्रत्यभिज्ञाबलात् बाधे उद्भाविते अस्तु तर्हि घटोऽनित्य इति पक्षत्यागः । पूर्वोक्तदोषांच्च शब्दो नित्य एवेति स्वीकारे साध्यत्यागः । अनित्यः शब्दः द्रव्यत्वादित्युक्ते परेण स्वरूपासिद्धोऽयमिति दूषिते कृतकत्वादिति पुनर्हेतुप्रयोगे हेतुत्यागः । दृष्टान्तत्यागस्तु उदाहृतः । एवमेव द्रव्यात्मकशब्दः अनित्यः कृतकत्वादित्यत्राश्रयासिद्धेरुद्भावने अस्तु तर्हि शब्दोऽनित्य इति पक्षविशेषणत्यागः । एवमेव साध्यविशेषणत्यागः । एवमेव हेतुविशेषणत्यागादिकमिति बोध्यम् । **प्रतिज्ञान्तरमिति** ॥ पूर्वोक्तप्रतिज्ञायां दूषितायां तत्र विशेषणान्तरदानं प्रतिज्ञान्तरमित्यर्थः । तद्द्विविधम्—पक्षविशेषणदानात् साध्यविशेषणदानाच्च । यथा शब्दोऽनित्य इत्यत्र ध्वनावंशतस्सिद्धसाधने उद्भाविते वर्णरूपेति पक्षविशेषणदानम् । अन्यं यथा—क्षित्यादिकं गुणजन्यं कार्यत्वादित्यत्रादृष्टजन्यत्वेन सिद्धसाधने उद्भाविते सविषयकेति गुणविशेषणदानमिति । **प्रतिज्ञाविरोध इति** ॥ प्रतिज्ञाहेत्वोः विरोधः

प्रतिज्ञासंन्यासः, हेत्वन्तरं, अर्थान्तरं, निरर्थकं, अविज्ञातार्थकं, अपार्थकं, अप्राप्त-

## नीलकण्ठप्रकाशिका.

रूपादितः पृथक्त्वेनानुपलभ्यमानत्वात्' इति । स्वोक्तेऽर्थे परेण दूषिते तदपलापः **प्रतिज्ञासंन्यासः** ॥ यथा 'शब्दोऽनित्यः ऐन्द्रियकत्वात्' इत्युक्ते परेण सामान्ये व्यभिचारमुद्भाव्य दूषिते स्वोक्तमपलपति 'केनोच्यते शब्दोऽनित्यः' इति । परोक्तदूषणोद्दिधीर्षया पूर्वोक्तहेतुकोटौ विशेषणान्तरोपादानं **हेत्वन्तरम्** ॥ यथा 'शब्दोऽनित्यः प्रत्यक्षत्वात्' इत्यत्र सामान्ये व्यभिचारोद्भावने 'जातिमत्त्वे सति' इति विशेषणदानम् । प्रकृतानुपयुक्तार्थकथनम् **अर्थान्तरम्** ॥ यथा 'नित्यः शब्दः अस्पर्शवत्त्वात्' इति हेतुः । हेतुपदं च—हिनोतेस्तुनिप्रत्यये निष्पन्नम् पदं च सुप्तिङन्तम्—इत्यादि । अवाचकशब्दप्रयोगो **निरर्थकम्** ॥ यथा शब्दोऽनित्यः जबगडदशत्वात् इत्यादि । परिषत्प्रतिवाद्यबोधप्रयोजकपदप्रयोगः **अविज्ञातार्थम्** ॥ तच्च 'क्लिष्टान्वयमप्रसिद्धार्थकं त्वरितोच्चारितम्' इत्यादिरूपम् । परस्परानन्वितपदसमूहः **अपार्थकम्** ॥ यथा 'शब्दत्वं घटः पटो नित्यमनित्यं च प्रमेयत्वात्' इत्यादि । अवयवानां व्युत्क्रमेण कथनम् **अप्राप्तकालम्** ॥ यथा 'शब्द-

## नृसिंहप्रकाशिका.

प्रतिज्ञाविरोध इत्यर्थः । यथा द्रव्यं गुणाभिन्नं रूपत्वादित्यादि । **प्रतिज्ञासन्न्यास इति** ॥ स्वयं प्रतिज्ञातस्यापह्नवः प्रतिज्ञासन्न्यासः । यथा अनित्यः शब्दः इन्द्रियवेद्यत्वादित्युक्ते परेण सामान्ये व्यभिचारमुद्भाव्य दूषिते केनोच्यते अनित्यश्शब्द इति स्वोक्तमपलपति । तत्रापह्नवश्चतुर्विधो भवति । क एवमाह इत्येकः । परमतानुवादोऽयं मया कृत इति द्वितीयः । स्वयमुक्तेऽपि एवमुक्तमिति त्वं वदेति तृतीयः । तत्परोक्तं मया इदमेवोक्तमिति चतुर्थः । **हेत्वन्तरमिति** ॥ शुद्धहेतौ दूषिते तत्र विशेषणान्तरोपादानं हेत्वन्तरम् । यथा शब्दोऽनित्यः प्रत्यक्षत्वात् इत्यत्र सामान्ये व्यभिचारे उद्भाविते जातिमत्त्वे सतीति विशेषणदानम् । **अर्थान्तरमिति** ॥ प्रयुक्तस्यानुपयुक्तार्थकथनं अर्थान्तरमित्यर्थः । यथा ( रसं सैन्धववत्त्वात् इत्युक्ते नाश्वे रसोऽस्तीति दूषणमिति । ) नित्यः शब्दः अस्पर्शवत्त्वादित्युक्ते हेतुरिति पदं हिनोतेस्तुनिप्रत्यये कृते कृदन्तम् । पदं च सुप्तिङन्तमित्याद्यर्थान्तरकथनम् । **निरर्थकमिति** ॥ अवाचकवर्णप्रयोगो निरर्थकमित्यर्थः । यथा शब्दोऽनित्यः जबगडदशत्वात् झभघढधाषितिवत् अथवाऽसाधुशब्दप्रयोगो निरर्थकमित्यर्थः। यथा शब्दमनित्यमित्यादि । **अविज्ञातार्थकमिति** ॥ वादिना वारत्रयमुक्तमपि प्रतिवादिना सदस्यैरपि यन्न बुध्यते तदविज्ञातार्थकमित्यर्थः । तच्चासिद्धार्थकं त्वरितोच्चरितं लाक्षणिकमित्यादिरूपं स्वसामर्थ्यवारणार्थं प्रयुक्तमिति । **अपार्थकमिति** ॥ परस्परानन्वितार्थकपदसमूहोऽपार्थकमित्यर्थः । यथा शब्दः शब्दत्वं घटः पटो वा नित्यमनित्यञ्च प्रमेयत्वादित्यादि । **अप्राप्तकालमिति** ॥ अवयवानां व्युत्क्रमेण कथनमप्राप्तकालमित्यर्थः । यथा कृतकत्वाच्छब्दोऽनित्य

**कालं, न्यूनं, अधिकं, पुनरुक्तं, अननुभाषणं, अज्ञानं, अप्रतिभा, विक्षेपः, मतानुज्ञा, पर्यनुयोज्योपेक्षणं, निरनुयोज्यानुयोगः, अपसिद्धान्तः,**

---

## नीलकण्ठप्रकाशिका.

त्वाच्छब्दोऽनित्यः' इत्यादि। यत्किंचिदवयवशून्यावयवाभिधानम् **न्यूनम्** ॥ स्पष्टम्। अधिकहेत्वादिकथनम् **अधिकम्** ॥ यथा शब्दोऽनित्यः शब्दत्वात् श्रावणत्वाच्च इत्यादि। अनुवादं विना कथितस्य पुनः कथनम् **पुनरुक्तम्** ॥ यथा 'शब्दोऽनित्यः शब्दोऽनित्यः' इत्यादि। परिषद्रा त्रिरभिहितस्याप्यननुवादः **अननुभाषणम्** ॥ परिषदा विज्ञातस्य वादिना त्रिरभिहितस्यापि वाक्यार्थस्याबोधः **अज्ञानम्** ॥ उत्तरार्हं परोक्तं बुद्ध्वापि उत्तरस्यास्फूर्तिवशात्तूर्ष्णींभावः **अप्रतिभा** ॥ असंभवत्कालान्तरकार्यव्यासङ्गानुद्भाव्य कथाविच्छेदो **विक्षेपः** ॥ स्वपक्षे दोषमनुद्धृत्य परपक्षे दोषाभिधानम् **मतानुज्ञा** ॥ उद्भावनार्हपरकीयनिग्रहस्थानानुद्भावनं **पर्यनुयोज्योपेक्षणम्** ॥ निग्रहस्थानरहिते निग्रहस्थानोद्भावनं **निरनुयोज्यानुयोगः** ॥ एकसिद्धान्तमतमाश्रित्य कथाप्रवृत्तौ तद्विरुद्धसिद्धान्तमतमालम्ब्योत्तरदानम् **अपसिद्धान्तः** ॥ प्रतिज्ञाहान्यननुभाषणाज्ञानाप्रति-

## नृसिंहप्रकाशिका.

इत्यादि। **न्यूनमिति** ॥ स्वमतसिद्धावयवानां मध्ये एकस्यानुक्तिः न्यूनमित्यर्थः। उदाहरणन्तु स्फुटम्। **अधिकमिति** ॥ अनन्वितानुपयुक्तपुनरुक्ताभिन्नस्य सिद्धप्रयोजनस्य पुनःकथनमधिकमित्यर्थः। हेतूदाहरणाधिक्यमिति वा। यथा शब्दोऽनित्यः श्रावणत्वात् शब्दत्वाच्चेत्यादि। एवमुदाहरणद्वयेऽपि बोध्यम्। **पुनरुक्तमिति** ॥ वादिमध्यस्थानुमतिं विना शब्दार्थयोः पुनःकथनं पुनरुक्तमित्यर्थः। यथा शब्दोऽनित्यः शब्दोऽनित्य इति शब्दपुनरुक्तम्। शब्दोऽनित्यः ध्वंसप्रतियोगीत्यर्थपुनरुक्तम्। **अननुभाषणमिति** ॥ वादिना त्रिरुक्तस्य वाक्यस्य सदस्यैः विज्ञातार्थस्याननुवादोऽननुभाषणमित्यर्थः। उदाहरणं स्पष्टम्। **अज्ञानमिति** ॥ वादिना त्रिरुक्तवाक्यस्य सदस्यैः ज्ञातार्थस्यार्थानवबोधोऽज्ञानमित्यर्थः। स्पष्टम्। **अप्रतिभेति** ॥ प्रतिवादिनानूदिते वादिवाक्ये तदर्थे विज्ञातेऽपि उत्तरास्फूर्तिवशात् तूर्ष्णींभावोऽप्रतिभेत्यर्थः। स्पष्टम्। **विक्षेप इति** ॥ असम्भवत्कार्यान्तरव्यासङ्गात् कथाविच्छेदो विक्षेपः। यथा इदमेकं कार्यन्तिष्ठति तत् कृत्वावशिष्टं करिष्यामीति। **मतानुज्ञेति** ॥ स्वपक्षे दोषाभ्युपगमपूर्वकं परपक्षे दोषप्रसञ्जनं मतानुज्ञेत्यर्थः। यथा त्वं चोरं इत्युक्ते त्वमपि चोर इत्यादिकम्। **पर्यनुयोज्योपेक्षणमिति** ॥ वादिनो निग्रहस्थानसत्त्वेऽपि प्रतिवादिनस्तदनुद्भावनं पर्यनुयोज्योपेक्षणमित्यर्थः। इदमपि स्पष्टम्। **निरनुयोज्यानुयोग इति** ॥ अनिग्रहे भ्रान्त्या निग्रहोद्भावनमित्यर्थः। छलजात्योरेतन्मध्ये अन्तर्भाव इति। **अपसिद्धान्त इति** ॥ एकसिद्धान्तमाश्रित्य कथाप्रवृत्तौ तद्विरुद्धसिद्धान्तमवलम्ब्य उत्तरदानमित्यर्थः। यथा व्यक्तमेकप्रकृतिकं विकारत्वात् एकमृत्पिण्डप्रकृतिघटकलशवदिति सांख्यमतमवलम्ब्य प्रयुक्ते का प्रकृतिः को विकार इति

हेत्वाभासाश्च । शेषं सुगमम् । ननु करतलानलसंयोगे सत्यपि प्रतिबन्धके सति

## नीलकण्ठप्रकाशिका.

भाविक्षेपपर्यनुयोज्योपेक्षणानामभावे, अन्येषां हेत्वाभासव्यतिरिक्तनिग्रहस्थानानां गुणे, हेत्वाभासानां च द्रव्यादिष्वन्तर्भावो यथायथं बोध्यः । अतिरिक्तः सूत्रार्थः सुगम इत्यभिप्रायेणाह—**शेषमिति** ॥ नन्वनलसंयोगे सत्यपि मण्यादिसमवधाने दाहो न जायत इति मण्यादेः प्रतिबन्धकता वाच्या । सा च वह्नौ दाहानुकूलशक्तिस्वीकार एव निर्वहति । प्रतिबन्धकतायाः कार्यानुकूलशक्तिविघटकत्वरूपत्वात् । अतस्तदन्यथानुपपत्तिसिद्धायाः शक्तेरतिरिक्तत्वात् 'सप्तैव पदार्थाः' इत्यसङ्गतमिति प्राभाकरः शङ्कते—**नन्विति** ॥ नन्वेवं शक्तिसिद्धावपि तस्या अतिरिक्तत्वासिद्धिरिति चेन्न । यतो न तावद्द्रव्यात्मिका शक्तिः गुणादिवृत्तित्वात् । अत एव न गुणकर्मान्यतररूपा, न च सामान्याद्यन्यतमरूपा उत्पत्तिविनाशशालित्वात् । एवं चातिरिक्तपदार्थत्वसिद्धिरिति । ननु प्रतिबन्धकत्वं न कार्यानुकूलशक्तिविघटकत्वम् । किंतु कारणीभूताभावप्रतियोगित्वम्, तच्च मण्यभावस्य हेतुत्वादेवोपपद्यते मणिसमवधानदशायां च तदभावरूपकारणान्तराभावादेव दाहानुत्पत्ति-

## नृसिंहप्रकाशिका.

प्रतिवादिना पृष्टे यस्मिन् धर्मिण्यवस्थिते एकधर्मनिवृत्तौ धर्मान्तरमुत्पद्यते सा प्रकृतिः यो धर्मो निवर्तते उत्पाद्यते च स विकार इति वादिनोक्ते पुनः प्रतिवादी वदति—**अपसिद्धान्तः** । तव मते असतः उत्पत्त्यभावात् सतो विनाशाभावाच्च । किन्त्वाविर्भावतिरोभावमात्रं कार्यकरणयोरभेदात् । कारणरूपेण सूक्ष्मतया अवस्थितिः तिरोभावः । कार्यरूपेण स्थूलतयावस्थानमाविर्भाव इति । सत्कार्यवादिमते प्रकृतिविकारयोः उद्भावाभावात् इदमनुमानं न सिध्यति असतः कार्यतावादे त्वपासिद्धान्त इति । **हेत्वाभासाश्चेति** ॥ तल्लक्षणं तु प्रागुक्तम् । एवं चकारस्तूक्तसमुच्चायकः । **निग्रहस्थानानीति** ॥ द्वाविंशतिधा भवन्तीति शेषः । ननु निग्रहस्थानानां द्वाविंशतिधा विभागेऽपि अन्तर्भावानुक्तेः न्यूनतेत्यत आह—**शेषमिति** ॥ कॢप्तपदार्थान्तर्भूतत्वामित्यर्थः। **सुगममिति** ॥ तेषां मध्ये केषाञ्चित् शब्दविशेषरूपत्वात् गुणान्तर्भूतत्वं केषाञ्चित् द्रव्यान्तर्भूतत्वं केषाञ्चित् अभावान्तर्भूतत्वं अनायासेन ज्ञातुं शक्यत इति भावः । ननु दाहं प्रति वह्नेरन्वयव्यतिरेकाभ्यां कारणत्वं कॢप्तं, तत्र कारणतावच्छेदकं न वह्नित्वं, प्रतिबन्धकीभूतमणिसमवधाने दाहानुत्पत्तेः, किन्तु वह्नौ कारणतावच्छेदकतया काचित् शक्तिः स्वीकार्या । सा च उत्पत्तिविनाशशालिनी । एवं च मणिसमवहितवह्नौ शक्तेर्नाशस्वीकारेण विशिष्टकारणाभावात् न तदा दाहापत्तिः । प्रतिबन्धकापहरणे तादृशशक्तेरुत्पत्तिस्वीकारेण विशिष्टवह्निसत्त्वादेव दाहोत्पत्तिः संभवति । तस्मादन्यथानुपपत्त्या स्वीकृतायाः शक्तेः कॢप्तपदार्थेष्वनन्तर्भूतत्वात् अतिरिक्तत्वमावश्यकमिति कथं सप्तैव पदार्था इति प्राभाकरमतमुपन्यस्यति—**नन्विति** ॥ **करतलानलसंयोगे सत्यपीति** । इदं च दाहकारणसत्त्वप्रदर्शनाय । **प्रतिबन्धके सतीति** ॥

**दाहानुत्पत्तेः शक्तिः पदार्थान्तरमिति चेन्न। प्रतिबन्धकाभावस्य कार्यमात्रे कारणत्वेन शक्तेरनुपयोगात्। कारणत्वस्यैव शक्तिपदार्थत्वात्। ननु भस्मा-**

## नीलकण्ठप्रकाशिका.

संभवः। इत्थं चातिरिक्तशक्तिस्वीकारोऽनुचित इति समाधत्ते—**प्रतिबन्धकाभावस्येति**॥ ननु 'दाहोत्पादे वह्निः शक्तः' इति व्यवहारान्यथानुपपत्त्या सेत्स्यति अतिरिक्ता शक्तिरित्याशङ्क्य तस्याः कारणतारूपत्वेऽपि व्यवहारोपपत्तेर्नातिरिक्ता शक्तिरित्याह—**कारणत्वस्येति**॥ ननु मण्याद्यभावस्य हेतुत्वे मणिसमवधानदशायां सत्यप्युत्तेजके दाहो न स्यात्। मन्मते तु मण्याद्यपसारणदशायामिवोत्तेजकसमवधानदशायामपि वह्नौ दाहानुकूलशक्त्यन्तरोत्पत्तेरङ्गीकारेण न दोष इति चेन्न। उत्तेजकाभावविशिष्टमण्याद्यभावस्य कारणत्वाङ्गीकारेण अदोषात्। न चोत्तेजकानामननुगतत्वात्तत्तदुत्तेजकाभावकूटविशिष्टमण्याद्यभावस्यैव कारणतायाः कल्पनीयतया गौरवमिति वाच्यम्, दाहानुकूलशक्तिं प्रति एतादृशकारणतायाः तत्राप्यावश्यकत्वादनन्तशक्तितत्प्रागभावतद्ध्वंसकल्पने गौरवादिति संक्षेपः। नन्वेवमपि कांस्यादेरस्पृश्यवस्तुस्पर्शे सति न भोजनादिरूपकार्यार्हता शक्तिमत्कांस्यादेरेव तदर्हत्वात्। अस्पृश्यस्पर्शे सति शक्तेर्नाशाद्भस्मसंयोगे तु पुनः शक्तेरुत्पादात्तदर्हता। एवं च कांस्यादावाधेयशक्तिः स्वीकार्या। न च कांस्यादौ

## नृसिंहप्रकाशिका.

इदं च कारणतावच्छेदकविरहप्रदर्शनाय। **शक्तिरिति**॥ अन्यथानुपपत्त्या वह्नौ शक्तिरित्यर्थः। **पदार्थान्तरमितीति**॥ तथाच द्रव्यत्वाद्यभावत्वान्तक्लृप्तपदार्थविभाजकधर्मभिन्नपदार्थविभाजकधर्मवत्त्वे सति तादृशपदार्थविभाजकधर्मान्यतमशून्यत्वे सति वस्तुत्वादिति परिशेषानुमानादतिरिक्तशक्तिसिद्धिरिति भावः। दाहं प्रति मणित्वेन प्रतिबन्धकत्वस्वीकारमात्रेण मणिसमवधानकाले दाहापत्तिवारणे शक्तौ प्रमाणाभावः। न चैवं सति मणिसमवधाने उत्तेजकवशात् अनुभवसिद्धदाहानुपपत्तिः। मण्यभावरूपकारणाभावादिति वाच्यम्। उत्तेजकाभावविशिष्टमणेरेव प्रतिबन्धकत्वं स्वीकृत्य विशिष्टमण्यभावस्यैव हेतुत्वस्वीकारेण प्रकृते तत्सत्त्वान्नोक्तानुपपत्तिः। न चैवं सति वह्निमण्यभावाभ्यां कार्यकारणभावद्वयकल्पनागौरवं दुर्वारमिति वाच्यम्। अनन्तशक्तितत्प्रागभावतद्ध्वंसकल्पनागौरवापेक्षया ईदृशकार्यकारणभावद्वयकल्पनागौरवस्याकिंचित्करत्वादित्याशयेन परिहरति—**प्रतिबन्धकाभावस्येति**॥ उत्तेजकाभावविशिष्टमण्याद्यभावस्येत्यर्थः। **कार्यमात्र इति**॥ दाहत्वादिरूपकार्यतावच्छेदकावच्छिन्नेत्यर्थः। **कारणत्वेनेति**॥ अन्यथानुपपत्त्या स्वीकृतकारणत्वेनैवेत्यर्थः। उक्तानुपपत्तिवारणायेति शेषः। **शक्तेरनुपयोगादिति**॥ शक्तेरप्रामाणिकत्वादित्यर्थः। नन्वेवं सति वह्नौ स्वाभाविकी दहनशक्तिरिति सकलप्रवादो व्याहन्येतेत्यत आह—**कारणत्वस्यैवेति**॥ दाहकारणत्वस्यैवेत्यर्थः। **शक्तिपदार्थत्वादिति**। शक्तिपदतात्पर्यविषयत्वादित्यर्थः। एतावता प्राभाकराभिमतसहजशक्तिं निरस्य मीमांस-

दिना कांस्यादौ शुद्धिदर्शनादाधेयशक्तिरङ्गीकार्येति चेन्न । भस्मादिसंयोगसमानकालीनास्पृश्यस्पर्शप्रतियोगिकयावदभावसहितभस्मादिसंयोगध्वंसस्य

## नीलकण्ठप्रकाशिका.

भोजनादिकं प्रति अस्पृश्यस्पर्शस्य प्रतिबन्धकत्वकल्पनादेवोपपत्तौ तदनङ्गीकार इति वाच्यम् । प्रकृते च अस्पृश्यस्पर्शस्यासंस्पृश्यसंयोगरूपतया सति तन्नाशे प्रतिबन्धकाभावसद्भावात्, कांस्यादौ अन्तरा भस्मादिसंयोजनं भोजनाद्यर्हतापत्तेरिति पुनः प्रत्यवतिष्ठते—**ननु भस्मादिनेति** ॥ प्रथमेनादिपदेनाम्लादेः द्वितीयेन च ताम्रादेः परिग्रहः । कल्मषध्वंसविशेषणैव कांस्यादेः शुद्धत्वोपपत्तौ अतिरिक्तशक्त्यङ्गीकारोऽनुचित इति समाधत्ते—**भस्मादिसंयोगेनेति** ॥ यत्र कांस्यादौ भस्मादिसंयोगध्वंसानन्तरं पुनरस्पृश्यस्पर्शस्तत्रापि भस्मादिसंयोगध्वंसस्य सत्त्वाच्छुद्धयापत्तिरतः सहितान्तं ध्वंसविशेषणम् । साहित्यं चात्र संबन्धविशेषनियन्त्रितं सामानाधिकरण्यम् अस्पृश्यवस्तूनामनुगमकरूपस्य दुर्वचतया सामान्यधर्मावच्छिन्नाभावनिवेशासंभवाद्यत्किंचिदस्पृश्यस्पर्शाभावस्य च तत्र सत्त्वात्तदापत्तिस्तदवस्थैवेत्यतो—**यावदिति** ॥ तथा च तत्र यावतां

## नृसिंहप्रकाशिका.

कैकदेश्यभिमताधेयशक्तिं निरसितुं तन्मतमुपन्यस्यति—**नन्वित्यादिना** ॥ **भस्मादिनेति** ॥ आदिना आम्लादेः परिग्रहः । **कांस्यादाविति** ॥ आदिना ताम्रादेः परिग्रहः । **शुद्धिदर्शनादिति** ॥ मालिन्यनिवृत्तिपूर्वकशुद्धेः प्रत्यक्षसिद्धत्वादित्यर्थः । इदमुपलक्षणम् । 'भस्मना शुध्यते कांस्यं ताम्रमाम्लेन शुध्यति । गोमयात् शुध्यते भूमिः नारी तु रजसा तथा ॥' इत्यादिवचनेन शुद्धेः भस्मादिजन्यत्वप्रतिपादनाच्चेत्यपि बोध्यम् । मृण्मयेन रजसा पञ्चलोहान्तर्गतपित्तलरूपं नारी च शुध्यते इति चरमदलार्थः । **आधेयशक्तिरिति** ॥ शुद्धिरूपेत्यादिः । **अङ्गीकार्येति** ॥ प्रमितिविषयेत्यर्थः । तथा चातिरिक्तशुद्धेः सत्त्वात् पदार्थविभाजकधर्माणां सप्तत्वं बाधितमित्याशयः । **भस्मादिसंयोगेत्यादि** ॥ भस्मादिसंयोगसमानकालीनाः यावन्तः अस्पृश्यस्पर्शप्रतियोगिकाभावाः तत्समुदायविशिष्टभस्मादिसंयोगध्वंसस्येत्यर्थः । अत्रास्पृश्यस्पर्शकालेऽपि पूर्वभस्मादिसंयोगस्य सत्त्वात् शुद्धत्वापत्तिवारणाय विशिष्टान्तं ध्वंसविशेषणम् । अस्पृश्यस्पर्शकालीनभस्मादिसंयोगध्वंसस्यापि व्यधिकरणस्य नष्टसमानाधिकरणस्य वा यत्किंचिदस्पृश्यस्पर्शस्याभावविशिष्टत्वात् तद्दोषापत्तिवारणायाभावे यावत्त्वनिवेशः । नन्वस्पृश्यस्पर्शादेः संयोगरूपास्पृश्यस्पर्शस्य कांस्यादिनिष्ठस्य श्वादिविभागेन नाशात् असंयोगरूपकांस्यादिवृत्तिपूर्वकालीनभस्मादिसंयोगध्वंसस्य तादृशयावदभावविशिष्टतया विशिष्टध्वंसरूपशुद्धिपदार्थसत्त्वेन पुनः भस्मादिसंयोगं विनापि शुद्धत्वापत्तिरिति चेन्न । श्वानादिसंयोगप्रभृति पुनः भस्मादिसंयोगान्तकालघटककांस्यादिनिष्ठतत्तत्क्षणसंबन्धस्यैवास्पृश्यस्पर्शपदार्थत्वस्वीकारेण पू-

## नीलकण्ठप्रकाशिका.

अस्पृश्यस्पर्शाभावानां निरवच्छिन्नविशेषणतासंबन्धेन असत्त्वान्नोक्तदोष इति भावः। यत्र च भस्मादिसंयोगास्पृश्यवस्तुस्पर्शौ युगपदेवोत्पन्नौ विनष्टौ च तत्र तत्तदस्पृश्यस्पर्शाभाव-

## नृसिंहप्रकाशिका.

वैकालीनकांस्यादिनिष्ठभस्मादिसंयोगध्वंसस्य निरुक्ततत्तत्क्षणसंबन्धरूपास्पृश्यस्पर्शप्रतियोगिकयावदभावविशिष्टत्वाभावेनोक्तापत्त्यभावात्। एककालीनत्वघटितसामानाधिकरण्येन निरुक्तास्पृश्यस्पर्शप्रतियोगिकयावदभावविशिष्टत्वं ध्वंसे साधितम्। तादृशयावदभावान्तर्गतास्पृश्यस्पर्शप्रागभावध्वंसयोः एकक्षणावृत्तित्वात्। अतो निरुक्तशुद्धेरप्रसिद्धिवारणाय तादृशयावदभावे कालीनत्वान्तानिवेशः। एवं च भस्मादिसंयोगकाले पूर्वकालीननिरुक्तास्पृश्यस्पर्शप्रतियोगिकध्वंसानामेव सत्त्वेन भविष्यदस्पृश्यस्पर्शप्रतियोगिकप्रागभावानामेव सत्त्वेन च तद्घटितसमुदायस्य निरुक्तसामानाधिकरण्यसम्बन्धेन भस्मादिसंयोगध्वंसे वैशिष्ट्यसत्त्वात् न निरुक्ताप्रसिद्धिः। न च निरुक्तास्पृश्यस्पर्शानां तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकात्यन्ताभावसमुदायस्य निरुक्तसम्बन्धेन भस्मादिसंयोगध्वंसविशेषणत्वस्वीकारेणैव निरुक्तदोषवारणसम्भवात् ध्वंसप्रागभावघटितसमुदायस्याधिकरणक्षणाप्रसिद्धिनिबन्धनशुद्धिपदार्थाप्रसिद्धिवारणसम्भवात् लाघवाच्च निरुक्तात्यन्ताभावसमुदायस्य विशेषणत्वावश्यकत्वे तदुपेक्ष्य ध्वंसप्रागभावघटितसमुदायस्य विशेषणत्वं स्वीकृत्य निरुक्ताप्रसिद्धिवारणाय कालीनत्वान्तस्य यावदभावविशेषणत्वस्वीकारे बीजाभाव इति वाच्यम्। ध्वंसप्रागभावाधिकरणे अत्यन्ताभावानङ्गीकर्तृप्राचीनमते निरुक्तास्पृश्यस्पर्शध्वंसप्रागभावाधिकरणकांस्यादौ तदत्यन्ताभावासत्त्वेन तादृशात्यन्ताभावविशिष्टभस्मादिसंयोगध्वंसाप्रसिद्ध्या शुद्धिपदार्थाप्रसिद्धिप्रसंग इति तन्मतानुसारेण शुद्धिपदार्थप्रसिद्धिसम्पादनाय उक्तरीत्यनुसरणम्। ध्वंसप्रागभावाधिकरणे अत्यन्ताभावाङ्गीकर्तृनवीनमते निरुक्तात्यन्ताभावस्य विशेषणत्वसंभवात् अत्यन्ताभावसमुदाये कालीनत्वान्तविशेषणं नोपादेयमेवेति हृदयम्। कांस्यादौ भस्मादिसंयोगकालेऽपि निरुक्तयावदभावसत्त्वात् शुद्धत्वापत्तिवारणाय विशेष्यभागः। न च सम्यगप्रक्षालिते कांस्यादौ किञ्चिदवच्छेदेन भस्मादिसंयोगध्वंसस्यापि अक्षततया तदानीं शुद्धत्वापत्तिः दुर्वारैवेति वाच्यम्। स्वसमानाधिकरणभस्मादिसंयोगासमानकालीनभस्मादिसंयोगध्वंसस्यैव विशेष्यदळार्थत्वेन सम्यगप्रक्षाळितकांस्यादिनिष्ठभस्मादिसंयोगध्वंसस्य स्वसमानाधिकरणभस्मादिसंयोगासमानकालीनत्वेन तादृशकांस्यादौ निरुक्तविशेष्यदळाभावान्न शुद्धत्वापत्तिरिति। अस्मद्गुरुचरणास्तु भस्मादिसंयोगेत्यादि। भस्मादिसंयोगासमानकालीना यावन्तोऽस्पृश्यस्पर्शप्रतियोगिकाः ध्वंसाः प्रागभावाश्च तादृशध्वंससमुदायविशिष्टभस्मादिसंयोगध्वंसः तादृशप्रागभावसमुदायविशिष्टभस्मादिसंयोगध्वंसो वा शुद्धिपदार्थ इति। प्राचीनमते शुद्धिपदार्थस्य द्वैविध्यप्रतिपादनायास्पृश्यस्पर्शप्रतियोगिकाभावत्वेन ध्वंसप्रागभावसाधारणरूपेण निवेशः कृत इति व्याचक्रुः। तत्र तद्भस्मसंयोगासमानकालीनास्पृश्यस्पर्श-

शुद्धिपदार्थत्वात्। स्वत्वमपि न पदार्थान्तरम्, यथेष्टविनियोगयोग्यत्वस्य स्वत्वरूपत्वात्। तदवच्छेदकं च प्रतिग्रहादिलब्धत्वमेवेति। अथ विधिर्नि-

## नीलकण्ठप्रकाशिका.

कूटसामानाधिकरण्यविशिष्टभस्मादिसंयोगध्वंसमादाय शुद्धतापत्तिरतो भस्मादिसंयोगकालावच्छेदेन तत्र विद्यमानार्थकं कालीनान्तमभावविशेषणम्। तथा च तव भस्मादिसंयोगक्षणावच्छेदेन यावत्तदभावानामसत्त्वान्न दोष इति भावः। चैत्रस्य इदं धनमित्यादौ धनादौ यत्स्वत्वं प्रतीयते, तत्पदार्थान्तरामिति मतं निरस्यति—**स्वत्वमपीति**॥ अपिनानुक्तसमुच्चायकेन प्रतियोगित्वादिपरिग्रहः। ननु तर्हि स्वत्वं किंस्वरूपमित्यत आह—**यथेष्टेति॥ तदवच्छेदकं चेति**॥ तादृशयोग्यत्वप्रयोजकमित्यर्थः। प्रतियोगित्वं प्रतियोगिरूपं प्रतियोगितावच्छेदकरूपं वेत्यादिकं बहुतरमूहनीयम्। सर्वेषां पदार्थानामुक्तपदार्थेषु यथायथमन्तर्भावं निरूप्य मूलन्यूनतां परिहर्तुं विधिं निरूपयिष्यमाणः शिष्यावधानाय तन्निरूपणं प्रतिजानीते—**अथेति**॥ स्वपरमतसाधारणं विधित्वं तावन्निर्वक्ति—

## नृसिंहप्रकाशिका.

प्रतियोगिकयावदभावसहिततद्भस्मादिसंयोगध्वंसः पुनः अस्पृश्यस्पर्शकालपर्यन्तं शुद्धिपदार्थ इति विशिष्य वक्तव्यः। अन्यथा दोषापत्तेरिति बोध्यम्। वस्तुतस्तु यादृशकांस्यादिवृत्तिविशेषे कदापि नास्पृश्यस्पर्शः किंतु तद्भ्रान्त्या भस्मादिसंयोगपूर्वकक्षालनमासीत् तादृशकांस्यादिव्यक्तौ प्राचीनमतसिद्धनिरुक्तास्पृश्यस्पर्शप्रतियोगिकध्वंसप्रागभावघटितसमुदायस्य अवर्तमानतया तद्विशिष्टभस्मादिसंयोगध्वंसरूपशुद्धेः सुतरामवर्तमानत्वात् तादृशव्यक्तिविशेषस्य शुद्धत्वानुपपत्तिः। अतः तद्व्यक्तौ अस्पृश्यस्पर्शप्रतियोगिकध्वंसप्रागभावरूपविरोधाभावेनास्पृश्यस्पर्शप्रतियोगिकात्यन्ताभावसमुदायविशिष्टभस्मादिसंयोगध्वंसस्य शुद्धिपदार्थत्वमङ्गीकृत्य तद्वत्त्वमादाय तादृशव्यक्तेः शुद्धत्वं तन्मते उपपादनीयम्। एवं यांदृशकांस्यादिविशेषे कदापि नास्पृश्यस्पर्शः तद्भ्रान्त्यभावात्तद्भ्रान्तिमूलकभस्मादिसंयोगपूर्वकक्षाळनाभावात् तद्व्यक्तिविशेषे विशेष्यदलाभावात् तद्व्यक्तिविशेषस्य मतद्वयेऽपि शुद्धत्वानुपपत्त्या कालीनत्वान्ताघटितव्यधिकरणास्पृश्यस्पर्शप्रतियोगिकात्यन्ताभावसमुदायमात्रस्य शुद्धिपदार्थत्वमङ्गीकृत्य तादृशव्यक्तिविशेषे तद्वत्त्वरूपशुद्धत्वमन्यथानुपपत्त्या मतद्वयेऽपि स्वीकार्यमिति प्रतिभाति। ननु प्रतिग्रहादिजन्यस्वत्वस्य क्लृप्तपदार्थानन्तर्भूतत्वात् स्वत्वमतिरिक्तपदार्थ इति मीमांसकैकदेशिमतं दूषयति—**स्वत्वमपीति**॥ अपिशब्दः शुद्धिसमुच्चायकः। **न पदार्थान्तरमिति**॥ तत्त्वे प्रमाणाभावादिति हेतुः पूरणीयः। तथाच प्रतिग्रहादिना स्वत्वोत्पत्तिस्वीकारे प्रतिग्रहादिलब्धस्य पुनरन्येनादाने स्वत्वनाशावश्यकतया एकस्मिन् पदार्थे उक्तरीत्या बहूनां स्वत्वानां तत्प्रागभावतद्ध्वंसानां च कल्पनावश्यकतया गौरवमिति लाघवात् क्लृप्तपदार्थान्तर्भावो युक्त इति भावः। ननु तर्हि स्वत्वं किंस्वरूपमित्यत आह—**यथेष्टेति**॥ अभिलषितकार्यार्थं स्वकर्मकदानविनिमयविक्रयोत्तरकाली-

रूप्यते—प्रयत्नजनकचिकीर्षाजनकज्ञानविषयो विधिः । तत्प्रतिपादको लिङा-दिर्वा । कृत्यसाध्ये प्रवृत्त्यदर्शनात् कृतिसाध्यताज्ञानं प्रवर्तकम् । न च विष-

---

## नीलकण्ठप्रकाशिका.

**प्रयत्नेति** ॥ प्रयत्नजनिका या चिकीर्षा तज्जनकं यज्ज्ञानं तद्विषय इत्यर्थः । गुरुमते कृतिसाध्यताज्ञानस्य, स्वमते कृतिसाध्यत्वविशिष्टेष्टसाधनताज्ञानस्य चिकीर्षाद्वारा प्रयत्न-जनकत्वात् तन्मते कृतिसाध्यत्वे स्वमते कृतिसाध्यत्वविशिष्टेष्टसाधनत्वे च लक्षण-सङ्गतिः । अभिधायकस्य विधिमताभिप्रायेण.ह—**तत्प्रतीति** ॥ तादृशज्ञानविषय-कार्यत्वादिप्रतिपादकलिङादिरित्यर्थः । लिङादीत्यादिना लोट्तव्यादिसंग्रहः । वाकारोऽना-स्थायाम् । गुरुमतमाशङ्कते—**कृत्यसाध्य इति** ॥ कृत्यसाध्यत्वेनावगत इत्यर्थः । **प्रवर्त-कमिति** ॥ चिकीर्षाद्वारा प्रवृत्तिजनकमित्यर्थः । न च कृत्यसाध्यत्वज्ञानाभाव एव प्रवर्त-कोऽस्त्विति शङ्क्यम्, कृत्यसाध्यत्वज्ञानाभावत्वेन गौरवात् । कृतिसाध्यत्वाभावकृतिसाध्य-भेदतत्तद्व्याप्यादिदर्शनानां प्रवृत्तौ प्रतिबन्धकत्वकल्पनेन महागौरवाच्चेति दिक् । ननु विष-भक्षणादौ प्रवृत्त्यापत्तिः, कृतिसाध्यताज्ञानस्य तत्रापि सत्त्वादित्याशङ्कां निराचष्टे—

## नृसिंहप्रकाशिका.

नपुरुषनिष्ठैहिकामुष्मिकविरोधासंपादकत्वस्यैवेत्यर्थः । **स्वत्वरूपत्वमिति** ॥ स्वत्व-पदार्थत्वमित्यर्थः । स्वीक्रियत इति शेषः । ननु तर्हि कस्य वा यथेष्टविनियोगयोग्यत्वं कस्य वा नेत्यत्र नियामकाभावात् पदार्थमात्रस्य तव मते सर्वपुरुषीययथेष्टविनियोगयोग्यत्वा-पत्तिः । मम तु स्वत्वस्य तादृशयोग्यत्वनियामकत्वस्वीकारेण यस्मिन् यदीयं स्वत्वं तस्यैव तदीयं यथेष्टविनियोगयोग्यत्वमिति नियमसंभवात् न पदार्थमात्रस्य निरुक्तयोग्यतापत्ति-रत आह—**तदवच्छेदकं चेति** ॥ यथेष्टविनियोगयोग्यत्वनियामकमपीत्यर्थः । **प्रति-ग्रहादिलब्धत्वमेवेति** ॥ आदिना विक्रयादिपरिग्रहः । प्रतिग्रहक्रियादिना प्राप्तत्वमेवे-त्यर्थः । एवकारेण स्वत्वस्यातिरिक्तत्वव्यवच्छेदः । तथाच मानाभावात् स्वत्वं न पदार्था-न्तरमिति भावः । एतावता मूलोक्तपदार्थानां सप्तविधत्वं प्रसाध्येदानीं प्रसङ्गसङ्गत्या शिष्यबुद्धिवैशद्याय विधिलक्षणं तत्स्वरूपं तत्प्रतिपादकं तत्प्रयोजनञ्च दर्शयितुं शिष्याव-धानाय प्रतिजानीते—**अथेति** ॥ पदार्थानां सप्तविधत्वव्यवस्थापनानन्तरमित्यर्थः । **निरूप्यत इति** ॥ लक्षणस्वरूपप्रामाण्यादिभिर्ज्ञाप्यत इत्यर्थः । **प्रयत्नेत्यादि** ॥ प्रवृत्ति-जनिका या कृतिसाध्यत्वप्रकारिकेच्छा तज्जनकज्ञानविषयत्वं विधेर्लक्षणमित्यर्थः । **तत्प्रति-पादक इति** ॥ निरुक्तलक्षणलक्षितविधिप्रतिपादक इत्यर्थः । **लिङादिरिति** ॥ लिङ्लो-ट्तव्यप्रत्यया इत्यर्थः । कृतिसाध्यताज्ञानमेव प्रवर्तकं तद्विषयकृतिसाध्यत्वं लिङाद्यर्थ इति प्राभाकरमतं दूषयितुं आदौ तन्मतमुपन्यस्यति—**कृत्यसाध्य इति** ॥ चन्द्रानयनादावि-त्यर्थः । **प्रवृत्त्यदर्शनादिति** ॥ प्रवृत्त्यनुपपत्तेरित्यर्थः । अदर्शनपदं प्रवृत्तेरप्रामाणिकत्वबो-धनाय । **कृतिसाध्यताज्ञानमिति** ॥ तादृशज्ञानमेवेत्यर्थः । **प्रवर्तकमिति** ॥ चिकी-

भक्षणादौ प्रवृत्तिप्रसङ्गः, इष्टसाधनतालिङ्गककृतिसाध्यताज्ञानस्य काम्यस्थले विहितकालशुचिजीवित्वनिमित्तज्ञानजन्यस्य नित्यनैमित्तिकस्थले प्रवर्तकत्वात्। न चाननुगमः स्वविशेषणवत्ताप्रतिसंधानजन्यत्वस्यानुगतत्वादिति गुरवः ।

## नीलकण्ठप्रकाशिका.

**न चेत्यादिना** ॥ **इष्टसाधनतालिङ्गकेति** ॥ 'अयं मत्कृतिसाध्यः मत्कृतिं विना अनुपपद्यमानत्वे सति मदिष्टसाधनत्वात्' इत्यानुमानिकेत्यर्थः । **काम्यस्थल इति**॥ प्रवर्तकत्वादित्यनेनान्वयः । ज्योतिष्टोमयागादावित्यर्थः । **विहितकालेत्यादि** ॥ विहितकालशुचिजीवित्वज्ञानाधीनस्य कृतिसाध्यताज्ञानस्य नित्ये सन्ध्यावन्दनादौ, आशौचादिरूपनिमित्तज्ञानाधीनस्य तस्य नैमित्तिके स्नानादौ प्रवर्तकत्वादित्यर्थः । 'अहमेतत्कालिककृतिसाध्यसन्ध्यावन्दनकः, एतत्कालिकशुचिजीवित्वात्' इत्येवंरीत्या कृतिसाध्यत्वज्ञानस्य विहितकालशुचिजीवित्वादिज्ञानजन्यत्वमवसेयम् । **अननुगम इति** ॥ प्रवृत्तिसामान्यप्रयोजकस्यैकस्याभावादिति भावः । **स्वविशेषणवत्तेत्यादि** ॥ स्वं प्रवर्तमान-

## नृसिंहप्रकाशिका.

र्षाद्वारा प्रवृत्तिजनकमित्यर्थः । **विषभक्षणादाविति** ॥ आदिना निष्फलपरिग्रहः । **प्रवृत्तिप्रसङ्ग इति** ॥ तत्र कृतिसाध्यताज्ञानसत्त्वादिति भावः । **इष्टसाधनतालिङ्गकेति** ॥ बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनतालिङ्गकेत्यर्थः । **काम्यस्थल इति** ॥ एतस्य प्रवर्तकत्वादित्यनेनान्वयः । तथा च काम्यं कृतिसाध्यं मत्कृतिं विना असत्त्वे सति बलवदनिष्टाननुबन्धित्वे सति मदिष्टसाधनत्वाच्च यन्नैवं तन्नैवं यथा चैत्यवन्दनमिति व्यतिरेकदृष्टान्तेन जायमानपरामर्शजन्यकार्यताज्ञानस्यैव प्रवर्तकत्वात् । विषभक्षणे निष्फले इष्टसाधनत्वाभावेन इष्टसाधनतालिङ्गककृतिसाध्यताज्ञानरूपप्रवर्तकाभावात् विषसंपृक्तान्नभक्षणादौ इष्टसाधनत्वसत्त्वेऽपि बलवदनिष्टाननुबन्धित्वरूपविशेषणाभावेन विशिष्टलिङ्गककृतिसाध्यताज्ञानरूपप्रवर्तकाभावाच्च नोभयत्र प्रवृत्त्यापत्तिरिति भावः। नित्ये प्रवर्तकमाह— **विहितकालजीवित्वेति** ॥ विहितकालजीवित्वलिङ्गककृतिसाध्यताज्ञानस्येत्यर्थः। **नित्यस्थल इति** ॥ सन्ध्यावन्दनादिरूपनित्यकर्मणीत्यर्थः । **प्रवर्तकत्वादिति** ॥ तथा चायं स्वकर्तव्यनित्यकर्मकः स्वकृतिं विनाऽनुपपद्यमाननित्यकर्मत्वे सति विहितकालजीवित्वात् यन्नैवं तन्नैवं यथा बौद्ध इति व्यतिरेकदृष्टान्तेन जायमानपरामर्शजन्यकार्यताज्ञानस्य प्रवर्तकत्वात् नित्यकर्मणि तत्सत्त्वेन न प्रवृत्त्यनुपपत्तिरिति भावः। **न चाननुगम इति** ॥ निरुक्तेष्टसाधनतालिङ्गककृतिसाध्यताज्ञानत्वनिरुक्तविहितकालजीवित्वलिङ्गककृतिसाध्यताज्ञानत्वाभ्यां कार्यताज्ञानस्य प्रवृत्तिसामान्यं प्रति हेतुत्वं न संभवतीति परस्परव्यभिचारादिति भावः । **स्वविशेषणेति** ॥ स्वं पक्षः विशेषणं तद्वृत्त्यसाधारणधर्मः । तथा च पक्षविशेष्यकपक्षवृत्त्यसाधारणधर्मप्रकारकज्ञानजन्यत्वस्य चेत्यर्थः । **अनुगतत्वादिति** ॥ एकधर्मत्वादित्यर्थः।

**तत्र । लाघवेन कृतिसाध्येष्टसाधनताज्ञानस्यैव चिकीर्षाद्वारा प्रयत्नजनकत्वात् । न च नित्यनैमित्तिकस्थले इष्टसाधनत्वाभावादप्रवृत्तिप्रसङ्गः, तत्रापि प्रत्यवायपरिहारस्य पापक्षयस्य च फलत्वकल्पनात् । तस्मात्कृतिसाध्येष्टसाध-**

---

## नीलकण्ठप्रकाशिका.

पुरुषः, तस्य विशेषणं तन्निष्ठो धर्मः कामनादिः, तद्वत्तायाः स्वविषयसाधनत्वादिरूपस्य तत्संबन्धस्य प्रतिसंधानं ज्ञानं तज्जन्यत्वस्येत्यर्थः । **लाघवेनेति** ॥ कारणतावच्छेदकलाघवेनेत्यर्थः । तन्मते कारणतावच्छेदकस्य जन्यत्वादिघटितत्वात् गौरवमिति भावः । **कृतिसाध्येष्टसाधनतेति** । अत्र बलवदनिष्टाननुबन्धित्वमप्यन्तर्भावनीयम् । तेन न कृतिसाध्यत्वेन तृप्तिरूपेष्टसाधनत्वेन चावगते विषसंपृक्ते भोजनादौ प्रवृत्त्यापत्तिः । विशिष्टज्ञानत्वावच्छिन्नस्य कारणत्वकथनं तु प्राचां मतेन । नव्यमते कृतिसाध्यत्वादिज्ञानानां पृथगेव दण्डचक्रादिन्यायेन कारणत्वात् । **प्रयत्नेति** ॥ प्रवृत्तीत्यर्थः । **प्रत्यवायेति** ॥ प्रत्यवायस्य परिहारः प्रागभावः, तस्य दुःखजनकाभावतया तन्नाशस्यैवेष्टत्वेन फलत्वमिति भावः । न च कथं तत्प्रागभावस्य फलत्वं तस्याजन्यत्वादिति वाच्यम्, यत्सत्त्वे यत्सत्त्वमिति व्यवहारलभ्यस्य स्वरूपसंबन्धरूपस्य सन्ध्यावन्दनप्रयोज्यत्वस्य तत्र सत्त्वेन फलत्वाक्षते-

## नृसिंहप्रकाशिका.

तथा च इष्टसाधनत्वविहितकालजीवित्वयोः पक्षवृत्त्यसाधारणरूपतया पक्षविशेष्यकतद्वृत्त्यसाधारणधर्मप्रकारकज्ञानकारणककार्यताज्ञानत्वेनानुगतरूपेण हेतुत्वस्वीकारात् नोक्तदोषावकाशः । **लाघवेनेति** ॥ प्रवर्तकज्ञानपूर्वकव्याप्तिज्ञानाद्यकल्पनाल्लाघवेनेत्यर्थः । **कृतिसाध्येति** ॥ कृतिसाध्यत्वविशिष्टेष्टसाधनत्वप्रकारकज्ञानस्यैवेत्यर्थः । कृतिसाध्यताज्ञानत्वावच्छिन्नेष्टसाधनताज्ञानत्वावच्छिन्नयोरेवेति यावत् । एवकारेण स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञानत्वावच्छिन्नस्य कारणत्वं व्यवच्छिद्यते । **प्रयत्नजनकत्वादिति** ॥ तथाच प्राभाकरमते कार्यत्वानुमितौ लिङ्गज्ञानविधया क्लृप्तकारणताकेष्टसाधनताज्ञानत्वावच्छिन्नस्य प्रवृत्तिहेतुत्वस्वीकारेणैवोपपत्तौ केवलकार्यताज्ञानस्य प्रवर्तकत्वमङ्गीकृत्य तत्र लिङ्गज्ञानविधया इष्टसाधनताज्ञानस्य हेतुत्वकल्पनं मध्ये व्याप्तिज्ञानादिकल्पनं चातिगौरवसंपादकतया अयुक्तमिति भावः । **नित्य इति** ॥ सन्ध्यावन्दनादावित्यर्थः । **इष्टसाधनत्वाभावादिति** ॥ सन्ध्यावन्दनादेः प्रत्यवायप्रागभावपरिपालनस्यैव प्रयोजनत्वेन ततः इष्टानुत्पत्तेरिति भावः । **अप्रवृत्तिप्रसंग इति** ॥ सर्वत्रेष्टसाधनताज्ञानस्य हेतुतामते अभ्रान्तस्य सन्ध्यावन्दनादाविष्टसाधनताज्ञानानुत्पत्त्या प्रवृत्त्यभावप्रसङ्ग इति भावः । **तत्रापीति** ॥ सन्ध्यावन्दनादावपीत्यर्थः । **प्रत्यवायपरिहारस्येति** ॥ प्रत्यवायप्रागभावपरिपालनस्येत्यर्थः । फलस्य कल्पनादित्युत्तरेणान्वयः । सन्ध्यावन्दनाद्यकरणे प्रत्यवायप्रागभावनाशात् करणे च प्रागभावस्य स्थितेः तस्यापि योगक्षेमसाधारणजन्यत्वसम्भवात् इष्टत्वमव्याहतमेवेति भावः । सन्ध्यावन्दनादेः मुख्ये-

नत्वमेव लिङाद्यर्थः । ननु ‘ ज्योतिष्टोमेन स्वर्गकामो यजेत ’ इत्यत्र लिङा स्वर्गसाधनमपूर्वं कार्यं प्रतीयते । यागस्याशुतरविनाशिनः कालान्तरभावि-स्वर्गसाधनत्वायोगात् तद्योग्यं स्थायिकार्यमपूर्वमेव लिङाद्यर्थः । कार्यं कृति-

## नीलकण्ठप्रकाशिका.

रित्यवधेयम् । लिङादेः कार्य एव शक्तिरिति गुरुमतमाशङ्कते—**नन्विति** ॥ इच्छाविशेष-रूपस्य यागस्याशुतरविनाशिनः स्वर्गसाधनत्वेन भानं न संभवति, अयोग्यत्वादित्यपूर्वरूप एव कार्ये शक्तिरङ्गीकार्येत्याह—**यागस्येति** ॥ **आशुतरविनाशिनः** तृतीयक्षणवृत्ति-ध्वंसप्रतियोगिनः । **स्थायि** फलपर्यन्तस्थायि । अन्वयप्रकारं दर्शयति—**कार्यं कृति-**

## नृसिंहप्रकाशिका.

ष्टसाधनत्वमभ्युपपादयति—**पापक्षयस्य चेति** ॥ चकारः पूर्वकल्पास्वरससूचकवाकारा-र्थकः । **फलत्वकल्पनादिति** ॥ फलत्वस्वीकारादित्यर्थः । तथा च ‘सन्ध्यामुपासते ये तु सततं संश्रितव्रताः । विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥’ इति वचनेन पापनाशस्य ब्रह्मलोकावाप्तेः फलत्वप्रतिपादनादिति भावः । उपसंहरति—**तस्मादिति** ॥ प्रवृत्तिसामान्ये इष्टसाधनताज्ञानस्य हेतुत्वे बाधकाभावादित्यर्थः । **कृतिसाध्येष्टसाधनत्वमेवेति** ॥ बलवदनिष्टाननुबन्धित्वेष्टसाधनत्वकृतिसाध्यत्वैतत्त्रितयमेवेत्यर्थः । एवकारोऽत्र कृतिसा-ध्यत्वमात्रस्य लिङ्वाच्यत्वव्यवच्छेदकः । **लिङाद्यर्थ इति** ॥ लिङ्लोट्तव्यप्रत्ययादेः अर्थ इत्यर्थ इति प्राञ्चः । नव्यास्तु बलवदनिष्टाननुबन्धित्वज्ञानस्य न प्रवर्तकत्वं मानाभा-वात् । नचैवं सति बलवदनिष्टसाधनताज्ञानकाले प्रवृत्त्यापत्तिरिति वाच्यम् । बलवद्द्विष्टसाधन-ताज्ञानस्य प्रतिबन्धकत्वस्वीकारेण उक्तापत्तिवारणसंभवात् । अन्यथा बलवद्द्विष्टसाधनताज्ञान-बलवदनिष्टाननुबन्धित्वज्ञानोभयशून्यकाले प्रवृत्त्यनुदयप्रसङ्गः । तस्मात् इष्टसाधनत्वकृतिसा-ध्यत्वज्ञानस्य प्रवर्तकतया तादृशज्ञानविषयेष्टसाधनत्वकृतिसाध्यत्वोभयमेव लिङाद्यर्थ इति प्रा-हुः । इष्टसाधनत्वादेः लिङाद्यर्थत्वे दोषप्रदर्शनपूर्वकमपूर्वस्यैव लिङाद्यर्थत्वं मीमांसकैकदेशिनो वदन्ति । तन्मतं दूषयितुं आदौ तन्मतमुपन्यस्यति—**नन्वित्यादिना** ॥ **इत्यत्र लिङेति** ॥ एतादृशवाक्यघटकलिङ्प्रत्ययेनेत्यर्थः । **स्वर्गसाधनकार्यमिति** ॥ स्वर्गं प्रति व्यापार-विधया कारणं कृतिसाध्यमेवेत्यर्थः । **प्रतीयत इति** ॥ शक्त्या बोध्यत इत्यर्थः । न तु कृतिसाध्यत्वविशिष्टे इष्टसाधनत्वं प्रतीयत इति यावत् । इष्टसाधनत्वं कृतिसाध्यत्वं वा न लिङर्थ इति तात्पर्यार्थः । तत्र हेतुमाह—**यागस्येति** ॥ **आशुतरविनाशिन इति** ॥ तृतीयक्षणवृत्तिध्वंसप्रतियोगिन इत्यर्थः । **कालान्तरभावीति** । यागनाशोत्तर-कालजातेत्यर्थः । **अयोगादिति** ॥ यागस्य स्वर्गाव्यवहितप्राक्कालवृत्तित्वाभावादित्या-शयः । **अत इति** ॥ यागस्य साक्षात् स्वर्गजनकत्वासम्भवादित्यर्थः । **अयोग्यमिति** ॥ अतीन्द्रियमित्यर्थः ॥ **स्थायीति** ॥ स्वर्गोत्पत्तिपर्यन्तं वर्तमानमित्यर्थः । स्वर्गं प्रति व्यापारवि-धया कारणमिति यावत् । **कार्यमपूर्वमेवेति** ॥ अपूर्वस्वरूपं कार्यमेवेत्यर्थः । **लिङर्थ इति** ॥

साध्यम् । कृतेः सविषयत्वाद्विषयाकाङ्क्षायां यागो विषयत्वेनान्वेति । 'कस्य कार्यम' इति नियोज्याकाङ्क्षायां स्वर्गकामपदं नियोज्यपरतयान्वेति । कार्यबोद्धा नियोज्यः । तेन 'ज्योतिष्टोमनामकयागविषयकं स्वर्गकामस्य कार्यम्' इति वाक्यार्थः संपद्यते । वैदिकलिङ्त्वात् 'यावज्जीवमग्निहोत्रं जुहुयात्' इति नित्यवाक्येऽप्यपूर्वमेव वाच्यं कल्प्यते । 'आरोग्यकामो भेषजपानं

---

## नीलकण्ठप्रकाशिका.

**साध्यमिति** ॥ यागे कृतिसाध्यत्वं साक्षात् । अपूर्वे तु यागद्वारा इति बोध्यम् । **कार्यबोद्धेति** ॥ इदं मत्कृतिसाध्यमिति ज्ञानवानित्यर्थः । विध्यर्थमुख्यविशेष्यकं शाब्दबोधं दर्शयति—**तेनेति** ॥ स्वर्गकामस्य लिङर्थे कार्ये, तदेकदेशे च यागस्यान्वयेनेत्यर्थः । न्यायमते तु तत्र 'कृतिसाध्यबलवदनिष्टाजनकेष्टसाधनयागानुकूलकृतिमान् स्वर्गकामः' इति वाक्यार्थबोधः । ननु अपूर्वस्य पूर्वमनुपस्थितत्वात्कथं तत्र शक्तिग्रह इति चेदत्र वदन्त्यभिज्ञाः । तन्मते तद्धर्मावच्छिन्नविषयकशाब्दबोधं प्रति तद्धर्मावच्छिन्नविषयकशक्तिग्रहस्य तादृशोपस्थितेश्च हेतुता, न तु समानविषयकत्वेन हेतुहेतुमद्भावः । एवं च कार्यत्वावच्छिन्ने यत्रकुत्रचिच्छक्तिग्रहः । योग्यताबलाच्चापूर्वरूपकार्यस्य शाब्दबोधे भानं, न हि यागविषयकमन्यत्कार्यं संभवतीति । ननु नित्ये फलाभावात्कथं तत्रापूर्वबोधकतेत्यत आह—**यावज्जीवमिति** ॥ **अपूर्वमेवेति** ॥ कार्यत्वेनेत्यादिः । पण्डापूर्वमित्यर्थः । लौ-

## नृसिंहप्रकाशिका.

प्रकृतश्रुतिघटकलिङ्पदार्थं इत्यर्थः । कार्यपदार्थं निर्वक्ति—**कार्यं कृतिसाध्यमिति** ॥ कृतिजन्यमित्यर्थः । **याग इति** ॥ यज्धात्वर्थयाग इत्यर्थः । **विषयत्वेनेति** ॥ कार्यपदार्थैकदेशकृतावित्यर्थः । **कस्य कार्यमितीति** ॥ कीदृशपुरुषस्य कृतिसाध्यमितीत्यर्थः । **स्वर्गकामपदमिति** ॥ इदञ्च सुप्तिङन्तं पदमिति मताभिप्रायेण । नैयायिकमते स्वर्गकाम इति वाक्यमित्यर्थः । **नियोज्यपरतयेति** ॥ नियोज्यप्रतीतितात्पर्येण उच्चरितनयेत्यर्थः । **अन्वेतीति** ॥ लिङा साकाङ्क्षं भवतीत्यर्थः । स्वर्गकामशब्दार्थः कार्यपदार्थैकदेशकृतौ समवेतत्वसंबन्धेनान्वेतीति भावार्थः । नियोज्यपदार्थमाह—**कार्यभोक्तेति** ॥ स्वर्गरूपफलभोक्तेत्यर्थः । **ज्योतिष्टोमनामकेति** ॥ इत्थं चेत्यादिः । **इति वाक्यार्थस्संपद्यत इति** ॥ इत्याकारकशाब्दबोधो जायत इत्यर्थः । ज्योतिष्टोमेनेत्यादिश्रुतिघटकलिङः अन्यथानुपपत्त्या अपूर्वार्थकत्वं प्रसाध्य तद्दृष्टान्तेन वैदिकलिङ्मात्रस्यापि तदर्थकत्वमाह—**वैदिकलिङ्त्वादिति** ॥ वेदघटकलिङ्त्वादिति अनेकमन्त्रसाध्यं सङ्कल्पाधीनं यत्कर्म तद्वाचकवैदिकपदसमभिव्याहृतलिङ्त्वादिति वार्थः । **नित्यवाक्य इति** ॥ एतादृशवाक्यघटकलिङ्पदस्यापीत्यर्थः । **अपूर्वमेव वाच्यमिति** ॥ वाच्यमपूर्वमेवेति योजना । **कल्प्यत इति** ॥ अनुमीयत इत्यर्थः । तथा च यावज्जीवमित्यादिश्रुतिघटकलिङ्पदं अपूर्ववाचकं वैदिकलिङ्त्वात् ज्योतिष्टो-

कुर्यात्' इत्यादिलौकिकलिङः क्रियाकार्ये लक्षणा इति चेन्न । यागस्याप्ययोग्यतानिश्चयाभावेन इष्टसाधनतया प्रतीत्यनन्तरं तन्निर्वाहार्थम्—अवान्तरव्यापारतयाऽपूर्वकल्पनात् । कीर्तनादिना नाशश्रुतेर्न यागध्वंसो व्यापारः ।

---

## नीलकण्ठप्रकाशिका.

किकस्थलेऽपूर्वभानासंभवादाह—**आरोग्येति** ॥ **क्रियाकार्य इति** ॥ धात्वर्थनिष्ठकार्यत्व इत्यर्थः । लौकिकालौकिकसाधारण्येन कार्यत्वादावेव लिङादेः शक्तिरङ्गीकार्येत्याशयेन समाधत्ते—**यागस्येति** ॥ अयोग्यत्वाद्यागस्य स्वर्गसाधनत्वेन भानं न संभवतीत्युक्तदोषं निराचष्टे—**अयोग्येति** ॥ अयोग्यतासंशयसत्त्वेऽपि तस्याविघटकत्वाच्छाब्दबोधो भवत्येवेति भावः । वाक्यादिष्टसाधनत्वेन यागेऽवगते तस्याशुतरविनाशिनो व्यापारं विना फलजनकत्वासंभवात् तन्निर्वाहाय अपूर्वं कल्प्यत इत्याह—**तन्निर्वाहार्थमिति** ॥ ननु यागध्वंसस्यैव व्यापारत्वमस्तु किमपूर्वकल्पनेन इत्यत आह—**कीर्तनादिनेति** ॥ आ-

## नृसिंहप्रकाशिका.

मेनेतिश्रुतिघटकलिङ्पदवदित्यनुमानाद्वैदिकलिङ्मात्रस्याप्यपूर्ववाचकत्वं सिध्यतीति भावः । लौकिकलिङ्बोध्यार्थमाह—**आरोग्यकाम इति** ॥ **लौकिकलिङ इति** ॥ इत्याकारकवाक्यघटकलौकिकलिङ इत्यर्थः । लौकिकवाक्यघटकलिङ्पदस्येति निरुक्तवैदिकलिङ्पदभिन्नलिङ्पदस्येति वा यावत् । **क्रियाकार्य इति** ॥ भेषजपानरूपक्रियाजन्ये आरोग्यसाधनभेषजप्रतियोगिनाडीनिष्ठविलक्षणसंयोग इत्यर्थः । **लक्षणेति** ॥ तथा च भेषजपानविषयकारोग्यकामसमवेतयत्नसाध्यो निरुक्तविलक्षणसंयोग इति बोध इति भावः । अस्मद्गुरुचरणास्तु क्रियाकार्य इति, क्रियारूपकार्य इत्यर्थः । तथाच धातुना कृतिबोधात् लिङो विषयत्वावच्छिन्ने लक्षणापर्यवसानेन आरोग्यकामसंबन्धिकृतिविषयो भेषजपानमिति शाब्दबोध इति व्याचक्रुः । **यागस्यायोग्यतानिश्चयाभावेनेति** ॥ यागः शाब्दबोधात् पूर्वं स्वर्गसाधनत्वाभाववान् इति निश्चयाभावेनेत्यर्थः । **इष्टसाधनतयेत्यादि** ॥ ज्योतिष्टोमेनेत्यादिवाक्यात् स्वर्गसाधनत्वप्रकारकयागविषयकशाब्दबोधानन्तरमित्यर्थः । **तन्निर्वाहार्थमिति** ॥ यागे श्रुतिबोधितकारणत्वान्यथानुपपत्त्येत्यर्थः । यागस्य त्रिक्षणावस्थायितया श्रुतिबोधितस्वर्गसाधनत्वमनुपपन्नमित्यन्यथानुपपत्तिज्ञानादिति यावत् । **अवान्तरव्यापारतयेति** ॥ यागव्यापारतयेत्यर्थः । **अपूर्वकल्पनादिति** ॥ स्वर्गसाधनतया अपूर्वस्वीकारादित्यर्थः । तथाच ज्योतिष्टोमेनेत्यादिवाक्यजन्यशाब्दबोधाधीनाद्यागस्य श्रुतिबोधितकारणत्वानुपपत्तिप्रतिसन्धानात् कल्पितापूर्वस्योत्पन्नशाब्दबोधाविषयतया तस्य लिङर्थत्वं बाधितमिति भावः । ननु यागजन्यतया क्लृप्तयागध्वंसस्यैव स्वर्गसाधनत्वमात्रं स्वीकृत्य व्यापारत्वमङ्गीकार्यम् । अक्लृप्तापूर्वस्य व्यापारत्वकल्पनापेक्षया लाघवादिति मतं निरस्यति—**कीर्तनादिनेति** ॥ आदिना गण्डकीबाहुतरणादेः संग्रहः । **नाशश्रुतेरिति** ॥ 'गण्डकीबाहुतरणात् करतोयाविलङ्घनात् । कर्मनाशाजलस्पर्शात् धर्मः क्षरति कीर्तनात् ॥'

**लोकव्युत्पत्तिबलात्क्रियायामेव कृतिसाध्येष्टसाधनत्वं लिङा बोध्यत इति लिङ्त्वेन विध्यर्थकत्वम्, आख्यातत्वेन यत्नार्थकत्वम्। पचति पाकं करो-**

---

## नीलकण्ठप्रकाशिका.

दिना "कर्मनाशाजलस्पर्शात्करतोयाविलङ्घनात्। गण्डकीबाहुतरणाद्धर्मः क्षरति कीर्तनात्॥" इत्यत्रोक्तकर्मनाशाजलस्पर्शादिपरिग्रहः। ध्वंसस्य व्यापारत्वे स्वर्गधारापत्तिरित्यपि दूषणान्तरं विभावनीयम्। **लोकव्युत्पत्तीति** ॥ लोकव्यवहार इत्यर्थः। स च यो यत्र प्रवर्तते स कृतिसाध्यत्वेनेष्टसाधनत्वेन च तज्ज्ञानवानित्येवंरूपः। केचित्तु यदृच्छया यत्र प्रवृत्तिः, तत्तत्साधनमिति लोकव्यवहार इत्याहुः। नव्याः पुनः लोके पचेतेत्यादिलिङादिसमभिव्याहारस्थले क्रियायामेव कृतिसाध्यत्वविशिष्टेष्टसाधनत्वबोध इति नियमबलादिति तदर्थः। सर्वत्रेति शेष इति व्याचख्युः। **आख्यातत्वेनेति**॥ तच्च सङ्केतसंबन्धेनाख्यातपदवत्त्वं तिप्त्वादिकमेव शक्यतावच्छेदकमिति तु नव्याः। **यत्नार्थकत्वम्** कृतित्वावच्छि-

## नृसिंहप्रकाशिका.

इति वचनेन गण्डकीबाहुतरणादीनां धर्मनाशकत्वप्रतिपादनादित्यर्थः। **न यागध्वंसो व्यापार इति** ॥ तथाच यागस्य तृतीयक्षणे नाशात् यागध्वंसरूपव्यापारस्य नाशाप्रतियोगित्वात् स्वर्गस्यानुत्पत्त्या तदानीं नाशसम्भवाच्च कीर्तनादिना कस्यापि नाशासंभवेन निरुक्तवचनस्याप्रामाण्यापत्त्या यागव्यापारतया अपूर्वमेव स्वीकृत्य तस्यैव कीर्तनादिना नाशं स्वीकृत्य वचनप्रामाण्यं संपादनीयमिति भावः। इदमुपलक्षणम्। यागध्वंसस्य व्यापारत्वे स्वर्गोत्पत्त्यनन्तरं पुनः स्वर्गोत्पत्त्यापत्तिः। न च स्वर्गं प्रति स्वर्गस्य प्रतिबन्धकत्वात् नोक्तापत्तिरिति वाच्यम्। गौरवापत्तेः स्वर्गनाशानन्तरं पुनः स्वर्गोत्पत्त्यापत्तेश्च अपूर्वस्य व्यापारत्वे तु तस्य फलनाश्यत्वस्वीकारेण नोक्तापत्त्यवकाश इत्यपि बोध्यम्। उपसंहरति—**लोकव्युत्पत्तिबलादिति** ॥ तस्मादित्यादिः। उक्तरीत्याऽपूर्वादेः विध्यर्थत्वासंभवादित्यर्थः। **लोकेति** ॥ पण्डितपामरसाधारण्येन कृतिसाध्येष्टसाधनत्वेन ज्ञायमान एव प्रवृत्तेरनुभवसिद्धत्वादित्यर्थः। **क्रियायामेवेति** ॥ धात्वर्थ एवेत्यर्थः। एवकारः इष्टसाधनत्वमपीत्युत्तरं योज्यः। **कृतिसाध्येष्टसाधनत्वमिति** ॥ कृतिसाध्यत्वमिष्टसाधनत्वमेव चेत्यर्थः। एवकारेण अपूर्वं यागध्वंसश्च व्यवच्छिद्यते। **लिङा बोध्यत इति** ॥ लिङ्वाच्यमित्यर्थः। **इतीति** ॥ इति सिद्धमित्यर्थः। ननु तर्हि स्वर्गकामो यजेतेत्यत्र लिङा इष्टसाधनत्वप्रतिपादनात् तस्य धात्वर्थान्वयेन प्रथमान्तार्थकविशेष्यकशाब्दबोधानुपपत्तिरित्यत आह—**लिङ्त्वेनेति** ॥ लिङ्निष्ठेष्टसाधनत्वादिशक्तता लिङ्त्वावच्छिन्नेत्यर्थः। **आख्यातत्वेनेति** ॥ लिङ्निष्ठकृतिनिरूपितशक्तता आख्यातत्वावच्छिन्नेत्यर्थः। तथा च लिङ्त्वेन इष्टसाधनत्वादिबोधनेऽपि आख्यातत्वेन रूपेण कृतेरपि बोधनात् कृतिसाध्येष्टसाधनयागानुकूलकृतिमानित्याकारकप्रथमान्तार्थविशेष्यकशाब्दबोधस्य नानुपपत्तिरिति भावः। नन्वाख्यातस्य यत्नार्थकत्वे किं मानमित्यत आह—**पचतीति** ॥ एतादृश-

तीति विवरणदर्शनात्, किं करोतीति प्रश्ने पचतीत्युत्तराचाख्यातस्य प्रयत्ना-

## नीलकण्ठप्रकाशिका.

त्नवात्रकत्वम्। **किं करोतीति** ॥ कृतित्वावच्छिन्ने जिज्ञासितसंबन्धबोधकं तत्प्रश्नवाक्यम्। उत्तरवाक्यस्य कृतित्वावच्छिन्ने पाकसंबन्धबोधकत्व एव तन्निवर्तकत्वं नान्यथेति भावः। ननु 'रथो गच्छति' इत्यादौ आख्यातस्य कृतिबोधकत्वासंभवात्तदनुरोधेन व्यापार एव

## नृसिंहप्रकाशिका.

वाक्यस्येत्यर्थः । एतादृशवाक्यघटकपच्धातुलट्पदयोः शक्तिज्ञानार्थमिति यावत् । **इति विवरणदर्शनादिति** ॥ इत्याकारकपच्धातुलट्प्रत्ययसमानार्थकपाकपदकृञ्धातुपदघटितवाक्यप्रयोगदर्शनादित्यर्थः। ननु विवरणस्य कथं शक्तिग्राहकत्वं, न साक्षात् शब्दत्वेन व्याकरणादिभिन्नत्वात् आप्तोक्तत्वानिर्णयाच्चेति चेन्न । तस्यानुमानविधयैव शक्तिग्राहकत्वात् । तथाहि आख्यातपदं यत्नत्वावच्छिन्नशक्तं यत्नत्वावच्छिन्नशक्तकृञ्धातुविवृतत्वात् यत्पदं यद्धर्मावच्छिन्नशक्तयत्पदविवृतं तत्तद्धर्मावच्छिन्नशक्तं यथा कोकिलत्वावच्छिन्नशक्तकोकिलपदविवृतपिकपदमिति सामान्यमुखीव्याप्त्या पिकपददृष्टान्तेन निरुक्तलिङ्गेन आख्यातपदस्य यत्नत्वावच्छिन्ने शक्तत्वमनुमीयत इति विवरणस्यानुमानविधया शक्तिग्राहकत्वं प्रामाणिकमेवेति हृदयम् । विवरणबलादाख्यातस्य यत्नार्थकत्वं प्रसाध्येदानीं प्रश्नोत्तरान्यथानुपपत्त्याऽपि आख्यातस्य यत्नत्वावच्छिन्नशक्तत्वमावश्यकमित्याह—**किं करोतीति प्रश्न इति** ॥ किंविषयकयत्नवानयमिति जिज्ञासाबोधकशब्दप्रयोगे कृते सतीत्यर्थः । **पचतीत्युत्तरादिति** ॥ निरुक्तजिज्ञासानिवर्तकबोधार्थं पचतीतिवाक्यप्रयोगस्य सर्वानुभवसिद्धत्वादित्यर्थः । तथाच प्रश्नवाक्यबोधविषयवस्तुविशेषविषयकयत्नजिज्ञासाया विशेषरूपेण वस्तुविषयकयत्नार्थकपदघटितोत्तरवाक्यश्रवणं विना निवृत्त्यसंभवात् पच्धातुपदसमभिव्याहृताख्यातपदस्य पाकविषयकयत्नार्थकत्वं विना तादृशवाक्यस्य उत्तरत्वं नोपपद्यत इति न्यायानुपपत्त्या आख्यातस्य यत्नार्थकत्वं आवश्यकमिति भावः । ननु आख्यातस्य यत्नार्थकत्वे वह्निना सिञ्चतीति वाक्यवत् रथो गच्छतीति वाक्यस्यापि अयोग्यत्वापत्तिः । गमनानुकूलयत्नस्य रथे बाधितत्वात् । मम तु 'फलव्यापारयोर्धातुराश्रये च तिङः स्मृताः। फले प्रधानं व्यापारः तिङर्थस्तु विशेषणम् ॥' इति हरिकारिकया तिङ आश्रयरूपकर्तृशक्तत्वस्यैव प्रतिपादनात् चैत्रः तण्डुलं पचतीत्यादौ धातोः फलव्यापारमात्रशक्ततया पच्धातुना व्यापारत्वेन पाकः कृतिश्च बोध्यते फलत्वेन विक्लित्तिरूपफलं च बोध्यते । आश्रयरूपकर्तृशक्ताख्यातेन वृत्तिर्बोध्यते । एवं च तण्डुलनिष्ठः फलजनकश्चैत्रवृत्तिकृतिरूपव्यापारजन्यः पाक इति शाब्दबोधस्संपद्यते। रथो ग्रामं गच्छतीत्यादौ धातुना व्यापारत्वेन गमनरूपव्यापारः फलत्वेन ग्रामसंयोगश्च बोध्यते । आख्यातेन वृत्तिर्बोध्यते । एवञ्च ग्रामवृत्तिफलजनकः रथवृत्तिगमनरूपव्यापार इति शाब्दबोधस्संभवतीति तादृशवाक्यस्य नायोग्यत्वप्रसक्तिः। तस्मादाख्यातस्य यत्नार्थकत्वं

**र्थकत्वात् । रथो गच्छतीत्यादौ अनुकूलव्यापारे लक्षणा । देवदत्तः पचति, देवदत्तेन पच्यते तण्डुलः, इत्यादौ कर्तृकर्मणोर्नाख्यातार्थत्वम् । किं तु तद्गतैकत्वादीनामेव । तयोराक्षेपादेव लाभः । प्रजयतीत्यादौ धातोरेव प्रकर्षे**

---

## नीलकण्ठप्रकाशिका.

शक्तिर्वक्तव्येत्यत आह—**रथो गच्छतीत्यादाविति** ॥ व्यापारे अनुकूलत्वोत्कीर्तनं तु तेन सम्बन्धेन व्यापरि गमनस्यान्वयलाभाय । नव्याः पुनः गच्छतीत्यत्राख्यातस्य जानातीत्यादाविव आश्रयत्वे निरूढलक्षणा । न चाश्रयतासम्बन्धेनैव प्रथमान्तार्थे गमनादेरन्वयेन निर्वाहे आश्रयत्वे निरूढलक्षणाकल्पनं निरर्थकमिति वाच्यम् । नामार्थयोरिव धात्वर्थनामार्थयोरभेदातिरिक्तसम्बन्धेनान्वयस्याव्युत्पन्नत्वात्तत्र तथान्वयासंभवात् । स्तोकं पचतीत्यादौ स्तोकादेर्धात्वर्थे पाकेऽन्वयादभेदातिरिक्तेति ध्येयम् । वैयाकरणमतं निराचष्टे—**देवदत्त इति** ॥ **नाख्यातार्थत्वमिति** ॥ आख्यातस्य कर्त्रादौ शक्तिस्वीकारेऽनन्तकृत्यादेः शक्यतावच्छेदकत्वमङ्गीकर्तव्यम् । कृत्यादौ शक्तिस्वीकारे तु कृतित्वादिजातेः शक्यतावच्छेदकत्वाल्लाघवमिति भावः । **तद्गतैकत्वादीनामेवेति** ॥ आख्या-

## नृसिंहप्रकाशिका.

अप्रामाणिकमिति वैयाकरणाक्षेप वारयति—**रथो गच्छतीत्यादाविति**॥इत्यादिवाक्यघटकाख्यातस्येत्यर्थः । आदिना घटो नश्यति इत्यादेः परिग्रहः । **अनुकूलव्यापार इति** ॥ तादृशव्यापारादावित्यर्थः । गमनानुकूलविलक्षणसंयोगात्मकव्यापारादाविति यावत् । आदिपदात् प्रतियोगित्वादेः परिग्रहः । **लक्षणेति** ॥ तथाचाख्यातस्याश्रयरूपकर्तृशक्तत्वे अनन्तानां आश्रयत्वरूपकर्तृत्वानां शक्यतावच्छेदकत्वे गौरवं कृतित्वस्य शक्यतावच्छेदकत्वे लाघवमिति गौरवज्ञानसहकृतलाघवज्ञानात् कृतित्वावच्छिन्नशक्तिसिद्धौ प्रामाणिकप्रयोगान्यथानुपपत्त्या मुख्यार्थबाधप्रतिसन्धानस्थले लक्ष्यार्थबोधस्य सर्वमतसिद्धत्वात् प्रकृतेऽप्याख्यातस्य व्यापारादौ लक्षणां स्वीकृत्य गमनानुकूलव्यापाराश्रयो रथ इत्याकारकशाब्दबोधसंभवात् वह्निना सिञ्चतीति वाक्यवत् उक्तवाक्यानां नायोग्यत्वप्रसक्तिरिति भावः । ननु कर्तृकर्मलकारयोः कर्तृकर्मशक्तत्वानङ्गीकारे 'अनभिहित' इत्यधिकारीयेण 'कर्तृकरणयोस्तृतीया कर्मणि द्वितीया' इत्यनुशासनेन चैत्रः पचतीत्यादौ चैत्रादिपदोत्तरं तृतीयापत्तिः । आख्यातेन कर्तुरनभिधानात् । एवं पच्यते तण्डुल इत्यादौ तण्डुलादिपदोत्तरं द्वितीयापत्तिः । आख्यातेन कर्मानभिधानात् इत्यत आह—**देवदत्त इत्यादि** ॥ **इत्यत्रेति** ॥ इत्यादावपीत्यर्थः । घटकत्वं सप्तम्यर्थः । तस्य आख्यातेऽन्वयः। तथाचेत्यादिवाक्यघटकाख्यातार्थत्वं न कर्तृकर्मणोरिति फलितार्थः । **तद्गतैकत्वादीनामेवेति** ॥ कर्तृकर्मगतैकत्वादीनामेवेत्यर्थः । आदिपदात् उभौ पचतः, बहवः पचन्ति, द्वौ पदार्थौ पच्येते, बहवः पदार्थाः पच्यन्ते इति वाक्यघटकद्विवचनाद्यन्तपद-

## नीलकण्ठप्रकाशिका.

तार्थत्वमिति पूर्वेणान्वयः । आदिना कृत्यादिपरिग्रहः । ननु तर्हि कर्तृकर्मणोः कथं लाभ इत्यत आह—**तयोरिति** ॥ **आक्षेपादेवेति** ॥ परमतेन । स्वमते तु प्रथमान्तपदेनैव तल्लाभात् । 'देवदत्तः तण्डुलं पचति' इत्यत्र 'तण्डुलकर्मकपाकानुकूलकृतिमान्देवदत्तः' इत्यन्वयबोधः । 'देवदत्तेन पच्यते तण्डुलः' इत्यत्र तु देवदत्तसमवेतकृतिजन्यपाक-

## नृसिंहप्रकाशिका.

प्रतिपाद्यकर्तृकर्मनिष्ठद्वित्वादीनां परिग्रहः। तथा चानभिहित इत्याद्यधिकारसूत्रस्य आख्यातेन कर्तृकर्मगतसंख्यायामनभिहितायां इत्यर्थः । तथाच देवदत्तः पचति तण्डुलः पच्यत इत्यादौ आख्यातेन कर्तृकर्मगतैकत्वादेः अभिधानात् अनभिहिताधिकारीयकर्तृकरणयोस्तृतीया इत्यादिसूत्रस्याप्रवृत्त्या तादृशवाक्यघटकदेवदत्तादिपदोत्तरं न तृतीयाद्यापत्तिरिति भावः । ननु तर्हि देवदत्तः पचतीत्यादिवाक्यात् कर्तृत्वकर्मत्वाभ्याम् कर्तृकर्मबोधानुपपत्तिः, आख्यातेन कर्त्राद्यनुपस्थितेरित्यत आह—**तयोरिति** ॥ कर्तृकर्मणोरित्यर्थः । **आक्षेपादेवेति** ॥ प्रथमान्तकर्तृकर्मवाचकपदसमभिव्याहारादेवेत्यर्थः । **लाभ इति** ॥ कर्तृत्वकर्मत्वाभ्यां शाब्दबोध इत्यर्थः । भवतीति शेषः । तथाच नोक्तानुपपत्तिरिति भावः । इदमुपलक्षणम् । अनभिहित इत्यधिकारस्याख्यातेन कर्तृत्वाद्यनभिहिते सतीत्यर्थः। एवं च देवदत्तः पचतीत्यादिवाक्यघटकाख्यातेन कृत्यादिकर्तृत्वाद्यभिधानात् तादृशाधिकारीयतृतीयादिविधायक-सूत्रस्याप्रवृत्त्या न चैत्रतण्डुलादिपदोत्तरं तृतीयाद्यापत्तिः । लःकर्मणीत्यादिसूत्रघटकतयाऽनुसन्धीयमानकर्तरीत्यत्र कर्मणीत्यत्र च कर्तृकर्मपदयोः कर्तृत्वकर्मत्वार्थकतया कर्तृत्वकर्मत्व-वाचको लकार इत्यर्थः । तथा च यादृशचैत्रादिपदसाकाङ्क्षः यादृशतण्डुलादिपदसाकाङ्क्षो वा लकारः कर्तृत्वकर्मत्ववाचकः तादृशचैत्रतण्डुलादिपदोत्तरं प्रथमैव। यादृशचैत्रादिपदसाकाङ्क्षो यादृशतण्डुलादिपदसाकाङ्क्षो वा लकारः न तादृशः तादृशचैत्रादिपदोत्तरं तृतीयैव तादृशतण्डु-लादिपदोत्तरं द्वितीयैवेति अनभिहित इत्याधिकारीयस्य कर्तरि तृतीया कर्मणि द्वितीयेति सूत्रस्यार्थ इति न किञ्चिदनुपपन्नमित्यपि बोध्यम् । एतेनानभिहित इत्यधिकारस्याख्यातेन कर्त्रादिगतसंख्यायामनभिहितायामित्यर्थकत्वे लःकर्मणीत्यादिसूत्रस्थस्य कर्तृकर्मलकार इत्यस्यापि कर्तृकर्मगतसंख्यावाचको लकार इत्यर्थः अवश्यं स्वीकार्यः । अन्यथाऽधिकार-सूत्रस्य उक्तार्थकत्वानुपपत्तेः । एवञ्च एकश्चैत्रः पचति एकः शाकः पच्यत इत्यादौ आख्यातेन चैत्रशाकगतैकत्वसंख्याभिधाने एकत्वस्यैव उद्देश्यतावच्छेदकतया उद्देश्यतावच्छेद-कविधेययोरैक्यात् कर्ता करोतीति वाक्यवदप्रामाण्यापत्त्या आख्यातैकवचनस्य साध्यत्वा-र्थकत्वं अङ्गीकृत्यैव तादृशवाक्यस्य प्रामाण्यं व्यवस्थापनीयम् । इत्थं च एकः पचति एकः पच्यत इत्यादौ आख्यातेन कर्त्रादिगतसंख्याभिधानात् कर्तृकर्मवाचकैकपदोत्तरं तृतीया-द्वितीययोरापत्तिः लः कर्मणीत्यादिसूत्रघटककर्तृकर्मपदयोरनुपस्थितकर्त्रादिगतसंख्यालाक्ष-णिकत्वापत्तिश्चेति दूषणं प्रत्युक्तम् । इदानीं प्रसंगसंगत्या उपसर्गाणां द्योतकत्वं नैयायिक-

शक्तिः । उपसर्गाणां द्योतकत्वमेव न तत्र शक्तिः । पदार्थतत्त्वज्ञानस्य परमप्रयोजनं मोक्षः । तथा हि 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुत्या श्रवणादीनां आत्मसाक्षात्कारहेतुत्वबोधनात्

---

## नीलकण्ठप्रकाशिका.

कर्मीभूतस्तण्डुलः इति शाब्दबोधः । न च 'देवदत्तः पचति' इत्यत्र तृतीया, 'तण्डुलः पच्यते' इत्यत्र च द्वितीया स्यात् । तत्र कर्तृकर्मणोराख्यातेनानभिधानादिति वाच्यम् । अनभिहिते कर्तृत्वे तृतीयायाः तादृशे च कर्मत्वे द्वितीयाया विधानेनादोषादिति ध्येयम् । उपसर्गाणां वाचकत्वमतं निरस्यति—**प्रजयतीत्यादाविति** ॥ ननु धातुनैव प्रकर्षादेर्बोधे प्रशब्दादेर्वैयर्थ्यमत आह—**उपसर्गाणामिति** ॥ **द्योतकत्वं** तात्पर्यग्राहकत्वम् । तेन 'इतरनिपातानां वाचकत्वम्' इति सूचितम् । तथाहि—एवकारस्यायोगव्यवच्छेदोऽर्थः 'शङ्खःपाण्डुर एव' इत्यादौ, अन्ययोगव्यवच्छेदश्च 'पार्थ एव धनुर्धरः' इत्यादौ, इत्यादिकं बहुतरमूहनीयम् । प्रेक्षावत्प्रवृत्तये सकलकामनाविषयमुक्तिप्रयोजनकतां ग्रन्थस्य दर्शयति—**पदार्थज्ञानस्येति** ॥ पदार्थतत्त्वज्ञानस्येत्यर्थः । अन्येषामवान्तरप्रयोजानानामपि सद्भावादाह—**परमेति** ॥ श्रुतेरयमर्थः—अरे मुमुक्षुणात्मा द्रष्टव्यः मुमुक्षोः आत्मदर्शनमिष्टसाधनमिति यावत् । आत्मदर्शनोपायं दर्शयति—**श्रोतव्य इत्यादिना** ॥ आर्थ-

## नृसिंहप्रकाशिका.

मतसिद्धं सोपपत्तिकं व्यवस्थापयति—**प्रजयतीत्यादाविति** ॥ आदिना पराजयत इत्यादेः परिग्रहः । **धातोरेवेति** ॥ जिधातोरेवेत्यर्थः । एवकारेण प्रेत्युपसर्गस्य प्रकर्षे शक्तत्वं व्यवच्छिद्यते । **प्रकर्षे शक्तिरिति** ॥ प्रकर्षेऽपि शक्तिरित्यर्थः । प्रकृष्टजये शक्तिरिति यावत् । ननु प्रादेर्निरर्थकत्वे जयतीत्येव प्रयोक्तव्यम् न च प्रजयतीति व्यर्थशब्दघटितत्वादित्याशङ्कां परिहरति—**उपसर्गाणामिति** ॥ **द्योतकत्वमेवेति** ॥ धातोर्विशेषविशिष्टार्थबोधेच्छयोच्चरितत्वरूपतात्पर्यग्राहकत्वमेवेत्यर्थः । एवकारव्यवच्छेद्यं स्पष्टयति—**न तत्र शक्तिरिति** ॥ उपसर्गे निरूपकतासंबन्धेन शक्तिर्नाङ्गीक्रियत इत्यर्थः । तथा चोपसर्गाणां द्योतकत्वस्वीकारेणैव सामञ्जस्ये तेषामपि शक्तिर्न कल्प्यते अन्यलभ्यत्वादुपसर्गज्ञानानां तज्जन्यपदार्थोपस्थितीनां च शाब्दबोधहेतुत्वकल्पनापत्त्या गौरवात् मानाभावाच्च । अत एव 'उपसर्गेण धात्वर्थो बलादन्यत्र नीयते । प्रहाराहारसंहारविहारपरिहारवत्॥' इत्युपसर्गाणां द्योतकत्वव्यवस्थापकहरिकारिकापि संगच्छते । इदानीं ननु पदार्थज्ञानजनकन्यायशास्त्रस्य परमपुरुषार्थत्वाभावात् तर्काप्रतिष्ठानात् इति व्याससूत्रेण तर्काध्ययनस्य निषिद्धत्वप्रतिपादनाच्च न्यायशास्त्रं नारम्भणीयमिति शङ्कां दोषद्वयं निरस्य परिहरति—**पदार्थज्ञानस्येति** ॥ न्यायशास्त्रप्रतिपाद्यार्थनिर्णयस्येत्यर्थः । **परमप्रयोजनं मोक्ष इति** ॥ मोक्ष एव परमप्रयोजनमित्यर्थः । मोक्षफलकत्वमुपपादयति—**तथा हीत्यादिना** ॥ **इति श्रुत्येति** ॥ इत्याकारकश्रुतेः अग्निहोत्रं जुहोति यवागूं पचतीत्यत्रेव पा-

श्रुत्या देहादिविलक्षणात्मज्ञाने सत्यप्यसंभावनानिवृत्तेर्वाक्यार्थानुसंधानरूपमननसाध्यत्वात् । मननोपयोगिपदार्थनिरूपणद्वारा शास्त्रस्यापि मोक्षोपयोगित्वम् । तदनन्तरं श्रुत्युपदिष्टयोगविधिना निदिध्यासने कृते तदनन्तरं देहा-

---

## नीलकण्ठप्रकाशिका.

क्रमेण शाब्दक्रमस्त्यक्तो भवति 'अग्निहोत्रं जुहोति' 'यवागूं पचति' इत्यादिवत् । **असभावनानिवृत्तेरिति** ॥ अप्रामाण्यज्ञाननिवृत्तेरित्यर्थः । **वाक्यार्थानुसंधानेति** ॥ युक्तिभिरनुचिन्तनं मननम् । तच्च आत्मन इतरभिन्नत्वेनानुमानम् । तच्च भेदप्रतियोगीतरज्ञानसाध्यम् । तदर्थं सकलपदार्थनिरूपणमिति । मोक्षोपयोगित्वं विशदयति—**तदनन्तरमिति** ॥ मननानन्तरमित्यर्थः । श्रुतस्यार्थस्य नैरन्तर्येण अनुसंधानरूपनिदिध्यासनस्य उपायमाह—**योगविधिनेति** ॥ इन्द्रियाणि विषयेभ्यः प्रत्याहृत्य इन्द्रियेभ्यो मनः प्रत्याहृत्य साक्षात्कर्तव्ये वस्तुनि मनःप्रणिधानं योगः । **तदनन्तरं** निदिध्यासनानन्तरम् ।

## नृसिंहप्रकाशिका.

ठक्रमं परित्यज्य अर्थक्रमाविवक्षयेत्यर्थः । **श्रवणादीनामिति** ॥ श्रवणादित्रयाणामित्यर्थः । **साक्षात्कार इति** ॥ आत्मसाक्षात्कार इत्यर्थः । **हेतुत्वबोधनादिति** ॥ साक्षात् परम्परया वा हेतुत्वप्रतिपादनादित्यर्थः । उक्तार्थमेवोपपादयति—**श्रुत्येति** ॥ अशरीरं वा वसन्तमित्यादिश्रुत्या अचक्षुः अश्रोत्रं तदपाणिपादमित्यादिश्रुत्या चेत्यर्थः । **देहादिविलक्षणेत्यादि** ॥ देहेन्द्रियादिभिन्नत्वप्रकारकात्मविशेष्यकशाब्दबोधे जात इत्यर्थः । **असंभावनानिवृत्तेरिति** ॥ उत्पन्नशाब्दबोधधर्मिकाप्रामाण्यज्ञानानुत्पत्तेरित्यर्थः । अप्रामाण्यज्ञानानास्कन्दितश्रवणस्यैवात्मदर्शनोपयोगित्वादिति भावः । **युक्त्यनुसन्धानरूपेति** ॥ साधकबाधकप्रमाणोपन्यासानन्तरकालीनं यत् प्रकृतहेतुविशेष्यकाबाधितत्वादिज्ञानं तत्प्रयोज्यज्ञानरूपेत्यर्थः । व्यतिरेकन्यायघटकप्रतिज्ञादिपञ्चवाक्याधीनशाब्दबोधोत्तरकालीनदेहेन्द्रियादिभिन्नत्वरूपसाध्यनिरूपितव्याप्तिप्रकारतानिरूपित-ज्ञानाश्रयत्वादिरूपहेतुप्रकारतानिरूपितात्मविशेष्यताशालिमानसपरामर्शजन्यज्ञानरूपेति यावत् । **मननसाध्यत्वादिति** ॥ अनुमितिसत्ताधीनसत्ताकत्वादित्यर्थः । तथा चात्मनो देहाद्यभिन्नत्वे देहादिवत् आत्मनोऽनित्यत्वापत्त्या अविनाशी वाऽरेऽयमात्मेत्याद्याकारिकायाः आत्मनो नित्यत्वप्रतिपादकश्रुतेः अप्रामाण्यापत्तिरित्याद्याकारकयुक्तिभिः आत्मनो देहेन्द्रियादिभिन्नत्वसाध्यकज्ञानाश्रयत्वादिरूपव्यतिरेकिहेतोरबाधितत्वज्ञानोत्पत्त्या तद्धेतुकात्मविशेष्यकनिरुक्तसाध्यकानुमितौ अबाधितत्वविषयकत्वनिश्चयेनाप्रामाण्यज्ञानानुदयात् तत्समानविषयकत्वेन पूर्वोत्पन्ने शाब्दबोधेऽप्यप्रामाण्यज्ञानं नोत्पत्तुमर्हतीति भावः । **मननोपयोगीति** ॥ मननप्रयोजकेत्यर्थः । **पदार्थनिरूपणद्वारेति** ॥ पदार्थज्ञानद्वारेत्यर्थः । पदार्थानिरूपणे पक्षज्ञानासम्भवात् भेदप्रतियोगिदेहेन्द्रियादिरूपसकलपदार्थज्ञानेन साध्यज्ञानासंभवाच्च मननमेव न संभवतीति भावः । **मोक्षोपयोग इति** ॥ न्याय-

दिविलक्षणात्मसाक्षात्कारे सति देहादावहमित्यभिमानरूपमिथ्याज्ञाननाशे दोषाभावात् प्रवृत्त्यभावे धर्माधर्मयोरभावे जन्माभावे पूर्वधर्माधर्मयोरनुभवेन नाशे चरमदुःखध्वंसलक्षणमोक्षो जायते । ज्ञानमेव मोक्षसाधनम् । मिथ्याज्ञाननिवृत्तेर्ज्ञानमात्रसाध्यत्वात् । 'तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था

---

## नीलकण्ठप्रकाशिका.

**मिथ्याज्ञाननाशे** वासनासहितमिथ्याज्ञाननाशे । **दोषः** रागादिः । **ज्ञानमिति** ॥ एव-

## नृसिंहप्रकाशिका.

स्येत्यादिः । मोक्षफलकत्वमित्यर्थः । **तदनन्तरमिति** ॥ मननानन्तरमित्यर्थः । **श्रुत्युपदिष्टेत्यादि** ॥ श्रुतिबोधितयोगमार्गेण इन्द्रियनिग्रहसंपादनेनेत्यर्थः । **निदिध्यासने कृत इति** ॥ अविच्छिन्नतैलधारावत् श्रवणादिसमानाकारकानवरतात्मानुसन्धाने कृते सतीत्यर्थः । **तदनन्तरमिति** ॥ निरुक्तानुसन्धानानन्तरमित्यर्थः । **देहादिविलक्षणेत्यादि** ॥ देहादिभिन्नत्वप्रकारकात्मविशेष्यकसाक्षात्कारे सतीत्यर्थः । **देहादौ अहमित्यभिमानरूपेति** ॥ देहादिविशेष्यकाभेदसंबन्धेनात्मप्रकारकभ्रमरूपेत्यर्थः । **मिथ्याज्ञाननाशे सतीति** ॥ प्रवर्तकज्ञाननाशे सतीत्यर्थः । **दोषाभावादिति** ॥ रागद्वेषमोहानुत्पत्तेरित्यर्थः । **प्रवृत्त्यभाव इति** ॥ प्रवृत्त्यनुत्पत्तावित्यर्थः । **धर्माधर्मयोरभावादिति** ॥ धर्माधर्मयोरनुत्पत्तेरित्यर्थः । प्रवृत्त्यनुत्पत्तौ प्रवृत्त्यधीनविहितकर्मनिषिद्धकर्मणोरनुत्पत्तेरित्यर्थः । **जन्माभाव इति** ॥ आद्यशरीरप्राणसंयोगात्मकजन्मानुत्पत्तावित्यर्थः । कार्यमात्रं प्रति अदृष्टस्य हेतुत्वादिति भावः । **पूर्वधर्माधर्मयोरिति** ॥ प्रारब्धरूपादृष्टस्येत्यर्थः । **अनुभवेन नाश इति** ॥ अनुभवेनैव नाशानन्तरमित्यर्थः । प्रारब्धस्य भोगैकनाश्यत्वादिति भावः । **चरमदुःखध्वंसलक्षणमोक्षो जायत इति** ॥ न च आत्मसाक्षात्कारानन्तरं युगपदेव मिथ्याज्ञानादेः चरमदुःखस्य च नाशोऽस्तु क्रमिकनाशे प्रमाणाभावात् क्षणविलम्बकल्पने गौरवाच्चेति वाच्यम् । दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानां उत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति गौतमसूत्रस्यैव क्रमिकनाशे प्रमाणत्वेन क्षणविलम्बकल्पनागौरवस्यादोषत्वादिति । ननु मिथ्याज्ञाननाशादेरपि मोक्षप्रयोजकत्वात् जन्माभावस्य साक्षात् तद्धेतुत्वाच्च कथं ज्ञानस्यैव मोक्षसाधनत्वमित्याशङ्कां परिहरति—**ज्ञानमिति** ॥ आत्मविशेष्यकदेहेन्द्रियादिभिन्नत्वप्रकारकसाक्षात्कार एवेत्यर्थः । तत्र हेतुमाह—**मिथ्याज्ञाननिवृत्तेरिति** ॥ निरुक्ताभिमानविशेषरूपमिथ्याज्ञाननाशस्येत्यर्थः । **ज्ञानमात्रसाध्यत्वादिति** ॥ निरुक्तापरोक्षज्ञानमात्रजन्यत्वादित्यर्थः । तथा च मिथ्याज्ञानस्यैव साक्षात् परंपरया वा दोषादिदुःखान्तसाधनत्वात् तन्नाशमात्रेण सर्वेषां नाशो भवतीति तन्नाशस्यैव तत्त्वज्ञानमात्रसाध्यत्वात् तदभिप्रायेण तत्त्वज्ञानस्यैव मुक्तिहेतुत्वमभिहितमिति भावः । तत्त्वज्ञानस्य मोक्षहेतुत्वे युक्तिमुक्त्वा श्रुतिमप्याह—**तमेवेति** ॥ तं परमात्मानं विदित्वैव

विद्यतेऽयनाय' इति श्रुत्या साधनान्तरनिषेधाच्च । ननु 'तत्प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामुने' इति कर्मणो मोक्षसाधनत्वस्मरणाज्ज्ञानकर्मणोः समुच्चय इति चेन्न । "नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् । ज्ञानं च विमलीकुर्वन्नभ्यासेन च पाचयेत् ॥ अभ्यासाच्च क्वचिज्ज्ञानात्कैवल्यं लभते नरः ।" इत्यादिना कर्मणो ज्ञानसाधनत्वप्रतिपादनाज्ज्ञानद्वारैव कर्मणो मोक्षसाध-

---

## नीलकण्ठप्रकाशिका.

कारेण कर्मव्यवच्छेदः । **मिथ्याज्ञानेति** ॥ शुक्त्यादौ रजतभ्रमो विशेषदर्शनेनैव यथा निवर्तते तथा प्रकृतेऽपीति भावः । **'कैवल्यं लभते नरः' इत्यादिनेति** ॥ आदिना 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ।' इत्यादिश्रुतेः 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा" इत्यादिस्मृतेश्च संग्रहः । **ज्ञानद्वारैवेति** ॥ अत्रायं क्रमः—निष्कामनया

## नृसिंहप्रकाशिका.

तत्त्वज्ञानानन्तरमेवेति यावत् । मृत्युं संसाररूपनरकप्रापकं अत्येति अतिक्रामति । तन्नाशवान् भवतीति यावत् । इति प्रथमश्रुतेरर्थः । अयनाय मोक्षाय अन्यः पन्थाः तत्त्वज्ञानभिन्नोपायः न विद्यते नास्तीति द्वितीयश्रुतेरर्थः । **साधनान्तरनिषेधाच्चेति** ॥ मुक्तिं प्रति तत्त्वज्ञानान्यस्यासाधारणकारणत्वनिषेधप्रतिपादनाच्चेत्यर्थः । चकारः पूर्वोक्तयुक्तिसमुच्चायकः । ज्ञानकर्मसमुच्चयवादी शङ्कते—**तत्प्राप्तिहेतुरिति** ॥ मोक्षप्राप्तिहेतुरित्यर्थः । मोक्षहेतुरिति यावत् । **विज्ञानमिति** ॥ तत्त्वज्ञानमित्यर्थः । **कर्म चेति** ॥ भगवदाराधनतीर्थयात्रादिरूपकर्म चेत्यर्थः । **उक्तमिति** ॥ इति जनकादिभिरुक्तमित्यर्थः । **इतीति** ॥ इत्याकारकव्यासवचनेनेत्यर्थः । **कर्मण इति** ॥ कर्मणोऽपीत्यर्थः । **स्मरणादिति** ॥ प्रतिपादनादित्यर्थः । **ज्ञानकर्मणोस्समुच्चय इति** ॥ तादृशोभयघटितसमुदायत्वावच्छिन्न एवेत्यर्थः । मुक्तिसाधनमिति शेषः । **नित्यनैमित्तिकं कर्मेति** ॥ भगवदाराधनादिकर्म तीर्थयात्रादिकं कर्म चेत्यर्थः । **दुरितक्षयः** ॥ पापनाशद्वारा चित्तशुद्धिकरमित्यर्थः । **कुर्वाण इति** ॥ तादृशकर्म कर्तेत्यर्थः । **ज्ञानञ्च विमलीकुर्वन्निति** ॥ श्रुतिवाक्यैरात्मविशेष्यकदेहेन्द्रियादिभिन्नत्वप्रकारकशाब्दबोधं संपाद्य तादृशशाब्दबोधं मननेनाप्रामाण्यज्ञानानास्कन्दितं कृत्वा चेत्यर्थः । **अभ्यासेन चेति** ॥ योगशास्त्रोक्तविधिना इन्द्रियनिग्रहपूर्वकासकृत्स्मरणेनेत्यर्थः । **वारयेदिति** ॥ ब्रह्मातिरिक्ताविशेष्यकं यथा भवति तथा कुर्यादित्यर्थः । **अभ्यासादिति** ॥ निरुक्तासकृत्स्मरणादित्यर्थः । **क्वचिद्ज्ञानमिति** ॥ किञ्चिन्निष्ठप्रकारतानिरूपितात्मान्यविशेष्यताकत्वशून्यानिरुक्तापरोक्षज्ञानवानित्यर्थः । **इत्यादिनेति** ॥ इत्यादिव्यासवचनेनेत्यर्थः । आदिना नित्यनैमित्तिकं कर्म ज्ञानमुत्पाद्य शाम्यतीत्यादेः परिग्रहः । **ज्ञानसाधनत्वप्रतिपादनादिति** ॥ ज्ञानसाधनत्वस्यैव प्रतिपादितत्वादित्यर्थः ।

**नत्वं न साक्षात् । तस्मात्पदार्थतत्त्वज्ञानस्य मोक्षः परमप्रयोजनमिति सर्वं रमणीयम् ॥**

इति श्रीमदन्नम्भट्टोपाध्यायविरचिता तर्कसंग्रहदीपिका समाप्ता ॥

---

## नीलकण्ठप्रकाशिका.

भगवत्प्रीत्यर्थं कृतैः कर्मभिर्दुरितक्षयरूपात्मशुद्धिर्भवति । ततो विषयेषु वैराग्यम् । ततः श्रवणादौ प्रवृत्तिः । ततः श्रवणादिक्रमेण तत्त्वज्ञानोत्पत्तौ पूर्वोक्तमिथ्याज्ञाननाशादिक्रमेण मोक्षनिष्पत्तिः । अधिकमस्मदीयाचिन्तामणिव्याख्यायामनुसन्धेयं तर्ककर्कशविचारचातुरीधुरीणैरिति ।

कौण्डिन्यगोत्रसंभूतो नीलकण्ठाख्यपण्डितः ।
कृतिमार्पिपदेतस्मै चन्द्रचूडाय मङ्गलम् ॥

इति श्रीमत्पाणेवंशपयःपारावारराकाचन्द्रायमाणपदवाक्यप्रमाणपारावारीणश्रीरामभट्टतनूजश्रीनीलकण्ठभट्टविदुषा विरचितः तर्कसंग्रहदीपिकाप्रकाशः समाप्तः ॥

---

## नृसिंहप्रकाशिका.

**ज्ञानद्वारैवेति** ॥ तत्प्राप्तिहेतुर्विज्ञानमित्यादिवचनमपीत्यादिः । **मोक्षसाधनमिति** ॥ प्रतिपादयतीति शेषः । तादृशवचनस्थकर्मचोक्तमित्यस्य ज्ञानहेतुतया कर्मचोक्तमित्यर्थकरणादिति भावः । उपसंहरति—**तस्मादिति** ॥ उक्तयुक्तेरित्यर्थः । **पदार्थतत्त्वज्ञानादिति** ॥ पदार्थानां यथार्थज्ञानादित्यर्थः । प्रयोज्यत्वं पञ्चम्यर्थः । तस्य मोक्षे अन्वयः । **मोक्ष इति** ॥ न्यायशास्त्रस्येत्यादिः । मोक्ष एवेत्यर्थः । **परमप्रयोजनमिति** ॥ परमपुरुषार्थ इत्यर्थः । **इति सर्वं रमणीयमिति** ॥ इतिरीत्या न्यायशास्त्रं पूर्वोक्तं सर्वं दोषरहितमित्यर्थः । तथाचोक्तरीत्या न्यायशास्त्रस्य मोक्षफलकत्वप्रतिपादनात् श्रवणानन्तरमननोपयोगिपदार्थज्ञानजनकतर्कस्य श्रुत्यनुगुणतर्कत्वेन श्रुतिमतस्तर्कोऽनुसन्धीयतामिति वचनानुगृहीतत्वात् तर्काप्रतिष्ठानादिति निषेधशास्त्रस्य बौद्धपरत्वमावश्यकम् । इत्थं च वेदान्तशास्त्रं श्रवणोपयोगि । न्यायशास्त्रं मननोपयोगि । योगशास्त्रं निदिध्यासनोपयोगीति परम्परया त्रयाणां अविशेषेण मोक्षफलकत्वं निराबाधमिति न किञ्चिदनुपपन्नमिति दीपिकाकारस्य निगूढाभिप्रायः ॥

इति महोपाध्यायश्रीबालकृष्णतर्कालंकारभट्टाचार्यसद्गुरुप्रसादलब्धविद्यावैभवश्रीमदारूरवंशपयःपारावारराकासुधाकररायनरसिंहपण्डितकृतदीपिकाप्रकाशः संपूर्णः ॥

भवति समथसमाजग्रस्तोऽपि सुदुर्निरूपो यः ।
अथ तमर्थसमाजग्रस्तपदार्थं निरूपयिष्यामः ॥

असति प्रबलप्रमाणे अर्थसमाजग्रस्तत्वात् नीलेतरघटत्वादिकं न कार्यतावच्छेदकमिति तावत्सार्वजनीनम् । तत्र किं अर्थसमाजग्रस्तत्वम् । न तावत्स्वावच्छिन्नजनकत्वाभिमतसामग्रीभिन्नसामग्रीप्रयोज्यधर्मघटितत्वं तत् । नीलेतरघटत्वावच्छिन्नजनकत्वेनाभिमता नीलेतरकपालत्वावच्छिन्नघटितसामग्री तद्भिन्ना तत्प्रतियोगिकपारिभाषिकभेदवती वा शुक्लरूपादिघटितसामग्री शुद्धकपालत्वावच्छिन्नघटितसामग्री च, तत्प्रयोज्यं नीलेतरत्वं घटत्वं च । तद्घटितत्वात्तस्य अर्थसमाजग्रस्तत्वम् । भेदस्य व्याप्यवृत्तित्वे तु द्वितीयसामग्रीपदानिवेशेन नीलरूपघटितसामग्र्यभावप्रयोज्यधर्मघटितत्वात्तदुपपादनीयमिति युक्तम् । घटत्वावच्छिन्नजनकत्वाभिमतां रासभादिघटितसामग्रीमादाय तद्भिन्नकपालादिघटितसामग्रीप्रयोज्यस्वात्मकधर्मघटितत्वेन घटत्वादावतिप्रसङ्गात् । घटकधर्मे स्वभिन्नत्वोक्तावपि उक्तरीत्या अभिमानमादाय जन्यविशिष्टबुद्धित्वपर्वतोद्देश्यकवह्निविधेयकानुमितित्वादेः नानाधर्मघटितधर्ममात्रस्य अर्थसमाजग्रस्तताप्रसङ्गात् । नापि तद्धर्मावच्छिन्नाघटितसामग्रीप्रयोज्यधर्मः तद्धर्मावच्छिन्नं प्रत्यर्थसमाजग्रस्ततया न कार्यतावच्छेदक इति युक्तम् । कपालत्वावच्छिन्न प्रत्यर्थसमाजग्रस्ततया घटत्वं न कार्यतावच्छेदकमिति व्यवहारापत्तेः । अर्थसमाजग्रस्तत्वे स्वसंबन्धिकत्वस्याप्रामाणिकत्वाच्च । अत्र ब्रूमः । सामग्रीद्वयप्रयोज्यत्वं तत् । भवति च नीलेतरघटत्वं विशेषणविशेष्यांशप्रयोजकसामग्रीद्वयप्रयोज्यमिति तथा । ननु सामग्रीत्वं न किञ्चिद्धर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयपर्याप्तसमुदायत्वं दण्डादित्रिकचक्रादित्रिकं चादाय घट्कारणप्रयोज्यं घटत्वादावर्थसमाजग्रस्तत्वापत्तेः । अत एव न स्वाव्यवहितपूर्वक्षणवृत्तित्वसंबन्धेन कार्यविशिष्टत्वं तत् । कारणद्वयप्रयोज्यत्वमादायैवातिप्रसङ्गादिति चेन्न । किञ्चिद्धर्मावच्छिन्नकार्यतानिरूपितकारणतात्वावच्छिन्नव्यापकसमुदायत्वं तत् । तथाविधसमुदायत्वद्वयनिष्ठप्रयोजकतावच्छेदकताकत्वं अर्थसमाजग्रस्तत्वम । नीलरूपघटितसामग्र्यभाववृत्तिसमुदायत्वस्य किञ्चिद्धर्मावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकत्वाभावादप्रसङ्ग इति नाशङ्कनीयम् । कार्यतास्थाने प्रयोज्यतायाः निवेश्यत्वात् स्वावच्छिन्नाधिकरणक्षणाव्यवहितोत्तरक्षणत्वव्यापककिञ्चिद्धर्मावच्छिन्नाधिकरणताप्रयोजकतावच्छेदकं यत्समुदायत्वद्वयं तद्घटकप्रत्येकावच्छिन्नप्रयोज्यताद्वयनिरूपकत्वं वा सामग्रीद्वयप्रयोज्यत्वम् । युक्तं च सर्वदाप्यर्थसमाजग्रस्तत्वपदार्थस्य सामग्रीद्वयप्रयोज्यस्वरूपत्वं । अर्थः सामग्री समाजः तत्समुदायः तद्ग्रस्तं तत्प्रयोज्यमिति तदर्थात् । स्वावच्छिन्ननिरूपितप्रयोजकतानवच्छेदकावच्छिन्नप्रयोज्यधर्मघटितत्वात्मकं सामग्र्यन्तरप्रयोज्यत्वं वा तत् । अर्थानां कारणान्तराणां समाजः समुदायः तद्ग्रस्तं तत्प्रयोज्यधर्मघटितमिति तदर्थात् इति तत्त्वं विदांकुर्वन्तु ॥

इति नावल्पाक्कम् चतुर्वेदशतक्रतु अण्णयार्यमहादेशिककटाक्षलब्धसार्वश्यैः वङ्गीपुरं सरस्वतीविग्रहंदेशिकाचार्यैः विरचितः अर्थसमाजग्रस्तपदार्थविचारः संपूर्णः ॥

# अन्वयव्यभिचारविचारः ॥

अन्वयव्यभिचारोऽसौ विबुधैरपरिष्कृतः ।
कृष्णाभिधानसुधिया प्रकटीक्रियतेतराम् ॥

कारणसत्त्वेऽपि कार्यानुत्पत्तिरन्वयव्यभिचार इत्याचक्षते । स्वसमानाधिकरणाभावप्रतियोगिकार्यकत्वन्तदर्थः । भवति च कपालाकाशसंयोगसत्त्वेऽपि कपालद्वयसंयोगशून्यकाले घटानुत्पादः । न चैवं कपालसंयोगादिष्वपि समवहितेषु दण्डसत्त्वेऽपि घटाभावादन्वयव्यभिचारः प्रसज्यते दण्डस्येति वाच्यम् । स्वेतरयावत्कारणाधिकरणत्वेन स्वाधिकरणस्य विशेषणीयत्वात् । न चैवं कपालाकाशसंयोगस्य तदनुपपत्तिः । कपालद्वयसंयोगादिघटितयावत्कारणाधिकरणे घटभावासंभवादिति वाच्यम् । स्वेतरत्वस्थाने स्वव्याप्येतरत्वस्य निवेशनीयत्वात् । कपालद्वयसंयोगस्य कपालाकाशसंयोगव्याप्यत्वात् । तदितरयावत्कारणाधिकरणे कपाले कपालद्वयसंयोगशून्यकाले घटाभावसत्त्वेनानुपपत्त्यभावात् । अत्र स्वव्याप्येतरयावत्कारणाधिकरणवृत्त्यभावप्रतियोगिकार्यकत्वमात्रस्य तथात्वे कपालद्वयसंयोगस्याप्यन्वयव्यभिचारापत्तिः । स्वात्मकं यत्स्वव्याप्यं तदितरयावत्कारणाधिकरणे कपाले स्वशून्यकाले घटाभावसत्त्वात् । अतः स्वाधिकरणत्वस्यापि निवेशनं । न चैवमपि कपालाकाशसंयोगस्य तथात्वानुपपत्तिः । तत्र स्वव्याप्यः कपालद्वयसंयोगः तदितराणि यानि करणानि दण्डादीनि । अतोऽनागततादृशयावत्कारणाधिकरणत्वस्य एकत्र बाधितत्वात् तादृशस्वाधिकरणाप्रसिद्धिरिति वाच्यम् । स्वव्याप्यतानवच्छेदकाः यावन्तः कारणतावच्छेदकाः तत्तदवच्छिन्नाधिकरणत्वस्य निवेशनीयत्वात् । तादृशदण्डत्वदियावद्धर्मावच्छिन्नाधिकरणत्वस्य एकत्राबाधितत्वात् । अथैवमपि दण्डस्यान्वयव्यभिचारापत्तिः । कपालद्वयसंयोगासमवधानवेलायामपि स्वव्याप्यतानवच्छेदककपालद्वयसंयोगाद्यवच्छिन्नानां कालिकादिना दण्डाधिकरणासत्वात् । न च स्वव्याप्यतानवच्छेदकाः यावन्तः कारणतावच्छेदकधर्मास्तत्तदवच्छिन्नकादणतावच्छेदकसंबन्धेन तत्तदवच्छिन्नाधिकरणत्वं विवक्षणीयम् । कालिकादिस्तु न तादृशसंबन्धः । किन्तु समवायादिरेवेति नानुपपत्तिरिति वाच्यम् । तथा सति कार्यमात्रे तादात्म्येन कालत्वादिना कारणतायाः स्वव्याप्यतानवच्छेदकतादृशकालत्वाद्यवच्छिन्नस्य तादृशकारणतावच्छेदकतादात्म्येन कपालाकाशसंयोगाधिकरणे असत्त्वेन तादृशसंबन्धेन तत्तद्धर्मावच्छिन्नाधिकरणाप्रसिद्ध्या कपालाकाशसंयोगस्य तथात्वानुपपत्तेरिति चेन्न । स्वव्याप्यतानवच्छेदकाः यावन्तः तद्धर्मावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकाः तत्तदवच्छिन्नकारणतावच्छेदकसंबन्धावच्छिन्नतत्तदवच्छिन्नाधेयतानिरूपिताधिकरणस्वाधिकरणवृत्त्यभावप्रतियोगितावच्छेदकतद्धर्मकत्वस्यान्वयव्यभिचाररूपतया विवक्षितत्वात्, कालत्वादेर्घटत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकत्वात् । तादृशकारणतावच्छेदका दण्डत्वादय एव निरुक्तसंबन्धेन तत्तदवच्छिन्नाधिकरणस्वाधिकरणवृत्त्यभावप्रतियोगितावच्छेदक-

# अन्वयव्यभिचारविचारः ॥

अन्वयव्यभिचारोऽसौ विबुधैरपरिष्कृतः ।
कृष्णाभिधानसुधिया प्रकटीक्रियतेतराम् ॥

कारणसत्त्वेऽपि कार्यानुत्पत्तिरन्वयव्यभिचार इत्याचक्षते । स्वसमानाधिकरणाभावप्रतियोगिकार्यकत्वन्तदर्थः । भवति च कपालाकाशसंयोगसत्त्वेऽपि कपालद्वयसंयोगशून्यकाले घटानुत्पादः । न चैवं कपालसंयोगादिष्वपि समवहितेषु दण्डसत्त्वेऽपि घटाभावादन्वयव्यभिचारः प्रसज्यते दण्डस्येति वाच्यम् । स्वेतरयावत्कारणाधिकरणत्वेन स्वाधिकरणस्य विशेषणीयत्वात् । न चैवं कपालाकाशसंयोगस्य तदनुपपत्तिः । कपालद्वयसंयोगादिघटितयावत्कारणाधिकरणे घटाभावासंभवादिति वाच्यम् । स्वेतरत्वस्थाने स्वव्याप्येतरत्वस्य निवेशनीयत्वात् । कपालद्वयसंयोगस्य कपालाकाशसंयोगव्याप्यत्वात् । तदितरयावत्कारणाधिकरणे कपाले कपालद्वयसंयोगशून्यकाले घटाभावसत्त्वेनानुपपत्त्यभावात् । अत्र स्वव्याप्येतरयावत्कारणाधिकरणवृत्त्यभावप्रतियोगिकार्यकत्वमात्रस्य तथात्वे कपालद्वयसंयोगस्याप्यन्वयव्यभिचारापत्तिः । स्वात्मकं यत्स्वव्याप्यं तदितरयावत्कारणाधिकरणे कपाले स्वशून्यकाले घटाभावसत्त्वात् । अतः स्वाधिकरणत्वस्यापि निवेशनं । न चैवमपि कपालाकाशसंयोगस्य तथात्वानुपपत्तिः । तत्र स्वव्याप्यः कपालद्वयसंयोगः तदितराणि यानि करणानि दण्डादीनि । अतोऽनागततादृशयावत्कारणाधिकरणत्वस्य एकत्र बाधितत्वात् तादृशस्वाधिकरणाप्रसिद्धिरिति वाच्यम् । स्वव्याप्यतानवच्छेदकाः यावन्तः कारणतावच्छेदकाः तत्तदवच्छिन्नाधिकरणत्वस्य निवेशनीयत्वात् । तादृशदण्डत्वदियावद्धर्मावच्छिन्नाधिकरणत्वस्य एकत्राबाधितत्वात् । अथैवमपि दण्डस्यान्वयव्यभिचारापत्तिः । कपालद्वयसंयोगासमवधानवेलायामपि स्वव्याप्यतानवच्छेदककपालद्वयसंयोगाद्यवच्छिन्नानां कालिकादिना दण्डाधिकरणासत्वात् । न च स्वव्याप्यतानवच्छेदकाः यावन्तः कारणतावच्छेदकधर्मास्तत्तदवच्छिन्नकादणतावच्छेदकसंबन्धेन तत्तदवच्छिन्नाधिकरणत्वं विवक्षणीयम् । कालिकादिस्तु न तादृशसंबन्धः । किन्तु समवायादिरेवेति नानुपपत्तिरिति वाच्यम् । तथा सति कार्यमात्रे तादात्म्येन कालत्वादिना कारणतायाः स्वव्याप्यतानवच्छेदकतादृशकालत्वाद्यवच्छिन्नस्य तादृशकारणतावच्छेदकतादात्म्येन कपालाकाशसंयोगाधिकरणे असत्त्वेन तादृशसंबन्धेन तत्तद्धर्मावच्छिन्नाधिकरणाप्रसिद्ध्या कपालाकाशसंयोगस्य तथात्वानुपपत्तेरिति चेन्न । स्वव्याप्यतानवच्छेदका यावन्तः तद्धर्मावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकाः तत्तदवच्छिन्नकारणतावच्छेदकसंबन्धावच्छिन्नतत्तदवच्छिन्नाधेयतानिरूपिताधिकरणस्वाधिकरणवृत्त्यभावप्रतियोगितावच्छेदकतद्धर्मकत्वस्यान्वयव्यभिचाररूपतया विवक्षितत्वात्, कालत्वादेर्घटत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकत्वात् । तादृशकारणतावच्छेदका दण्डत्वादय एव निरुक्तसंबन्धेन तत्तदवच्छिन्नाधिकरणस्वाधिकरणवृत्त्यभावप्रतियोगितावच्छेदक-

त्वात्। घटत्वस्य कपालाकाशसंयोगस्य तथात्वानुपपत्त्यभावात्। स्वाधिकरणवृत्त्यभावप्रतियोगिताश्रयतद्धर्माश्रयकत्वमित्यनुक्त्वा तादृशप्रतियोगितावच्छेदकतद्धर्मकत्वमित्युक्तेः नतद्धटाभावविशिष्टाभावोभयादिकमादाय कपालद्वयसंयोगस्य तथात्वापत्तिः । प्रतियोगिता च कार्यतावच्छेदकसंबन्धावच्छिन्ना ग्राह्या । तेन संबन्धान्तरेण घटाभावमादाय न तस्य तदापत्तिः । अथैवमपि संयोगेन घटत्वावच्छिन्नं प्रति समवायेन चक्रभ्रम्या हेतुतया कपालाकाशसंयोगव्याप्यतानवच्छेदकं घटत्वावच्छिन्नकारणतावच्छेदकं चक्रभ्रमित्वमपीति स्वावच्छिन्नकारणतावच्छेदकीभूतसमवायसंबन्धावच्छिन्नतदवच्छिन्नाधेयतानिरूपिताधिकरणत्वस्य कपालाकाशसंयोगाधिकरणे असत्त्वात् तद्दोषतादवस्थ्यमिति चेन्नैष दोषः प्रसज्यते । तथा हि आद्यक्षणावच्छिन्नवृत्तित्वापरपर्यायोत्पत्तिस्वस्वरूपजन्यतायां घटे विद्यमानायां तत्र द्वितीयक्षणे उत्पत्स्यमानसंयोगस्यावच्छेदकत्वासंभवात् न संयोगसंबन्धेन घटत्वावच्छिन्नं प्रति समवायेन चक्रभ्रम्या हेतुता किन्तु समवायेन घटत्वावच्छिन्नं प्रति स्वसमवायिसंयोगेन चक्रभ्रम्याः स्वसंयुक्तसंयोगेन दण्डस्य च कारणत्वम् । संयोगेन दण्डस्य कारणताप्रतिपादनपरग्रन्थानामत्रैव तात्पर्यम् । इत्थञ्च तेन संबन्धेन चक्रभ्रमाधिकरणत्वं कपालाकाशसंयोगाधिकरणस्य निराबाधमेवेति । अथ किमिदं स्वव्याप्यतानवच्छेदकत्वम् । न तावत्स्वाभाववद्वृत्तितावच्छेदकत्वं, कपालद्वयसंयोगत्वस्यापि तत्तत्कपालाकाशसंयोगाभावविशिष्टाभावोभयाभावादिमद्वृत्तितावच्छेदकतया तदवच्छिन्नाधिकरणे घटाभावायोगात् कपालाकाशसंयोगस्य तदनुपपत्तेः । न च स्वावच्छिन्नकारणतावच्छेदकत्वाभिमतसंबन्धावच्छिन्नप्रतियोगिताकाभाववद्वृत्तितावच्छेदका यावन्तस्तद्धर्मावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकाः धर्माः तद्धर्मावच्छिन्नाधिकरणस्वावच्छिन्नाधिकरणवृत्त्यभावप्रतियोगितावच्छेदककार्यतावच्छेदको यो धर्मः तदवच्छिन्नत्वमन्वयव्यभिचारः । तादृशश्च धर्मः कपालाकाशसंयोगत्वादिरेवेति नानुपपत्तिः । स्वावच्छिन्नप्रतियोगितायां कारणतावच्छेदकत्वाभिमतसंबन्धावच्छिन्नत्वनिवेशात् न संबन्धान्तरावच्छिन्नस्वावच्छिन्नप्रतियोगिताकाभावमादाय दोषः । अभाववद्वृत्तिता च स्वावच्छिन्नकारणतावच्छेदकसंबन्धावच्छिन्ना ग्राह्या । स्वपदं यत्र वृत्तितावच्छेदकत्वमुपपादनीयं तत्परम् । तेन समवायसंबन्धावच्छिन्नकपालाकाशसंयोगत्वावच्छिन्नप्रतियोगिताकाभाववति कपालद्वयसंयोगस्य कालिकादिसंबन्धेन सत्त्वेऽपि कपालाकाशसंयोगस्य तदनुपपत्तिरिति वाच्यम् । तथा सत्यपि कपालाकाशसंयोगस्याव्याप्यवृत्तितया देशान्तरावच्छेदेन उत्पत्तिकालावच्छेदेन च कपाले कपालाकाशसंयोगत्वावच्छिन्नसमवायसंबन्धावच्छिन्नप्रतियोगिताकाभावसत्त्वात् उक्तापत्तेर्दुर्वारत्वात् । अथ प्रतियोगिवैयधिकरण्यमभावे निवेशनीयमिति चेत् किन्तत्प्रतियोगिवैयधिकरण्यम् । स्वप्रतियोग्यनधिकरणवृत्तित्वं स्वप्रतियोग्यधिकरणावृत्तित्वं वा । नाद्यः, स्वप्रतियोग्यधिकरणघटादौ विद्यमानस्यैव कपालाकाशसंयोगाभावस्य आद्यक्षणावच्छेदेन देशान्तरावच्छेदेन च कपाले विद्यमानत्वेन उक्तानुपपत्त्यनिरासात् । नापि द्वितीयः, तादृशकपालाकाशसंयोगाभावाप्रसिद्धया तस्य तथात्वानुपपत्तेः । ननु स्वप्रतियोग्यनधिकरणं यत्स्वाय-

च्छिन्नाभावाधिकरणं तद्वृत्तितावच्छेदकत्वमेत तत्। कपालस्तु न कपालसंयोगानधिकरणम्। अन्यान्याभावस्य व्याप्यवृत्तित्वनियमात् किन्तु तादृशं कपालसंयोगाभावाधिकरणम्। घटादिरेव, तद्वृत्तितावच्छेदकत्वञ्च न कपालद्वयसंयोगस्य तथात्वानुपपत्तिः । स्वप्रतियोग्यनधिकरणत्वञ्च स्वप्रतियोगिमदभिन्नत्वम । अधिकरणत्वघटनायां प्रयोजनाभावात् । न च स्वप्रतियोगिमद्भिन्नत्वञ्च स्वप्रतियोग्यवच्छिन्नप्रतियोगिताकभेदवत्त्वं तच यत्किञ्चित्कपालाकाशसंयोगवद्भिन्ने, कपालेऽप्यक्षतमिति शङ्क्यम् । स्वप्रतियोगितावच्छेदकावच्छिन्नावच्छेदकताकप्रतियोताकभेदवत्त्वस्य विवक्षणीयत्वात् । तस्य च कपाले अभावात्। न चैवमपि कपालो न विषयितया कपालाकाशसंयोगवानिति प्रतीतिसिद्धकपालाकाशसंयोगावच्छिन्नविषयितासंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदस्य कपाले सत्त्वात् स्वप्रतियोगितावच्छेदकावच्छिन्नत्वेनावच्छेदकताकप्रतियोगिताकभेदवत्त्वमपि तत्राक्षतमेवेति वाच्यम्। स्वप्रतियोगितावच्छेदकसंबन्धावच्छिन्नत्वेनाप्यवच्छेदकताया विशेषणीयत्वात्। समवायसंबन्धावच्छिन्नकपालाकाशसंयोगत्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदस्य कपाले सत्त्वात् इति चेन्न । कपालाकाशसंयोगाभावे विद्यमानस्य पटाभावस्य कपालाकाशसंयोगाभावरूपतया तस्य प्रतियोगितावच्छेदकं पटत्वमपीति तद्धर्मावच्छिन्नसमवायसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदरूपतया तद्वत्त्वस्य च कपाले सत्त्वादुक्तानुपपत्तितादवस्थ्यात्। यदि चाभावाधिकरणकाभावो नाधिकरणात्मकः अभावाधिकरणकाभावप्रतियोगिकाभावस्यैवाधिकरणात्मकतया सिद्धान्तसिद्धत्वात् इति नोक्तरीत्यानुपपत्तिरिति विभाव्यते तदापि कपालाकाशसंयोगाभावे विद्यमानघटाभावभेदस्य कपालाकाशसंयोगाभावरूपतया तस्य प्रतियोगितावच्छेदकं पटाभावत्वमपि प्रतियोगितावच्छेदकसंबन्धस्तादात्म्यसंबन्धोऽपि तथा च घटाभावत्वावच्छिन्नतादात्म्यसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदस्य प्रतियोगितावच्छेदकेत्यादिनिरुक्तभेदरूपतया तस्य च कपाले सत्त्वादुक्तानुपपत्तिर्दुर्वारैव। एवं कपालाकाशसंयोगाभावे विद्यमानस्य घटाभावत्वावच्छिन्नविषयितासंबन्धावच्छिन्नप्रतियोगिताकाभावस्य अभावाधिकरणकाभावप्रतियोगिकाभावरूपतया अधिकरणात्मकत्वात् विषयितासंबन्धस्यापि तत्प्रतियोगितावच्छेदकतया तत्संबन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदमादाय दोषो बोध्यः। अथ मन्यसे स्वप्रतियोगितावच्छेदकत्वेन स्वप्रतियोगितावच्छेदकधर्मस्य स्वप्रतियोगितावच्छेदकसंबन्धत्वेन स्वप्रतियोगितावच्छेदकसंबन्धस्य च भेदप्रतियोगितावच्छेदककोटौ प्रवेशः। तथा च स्वप्रतियोगितावच्छेदकत्वावच्छिन्नावच्छेदकताकस्वप्रतियोगितावच्छेदकसंबन्धावच्छिन्नावच्छेदकताका च यावच्छेदकतानिरूपिताकप्रतियोगिताकभेदवत्त्वं स्वप्रतियोगिमद्भिन्नत्वमिति फलितम् । इत्थञ्च स्वप्रतियोगितावच्छेदकसमवायेन स्वप्रतियोगितावच्छेदकावच्छिन्नवत्त्वात् स्वप्रतियोगितावच्छेदकसंबन्धेन स्वप्रतियोगितावच्छेदकवद्भिन्नेति प्रतीतेः कपाले अभावात तद्विषयीभूतस्य तादृशभेदस्य तत्र सिद्धेरिति न पूर्वोक्तदोषावसरः। स्वप्रतियोगिता-

वच्छेदकसंबन्धत्वेन स्वप्रतियोगितावच्छेदकसंबन्धनिवेशाच्च न पूर्वोक्तरीत्या विषयिता-संबन्धस्यापि स्वप्रतियोगितावच्छेदकतया तेन संबन्धेन स्वप्रतियोगितावच्छेदकवद्भिन्नेति प्रतीतिविषयभेदमादाय दोषः । तत्र विषयितायाः विषयितात्वेनैव संसर्गत्वात् इति । तदा पूर्वक्षणवृत्तित्वविशिष्टस्वाभावस्वरूपस्वप्रतियोगितावच्छेदकावच्छिन्नस्य स्वप्रतियोगितावच्छेदकीभूतस्वरूपसंबन्धेन सर्वत्र सत्त्वात् स्वप्रतियोगितावच्छेदकसंबन्धेन स्वप्रतियोगितावच्छेदकवद्भिन्नेति प्रतीतेः कुत्राप्यजननात् तादृशभेदाप्रसिद्धिः । न च स्वप्रतियोगितावच्छेदकत्वावच्छिन्नावच्छेदकताकावच्छेदकतायां कारणतावच्छेदकत्वाभिमत-संबन्धत्वमेव निवेश्यतं । न तु स्वप्रतियोगितावच्छेदकसंबन्धावच्छिन्नावच्छेदकताकत्वम् । अत्र च कारणतावच्छेदकत्वाभिमतस्समवायः, कपालाकाशसंयोगस्य समवायेनैव कारणत्वाभिमानात् । तथा च तेन संबन्धेन स्वप्रतियोगितावच्छेदकवद्भिन्नेति प्रतीतेर्घटादौ सत्त्वान्न तथाविधाभावाप्रसिद्धिः । स्वरूपसंबन्धस्य कारणतावच्छेदकत्वाभिमतौ तु अन्वय-व्यभिचाराभाव इष्ट एवेति न तदानीमप्रसिद्धिर्दोषाय तत्संबन्धघटितव्याप्यतानवच्छेदका यावन्तस्तत्तदवच्छिन्नाधिकरणवृत्त्यभावप्रतियोगिकार्यकत्वं तेन संबन्धेनान्वयव्यभिचार इति विशिष्यैव वक्तव्यतया कारणत्वाभिमतेत्युक्तेः शब्दानुगममात्रसाधकतया स्वरूपसंबन्धस्यापि कदाचित्कारणतावच्छेदकत्वाभिमानेऽपि न तेन रूपेण तस्य संग्रहः । समवायस्यापि क्वचित्साध्यतावच्छेदकत्वेऽपि वह्निमान् धूमादित्यादौ तेन रूपेण तस्यैव । इत्थञ्च स्वावच्छिन्नप्रतियोगिताऽपि न कारणतावच्छेदकत्वाभिमतसंबन्धावच्छिन्नत्वेन विशेषणीया संबन्धान्तरावच्छिन्नकपालाकाशसंयोगाभावस्य कपालसाधारणत्वेऽपि तस्य निरुक्तस्वप्रतियोगिमद्भिन्नत्वविरहादेव उक्तानुपपत्तिवारणसंभवादिति वाच्यम् । कपालाकाशसंयोगस्यैव तत्तत्प्रकारकप्रमाविशेष्यत्वस्य भावप्रतियोगिकतया तद्वद्भेदप्रकारकप्रमाविशेष्यत्वाभावस्य च कपालकाशसंयोगसमनियततयान्वयव्यभिचारावश्यंभावात् । तयोश्च स्वरूपेणैव कारणत्वाभिमानात् तत्राक्ताप्रसिद्धेर्दुर्वारत्वात् । किञ्च दण्डादीनामप्यन्वयव्यभिचारापत्तिः । कपालस्य स्वाश्रयसंयोगसंबन्धेन दण्डाश्रयतया तेन संबन्धेन दण्डवद्भेदानधिकरणत्वात् निरुक्तस्वप्रतियोग्यनधिकरणतावद्दण्डाभावाधिकरणं न कपालः किन्तु दण्डसंयुक्तासंयोगिपदार्थान्तरमेव । तद्वृत्तितावच्छेदकं कुलालहस्तसंयोगत्वादि तदवच्छिन्नानधिकरणे दण्डाधिकरणे कपाले कपालद्वयसंयोगशून्यकाले घटाभावसत्त्वात् । अत एव स्वावच्छिन्नकारणतावच्छेदकत्वाभिमतसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदवद्वृत्तितावच्छेदकत्वं स्वावच्छिन्नकारणतावच्छेदकत्वाभिमतसंबन्धावच्छिन्नप्रतियोगिताकाभावनिष्ठनिरवच्छिन्ना-धेयतानिरूपकनिरूपिताधेयतावच्छेदकत्वं वा तदित्यपास्तम् । कपाले स्वाश्रयसंयोगसंबन्धेन दण्डवदभिन्नत्वस्य तादृशसंबन्धावच्छिन्नप्रतियोगिताकदण्डाभावनिष्ठनिरवच्छिन्नाधेयताकत्वस्य चासंभवात् । तद्वद्दण्डसंयुक्तासंयोगिपदार्थान्तरमेवेति उक्तानुपपत्तेर्दुर्वारत्वादिति चेदत्र ब्रूमः स्वावच्छेदककालावच्छिन्नत्वस्वनिरूपकनिरूपितत्वैतदुभयसंबन्धेन स्वावच्छिन्नकारणतावच्छेदकत्वाभिमतसंबन्धावच्छिन्नप्रतियोगिताकाभावनिष्ठयत्किञ्चिदे -

शानवच्छिन्नाधेयताविशिष्टाधेयतावच्छेदकत्वं स्वावच्छिन्नव्याप्यतानवच्छेदकत्वम्। भवति च कपालाकाशसंयोगाभावनिष्ठयत्किञ्चिद्देशानवच्छिन्ना आधेयता तन्निरूपितभूतलादिनिरूपिततदवच्छेदकं दण्डादिनिरूपिताधेयतेति। कपालसंयोगत्वादिकन्तु नैतादृशं कपालनिरूपितायाः उत्पत्तिकालावच्छिन्नकपालाकाशसंयोगाभावाधेयताया यत्किञ्चिद्देशानवच्छिन्नत्वेऽपि न तदवच्छेदककालावच्छिन्नत्वम्, कपालद्वयसंयोगाधेयतायाः। न वा घटादिनिरूपितकपालाकाशसंयोगाभावनिष्ठयत्किञ्चिद्देशानवच्छिन्नाधेयतावच्छेदककपालावच्छिन्नत्वेऽपि तन्निरूपकनिरूपितत्वम्। अत्र आधेयतायां यत्किञ्चिद्देशानवच्छिन्नत्वनिवेशात् न कपालनिरूपितकपालाकाशसंयोगाभावनिष्ठयत्किञ्चिद्देशावच्छिन्नाधेयतामादाय दोषः। कपालस्य दण्डाभावनिष्ठनिरवच्छिन्नाधेयतानिरूपकत्वविरहेण कपालद्वयसंयोगस्य दण्डव्याप्यतानवच्छेदकत्वानुपपत्त्या पूर्वोक्तदोष इत्यवच्छिन्नत्वसामान्याभावमनिवेश्य यत्किञ्चिद्देशानवच्छिन्नत्वमेव निवेशितम्। तथा सति कपालस्य दण्डसंयुक्तपदार्थासंयुक्तत्वदशायां कपालनिरूपितदण्डाभावनिष्ठयत्किंचिद्देशानवच्छिन्नाधेयतावच्छेदककालावच्छिन्नत्वतन्निरूपकनिरूपितत्वयोः कपालसंयोगाधेयतायां सत्त्वेन कपालस्य दण्डव्याप्यतानवच्छेदकत्वेन उक्तानुपपत्तेरभावात्। न चैवमपि कपालद्वयसंयोगस्यान्वयव्यभिचारग्रासापत्तिः। कपालसंयोगत्वावच्छिन्नाधिकरणे कपालसंयोगोत्पत्तिकाले घटाभावसत्त्वात् स्वावच्छिन्नाधिकरणनिरूपितनिरवच्छिन्नाधेयतावदभावप्रतियोगितावच्छेदककार्यतावच्छेदकत्वोपपत्तौ कपालाकाशसंयोगस्यापि तथात्वानुपपत्तिः। घटाभावस्य कपालाकाशसंयोगाधिकरणनिरूपितनिरवच्छिन्नाधेयत्वासम्भवात् इति वाच्यम्। स्वावच्छिन्नाव्यवहितोत्तरक्षणावच्छिन्नत्वस्य कार्याभावीयाधेयतायां निवेशनीयत्वात्। कपालसंयोगाधिकरणनिरूपितघटाभावाधेयतायाः कपालसंयोगाव्यवहितोत्तरक्षणावच्छिन्नत्वाभावात्। अथ किमिदं स्वावच्छिन्नाव्यवहितोत्तरत्वं, न तावत् स्वावच्छिन्नाधिकरणक्षणध्वंसानाधिकरणत्वे सति स्वावच्छिन्नाधिकरणक्षणध्वंसाधिकरणत्वं अप्रसिद्धेः कालस्यानादितया सर्वेषामेव क्षणानां कपालाकाशसंयोगत्वावच्छिन्नाधिकरणक्षणध्वंसाधिकरणस्वपूर्वक्षणध्वंसाधिकरणत्वात्। नापि स्वध्वंसाधिकरणक्षणध्वंसानधिकरणत्वस्वध्वंसाधिकरणत्वैतदुभयसंबन्धेन स्वावच्छिन्नाधिकरणक्षणविशिष्टत्वम्। तथा सति कपालसंयोगोत्पत्तिक्षणस्यापि निरुक्तोभयसंबन्धेन कपालसंयोगान्तराधिकरणक्षणविशिष्टत्वात् उक्तदोषतादवस्थ्यात्। मैवं स्वावच्छेदकक्षणाव्यवहितोत्तरक्षणावच्छिन्नत्वस्वानिरूपकनिरूपितत्वैतदुभयसंबन्धेन स्वावच्छिन्नाधेयताविशिष्टत्वस्य कार्याभावीयाधेयतायां निवेशनीयत्वात्। तथा च घटाभावीययादृशाधेयतायां कपालद्वयसंयोगत्वावच्छिन्नयादृशाधेयतावच्छेदकक्षणाव्यवहितोत्तरक्षणावच्छिन्नत्वं तस्याः तन्निरूपकनिरूपितत्वं न तस्यां तदवच्छेदकक्षणाव्यवहितोत्तरक्षणावच्छिन्नत्वमिति न कपालद्वयसंयोगस्य तदापत्तिः। इत्थञ्च स्वावच्छेदककालावच्छिन्नत्वस्वनिरूपकनिरूपितत्वैतदुभयसंबन्धेन स्वावच्छिन्नकारणतावच्छेदकत्वाभिमतसंबन्धावच्छिन्नप्रतियोगिताकाभावनिष्ठयत्किञ्चिद्देशानवच्छिन्नाधेयतानिष्ठस्वावच्छिन्नकारणतावच्छेदकसंबन्धावच्छिन्नाधेयतावच्छेदकाः यावन्तः तद्धर्मावच्छिन्नकार्य-

तानिरूपितकारणतावच्छेदकधर्माः तत्तद्धर्मावच्छिन्नकारणतावच्छेदकसंबन्धावच्छिन्नतद्धर्मावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निरूपितस्वावच्छिन्नकारणतावच्छेदकत्वाभिमतसंबन्धावच्छिन्नाधेयतायाः स्वनिरूपकनिरूपितत्वस्वाधिकरणक्षणाव्यवहितोत्तरक्षणावच्छिन्नत्वैतदुभयसंबन्धेन तद्विशिष्टाधेयतावदभावनिरूपितकार्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितावच्छेदककार्यतावच्छेदककत्वं अन्वयव्यभिचारः फलितः । इति सर्वं रमणीयम् ॥

काञ्चीमण्डलमण्डनायमानैः महामहोपाध्यायैः कृष्णतातयार्यमहादेशिकैः विरचितः अन्वयव्यभिचारविचारः संपूर्णः ॥

---

## ॥ अथ अयुतसिद्धविचारः ॥

---

प्रपञ्चमातापितरौ युक्तावयुतसिद्धवत् ।
वन्दे वाञ्छितलाभाय पार्वतीपरमेश्वरौ ॥

ननु किमिदमयुतसिद्धत्वं, न तावद्युतसिद्धभिन्नत्वम् । युतसिद्धत्वस्यैव दुर्वचत्वात्, नच संयुक्तसमवेतत्वं तदिति वाच्यम्, घटकपालादावव्याप्तिप्रसङ्गात् । नच ययोर्द्वयोर्मध्ये एकमपराश्रितमेवावतिष्ठते तत्त्वमयुतसिद्धत्वमिति वाच्यम् । यत्तत्त्वयोरननुगमेनायुतसिद्धपदार्थतावच्छेदकस्यानुगतस्य दुर्वचत्वात् इति चेदत्रोच्यते—द्वित्वविशिष्टद्वित्वमेव अयुतसिद्धत्वं वैशिष्ट्यञ्च तादात्म्यस्वाश्रयव्यक्तिविशिष्टत्वोभयसंबन्धेन, वैशिष्ट्यञ्च स्वविशिष्टद्वात्वसम्बन्धेन, स्ववैशिष्ट्यञ्च स्वनिष्ठेत्यादिभेदवत्त्वसम्बन्धेन स्वनिष्ठावच्छेदकता च आधेयतासम्बन्धावच्छिन्नस्वानिष्ठप्रतियोगिताकात्यन्ताभाववत्त्वसम्बन्धावच्छिन्ना घटकपालगतद्वित्वस्य स्वपदेन उपादाने तदाश्रयीभूतकपालव्यक्तेः आधेयतासम्बन्धावच्छिन्नप्रतियोगिताकाभावस्यासत्त्वेन आधेयतासम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकात्यन्ताभाववत्त्वसम्बन्धावच्छिन्नस्वनिष्ठेत्यादिभेदवत्त्वसम्बन्धेन कपालविशिष्टघटवृत्तित्वस्य तादात्म्यस्य च उक्तद्वित्वेसत्त्वाल्लक्षणसमन्वयः। भूतलादेः घटशून्यतादशायां आधेयतासम्बन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावसत्त्वान्निरुक्तसम्बन्धेन भूतलवैशिष्ट्यस्य घटे असत्त्वात् भूतलघटादिगतद्वित्वन्न तादृशमिति न भूतलघटायोरतिव्याप्तिः । अथ संयोगादिसम्बन्धावच्छिन्नाधेयतासम्बन्धावच्छिन्नकपालादिनिष्ठप्रतियोगिताकात्यन्ताभावसत्त्वान्निरुक्तवैशिष्ट्यं न घटादाविस्यसम्भवः। नच समवायसम्बन्धावच्छिन्नत्वमाधेयतायान्निवेशनीयमिति वाच्यम् । अयुतसिद्धत्वज्ञानमन्तरा आश्रयज्ञानाभावेन अन्योन्याश्रय इति चेन्न। तादात्म्यस्ववृत्तित्वोभयसम्बन्धेन द्वित्वविशिष्टद्वित्वमेवायुतसिद्धत्वम् । वैशिष्ट्यञ्च आधेयतासम्बन्धावच्छिन्नस्वाश्रयत्वावच्छिन्नप्रतियोगिताकात्यन्ताभाववत्त्वसम्बन्धावच्छिन्नस्वनिष्ठेत्यादिभेदवत्त्वसम्बन्धेन तथा च नोक्तासम्भवः । न चैवं सति यत्र कपालनाशाद्घटनाशः तत्र कपालनाशक्षणे घटादौ कपालघटादिगतद्वित्वस्य निरुक्तास्वाश्रयत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावसत्त्वादव्याप्ति-

रिति वाच्यम् । अभावे स्वावच्छिन्नाधिकरणकालावच्छिन्नत्वनिवेशात् कपालनाशक्षणस्य द्वित्वावच्छिन्नाधिकरणत्वात् । नन्वेवमपि भावाभावयोरतिव्याप्तिः । तदुभयगतद्वित्वस्यापि उक्तरीत्या निरुक्तसम्बन्धेन द्वित्वविशिष्टत्वादिति चेन्न । स्वाश्रयातिरिक्तसम्बन्धावच्छिन्नाधेयताया निवेशनीयत्वात् । नच विषयताया विषयातिरिक्तत्वकल्पे घटप्रत्यक्षयोरतिव्याप्तिरिति वाच्यम् । तत्क्षे द्वित्वविशिष्टद्वित्वमेवायुतसिद्धत्वम् । वैशिष्ट्यञ्च तादात्म्यस्ववि-शिष्टवृत्तित्वोभयसम्बन्धेन । स्ववैशिष्ट्यञ्च स्वनिष्ठेत्यादिभेदवत्त्वसम्बन्धेन, स्वनिष्ठावच्छेदकता च स्वाश्रयातिरिक्तसम्बन्धावच्छिन्नाधेयतासम्बन्धावच्छिन्नस्वाश्रयत्वावच्छिन्नप्रतियोगिताकस्वावच्छिन्नाधिकरणकालावच्छिन्नाभाववत्त्वसम्बन्धेन वृत्तित्वञ्च स्वरूपसम्बन्धेनेति दिक् ।

शिवप्रसादलेशेन लब्धज्ञानेन सूरिणा ।
रभिणायुतसिद्धत्वन्निरुक्तं शिवतुष्टये ॥

---

## गादाधरी : सम्पूर्ण

( शोधपूर्ण द्वितीय संस्करण )

( अनुमानचिन्तामणिव्याख्याशिरोमणिकृतदीधित्या सहिता

ऐतिहासिक भूमिका, उद्धरण, परिशिष्ट आदि से विभूषित। विराम-उद्धरणादि के चिह्न, नये अनुच्छेद, 'विवृतिप्रकाश' बृहट्टिप्पणी एवं विषयविभाजन के रूप में पाण्डित्यपूर्ण परिशिष्ट से सुसम्पादित

सिद्धान्तलक्षणप्रकरणान्त १५-००

१-२ भाग सम्पूर्ण १००-००

## हिन्दी न्यायकुसुमाञ्जलि

( हरिदासी टीका सहित )

व्याख्याकारः—आचार्य विश्वेश्वर सिद्धान्त शिरोमणि

विद्वान व्याख्याकार ने शास्त्रार्थ के दुरूह स्थलों पर विमर्श में इतना सुविस्तृत और गंभीर विवेचन किया है कि यह व्याख्या हिन्दी में न्याय कुसुमाञ्जलि की एक स्वतन्त्र मौलिक रचना बन गई है ९-००

## न्याय-परिचय

मूललेखक : म० म० फणिभूषण तर्कवागीश।

हिन्दी रूपान्तरकार : डॉ० किशोरनाथ झा

प्रत्यक्ष तथा आगम के अविरोधी अनुमान के द्वारा तत्त्वश्रवण के बाद अनुमान प्रमाणरूप युक्ति से मनन करना ही अन्वीक्षा है ( तथा प्रवर्तते 'आन्वीक्षिकी' ) वेदमूलक इसी आन्वीक्षिकी विद्या का प्रसिद्ध नाम न्याय है। परार्थ अनुमान को तथा उसी को उद्देश्य करके प्रयुक्त प्रतिज्ञा आदि पञ्चावयवरूप वाक्य को महर्षि वात्स्यायन न्याय शब्द से कहते हैं। यह न्यायशास्त्र प्रत्येक शास्त्रों की आत्मा है। इसका उद्भव सर्वज्ञ परमेश्वर से है। तर्कशास्त्र होने से इसे न्यायतर्क भी कहते हैं। महर्षि पंतजलि ने अपने महाभाष्य के प्रथम आह्निक में वाकोवाक्य नाम से भी इस न्यायशास्त्र का उल्लेख किया है। बहुत व्यक्ति इस न्याय शास्त्र का अध्ययन करते हैं किन्तु इसके अनिर्वचनीय रहस्य को कम ही विद्वान् समझ पाते हैं। विद्वान् लेखक ने गहन अध्ययन के पश्चात् ऐतिहासिक, दार्शनिक तथा मनोवैज्ञानिक अध्ययन की विभिन्न विचार धाराओं पर भी यथेष्ट विचार करके यह ग्रन्थ प्रस्तुत किया है। न्यायशास्त्र के प्रामाणिक सजीव और क्रमबद्ध इतिहास के परिचय के लिये यह ग्रन्थ अद्वितीय है। १२-००

---